*Government of India Reprinting Series*

श्रीवामनजयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

## द्वितीयो भागः

५ – ८ अध्यायाः



संस्कृतपरिषत्, उस्मानिया विश्वविद्यालयः,

हैदराबाद

१९७०

संस्कृतपरिषद्ग्रन्थावली – २०.
अ. १७

श्रीवामनजयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

## द्वितीयो भागः

५ – ८ अध्यायाः

सम्पादकाः

डॉ० आर्येन्द्र शर्मा, एम्. ए., डी. फिल्.
परिषत्सञ्चालकः

श्री खण्डेराव देशपाण्डे, एम्. ए., डिप्. एड
उपसञ्चालकः

श्री द. गो. पाध्ये, बी. ए.,
विद्याविलास, काव्यशास्त्रतीर्थ, साहित्यालङ्कार.
प्रधानसंशोधनसहायकः




संस्कृतपरिषत्, उस्मानिया विश्वविद्यालयः,
हैदराबाद
१९७०

*Sanskrit Academy Series – 20.*
*A. 17.*

# KĀŚIKĀ

A Commentary on Pāṇini's Grammar

**PART – II.**
( ADHYĀYAS 5—8 )

BY
**VĀMANA & JAYĀDITYA**

*Editors*
**DR. ARYENDRA SHARMA,** M.A., D. PHIL.
DIRECTOR

**SRI KHANDERAO DESHPANDE,** M.A., DIP.ED.
JT. DIRECTOR

*Sri D. G. Padhye,* B. A., *Vidyavilasa,*
*Kavya Shastra Tirtha, Sahityalankara.*
Senior Research Assistant.




**SANSKRIT ACADEMY,**
**OSMANIA UNIVERSITY,**
**HYDERABAD.**
**1970**

# अष्टाध्यायी – काशिकास्थविषयाः

## पञ्चमाध्यायस्य प्रथमः पादः

## पञ्चमाध्यायस्य द्वितीयः पादः

## पञ्चमाध्यायस्य तृतीयः पादः

## पञ्चमाध्यायस्य चतुर्थः पादः

## षष्ठाध्यायस्य प्रथमः पादः

## षष्ठाध्यायस्य द्वितीयः पादः

## षष्ठाध्यायस्य तृतीयः पादः

## षष्ठाध्यायस्य चतुर्थः पादः

## सप्तमाध्यायस्य तृतीयः पादः



| विषयः | सूत्राङ्कः |
|---|---|

## सप्तमाध्यायस्य चतुर्थः पादः

## अष्टमाध्यायस्य प्रथमः पादः



## अष्टमाध्यायस्य द्वितीयः पादः



## अष्टमाध्यायस्य तृतीयः पादः

## अष्टमाध्यायस्य चतुर्थः पादः



--------( :o: )--------

# का शि का

## पञ्चमोऽध्यायः

### प्रथमः पादः

**प्राक्क्रीताच्छः । (१/१६६१)**

'तेन क्रीतम्' (५.१.३७/१७०२) इति वक्ष्यति । प्रागेतस्मात् क्रीतसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः छप्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति 'तस्मै हितम्' (५.१.५/१६६५) इति । वत्सेभ्यो हितः वत्सीयो गोधुक् । करभीयः [1]उष्ट्रः । अकरभीयः । [2]अवत्सीयः । अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः । तेन प्राक् ठञः [3]छः इति नोक्तम् ॥

**उगवादिभ्यो यत् । (२/१६६२)**

प्राक् क्रीतात् इत्येव । उवर्णान्तात् प्रातिपदिकात् [4]गवादिभ्यश्च यत् प्रत्ययो भवति प्राक्क्रीतीयेष्वर्थेषु । छस्यापवादः । शङ्कव्यं दारु । पिचव्यः कार्पासः । [5]कमण्डलव्या मृत्तिका । गवादिभ्यः खल्वपि – गव्यम् । [6]हविष्यम् । [7]सनङगुर्नाम चर्मविकारः । ततः परत्वात् 'चर्मणोऽञ्' (५.१.१५/१६७७) इत्येष विधिः प्राप्नोति । तथा चरुर्नाम [8]हविः, सक्तुरन्नविकारः । अपूपादिषु '[9]अन्नविकारेभ्यश्च' (ग.सू.१०९) इति पठ्यते । ततो 'विभाषा हविरपूपादिभ्यश्च' (५.१.४/१६६४) [10]इत्येष विधिः प्राप्नोति । [11]तत्र सर्वत्र पूर्वविप्रतिषेधेन [12]यत्प्रत्यय एवेष्यते, [13]सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धानाः इति । गवादिषु '[14]नाभि नभं च' (ग.सू.१०६) इति पठ्यते । [15]तस्यायमर्थः । नाभिशब्दो [16]यत्प्रत्ययमुत्पादयति [17]नभं चादेशमापद्यते [18]इति । नाभये हितः नभ्यो[19]ऽक्षः । नभ्यमञ्जनम् । यस्तु शरीरावयवो नाभिशब्दः, ततः 'शरीरावयवाद्यत्' (५.१.६/१६६६) इति यति कृते, नाभये हितं नाभ्यं तैलम् इति[20] भवितव्यम् । गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति ।

गो । हविस् । बर्हिष् । [21]खट । [22]अष्टका । [22]युग । मेधा । स्रक् । 'नाभि नभं च' (ग.सू.१०६) । 'शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन [24]चान्तोदात्तत्वम्' (ग.सू.१०७) । शुन्यं, शून्यम् । [25]चकारस्यानुक्तसमुच्चयार्थत्वात् नस्तद्धिते (६.४.१४४/६७९) इति[26]लोपो न स्यात् । 'ऊधसोऽनङ् च' (ग.सू.१०८) । [27]ऊधन्यः कूपः । [28]खर । खद । अक्षर । विष । गवादिः ॥

---

1. उष्ट्रः नास्ति ब. क. 2. अवत्सीयः नास्ति ड. 3. छः नास्ति ह. 4. गवादेश्च क. इ. 5. उदाहरणमिदं नास्ति ब. 6. हविष्यम् नास्ति ब. 7. शलङकु क. 8. हविर्विशेषः क. 9. अन्नविकारे च ग. 10. इति विकल्पः फ. 11. तत्र नास्ति फ. 12. यत् एव फ. 13. शलङ्कव्यम् क. 14. नाभि नभं च नास्ति क. 15. तत्रायमर्थः क, नास्ति ब. 16. यत् नास्ति क, यतं ब. फ. 17. नभभावं चापद्यते ब. क. 18. इति नास्ति फ. 19. वृक्षः ब. क. 20. एव इत्यधिकम् फ. 21. खट नास्ति ब. क. फ. 22. अष्टक ह. 23. संयुग ह. 24. च तस्यान्तोदात्तत्वम् क. फ. 25. वाक्यमिदं नास्ति क. फ. ह. 26. टिलोपः ड. 27. ऊधस्यम् । अक्ष बदर खर स्मय विश्व गवादिः क, अक्षर उदर वेद स्कन्द अध्व विष ब. 28. स्थल ह.

## कम्बलाच्च सञ्ज्ञायाम्। (३/१६६३)

[1]कम्बलात्[2] प्राक्क्रीतीयेष्वर्थेषु यत् प्रत्ययो भवति सञ्ज्ञायां विषये। छस्यापवादः। कम्बल्यम् ऊर्णा-पलशतम्। सञ्ज्ञायाम् इति किम्? कम्बलीया [3]ऊर्णा॥

## विभाषा हविरपूपादिभ्यः। (४/१६६४)

हविर्विशेषवाचिभ्यो[4]ऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति[5]। आमिक्ष्यं [6]दधि, आमिक्षीयं [7]दधि। पुरोडाश्यास्तण्डुलाः, पुरोडाशीयाः। हविश्शब्दात्तु गवादिषु पाठान्नित्यमेव[8] भवति। अपूपादिभ्यः[9] – अपूप्यम्, अपूपीयम्। तण्डुल्यम्, तण्डुलीयम्।

अपूप। तण्डुल। अभ्यूष। [10]अभ्योष। पृथुक। अभ्येष। अर्गल। मुसल। [11]सूप। कटक। कर्णवेष्टक। किण्व। 'अन्नविकारेभ्यः' (ग. सू. १०९)। [12]यूप। स्थूणा। [13]पीप। अश्व। पत्र। अपूपादिः॥

## तस्मै हितम्। (५/१६६५)

तस्मै इति चतुर्थीसमर्थाद् हितम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सेभ्यो हितो गोधुक् वत्सीयः। अवत्सीयः[14]। [15]पटव्यम्। गव्यम्। हविष्यम्। [16]अपूप्यम्। [17]अपूपीयम्॥

## शरीरावयवाद्यत्। (६/१६६६)

शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकात् यत् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् [18]विषये। छस्यापवादः। [19]दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। नाभ्यम्। नस्यम्[20]॥

## खलयवमाषतिलवृषब्रह्मणश्च। (७/१६६७)

खलादिभ्यो[21] यत् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्यापवादः। खलाय हितम् खल्यम्। यव्यम्। माष्यम्। [22]तिल्यम्। वृष्यम्। ब्रह्मण्यम्। वृष्णे हितम्, ब्राह्मणेभ्यो हितम् [23]इति वाक्यमेव भवति। छप्रत्ययो[24]ऽपि न भवति, अनभिधानात्। [25]चकारोऽनुक्तसमुच्चयार्थः। रथाय हिता रथ्या॥

---

1. कम्बलशब्दात् ब. क. ड. फ. 2. प्रातिपदिकात् इत्यधिकम् फ. 3. ऊर्णा नास्ति फ. 4. शब्देभ्यः इत्यधिकम् ब. क. ह. 5. छस्यापवादः। पक्षे सोऽपि भवति इत्यधिकम् ब. क. ग. 6. हविः क. 7. दधि नास्ति क. 8. यत् इत्यधिकम् क, यता भवितव्यम् ह. 9. खल्वपि इत्यधिकम् ब. क. ह. 10. अरोष कम्बल शकट स्थल यूप दीप प्रदीप इत्यधिकम् क, अभ्योष नास्ति ब. 11. दीप ओदन ब, दिव ह. 12. अपूप ब. 13. नास्ति ब. 14. करभीयः अकरभीयः इत्यधिकम् ब. ड. 15. पिचव्यम् मृदव्यम् क, मृव्यम् ह, मदव्यम् ब. 16. अपूप्यम् नास्ति ब. ड. फ. 17. अपूपीयम् नास्ति ब. ड. फ. 18. अर्थे ह. फ. 19. दन्तेभ्यो हितम् इत्यधिकम् ब. क. ड. फ. 20. ललाटच्यम् कर्ण्यम् चक्षुष्यं अञ्जनम् इत्यधिकम् क. 21. शब्देभ्यः इत्यधिकम् ब. ड. फ. ह, प्रातिपदिकेभ्यः इत्यधिकम् क. 22. तिल्यं वृष्यम् नास्ति फ. ह. 23. अत्रार्थे फ. 24. अपि नास्ति फ. ह. 25. अत्र इत्यधिकम् क.

अजाविभ्यां थ्यन् । (८/१६६९)

अज अवि इत्येताभ्यां[1] थ्यन् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् [2]विषये । छस्यापवादः । [3]अजथ्या [4]यूथिः । अविथ्या ॥

आत्मन्विश्वजनभोगोत्तरपदात् खः । (९/१६७०)

आत्मन् विश्वजन इत्येताभ्यां[5] भोगोत्तरपदाच्च प्रातिपदिकात् खः प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् [6]विषये । छस्यापवादः । आत्मन्निति नलोपो न कृतः प्रकृतिपरिमाण[7]ज्ञापनार्थम् । तेनोत्तरपदग्रहणं [8]भोगशब्देनैव सम्बध्यते, न तु प्रत्येकम् । आत्मने हितम् [9]आत्मनीनम् (पै. ५.१४.८) । 'आत्माध्वानौ खे' (६.४.१६९/१६७१) इति [10]प्रकृतिभावः । विश्वजनेभ्यो हितम् [11]विश्वजनीनम् । कर्मधारयादेवेष्यते । [12]षष्ठीसमासाद् बहुव्रीहेश्च [13]छ एव भवति । [14]विश्वजनाय हितम् विश्वजनीयम् ।

[४९५] पञ्चजनादुपसङ्ख्यानम् । (म. भा. २.३४०)

पञ्चजनाच्च खः । अत्रापि [15]कर्मधारयाद् इष्यते । [16]पञ्चजनीनम् । अन्यत्र पञ्चजनीयम् ।

[४९६] सर्वजनाद्[17]ठञ् खश्च । (म. भा. २.३४०)

सार्वजनिकम्, सर्वजनीनम् । अत्रापि [18]कर्मधारयादेव । सर्वजनीयम् [19]अन्यत्र ।

[४९७] महाजनान्नित्यं ठञ् वक्तव्यः । (म. भा. २.३४०)

[20]महाजनाय हितम् [21]माहाजनिकम् । [22]तत्पुरुषादेव । [23]बहुव्रीहेस्तु छ एव भवति । महाजनीयम्[24] ।

भोगोत्तरपदात् खल्वपि – [25]मातृभोगीणः । पितृभोगीणः । भोगशब्दः शरीरवाची । केवलेभ्यो मात्रादिभ्यः छ एव भवति । [26]मात्रीयम् । पित्रीयम् ।

[४९८] राजाचार्याभ्यां तु नित्यम् । (म. भा. २.३४०)

भोगोत्तरपदाभ्यामेव [27]खः प्रत्ययः इष्यते, न केवलाभ्याम् । [28]राजभोगीनः ।

[४९९] आचार्यादणत्वं च । (म. भा. २.३४०)

[29]आचार्यभोगीनः । केवलाभ्यां वाक्यमेव भवति, राज्ञे हितम्, आचार्याय हितम् इति ॥

---

1. शब्दाभ्याम् इत्यधिकम् ब. 2. अर्थे क. फ. ह. 3. अजाय हिता इत्यधिकम् क. 4. यूतिः क, पूतिः ब. 5. शब्दाभ्यां इत्यधिकम् ब. फ. 6. अर्थे ग. ह. फ, इत्यत्रार्थे क. 7. °ज्ञापनार्थः ह. फ, °परिमाणार्थः क. 8. भोगेनैव ह. 9. आत्मनीयः ह, आत्मनीयम् फ. 10. प्रकृतिवद्भावः क, इति नास्ति फ. 11. विश्वजनीनः ह. 12. षष्ठीसमर्थात् ह. 13. छप्रत्ययः फ. ह. 14. विश्वजनेभ्यः हितम् ब. 15. कर्मधारयः एव क. 16. पञ्चजनाय हितम् इत्यधिकम् ह. 17. खश्च चकाराट् ठञ् च ब. फ. ह. 18. कर्मधारया–दित्येव क. 19. अन्यत् मुद्रितः पाठः 20. महाजनान्नित्यं ठञ् प्रत्ययो भवति इति वक्तव्यम् इत्यधिकम् ह. 21. माहाजनिकः माहाजनिकी क. 22. अत्र इत्यधिकम् क. 23. षष्ठीसमासात् इत्यधिकम् क. 24. अन्यत् इत्यधिकम् ह 25. मातृभोगीणम् पितृभोगीणम् ह. 26. मात्रियम् पित्रियम् ब. ह, मात्रियः पित्रियः फ. 27. खः नास्ति ह. 28. राजभोगिणः आचार्यभोगिनः ह, राजभोगीणः ब. क. 29. आचार्यभोगीणः क.

## सर्वपुरुषाभ्यां णढञौ। (१०/१६७२)

सर्वपुरुषाभ्यां यथासङ्ख्यं णढञौ प्रत्ययौ भवतः तस्मै हितम् इत्येतस्मिन् [1]विषये। छस्यापवादः। सर्वस्मै हितम् सार्वम्। पौरुषेयम्।

[५००] सर्वाण्णस्य वा वचनम्। (म. भा. २.३४१)

[2]सार्वम्, सर्वीयम्।

[५०१] पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। (म. भा. २.३४१)

पौरुषेयो वधः, पौरुषेयो विकारः, पौरुषेयः समूहो वा। [3]तेन कृते पौरुषेयो ग्रन्थः॥

## माणवचरकाभ्यां खञ्। (११/१६७३)

माणवचरक[4]शब्दाभ्यां खञ् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् [5]विषये। छस्यापवादः। माणवाय हितम् माणवीनम्। चारकीणम्॥

## तदर्थं विकृतेः प्रकृतौ। (१२/१६७४)

प्रकृतिः उपादानकारणं, तस्यैव उत्तरमवस्थान्तरं विकृतिः। विकृतिवाचिनः प्रातिपादिकात् [6]प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति। [7]तदर्थमिति प्रत्ययार्थविशेषणम्। तद् इति सर्वनाम्ना विकृतिः परामृश्यते। विकृत्यर्थायां प्रकृतौ प्रत्ययः। तदर्थग्रहणेन प्रकृतेरनन्यार्थताख्यायते। न प्रकृतिविकारसम्भवमात्रे प्रत्ययः, किं तर्हि, प्रकृतेरनन्यार्थत्वे विवक्षिते। प्रत्ययार्थस्य च तदर्थत्वे [8]सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः। केचित्तु 'तस्मै हितम्' (५.१.५/१६६५) इत्यनुवर्तयन्ति। अङ्गारेभ्यो [9]हितानि एतानि काष्ठानि अङ्गारीयाणि [10]काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु। पिचव्यः कार्पासः। तदर्थम् इति किम्? यवानां धानाः[11]। धानानां सक्तवः। प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता न तादर्थ्यम् [12]धानानां सक्तवः, न लाजानाम् [13]इति। विकृतेः इति किम्? [14]उदकार्थः कूपः। विकृतिग्रहणेऽक्रियमाणे या काचित् प्रकृतिर्गृह्यते, नोपादानकारणमेव। भवति च कूप उदकस्य प्रकृतिः, तत्रोत्पादनात्। न तु उदकं [15]तस्यः विकृतिः, [16]अत्यन्तभेदात्। प्रकृतौ इति किम्? [17]अस्यर्था कोशी। असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृति[18]र्भवति। द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे [19]विवक्षितः [20]प्रकृतिविकारभावो लभ्यते॥

---

1. अर्थे क. फ. 2. सार्वम् नास्ति ह. 3. तत्कृते ब. 4. इत्याभ्याम् इत्यधिकम् क. 5. अर्थे क.फ.ह. 6. प्रकृताभिधेयानां ड. फ. 7. तदर्थमिति नास्ति ह. 8. सति नास्ति क. फ, सामर्थ्यलभ्या क. ह. 9. हितानि नास्ति ब. फ. 10. काष्ठानि नास्ति ह. 11. न व्रीहीणाम् इत्यधिकम् क. 12. यवानां धानाः न व्रीहीणाम् क. 13. इति नास्ति क. 14. उदकार्थं क. 15. तस्य नास्ति क. 16. अत्यन्तभेदः क. 17. असिकोषी क. 18. भवति नास्ति फ. ह. 19. क्रियमाणे इत्यधिकम् क. ड. फ. 20. प्रकृतिविकृतिभावः ह.

## छदिरुपधिबलेर्ढञ्। (१३/१६७५)

[1]छदिरादिभ्यः शब्देभ्यः ढञ् प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५.१.१२/१६७४) इत्येतस्मिन् [2]विषये। छस्यापवादः। छादिषेयाणि तृणानि। औपधेयं दारु। [3]बालेयास्तण्डुलाः। उपधिशब्दात् स्वार्थे प्रत्ययः। उपधीयते इति उपधिः रथाङ्गम्। औपधेयम[4]पि तदेव दारु॥

## ऋषभोपानहोर्ञ्यः। (१४/१६७६)

ऋषभ उपानह् इत्येताभ्यां [5]ञ्यः प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५.१.१२/१६७४) इत्येतस्मिन् [6]विषये। छस्यापवादः। आर्षभ्यो [7]वत्सः। औपानह्यो मुञ्जः। चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयमेवेष्यते। औपानह्यं चर्म॥

## चर्मणोऽञ्। (१५/१६७७)

चर्मणः इति षष्ठी। चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकात् अञ् प्रत्ययो भवति 'तदर्थं विकृतेः प्रकृतौ' (५. १. १२./१६७४) इत्येतस्मिन् [8]विषये। छस्यापवादः। [9]वार्ध्रं चर्म। वारत्रं चर्म॥

## तदस्य तदस्मिन् स्यादिति। (१६/१६७८)

तद् इति प्रथमा समर्थविभक्तिः, अस्य इति प्रत्ययार्थः, स्यात् इति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। एवं [10]द्वितीयेऽपि वाक्ये। सप्तम्यर्थे [11]तु प्रत्यय इत्ये[12]तावान् विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत्तत् प्रथमासमर्थं [13]स्याच्चेत् तद् भवति। इतिकरणः [14]ततश्चेद् विवक्षा। [15]प्राकार आसामिष्टकानां स्यात् [16]प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि – [17]प्राकारोऽस्मिन् देशे स्यात् [18]प्राकारीयो देशः। प्रासादीया भूमिः।

स्यादिति सम्भावनायां लिङ्, सम्भावनेऽलम् (३. ३. १५४/२८११) इति चेद् इत्यादिना। इष्टकानां बहुत्वेन [19] तत् सम्भाव्यते [20]प्राकार आसामिष्टकानां स्यात् इति। [21]देशस्य च गुणेन सम्भाव्यते [22]प्रासादोऽस्मिन् देशे स्यात् इति। प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितम्। किं तर्हि, योग्यतामात्रम्। तेन पूर्वस्यायमविषयः। द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्, अनेकस्मिन् प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीया इति।

[23]अथेह कस्मान् न भवति, प्रासादो देवदत्तस्य स्यात् इति? गुणवानयं सम्भाव्यते प्रासादलाभोऽस्य [24]इति। इतिकरणो विवक्षार्थः इत्युक्तम्॥

---

1. छदिर् उपधि बलि इत्येभ्यः प्रातिपदिकेभ्यः क. 2. अर्थे फ, विषये अर्थे ह. 3. बल्यर्थम् इत्यधिकम् फ. 4. इति ब. फ. 5. शब्दाभ्यां इत्यधिकम् फ. ह. 6. अर्थे फ. 7. वधः ह. 8. अर्थे क. फ. ह. 9. वाध्र्यं इदं इत्यधिकम् ह. 10. द्वितीयवाक्ये ह. 11. अपि फ. 12. एतावान् नास्ति क. 13. स्याच्चैतत् ह. 14. ततश्चेति विवक्षार्थः क. 15. एष इत्यधिकम् ड, प्रासादः इ. क. 16. प्रासादीयाः इ. क. 17. प्रासादः क. 18. प्रासादीयः क. 19. बहुत्वेति फ, तत् नास्ति ग. 20. एष इत्यधिकम् ड. 21. देशगुणेन ह गुणवादेन क. 22. एष इत्यधिकम् क. ड. फ. 23. अथ नास्ति फ. 24. इति नास्ति ह.

## परिखाया ढञ् । (१७/१६७९)

परिखाशब्दात् ढञ् प्रत्ययो भवति 'तदस्य तदस्मिन् स्यात्' (५.१.१६/१६७८) इत्येतस्मि[1]न्नर्थे । छस्यापवादः । पारिखेयी भूमिः । छयतोः पूर्णोऽवधिः । इतः परमन्यः प्रत्ययो विधीयते ॥

## प्राग्वतेष्ठञ् । (१८/१६८०)

'तेन तुल्यं क्रिया चेद्वतिः' (५.१.११५/१७७८) इति वक्ष्यति । प्रागेतस्माद् वतिसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः ठञ् प्रत्यय[2]स्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – 'पारायणतुरायणचान्द्रायणं वर्तयति' (५.१ ७२/१७३६) । [3]पारायणिकः । तौरायणिकः । चान्द्रायणिकः ॥

## आर्हादगोपुच्छसङ्ख्यापरिमाणाट् ठक् । (१९/१६८१)

[4]'तदर्हति' (५.१.६३/१७२८) इति वक्ष्यति । आ एतस्मादर्हसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः, गोपुच्छादीन् वर्जयित्वा । [5]अभिविधावयमाकारः, तेनार्हत्यर्थोऽपि ठक् [6]भवत्येव । ठञधिकारमध्ये तदपवादः ठग्विधीयते । वक्ष्यति – 'तेन क्रीतम्' (५.१.३७/१७०२) । [7]नैष्किकम् । पाणिकम् । अगोपुच्छसङ्ख्यापरिमाणात् इति किम् ? गोपुच्छेन क्रीतं [8]गौपुच्छिकम् । [9]सङ्ख्या – षाष्टिकम्[10] । परिमाण – [11]प्रास्थिकम् । [12]कौडविकम् । [13]ठञ् प्रत्युदाह्रियते । सङ्ख्यापरिमाणयोः को विशेषः ? भेदगणनं सङ्ख्या एकत्वादिः । गुरुत्वमानमुन्मानं [14]पलादि । आयाममानं प्रमाणं वितस्त्यादि । आरोहपरिणाहमानं परिमाणं प्रस्थादि ।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वतः (म. भा. २.३४३) ॥

## असमासे निष्कादिभ्यः । (२०/१६८२)

आर्हात् (५.१.१९/१६८१) इत्येव । निष्कादिभ्यः शब्देभ्योऽसमासे ठक् [15]प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । नैष्किकम् । पाणिकम् । पादिकम् । माषिकम् ।

असमासे इति [16]किम् ? [17]परमनैष्किकम् । उत्तमनैष्किकम् । [18]ठञेव भवति, परिमाणान्तस्य (७.३.१७/१६८३) इत्युत्तरपदवृद्धिः । अथ किमर्थमसमासे इत्युच्यते यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते (व्या. प. ८९) ? निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य । 'उगवादिभ्यो यत्'

---

1. विषये फ. 2. तेष्वर्थेषु क. 3. कृत्स्नवेदजपं निर्वर्तयन् पारायणिकः । तुरायणस्य यज्ञं निर्वर्तयन् तौरायणिकः ग. 4. एतद्वाक्यं नास्ति ह. 5. अभिविधौ चायमाङ क. 6. एव नास्ति क. फ. 7. निष्केण क्रीतः नैष्किकः क. ह, पाणिकः फ, पाथिकं क. 8. गौपुच्छिकः फ. 9. सङ्ख्या नास्ति फ, संख्यायाः ड. 10. आशीतिकं इत्यधिकम् क, साप्ततिकम् इत्यधिकम् ह. 11. प्रास्थिकः क. 12. कौटुम्बिकम् ह. 13. सर्वत्र इत्यधिकम् क. 14. तुलादिः फ. ह. 15. प्रत्ययः नास्ति फ. 16. किमर्थमुच्यते क. 17. परमनैष्किकः फ, उत्तमनैष्किकम् नास्ति फ, उत्तरनैष्किकम् ग. 18. तेनैव इत्यधिकम् ह.

(५.१.२./१६६२) – गव्यम्, सुगव्यम्, [1]अतिसुगव्यम् । 'विभाषा हविरपूपादिभ्यः' (५.१.४/१६६४)–अपूप्यम्, [2]अपूपीयम्, [3]यवापूप्यम्, यवापूपीयम् । 'शरीरावयवाद् यत्' (५.१.६/१६६६)–[4]दन्त्यम्, राजदन्त्यम् इत्येवमादि [5]सिद्धं भवति ।

इत उत्तरं [6]च सङ्ख्यापूर्वपदानां [7]तदन्तविधिरिष्यते । 'पारायणतुरायणचान्द्रायणं [8]वर्तयति' (५.१.७२/१७३६) – द्वैपारायणिकः, त्रैपारायणिकः । लुगन्तायाः तु प्रकृतेर्नेष्यते । द्वाभ्यां शूर्पाभ्यां क्रीतम् [9]द्विशूर्पम् । त्रिशूर्पम् । द्विशूर्पेण क्रीतम् इति तदन्तविधिप्रतिषेधात् 'शूर्पादञन्यतरस्याम्' (५.१.२६/१६९१) इति अञ् न भवति । सामान्यविहितष्ठञेव भवति । [10]द्विशौर्पिकम् (म. भा. २.३४६) । ठञो द्विगुं प्रत्यनिमित्ताल् लुगभावः । तथाचोक्तम्, 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' (म. भा. २.३४६) इति[11] ।

निष्क । पण । पाद । माष । [12]वाह । द्रोण । षष्टि । निष्कादिः ॥

## शताच्च ठन्यतावशते । (२१/१६८६)

आर्हात् इत्येव । शतशब्दात् ठन्यतौ प्रत्ययौ भवतः अशतेऽभिधेये आर्हीयेष्वर्थेषु । कनो[13]ऽपवादः । शतेन क्रीतं शतिकम्[14], शत्यम् । अशते इति किम् ? शतं परिमाणमस्य शतकं[15] निदानम् (म. भा. २.३४६) । प्रत्ययार्थोऽत्र सङ्घः । शतमेव वस्तुतः [16]प्रकृत्यर्थान्न भिद्यते । [17]इह तु न भवति, शतेन क्रीतं शत्यं शाटकशतम् (म. भा. २.३४६), शतिकं शाटकशतम् इति । वाक्येन ह्यत्र प्रत्ययार्थस्य [18]तत्त्वं गम्यते, न श्रुत्या । तथा चोक्तम्, शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः (म. भा. २.३४६) इति । चकारोऽसमास इत्यनुकर्षणार्थः । द्वौ च शतं च द्विशतं, द्विशतेन क्रीतं द्विशतकम् । [19]त्रिशतकम् । 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' (म. भा. २.३४६) इत्यनया इष्टया समासादपि प्राप्नोति[20] ॥

## सङ्ख्याया अतिशदन्तायाः कन् । (२२/१६८७)

आर्हात् इत्येव । सङ्ख्याया अत्यन्ताया अशदन्तायाश्च कन् प्रत्ययो भवति आर्हीयेषु अर्थेषु । ठञोऽपवादः । पञ्चभिः क्रीतः पञ्चकः [21]पटः । बहुकः । गणकः । [22]अतिशदन्तायाः इति किम् ? [23]साप्ततिकः । चात्वारिंशत्कः । अर्थवतस्तिशब्दस्य ग्रहणाड्डतेः पर्युदासो न भवति (म. भा. २.३४६), कतिकः ॥

## वतोरिड्वा । (२३/१६८८)

वत्वन्तस्य [24]सङ्ख्यात्वात् कन् [25]सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते । वतोः [26]परस्य कनो वा इडागमो भवति आर्हीयेष्वर्थेषु । तावतिकः, तावत्कः । यावतिकः, यावत्कः ॥

---

1. अतिसुगव्यम् नास्ति फ, अतिगव्यम् क. ड. 2. आपूपीयम् ह. 3. यवापूप्यम् नास्ति क. ह. 4. कण्ठचम् क. ग. 5. सिध्यति क. 6. वा ड, च नास्ति फ. 7. तदन्तग्रहणम् क. 8. वर्णयति ह. 9. द्विशूर्प्यम् । त्रिशूर्पेण क्रीतम् इति तदन्तविधेरभावात् क. 10. त्रिशौर्पिकम् इत्यधिकम् ब. ड, द्विशूर्पिकम् त्रिशूर्पिकम् क, द्विशौष्टिकम् त्रिशौष्टिकम् ह. 11. कीर्तितम् इत्यधिकम् क. 12. वाह नास्ति क. 13. अपवादो क. 14. वासः इत्यधिकम् क. 15. वाक्यम् फ, शातकः सङ्घः ड. 16. च इत्यधिकम् ह. 17. इतस्तु प्रतिषेधः ब. क. ड. 18. शतत्वं क. ड. ह. 19. त्रिशतकम् नास्ति फ. 20. इति इत्यधिकम् फ. 21. पटः नास्ति अ. क. ड. 22. अतिशदन्तायाम् ह. 23. आशीतिकः ब. 24. संख्यार्थात् ह. 25. प्रत्ययः इत्यधिकम् फ. 26. उत्तरस्य फ.

## विंशतित्रिंशद्भ्यां ड्वुनसञ्ज्ञायाम् । (२४/१६८९)

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति असञ्ज्ञायां विषये आर्हीयेष्वर्थेषु । विंशकः । त्रिंशकः । 'ति विंशतेर्डिति' (६. ४. १४२/८४४) इति तिलोपः । असञ्ज्ञायाम् इति किम् ? विंशतिकः । त्रिंशत्कः । कथं पुनरत्र कन्, यावता अतिशदन्तायाः इति पर्युदासेन भवितव्यम् (म. भा. २. ३४७) ? योगविभागः करिष्यते, [1]विंशतित्रिंशद्भ्यां कन् प्रत्ययो [2]भवति, ततो ड्वुनसञ्ज्ञायाम् (म. भा. २. ३४७) इति ॥

## कंसाट् टिठन् । (२५/१६९०)

[3]कंसाट् टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । टकारो ङीबर्थः । इकार उच्चारणार्थः । नकारः स्वरार्थः । कंसिकः । कंसिकी ।

[५०२] अर्धाच्चेति वक्तव्यम् । (म. भा. २. ३४७)

अर्धिकः । अर्धिकी ।

[५०३] कार्षापणाट् टिठन् वक्तव्यः ।

[4]कार्षापणिकः । कार्षापणिकी ।

[५०४] [5]प्रतिशब्दश्चास्यादेशो वा वक्तव्यः ।

प्रतिकः । प्रतिकी ॥

## शूर्पादञन्यतरस्याम् । (२६/१६९१)

शूर्पशब्दादन्यतरस्याम् अञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु । ठञोऽपवादः । पक्षे सोऽपि भवति । शूर्पेण [6]क्रीतम् शौर्पम्, शौर्पिकम् ॥

## शतमानविंशतिकसहस्रवसनादण् । (२७/१६९२)

शतमानादिभ्यः शब्देभ्यः अण् प्रत्ययो भवति आर्हीयेष्वर्थेषु । [7]ठक्ठञोरपवादः । शतमानेन क्रीतं शातमानं [8]शतम् । वैंशतिकम् । साहस्रम् । वासनम्[9] ॥

---

1. विंशति त्रिंशत् इत्याभ्याम् क. 2. भवति नास्ति फ. 3. कंसशब्दात् ब. क. ड. फ. 4. नास्ति फ. 5. प्रति चास्यादेशो भवति क. 6. क्रीतः शौर्पः शौर्पिकः क. 7. ठञोऽपवादः ह. 8. शतम् नास्ति ब.क.ड.फ. 9. वासकम् इत्यधिकम ग.

## अध्यर्धपूर्वद्विगोर्लुगसञ्ज्ञायाम् । (२८/१६९३)

आर्हात् इत्येव । अध्यर्धशब्दः पूर्वो यस्मिन् तस्माद् अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च परस्य [1]आर्हीयस्य लुग् भवति असञ्ज्ञायां विषये । अध्यर्धकंसम् । द्विकंसम् । त्रिकंसम् । अध्यर्धशूर्पम् । द्विशूर्पम् । त्रिशूर्पम् । असञ्ज्ञायाम् इति किम् ? [2]पाञ्चलोहितिकम् । पाञ्चकलापिकम् । लोहिनीशब्दस्य [3]भस्याढे तद्धिते (६.३.३५/८३६ वा.) इति पुंवद्भावः । [4]प्रत्ययान्तस्य विशेषणमसञ्ज्ञाग्रहणं न चेत् [5]प्रत्ययान्तं सञ्ज्ञा इति । अध्यर्धशब्दः [6]सङ्ख्यैव, [7]किमर्थं भेदेनोपादीयते ? ज्ञापकार्थं, क्वचिदस्य सङ्ख्याकार्यं न भवति,[8] [9]'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने [10]कृत्वसुच्' (५.४.१७/२०८५) इति ॥

## विभाषा कार्षापणसहस्राभ्याम् । (२९/१६९४)

अध्यर्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तात् [11]उत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग् [12]भवति । पूर्वेण [13]लुकि नित्य प्राप्ते [14]विकल्प्यते । अध्यर्धकार्षापणम्, अध्यर्धकार्षापणिकम् । द्विकार्षापणम्, द्विकार्षापणिकम् । औपसङ्ख्यानिकस्य टिठनो [15]लुक् । [16]अलुक्पक्षे च प्रतिरादेशो विकल्पितः[17] । अध्यर्धप्रतिकम् । द्विप्रतिकम् । त्रिप्रतिकम् । सहस्रात् – अध्यर्धसहस्रम्, अध्यर्धसाहस्रम् । द्विसहस्रम्, द्विसाहस्रम्[18] । [19]अलुक्पक्षे सङ्ख्यायाः संवत्सरसङ्ख्यस्य च इत्युत्तरपदवृद्धिः ।

[५०५] सुवर्णशतमानयोरुपसङ्ख्यानम् । (म.भा. २.३४९)

अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम् । द्विसुवर्णम्, द्विसौवर्णिकम् । अध्यर्धशतमानम्, [20]अध्यर्धशातमानम् । द्विशतमानम्, द्विशातमानम् । [21]परिमाणान्तस्य (७.३.१७/१६८३) इत्युत्तरपदवृद्धिः ॥

## द्वित्रिपूर्वान्निष्कात् । (३०/१६९५)

[22]द्विगोः इत्येव । द्वित्रिपूर्वाद् द्विगोर्निष्कान्तात् [23]आर्हीयप्रत्ययस्य विभाषा लुग् भवति । द्विनिष्कम्, द्विनैष्किकम् । [24]त्रिनिष्कम्, त्रिनैष्किकम् ।

[५०६] बहुपूर्वाच्चेति[25] वक्तव्यम् ।

बहुनिष्कम्, बहुनैष्किकम् । परिमाणान्तस्य[26] (७.३.१७/१६८३) इत्युत्तरपदवृद्धिः ॥

## बिस्ताच्च । (३१/१६९६)

द्वित्रिपूर्वात् इति चकारेणानुकृष्यते । द्वित्रिपूर्वाद् [27]बिस्तान्ताद् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग् भवति । द्विबिस्तम्, द्विबैस्तिकम् । त्रिबिस्तम्, त्रिबैस्तिकम् । [28]बहुबिस्तम्, बहुबैस्तिकम्[29] ॥

---

1. आर्हीयप्रत्ययस्य ब.क.ड.फ.ग.ह. 2. पाञ्चलौहितिकम् ह. 3. भस्याढे इति नास्ति फ. 4. प्रत्ययान्तविशेषणम् क. ब. 5. प्रत्ययान्तेन संज्ञा गम्यते क, प्रत्ययान्तसंज्ञा ह. 6. संख्या इति ह, शब्दोऽपि ड. 7. स इत्यधिकम् क.ह. 8. इति इत्यधिकम् फ.ह. 9. संख्या इति ह. 10. कृत्वसुच् नास्ति ब.क. 11. परस्य क.फ. 12. विधीयते फ. 13. लुकि नास्ति फ. ह. 14. विकल्पो भवति फ, विभाषा लुग् विकल्प्यते ह. 15. लुक् नास्ति फ. 16. पक्षे ह, पक्षे तु क. 17. भवति इत्यधिकम् फ, विभाषितः ह. 18. त्रिसहस्रम् त्रिसाहस्रम् इत्यधिकम् क.ड. 19. अलुक्पक्षे नास्ति क. 20. नास्ति फ. 21. वाक्यमिदं नास्ति ब. क. ड. 22. वाक्यमिदं नास्ति ब.क.फ. 23. आर्हीयेष्वर्थेषु विहितस्य क. 24. त्रिनिष्कम् नास्ति ह. 25. च नास्ति क. 26. संज्ञावचनयोः इत्यधिकम् ड. 27. बिस्तान्तात् नास्ति फ,°पूर्वान्तात् द्विगोः क. 28. बहुपूर्वाच्च इति वक्तव्यम् इत्यधिकम् ब.क.ड. 29. योगविभागः उत्तरार्थः इत्यधिकम् ब.

## विंशतिकात् खः । (३२/१६९७)

[1]अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तात् आर्हीयेष्वर्थेषु खः प्रत्ययो भवति । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । त्रिविंशतिकीनम् । विधानसामर्थ्यात् [2]अस्य लुक् न भवति ॥

## खार्या ईकन् । (३३/१६९८)

अध्यर्धपूर्वाद् द्विगोः इत्येव । अध्यर्धपूर्वात् [3]प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तात् आर्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति । अध्यर्धखारीकम् । द्विखारीकम्[4] ।

[५०७] [5]केवलायाश्चेति वक्तव्यम् । (म. भा. २. ३४९)

खारीकम् ।

[५०८] काकिण्याश्चोपसङ्ख्यानम् । (म. भा. २. ३५०)

अध्यर्धकाकिणीकम् । [6]द्विकाकिणीकम् । त्रिकाकिणीकम् ।

[५०९] केवलायाश्च । (म. भा. २. ३५०)

[7]काकिणीकम् ॥

## पणपादमाषशताद् यत् । (३४/१६९९)

[8]अध्यर्धपूर्वाद् द्विगोः इत्येव । अध्यर्धपूर्वाद् [9]द्विगोश्च पणपादमाषशत[10]शब्दान्तात् आर्हीयेष्वर्थेषु यत् प्रत्ययो भवति । अध्यर्धपण्यम् । द्विपण्यम् । त्रिपण्यम् । पाद–अध्यर्धपाद्यम् । द्विपाद्यम् । त्रिपाद्यम् । [11]पद्भावो न भवति '[12]पद्यत्यतदर्थे' (६. ३. ५३/९९१) इति । [13]प्राण्यङ्गस्य (६. ३. ५२/९९०) स इष्यते । इदं तु परिमाणम् । [14]माष–अध्यर्धमाष्यम् । द्विमाष्यम् । त्रिमाष्यम् । शत–अध्यर्धशत्यम् । द्विशत्यम् । त्रिशत्यम् ॥

## शाणाद्वा । (३५/१७००)

अध्यर्धपूर्वात् द्विगोः इत्येव । [15]शाणशब्दाद् अध्यर्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति, तस्य [16]च लुक् । [17]अध्यर्धशाण्यम्, अध्यर्धशाणम् । द्विशाण्यम्, द्विशाणम् । त्रिशाण्यम्, त्रिशाणम् ।

[५१०] शताच्चेति वक्तव्यम् ।

अध्यर्धशत्यम्, अध्यर्धशतम् । द्विशत्यम्, द्विशतम् । त्रिशत्यम्, त्रिशतम् ॥

---

1. अध्यर्धपूर्वात् द्विगोश्च द्वित्रिपूर्वस्य ब. फ, अध्यर्धपूर्वद्विगोः इत्येव ह. ड. 2. अस्य नास्ति अ.ब.ड.ह. 3. प्रातिपदिकात् नास्ति फ. 4. त्रिखारीकम् इत्यधिकम् ब. ग. फ. 5. केवलाच्चेति अ. ब.क.ड. 6. नास्ति फ, द्विकाकणीकम् ग. 7. काकणीकम् ग. 8. वाक्यमिदं नास्ति फ. 9. प्रातिपदिकात् इत्यधिकम् क. फ. 10. शब्द नास्ति क. 11. अत्र इत्यधिकम् फ, पादशब्दस्य पद्भावः क. 12. पद्यत्येव इत्यनेन ड. 13. प्राण्यङ्गात् शब्दस्य पद्भावः इष्यते क. 14. माष–त्रिशत्यम् नास्ति क. 15. शाणशब्दान्तात् ह. क. फ. 16. च नास्ति फ. ब. ह. 17. अध्यर्धशाण्यः फ. ह.

## द्वित्रिपूर्वादण् च। (३६/१७०१)

'शाणाद्वा' (५१.३५/१७००) इत्येव। द्वित्रिपूर्वाच्छाणान्तात् प्रातिपदिकाद् आर्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद् यच्च वा। तेन त्रैरूप्यं [1]सम्पद्यते। द्वैशाणम्, द्विशाण्यम्, द्विशाणम्। त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम्। 'परिमाणान्तस्यासञ्ज्ञाशाणयोः' (७.३.१७/१६८३) इति पर्युदासादि[2]वृद्धिरेव भवति ॥

## तेन क्रीतम्। (३७/१७०२)

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः। तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते। तेन इति तृतीयासमर्थात् [3]क्रीतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतम् साप्ततिकम्। आशीतिकम् (५.१.१८/१६८०)। नैष्किकम्। पाणिकम्। [4]पादिकम्। माषिकम् (५.१.२०/१६८२)। शत्यम्। शतिकम् (५.१.२१/१६८६)। द्विकम्। त्रिकम् (५.१.२२/१६८७)। तेन इति मूल्यात् करणे तृतीया [5]समर्थ-विभक्तिः। अन्यत्रानभिधानान् न भवति, देवदत्तेन क्रीतम्, पाणिना क्रीतम् इति। द्विवचनबहुवचनान्तात्[6] प्रत्ययो न भवति, प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतम् इति, अनभिधानादेव। यत्र तु प्रकृत्यर्थस्य सङ्ख्याभेदावगमे प्रमाणमस्ति तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति। द्वाभ्यां [7]क्रीतम् द्विकम्। त्रिकम्। पञ्चकम्। तथा मुद्गैः क्रीतम् मौद्गिकम्। माषिकम्। न ह्येकेन मुद्गेन क्रयः सम्भवति (म.भा. २.३५०) ॥

## तस्य निमित्तं संयोगोत्पातौ। (३८/१७०४)

तस्य इति षष्ठीसमर्थात् निमित्तम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तन्निमित्तं संयोगश्चेत् [8]स भवति उत्पातो वा। संयोगः सम्बन्धः प्राणिनां शुभाशुभसूचकः। [9]महाभूतपरिणामः उत्पातः। शतस्य निमित्त [10]धनपतिना संयोगः शत्यः, शतिकः। साहस्रः। उत्पातः खल्वपि – शतस्य निमित्तं उत्पातः दक्षिणाक्षिस्पन्दनम् शत्यम्, शतिकम्। साहस्रम्।

[५११] तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम्। (म.भा. २.३५१)

वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्।

[५१२] सन्निपाताच्चेति वक्तव्यम्। (म.भा. २.३५१)

सान्निपातिकम् ॥

## गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत्। (३९/१७०५)

गोशब्दाद् द्व्यचश्च प्रातिपदिकात् सङ्ख्यापरिमाणाश्वादिविवर्जितात् यत् प्रत्ययो भवति 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८/१७०४) इत्येतस्मिन्नर्थे[11]। ठञादीनामपवादः। गोः निमित्तं [12]संयोगः उत्पातो वा

---

1. भवति अ.ड.इ.ग. शाणाद्वा – सम्पद्यते नास्ति ह. 2. °पद° इत्यधिकम् क. 3. प्रतीतम् ह. 4. पादिकं माषिकम् नास्ति ह.ड. 5. विभक्तिः क. 6. च इत्यधिकम् फ.ह. 7. शूर्पाभ्याम् क्रीतं द्विशूर्पम् त्रिशूर्पम् फ. 8. स नास्ति ब.ह. 9. महाभूतानां विपरिणामः ड.फ.ह. 10. दानपतिना क.ड. 11. विषये फ.ह. 12. संयोगोत्पातौ ह.

[1]गव्यः । द्व्यचः खल्वपि – [2]धन्यम् । स्वर्ग्यम् । यशस्यम् । आयुष्यम् । असङ्ख्यापरिमाणाश्वादेरिति किम् ? पञ्चानां निमित्तम् पञ्चकम् । सप्तकम् । अष्टकम् । परिमाण – प्रास्थिकम् । [3]खारीकम् । अश्वादि – [4]आश्विकः ।

[५१३] ब्रह्मवर्चसादुपसङ्ख्यानम्[5] । (म.भा. २.३५१)

ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यम् ।

अश्व । अश्मन् । [6]गण । ऊर्णा । उमा । वसु । [7]वर्ष । भङ्ग । अश्वादिः ।।

## पुत्राच्छ च । (४०/१७०६)

पुत्रशब्दाच् छः प्रत्ययो भवति, चकाराद् यत् च, 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८/१७०४) [8]इत्येतस्मिन् विषये । द्व्यचः (५.१.३९/१७०५) इति नित्ये यति प्राप्ते वचनम् । [9]पुत्रस्य निमित्तं संयोगः उत्पातो वा [10]पुत्रीयम्, पुत्र्यम् ।।

## सर्वभूमिपृथिवीभ्यामणञौ । (४१/१७०७)

सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८/१७०४) इत्येतस्मिन् [11]विषये । ठकोऽपवादौ । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमेः अनुशतिकादि (७.३.२०/१४३८ ग.पा.) पाठादुभयपदवृद्धिः ।।

## तस्येश्वरः । (४२/१७०८)

तस्य इति षष्ठीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां [12]यथासङ्ख्यमणञौ प्रत्ययौ भवतः ईश्वरः इत्येतस्मिन् विषये । सर्वभूमेः ईश्वरः सार्वभौमः । पार्थिवः । षष्ठीप्रकरणे पुनः [13]षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य [14]निवृत्तये । अन्यथा [15]संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत ।।

## तत्र विदित इति च । (४३/१७०९)

तत्र इति सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः विदितः इत्येतस्मिन्नर्थे[16] । विदितो ज्ञातः प्रकाशितः इत्यर्थः । सर्वभूमौ विदितः सार्वभौमः । पार्थिवः ।।

## लोकसर्वलोकाट्ठञ् । (४४/१७१०)

लोकसर्वलोकशब्दाभ्यां [17]तत्र इति सप्तमीसमर्थाभ्याम् विदितः इत्येतस्मिन् [18]विषये ठञ् प्रत्ययो भवति । लोके विदितः लौकिकः । [19]सार्वलौकिकः । अनुशतिकादित्वात् (७.३.२०/१४३८ ग.पा.) उभयपदवृद्धिः ।।

---

1. गव्यम् ड.फ.ह. 2. धनस्य निमित्तम् इत्यधिकम् ह.ब, धन्यः स्वर्ग्यः यशस्यः आयुष्यः क. ह, यशसो निमित्तं यशस्यः फ. 3. खारिकम् ह. 4. आश्विकम् ह, आश्मिकः क. फ. ड. 5. कर्तव्यम् इत्यधिकम् क. 6. गुण क, हस्ति इत्यधिकम् क. 7. वर्षा क. 8. इत्यादौ क. 9. पुत्रस्य–उत्पातो वा नास्ति ह. 10. पुत्रीयः पुत्र्यः क.फ. 11. अर्थे क.ह. 12. यथासङ्ख्यम् नास्ति अ.ब.क.इ.ग. 13. षष्ठी नास्ति फ. 14. निवृत्तेषु क. 15. संयोगोत्पातवत् क. 16. विषये फ, चकारात् ईश्वर इत्यर्थे च इत्यधिकम् क. 17. तत्र नास्ति फ. 18. अर्थे ह.क.फ. 19. नास्ति फ.

## तस्य वापः । (४५/१७११)

तस्य इति षष्ठीसमर्थाद् वापः [1]इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । उप्यतेऽस्मिन्[2] वापः क्षेत्रमुच्यते । प्रस्थस्य वापः क्षेत्रं प्रास्थिकम् । द्रौणिकम् । खारीकम् ॥

## पात्रात् ष्ठन् । (४६/१७१२)

पात्रशब्दात् ष्ठन् प्रत्ययो भवति 'तस्य वापः' (५.१.४५/१७११) इत्येतस्मिन् [3]विषये । ठञोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पात्रशब्दः परिमाणवाची । पात्रस्य वापः पात्रिकं क्षेत्रम् । पात्रिकी [4]क्षेत्रभक्तिः ॥

## तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते । (४७/१७१३)

तद् इति [5]प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् [6]प्रथमासमर्थं [7]वृद्ध्यादि चेत् तद् दीयते । दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसम्बध्यते । तत्र यदधमर्णेन उत्तमर्णाय [8]मूलधनातिरिक्तं देयं तद् वृद्धिः । ग्रामादिषु [9]स्वामिग्राह्यो भागः आयः । पटादीनामुपादानमूलादतिरिक्तं द्रव्यं लाभः । [10]रक्षानिर्वेशो राजभागः शुल्कः । उत्कोच[11]उपदा । पञ्च अस्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः । सप्तकः[12] । शत्यः, शतिकः । साहस्रः ॥

[५१४] चतुर्थ्यर्थ उपसङ्ख्यानम् । (म. भा. २.३५१)

पञ्च अस्मै वृद्धिर्वा आयो वा लाभो वा [13]उपदा वा दीयते पञ्चको [14]देवदत्तः । सिद्धं त्वधिकरणत्वेन विवक्षितत्वात् । सममब्राह्मणे दानम् इति यथा ॥

## पूरणार्धाट्ठन् । (४८/१७१४)

पूरणवाचिनः [15]शब्दात् अर्धशब्दाच्च ठन् प्रत्ययो भवति 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' (५.१.४७/१७१३) इत्येतस्मिन्न[16]र्थे । यथायथं ठक्टिठनोरपवादः । द्वितीयो [17]वृद्ध्यादिरस्मिन् दीयते [18]द्वितीयिकः । तृतीयिकः । पञ्चमिकः । [19]सप्तमिकः । अर्धिकः । अर्धशब्दो रूपकार्धस्य [20]रूढिः ॥

## भागाद्यच्च । (४९/१७१५)

भागशब्दाद् यत् प्रत्ययो भवति, चकारात् ठन् च, 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' (५.१.४७/१७१३) इत्येतस्मिन्नर्थे[21] । ठञोऽपवादः । [22]भागो वृद्ध्यादिरस्मिन् दीयते भाग्यं, भागिकं शतम् । भाग्या, [23]भागिका विंशतिः । भागशब्दोऽपि रूपकार्धस्य वाचकः ॥

---

1. इत्यत्रार्थे क. ब. 2. इति इत्यधिकम् क. फ. ह. 3. अर्थे ह. फ. 4. क्षेत्रभूमिः क, नास्ति फ. 5. प्रथमा इत्यस्मिन्नर्थे फ. 6. प्रथमासमर्थम् नास्ति ब. क. 7. वृद्ध्यधिकम् ह. 8. मूलातिरिक्तं फ. 9. राजग्राह्यः फ. 10. वणिजां रक्षासुवेशः ह. 11. उपदा नास्ति फ. 12. नवकः इत्यधिकम् फ, अष्टकः इत्यधिकम् ह. 13. शुल्को वा इत्यधिकम् क. 14. ब्राह्मणः क. 15. प्रातिप्रदिकात् क. फ. ब. 16. विषये फ. 17. वृद्धादिभिः ह. 18. द्वितीयितः पञ्चयितः ह. 19. नास्ति ब. फ. 20. वाचकः ब. क. ड. 21. विषये क. फ. 22. भागशब्दात् इत्यधिकम् क. 23. भागिका नास्ति क.

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः । (५०/१७१६)

तद् इति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । प्रकृतिविशेषणं भाराद् वंशादिभ्यः [1]इति । वंशादिभ्यः परो यो भारशब्दः तदन्तात् प्रातिपदिकात् इति । वंशभारं हरति वहति आवहति वा वांशभारिकः । कौटजभारिकः । बाल्वजभारिकः । भारात् इति किम् ? वंशं हरति । वंशादिभ्यः इति किम् ? व्रीहिभारं [2]हरति ।

अपरा वृत्तिः – भाराद् वंशादिभ्यः इति, भारभूतेभ्यो वंशादिभ्यः इत्यर्थः । भारशब्दोऽर्थद्वारेण [3]वंशादीनां विशेषणम् । भारभूतान् वंशान् हरति वांशिकः । [4]कौटजिकः । [5]बाल्वजिकः । भारात् इति किम् ? वंशं हरति । वंशादिभ्यः इति किम् ? भारभूतान् व्रीहीन् वहति ।

[6]सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः । [7]तदुभयमपि ग्राह्यम्[8] । हरति देशान्तरं [9]प्रापयति चोरयति वा । वहत्युत्क्षिप्य धारयतीत्यर्थः । आवहति [10]उत्पादयति [11]इत्यर्थः ।

वंश । [12]कुटज । बल्वज । मूल[13] । अक्ष । स्थूणा । अश्मन् । अश्व । इक्षु[14] । खट्वा । वंशादिः ॥

## वस्नद्रव्याभ्यां ठन्कनौ । (५१/१७१७)

[15]वस्नद्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासङ्ख्यं ठन् कन् [16]इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु । वस्नं हरति वहति[17] वा वस्निकः । [18]द्रव्यकः ॥

## सम्भवत्यवहरति पचति । (५२/१७१८)

तत् इति द्वितीया समर्थविभक्तिरनुवर्तते । [19]तदिति द्वितीयासमर्थात् सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । तत्राधेयस्य प्रमाणानतिरेकः सम्भवः । उपसंहरणमवहारः । विक्लेदनं पाकः । प्रस्थं सम्भवति अवहरति पचति वा प्रास्थिकः । [20]कौडविकः । खारीकः[21] । ननु च पाके च सम्भवोऽस्ति ? नास्त्यत्र नियोगः । प्रस्थं पचति ब्राह्मणी प्रास्थिकी ।

[५१५] तत्पचतीति [22]द्रोणादण् च । (म. भा. २. ३५२)

द्रोणं पचति द्रौणी, द्रौणिकी[23] ॥

---

1. इत्यर्थः फ. 2. वहति फ. 3. वंशानाम् ड. फ. 4. कौटजिकः नास्ति फ. 5. बाल्वजिकः नास्ति क. 6. सूत्रार्थद्वयं प्रमाणमेव इत्यधिकम् क. 7. तस्मादुभयमपि क. 8. भवति इत्यधिकम् ब. क. 9. नयति चारयति वा क. 10. उत्क्षेपयति क. 11. इत्यर्थः नास्ति फ. 12. कूटज ड. 13. सफल इत्यधिकम् क. 14. श्लक्ष इत्यधिकम् ड. 15. वस्नशब्दात् द्रव्यशब्दाच्च क. ह. 16. एतौ नास्ति क. 17. आवहति वा ब. ड. फ, वसु हरति आवहति वस्विकः क. 18. एवं इत्यधिकम् ब. क. फ. 19. तदिति नास्ति क. 20. कौलविकः क. 21. कटाहः इत्यधिकम् फ. ह. 22. द्रोणादेश्च क. 23. वा ब्राह्मणी इत्यधिकम् ग.

## आढकाचितपात्रात् खोऽन्यतरस्याम् । (५३/१७१९)

आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति । आढकं संभवति अवहरति पचति वा आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ॥

## द्विगोः ष्ठंश्च । (५४/१७२०)

[1]आढकाचितपात्रात् इत्येव । आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति, चकारात् खः[2], अन्यतरस्याम् । [3]विधानसामर्थ्यादेवानयोर्लुक् न भवति । ठञस्तु पक्षेऽनुज्ञातस्याध्यर्धपूर्वद्विगोः (५.१.२८/१६९३) इति लुग् भवत्येव । नकारः स्वरार्थः । षकारो ङीषर्थः । द्व्याढकिकी, द्व्याढकीना, द्व्याढकी (४.१.२१/४७९) । द्व्याचितिकी, द्व्याचितीना, द्व्याचिता । अपरिमाणबिस्ताचितेति (४.१.२२/४८०) ङीपः प्रतिषेधः । [4]द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ॥

## कुलिजाल्लुक्खौ च । (५५/१७२१)

द्विगोः इत्येव । कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः । चकारात् ष्ठन् च । अन्यतरस्यांग्रहणा[5]नुवृत्त्या लुगपि विकल्प्यते । ठञः पक्षे श्रवणं भवति । तेन [6]चातूरूप्यं संपद्यते । द्वे कुलिजे संभवति अवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजी,[7] द्वैकुलिजिकी । 'परिमाणान्तस्यासंज्ञाशाणयोः' (७.३.१७/१६८३) इत्यत्र कुलिजग्रहणमपीष्यते, तेनोत्तरपदवृद्धिरपि न भवति ॥

## सोऽस्यांशवस्नभृतयः । (५६/१७२२)

स इति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् तत् प्रथमासमर्थम् [8]अंशवस्नभृतयश्चेत् ता भवति । अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् । पञ्च [9]अंशो वस्नो वा भृतिर्वास्य पञ्चकः । सप्तकः[10] । [11]साहस्रः ॥

## तदस्य परिमाणम् । (५७/१७२३)

तत् इति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति [12]यत् प्रथमासमर्थं परिमाणं चेत् [13]तद् भवति । [14]प्रस्थः परिमाणमस्य प्रास्थिको राशिः[15] । खारशतिकः । शत्यः, शतिकः । [16]साहस्रः । द्रौणिकः । [17]कौडविकः । वर्षशतं परिमाणमस्य वार्षशतिकः । [18]वार्षसहस्रिकः । षष्टिर्जीवितपरिमाणमस्य इति षाष्टिकः । [19]साप्ततिकः ।

समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेवानुवर्तिष्यते, [20]किमर्थं पुनरनयोरुपादानम् ? [21]पुनर्विधानार्थम् । द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः[22] । द्विसाप्ततिकः । पुनर्विधानसामर्थ्याद् अध्यर्धपूर्वद्विगोर्लुक् (५.१.२८/१६९३) न भवति ॥

---

1. वाक्यमिदं नास्ति फ. 2. च इत्यधिकम् फ. 3. तत्र इत्यधिकम् फ. 4. द्विपात्रे संभवति अवहरति पचति इत्यधिकम् ग. 5. अनुवृत्तेः क. 6. चत्वारि रूपाणि भवन्ति ब. 7. ठञ्लुक् इत्यधिकम् ड. 8. अंशादि चेत् भवति क, अंशादि तत् भवति फ. 9. अंशा वत्स्ना क. 10. नवकः दशकः शत्यः शतिकः द्विकः त्रिकः इत्यधिकम् क. 11. सहस्रकः ह. 12. तत् क. फ. ह. 13. तत् नास्ति फ. 14. प्रस्थं ड. 15. द्रौणिकः इत्यधिकम् फ. ह. 16. खारीसहस्रिकः क. 17. नास्ति फ. 18. वार्षसाहस्रः फ. 19. द्विसाप्ततिकः अ.ड.ग. 20. तद् इत्यधिकम् फ. 21. अधिकविधानार्थम् ह. 22. त्रिषाष्टिकः त्रिसाप्ततिकः इत्यधिकम् ब. क. फ.

## सङ्ख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु । (५८/१७२४)

'तदस्य परिमाणम्' (५.१.५७/१७२३) इति वर्तते । [1]सङ्ख्यावाचिनः [1]प्रातिपदिकात् परिमाणोपाधिकात् प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । सञ्ज्ञासङ्घसूत्राध्ययनेषु इति प्रत्ययार्थविशेषणम् । तत्र सञ्ज्ञायां स्वार्थे प्रत्ययो [2]वाच्यः[3] (म. भा. २.३५२) । [4]पञ्चैव पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । [5]सङ्घ – [6]पञ्च परिमाणमस्य पञ्चकः [7]सङ्घः । अष्टकः । [8]सूत्र – अष्टौ अध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम् । दशकं वैयाघ्रपदीयम् । त्रिकं काशकृत्स्नम् । ननु चाध्यायसमूहः सूत्रसङ्घ एव भवति ? नैतदस्ति । [9]प्राणिसमूहे सङ्घशब्दो रूढः । अध्ययन – पञ्चकोऽधीतः[10] । सप्तकोऽधीतः । अष्टकः । नवकः[11] । [12]अधीतिरध्ययनम् । तस्य सङ्ख्यापरिमाणं पञ्चावृत्तयः पञ्चवाराः पञ्च रूपाणि अस्याध्ययनस्य पञ्चकमध्ययनम् ।

[५१६] स्तोमे डविधिः पञ्चदशाद्यर्थः । (म. भा. २.३५४)

पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः [13]स्तोमः । सप्तदशः । एकविंशः ।

[५१७] शन्शतोर्डिनिश्छन्दसि[14] ।

'पञ्चदशिनोऽर्धमासाः' (तै. सं. ७.५.२०१) 'त्रिंशिनो मासाः' (तै. सं. ७.५.२०१) ।

[५१८] विंशतेश्चेति वक्तव्यम् ।

विंशिनोऽङ्गिरसः ॥

## पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । (५९/१७२५)

'तदस्य परिमाणम्' (५.१.४७/१७२३) इति [15]वर्तते । पङ्क्त्यादयः शब्दा निपात्यन्ते । [16]यदिह लक्षणेनानुपपन्नं [17]तत्सर्वं निपातनात् [18]सिद्धम् । पञ्चानां टिलोपः [19]तिश्च प्रत्ययः । पञ्च[20] परिमाणमस्य पङ्क्तिश्छन्दः । [21]द्वयोर्दशतोः विन्भावः शतिश्च प्रत्ययः । द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः । (म. भा. २.३५५) । त्रयाणां दशतां त्रिन्भावः शत् च प्रत्ययः । त्रयो दशतः परिमाणमस्य त्रिंशत् । चतुर्णां [22]दशतां चत्वारिन्भावः शत् च प्रत्ययः । चत्वारो दशतः परिमाणमस्य चत्वारिंशत् । पञ्चानां दशतां [23]पञ्चाभावः शत् च प्रत्ययः । पञ्च दशतः परिमाणमस्य पञ्चाशत् । षण्णां [24]दशतां षड्भावः, तिः प्रत्ययोऽपदत्वं च । षड् दशतः परिमाणमस्य षष्टिः । सप्तानां दशतां [25]सप्तभावः तिः प्रत्ययश्च । सप्त दशतः परिमाणमस्य सप्ततिः ।

---

1. प्रातिपदिकात् नास्ति क. फ. ह. 2. उत्पाद्यः म. भा. 3. अन्यत्र विशेषणीयो वाच्यः इत्यधिकम् क. 4. एव नास्ति ह. 5. सङ्घे च क. ड. फ. 6. पञ्च परिमाणमस्य नास्ति क. 7. सङ्घः नास्ति फ, सप्तकः सङ्घः इत्यधिकम् फ. 8. सूत्रे ड. 9. प्राणि नास्ति फ. 10. पञ्चकः इत्यधिकम् फ. 11. दशकः इत्यधिकम् फ. 12. अधीतेः क. 13. स्तोमः नास्ति क. 14. वक्तव्यः इत्यधिकम् फ. 15. अनुवर्तते फ. 16. यद् इत्यधिकम् ब. 17. तत् इत्यधिकम् ब. 18. साध्यते क. 19. च नास्ति अ. ब. ड. इ. 20. पदानि इत्यधिकम् ड. 21. दशतेः विस्तारः विंशतिः क. 22. दशतां नास्ति क. 23. पञ्चभावः आशत् च प्रत्ययः फ. 24. दशताम् नास्ति क. फ. 25.सप्तभावः नास्ति क. फ.

अष्टानां [1]दशताम् अशीभावः तिः प्रत्ययश्च । अष्टौ दशतः [2]परिमाणमस्य अशीतिः । नवानां [3]दशतां नवभावः तिः प्रत्ययश्च । नव दशतः परिमाणमस्य नवतिः । दशानां [4]दशतां शभावः तश्च प्रत्ययः । दश दशतः परिमाणमस्य [5]सङ्घस्य शतम् ।

विंशत्यादयो[6] गुणशब्दाः, ते यथाकथंचिद् [7]व्युत्पाद्याः । [8]नात्रावयवार्थेऽभिनिवेष्टव्यम् । तथाहि – पङ्क्तिः इति [9]क्रमसंनिवेशेऽपि वर्तते, [10]ब्राह्मणपङ्क्तिः, पिपीलिकापङ्क्तिः इति । न चात्रावयवार्थः कश्चिदस्ति । या चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसङ्ख्यानुविधानं च, [11]एतदपि सर्वं स्वाभाविकमेव । सहस्रादयोऽप्येवंजातीयकाः तद्वदेव द्रष्टव्याः । उदाहरणमात्रमेतदिति ॥

## पञ्चद्दशतौ वर्गे वा । (६०/१७२६)

पञ्चत् दशत् इत्येतौ[12] निपात्येते तदस्य परिमाणम् इत्यस्मिन् [13]विषये वर्गेऽभिधेये । सङ्ख्यायाः (५.१.५८/१७२४) इति कनि प्राप्ते [14]डतिर्निपात्यते । वावचनात् पक्षे सोऽपि भवति । पञ्च परिमाणस्य पञ्चद् [15]वर्गः । [16]दशद्वर्गः । पञ्चको वर्गः । दशको वर्गः ॥

## सप्तनोऽञ् छन्दसि । (६१/३४०१)

[17]वर्गे इत्येव, तदस्य परिमाणम् इति च । सप्तन् शब्दाच् छन्दसि [18]विषये[19]ऽञ् प्रत्ययो भवति वर्गेऽभिधेये । [20]सप्त साप्तानि (तै. सं. ५.४.७.५) असृजत् ॥

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डण् । (६२/१७२७)

तदस्य परिमाणम् [21]इत्येव । वर्गे इति निवृत्तम् । त्रिंशच्चत्वारिंशच्छब्दाभ्यां सञ्ज्ञायां [22]विषये डण् प्रत्ययो भवति तदस्य परिमाणम् इत्येतस्मिन् [23]विषये ब्राह्मणेऽभिधेये । [24]अभिधेयसप्तमी एषा, [25]न विषयसप्तमी । तेन मन्त्रभाषयोरपि भवति । त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि । चात्वारिंशानि ब्राह्मणानि । कानिचिदेव ब्राह्मणान्युच्यन्ते ॥

## तदर्हति । (६३/१७२८)

तत् इति द्वितीयासमर्थाद् अर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । वास्त्रयुग्मिकः (५.१.१८/१६८१)[26] । शत्यः, शतिकः (५.१.२१/१६८६) । साहस्रः (५.१.२७/१६९२) ॥

---

1. दशताम् नास्ति क. फ. 2. परिमाणमस्य नास्ति फ. 3. दशताम् नास्ति क. 4. दशताम् नास्ति फ. 5. सङ्घस्य नास्ति क. फ. ह. 6. च शब्दाः इत्यधिकम् फ. 7. व्युत्पाद्यन्ते क. 8. अवयवार्थे नास्ति क. 9. क्रमसंनिवेशः क. 10. ब्रह्मपङ्क्तिः क. 11. तदपि ह. 12. शब्दौ इत्यधिकम् क. फ. ह. 13. अर्थे ह. 14. डतिः नास्ति क. 15. वर्गस्य क. 16. दशत्परिमाणमस्य इत्यधिकम् क. 17. सर्गे ह. 18. अर्थे फ. 19. अण् ह. 20. साप्त सामान्यसृजन् ह. साप्तानि असृजत् क. 21. इति वर्तते ब. क. फ. 22. विषये नास्ति फ. 23. अर्थे क. 24. अभिधेये सप्तमी क. 25. न विषय – भवति नास्ति क. फ. ह. 26. वास्त्रिकः प्रास्तिकः इत्यधिकम् क.

## छेदादिभ्यो नित्यम् । (६४/१७२९)

नित्यग्रहणं प्रत्ययार्थविशेषणम् । [1]छेदादिभ्यो द्वितीयासमर्थेभ्यो नित्यम् अर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । छेदं नित्यमर्हति छैदिकः । भैदिकः ।

छेद । भेद । द्रोह । दोह । [2]वर्त । कर्ष । संप्रयोग । विप्रयोग । प्रेषण । [3]संप्रश्न । विप्रकर्ष । 'विराग विरङ्गं च' (ग. सू. ११०) । वैरङ्गिकः[4] ॥

## शीर्षच्छेदाद्यच्च । (६५/१७३०)

[5]शीर्षच्छेदशब्दाद्[6] द्वितीयासमर्थान् नित्यमर्हति [7]इत्यस्मिन्नर्थे यत् प्रत्ययो भवति । चकाराद् यथाविहितं [8]च । शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः[9], शैर्षच्छेदिकः[10] । प्रत्ययसंनियोगेन शिरसः शीर्षभावो निपात्यते ॥

## [11]दण्डादिभ्यः । (६६/१७३१)

नित्यम् इति निवृत्तम् । दण्डादिभ्यो द्वितीयासमर्थेभ्यः अर्हति इत्यस्मिन्नर्थे [12]यत् प्रत्ययो भवति । [13]ठकोऽपवादः । दण्डमर्हति दण्ड्यः । मुसल्यः ।

दण्ड । मुसल । मधुपर्क । कशा । [14]अर्घ । मेधा । मेघ । युग । [15]उदक । वध । गुहा । भाग । इभ । दण्डादिः ॥

## छन्दसि च । (६७/३४९२)

[16]प्रातिपदिकमात्राच्छन्दसि विषये तदर्हति इत्यस्मिन्नर्थे यत् प्रत्ययो भवति । ठञादीनामपवादः[17] । उदक्या वृत्तयः । यूप्यः [18]पलाशः । [19]गर्त्यो देशः[20] ॥

## पात्राद् घंश्च । (६८/१७३२)

पात्रशब्दाद् घन् प्रत्ययो भवति, चकाराद् यत् च, तदर्हति इत्यस्मिन्नर्थे । ठक्ठञोरपवादः । पात्रं परिमाणमप्यस्ति । पात्रमर्हति [21]पात्रियः । पात्र्यः ॥

## कडङ्करदक्षिणाच्छ च । (६९/१७३३)

कडङ्करदक्षिणाशब्दाभ्यां [22]छः प्रत्ययो भवति, चकाराद् यत् च, तदर्हति इत्यस्मिन् [23]विषये । ठकोऽपवादः । [24]कडङ्करमर्हति [25]कडङ्करीयो गौः, कडङ्कर्यः । दक्षिणामर्हति दक्षिणीयो भिक्षुः, दक्षिण्यो ब्राह्मणः । दक्षिणशब्दस्याल्पाच्तरस्य [26]अपूर्वनिपातेन [37]लक्षणव्यभिचारचिह्नेन यथासङ्ख्याभावं सूचयति ॥

---

1. छेद इत्यादिभ्यः शब्देभ्यः ब. फ. ह. 2. वर्तक हर्ष क, नर्त फ, देहनर्त ड. 3. संप्रथन ड. 4. इति छेदादिः इत्यधिकम् ह. ड. 5. नित्यमित्यनुवर्तते इत्यधिकम् क. ड. ग. फ, नित्यग्रहणमनुवर्तते इत्यधिकम् ह. 6. तदिति इत्यधिकम् फ. 7. इत्येतस्मिन् विषये ग. 8. ठक् च क. ड फ. ह. 9. चौरः इत्यधिकम् ग. 10. शैर्षिकः छेदिकः इत्यधिकम् ह. 11. दण्डादिभ्यो यः प्रा. भा. न्या. 12. यः क. फ. ग. 13. ठकादीनाम् ह. 14. अर्चा ह. 15. मुग्ध इत्यधिकम् ह, जन इत्यधिकम् फ. 16. यदित्यत्रानुवर्तते इत्यधिकम् ह. 17. यतः अत्रानुवृत्तिः इत्यधिकम् क. 18. पालाशः ड. 19. रक्ष्यो देशः ड. 20. सादन्यं विदथ्यम् (ऋ. 1. 6. 22) इत्यधिकम् क. फ. 21. पात्रीयः ह. 22. च इत्यधिकम् ह. 23. अर्थे फ. ह. 24. कडङ्गनम् क, कडङ्गरम् कडङ्गर्यः ड, कडङ्करं बुसम् इत्यधिकम् ह. 25. कडङ्गवीयः क. 26. परनिपातेन ड. 27. लक्षण-व्यभिचारेण चिह्नेन ह.

## स्थालीबिलात्। (७०/१७३४)

छयतौ अनुवर्तेते। स्थालीबिलशब्दाच् छयतौ प्रत्ययौ भवतः तदर्हति इत्यस्मि[1]न्नर्थे। ठको[2]ऽपवादौ। स्थालीबिमलर्हन्ति स्थालीबिलीयाः तण्डुलाः, स्थालीबिल्याः। पाकयोग्याः इत्यर्थः[3]॥

## यज्ञर्त्विग्भ्यां घखञौ। (७१/१७३५)

यज्ञशब्दाद् ऋत्विक्शब्दाच्च यथासङ्ख्यं घखञौ प्रत्ययौ भवतः तदर्हति इत्यस्मिन् [4]विषये। [5]ठकोऽपवादौ। [6]यज्ञियो ब्राह्मणः। [7]आर्त्विजीनो ब्राह्मणः।

[५१९] यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम्। (म. भा. २.३५७)

यज्ञकर्म अर्हति यज्ञियो देशः। [8]ऋत्विक्कर्म अर्हति आर्त्विजीनं ब्राह्मणकुलम्। आर्हीयाणां ठगादीनां पूर्णो[9]ऽवधिः। अतः परं प्राग्वतीयः ठञेव भवति॥

## पारायणतुरायणचान्द्रायणं वर्तयति। (७२/१७३६)

समर्थविभक्तिरनुवर्तते। अर्हति इति निवृत्तम्। पारायणादिभ्यो द्वितीयासमर्थेभ्यः वर्तयति इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। पारायणं वर्तयति अधीते पारायणिकश्छात्रः। [10]तौरायणिको यजमानः। [11]चान्द्रायणिकस्तपस्वी[12]॥

## संशयमापन्नः। (७३/१७३७)

संशयशब्दाद् द्वितीयासमर्थात् आपन्नः इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः[13]॥

## योजनं गच्छति। (७४/१७३८)

योजनशब्दात् द्वितीयासमर्थाद् गच्छति इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः।

[५२०] क्रोशशतयोजनशतयोरुपसङ्ख्यानम्। (म. भा. २.३५८)

क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः।

[५२१] ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसङ्ख्यानम्। (म. भा. २.३५८)

क्रोशशताद[14]भिगमनमर्हति क्रौशशतिको भिक्षुः। यौजनशतिक [15]आचार्यः॥

---

1. विषये ह. फ. 2. अपवादः ग. 3. निष्फलीकृतत्वात् इत्यधिकम् ह. 4. अर्थे फ. 5. ठकोऽपवादः क. 6. यज्ञमर्हति इत्यधिकम् ह, यज्ञियो महेन्द्रः क. 7. ऋत्वीजीनो ब्राह्मणः ह. 8. एतद्वाक्यं नास्ति फ. 9. विधिः ब. ग. 10. तुरायणं यज्ञं वर्तयति इत्यधिकम् ह, तुरायणं वर्तयति इत्यधिकम् फ. 11. चान्द्रायणं वर्तयति इत्यधिकम् ग. ह, समापयति इत्यर्थः इत्यधिकम् ग. 12. प्राग्वतीयेषु संख्यापूर्वाणामपि इष्टम्, द्वैपारायणिकः इत्यधिकम् ग. 13. संशयविषयीभूतः इत्यर्थः इत्यधिकम् ग. 14. विगमनम् क. 15. भिक्षुः कः गुरुः इति महाभाष्यपाठः

## पथः ष्कन्। (७५/१७३९)

पथिन्शब्दाद् द्वितीयासमर्थाद् गच्छति इत्यस्मिन्नर्थे ष्कन् प्रत्ययो भवति। नकारः स्वरार्थः। षकारो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी॥

## पन्थो ण नित्यम्। (७६/१७४०)

नित्यग्रहणं प्रत्ययार्थविशेषणम्। पथः पन्थ इत्ययमादेशो भवति [1]णश्च प्रत्ययो नित्यं गच्छति इत्यस्मिन् विषये। पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते। नित्यम् इति किम्? पथिकः॥

## उत्तरपथेनाहृतं च। (७७/१७४१)

निर्देशादेव समर्थविभक्तिः। उत्तरपथशब्दाद् तृतीयासमर्थात् आहृतम् इत्येतस्मिन् [2]विषये ठञ् प्रत्ययो भवति। चकारः प्रत्ययार्थसमुच्चये, गच्छति इति च। अत्रापि तृतीयैव समर्थविभक्तिः। उत्तरपथेनाहृतम् औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः।

[५२२] आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसङ्ख्यानम्। (म.भा.२.३५८)

वारिपथेन आहृतम् वारिपथिकम्। वारिपथेन गच्छति वारिपथिकः। जङ्गलपथेन आहृतम् जाङ्गल-पथिकम्। जङ्गलपथेन गच्छति जाङ्गलपथिकः। स्थलपथेनाहृतम् स्थालपथिकम्। स्थलपथेन गच्छति स्थालपथिकः। कान्तारपथेन आहृतम् कान्तारपथिकम्। कान्तारपथेन गच्छति कान्तारपथिकः।

[५२३] अजपथशङ्कुपथाभ्यां चोपसङ्ख्यानम्। (म.भा.२.३५९)

अजपथेनाहृतम् आजपथिकम्, गच्छति वा आजपथिकः। शङ्कुपथेन आहृतम् शाङ्कुपथिकम्, गच्छति वा शाङ्कुपथिकः।

[५२४] मधुकमरिचयोरण् स्थलात्। (म.भा.२.३५९)

स्थलपथेनाहृतम् स्थालपथं मधुकम्[3]॥

## कालात्। (७८/१७४२)

कालात् इत्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः कालात् इत्येवं तद् वेदितव्यम्। [4]वक्ष्यति – 'तेन निर्वृत्तम्' (५. १. ७९/१७४३)। मासेन निर्वृत्तम् मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। कालात् इत्यधिकारः 'व्युष्टादिभ्योऽण्' (५.१.९७/१७६१) इति यावत्॥

---

1. अण् क. 2. अर्थे फ. ह. 3. मधुयष्टिः इत्यधिकम् ग. 4. वक्ष्यति – इति यावत् नास्ति ङ.

## तेन निर्वृत्तम् । (७९/१७४३)

तेन इति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् निर्वृत्तम् इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति । अह्ना निर्वृत्तम् आह्निकम् । [1]आर्धमासिकम् । सांवत्सरिकम् ॥

## तमधीष्टो भृतो भूतो भावी । (८०/१७४४)

तम् इति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकात् अधीष्टो भृतो भूतो भावी वा इत्यस्मिन्नर्थे [2]यथाविहितं प्रत्ययो भवति । अधीष्टः सत्कृत्य व्यापारितः । भृतः [3]वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवा[4]नागतः । 'कालाध्वनोरत्यन्तसंयोगे' (२.३.५/५५८) इति द्वितीया । मासमधीष्टः मासिकोऽध्यापकः । मासं भृतः मासिकः कर्मकरः । मासं भूतः मासिको व्याधिः । मासं भावी मासिकः उत्सवः । ननु चाध्येषणं भरणं च मुहूर्तं क्रियते तेन कथं मासो व्याप्यते ? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्तः [5]इत्युच्यते ॥

## मासाद् वयसि यत्खञौ । (८१/१७४५)

मासशब्दाद् वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः । ठञोऽपवादौ । अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत [6]एवात्राभिसम्बध्यते । मासं भूतः मास्यः, मासीनः । वयसि इति किम् ? [7]मासिकम् ॥

## द्विगोर्यप् । (८२/१७४६)

मासाद् वयसि [8]इति वर्तते । मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये । द्वौ मासौ भूतः द्विमास्यः । त्रिमास्यः ॥

## षण्मासाण् ण्यच्च । (८३/१७४७)

वयसि इत्येव । षण्मासशब्दाद् वयस्यभिधेये ण्यत् प्रत्ययो भवति, यप् च । औत्सर्गिकष्ठञपीष्यते, स [9]चकारेण समुच्चेतव्यः । [10]स्वरितत्वाच्चानन्तरोऽनुवर्तिष्यते । तेन त्रैरूप्यं [11]भवति । षाण्मास्यः, षण्मास्यः, षाण्मासिकः ॥

## अवयसि ठंश्च । (८४/१७४८)

षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति । [12]चकारेणानन्तरस्य ण्यतः समुच्चयः क्रियते । षण्मासिको रोगः, षाण्मास्यः ॥

---

1. मासिकम् इत्यधिकम् क. ड. फ. ह. 2. यथाविहितं नास्ति फ, ठञ् इत्यधिकम् क. फ. ह. 3. वेतनादिना ड. 4. अकथितः फ. 5. इति नास्ति फ. 6. इत्येवात्र ह. 7. मासिकः ड. 8. च इत्यधिकम् फ. 9. च इत्यधिकम् क. ह. 10. स्वरितत्वानन्तरो ह. 11. भवति नास्ति ह. 12. चकारोऽनन्तरस्य ण्यतः समुच्चयार्थः ब. फ. ह.

## समायाः खः। (८५/१७४९)

अधीष्टादयश्चत्वारोऽर्था अनुवर्तन्ते। समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिषु अर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। समामधीष्टो भृतो भूतो भावी वा समीनः। केचित् तु 'तेन निर्वृत्तम्' (५.१.७९/१७४३) [1]इति सर्वत्रानुवर्तयन्ति। समया निर्वृत्तः समीनः॥

## द्विगोर्वा। (८६/१७५०)

'समायाः खः' (५.१.८५/१७४९) इत्येव। [2]समाशब्दान्ताद् [3]द्विगोः निर्वृत्तादिषु अर्थेषु पञ्चसु वा खः प्रत्ययो भवति। पूर्वेण [4]नित्यः प्राप्तो विकल्प्यते। 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' (७.३.१७/१६८३ वा.) इति प्राप्ति[5]रस्त्येव। [6]खेन मुक्ते पक्षे ठञपि भवति। द्विसमीनः, द्वैसमिकः। त्रिसमीनः, त्रैसमिकः॥

## रात्र्यहःसंवत्सराच्च। (८७/१७५१)

[7]रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोः[8]निर्वृत्तादिषु अर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे [9]ठञपि भवति। द्विरात्रीणः, द्वैरात्रिकः। त्रिरात्रीणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैय-ह्निकः। द्विसंवत्सरीणः, द्विसांवत्सरिकः। त्रिसंवत्सरीणः, त्रिसांवत्सरिकः। 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च (७.३.१५/१७५२) इत्युत्तरपदवृद्धिः॥

## वर्षाल्लुक् च। (८८/१७५३)

द्विगोः इत्येव। [10]वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। पक्षे ठञ्। तयोश्च वा लुग् भवति। [11]एवं त्रीणि रूपाणि [12]भवन्ति। द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। 'वर्षस्याभविष्यति' (७.३.१६/१७५४) इत्युत्तरपदवृद्धिः। भाविनि तु [13]त्रैवर्षिकः॥

## चित्तवति नित्यम्। (८९/१७५५)

चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगो[14]निर्वृत्तादिष्वर्थेषु उत्पन्नस्य प्रत्ययस्य नित्यं लुग् भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः[15]। चित्तवति इति किम्? द्विवर्षीणो व्याधिः॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते। (९०/१७५६)

षष्टिकशब्दो निपात्यते। बहुवचनमतन्त्रम्। षष्टिरात्रशब्दात् तृतीयासमर्थात् कन् प्रत्ययो [16]निपात्यते पच्यन्ते इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः[17]। सञ्ज्ञा एषा धान्यविशेषस्य। तेन मुद्गादिष्वतिप्रसङ्गो न भवति॥

---

1. इत्यपि ड. फ. 2. समाशब्दात् संवत्सरात् च फ. 3. द्विगोः इत्येव फ. 4. नित्यं प्राप्नोति इति विकल्प उच्यते क. 5. अस्ति एव नास्ति क. 6. तेन क, वाक्यमिदं नास्ति फ. 7. द्विगोरित्येव इत्यधिकम् क. 8. निर्वृत्ताद्यर्थेषु क. 9. ठञेव क, नास्ति फ. 10. वर्षशब्दान्तात् क. फ. ह. 11. तदेवं फ, एवं त्रैरूप्यं सम्पद्यते क. 12. सम्पद्यन्ते ब. ड. फ. ह. 13. द्वैवर्षिकः इत्यधिकम् ब. ह. 14. निर्वृत्तादिष्वर्थेषूत्पन्नस्य नास्ति ब. क. 15. त्रिवर्षो दारकः इत्यधिकम् ब. क. ड. फ. ह. 16. भवति क. ह. 17. शालयः इत्यधिकम् क.

## वत्सरान्ताच्छश्छन्दसि । (९१/३४९३)

[1]वत्सरान्तात् प्रातिपदिकात् [2]निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति । ठञोऽपवादः । इद्वत्सरीयः । 'इदावत्सरीयः' (काठ. सं. १३. १५. ७१) ॥

## संपरिपूर्वात् ख च । (९२/३४९४)

संपरिपूर्वात्[3] वत्सरान्तात् प्रातिपदिकाच् छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच् छश्च । 'संवत्सरीणाः' (तै.सं.४. ३. १३. ४), 'संवत्सरीया' (काठ. सं. १३.१५.७१) । 'परिवत्सरीणम्' (ऋ. ७.१०३.८), 'परिवत्सरीया' (काठ. सं. १३. १५. ७१) ॥

## तेन परिजय्यलभ्यकार्यसुकरम् । (९३/१७८७)

तेन इति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् [4]परिजय्य, लभ्य, काय, सुकर इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति । मासेन परिजय्यः, [5]शक्यते जेतुं, मासिको व्याधिः । सांवत्सरिकः । मासेन लभ्यः मासिकः पटः[6] । मासेन कार्यम् मासिकं चान्द्रायणम्[7] । मासेन सुकरः मासिकः प्रासादः ॥

## तदस्य ब्रह्मचर्यम् । (९४/१७८८)

तद् इति द्वितीयासमर्थविभक्तिः । [8]सा चात्यन्तसंयोगे । अस्य इति प्रत्ययार्थः । ब्रह्मचर्यम् [9]इति द्वाभ्यामपि सम्बध्यते । कालस्य व्यापकं, प्रत्ययार्थस्य च [10]स्वम् इति । तद् इति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकाद् अस्य इति षष्ठचर्थे ठञ् प्रत्ययो भवति, ब्रह्मचर्यं चेद् [11]गम्यते । मासं ब्रह्मचर्यमस्य मासिकः ब्रह्मचारी । आर्धमासिकः । सांवत्सरिकः ।

अपरा वृत्तिः – तद् इति प्रथमासमर्थाद् अस्य इति षष्ठचर्थे ठञ् प्रत्ययो भवति, [12]यत् तदस्य इति निर्दिष्टं ब्रह्मचर्यं चेद् तद् भवति । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । आर्धमासिकम् । सांवत्सरिकम् । पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव । [13]उभयमपि प्रमाणम्, उभयथा[14] सूत्रप्रणयनात् ।

[५२५] महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसङ्ख्यानम् । (म. भा. २. ३६०)

[15]माहानामिकम् । गौदानिकम् । आदित्यव्रतिकम् ।

---

1. वत्सरशब्दान्तात् फ. 2. निर्वृत्ताद्यर्थे फ. 3. च इत्यधिकम् फ. 4. परिजय्यादिष्वर्थेषु क, नास्ति ह. फ. 5. शक्यते जेतुं नास्ति ह, परिजेतुं क. ड. 6. सांवत्सरिकः पटः इत्यधिकम् ह. 7. व्रतम् इत्यधिकम् क.ग. 8. सा नास्ति क. फ, द्वितीया इत्यधिकम् ह. 9. इति नास्ति फ. 10. स्वम् नास्ति ब, इति नास्ति फ. 11. ध्वनिः क, गृह्यते फ. 12. यत् नास्ति फ. 13. द्वयमपि ब. क. फ. 14. अपि इत्यधिकम् क. 15. महानाम्नीनां ब्रह्मचर्यम् इत्यधिकम् ब. क. फ. ड, माहानाम्निकं ब्रह्मचर्यम् ह.

[५२६] तच्चरतीति च[1] । (म. भा. २. ३६०)

महानाम्न्य[2] ऋचः, तत्सहचरितं व्रतं तच्छब्देनोच्यते । महानाम्नीश्चरति माहानामिकः । आदित्यव्रतिकः । गौदानिकः । भस्याढे (६. ३. ३५/८३६वा.) [3]इति पुंवद्भावेन [4]ङीपि निवृत्ते 'नस्तद्धिते' (६.१.१४४/६७९) इति [5]टिलोपः ।

[५२७] अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः । (म. भा. २. ३६०)

अवान्तरदीक्षां चरति अवान्तरदीक्षी । तिलव्रती[6] ।

[५२८] अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः । (म. भा. २.३६०)

अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः, अष्टाचत्वारिंशी ।

[५२९] [7]चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च [8]वक्तव्यः । (म.भा. २.३६०)

चातुर्मास्यानि चरति चातुर्मासकः, चातुर्मासी ।

[५३०] चतुर्मास्याण् ण्यो यज्ञे तत्र भवे । (म. भा. २.३६१)

चतुर्षु मासेषु भवानि चातुर्मास्यानि ।

[५३१] सञ्ज्ञायामण् वक्तव्यः । (म. भा.२. ३६१)

चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी । आषाढी । कार्तिकी । फाल्गुनी ॥

## तस्य च दक्षिणा यज्ञाख्येभ्यः । (९५/१७७९)

तस्य इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो[9] दक्षिणा इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी । [10]राजसूयिकी । आख्याग्रहणम् अकालादपि [11]यज्ञवाचिनो यथा स्यात् इति । इतरथा हि कालाधिकारा[12]देकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन् । 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' (७. ३. १७/१६८३ वा.) इति [13]कालाधिकारेऽपि [14]द्वादशाहादिष्वस्ति [15]प्राप्तिः ॥

---

1. महानाम्न्यादिभ्यः उपसंख्यानम् कर्तव्यम् इत्यधिकम् ड. 2. नाम इत्यधिकम् ड. 3. तद्धिते इत्यधिकम् ड. 4. ङीपि निवृत्ते नास्ति ड. 5. टिलोपः नास्ति ब, भवति इत्यधिकम् ड. 6. देवव्रती इत्यधिकम् ब. फ. ह. 7. चातुर्मास्यादीनां क. 8. प्रत्ययौ वक्तव्यौ क. 9. प्रातिपदिकेभ्यः इत्यधिकम् क. फ. 10. राजसूयिकी नास्ति ड. ह. 11. यत्तद्वाचिनः क. 12. एकदशाह° क, दशाह ड. 13. कालाधिकारात् क. ह. 14. एकदशाह–प्रभृतिषु क. 15. प्रसङ्गः ब. क. ड. ह.

## तत्र च दीयते कार्यं भववत्। (९६/१७६०)

तत्र इति सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद् दीयते, कार्यम् इत्येतयोरर्थयोर्भववत् प्रत्ययो भवति। यथा – मासे भवं मासिकम्[1]। सांवत्सरिकम् (४.३.११/१३८१)। प्रावृषेण्यम् (४.३.१७/१३८८)। वासन्तिकम् (४.३.११/१३८१)। [2]वासन्तम्। (४.३.१६/१३८७)। हैमनम् (४.३.२२/१३९०)। [3]हैमन्तम् (४.३.१६/१३८७)। हैमन्तिकम् (४.३.११/१३८१)। शारदम् (४.३.१६/१३८७)।

वतिः सर्वसादृश्यार्थः। योगविभागश्चात्र कर्तव्यः, '[4]तत्र च दीयते,' 'यज्ञाख्येभ्यः' [5]इति। [6]आग्निष्टोमिकं भक्तम्। राजसूयिकम्। [7]वाजपेयिकम्। कालाधिकारस्य पूर्णोऽवधिः। अतः परं सामान्येन[8] प्रत्ययविधानम्॥

## व्युष्टादिभ्योऽण्। (९७/१७६१)

तत्र इति सप्तमीसमर्थेभ्यः व्युष्टादिभ्यः[9] दीयते, कार्यम् इत्येतयो[10]रण् प्रत्ययो भवति। व्युष्टे दीयते कार्यम् वा वैयुष्टम्। नैत्यम्।

[५३२] अण्प्रकरणेऽग्निपदादिभ्य उपसङ्ख्यानम्[11]। (म.भा. २.३६२)

[12]आग्निपदम्। पैलुमूलम्। किं वक्तव्यम्? न वक्तव्यम्। अत्रैव ते पठितव्याः।

व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। [13]तीर्थ। [14]सम्भ्रम। आस्तरण। सङ्ग्राम। सङ्घात। अग्निपद। पीलुमूल। [15]प्रवास। उपसङ्क्रमण[16]। व्युष्टादिः॥

## तेन यथाकथाचहस्ताभ्यां णयतौ। (९८/१७६२)

दीयते, [17]कार्यम् इति वर्तते। तेन इति तृतीयासमर्थाभ्यां यथाकथाचहस्तशब्दाभ्यां यथासङ्ख्यं णयतौ प्रत्ययौ भवतः। दीयते, कार्यम् इत्येतयोरर्थयोः प्रत्येकमभिसम्बधः, यथासङ्ख्यं नेष्यते। यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्तते। तृतीयार्थमात्रं चात्र संभवति, न [18]तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्॥

## सम्पादिनि। (९९/१७६३)

[19]तेन इत्येव। तृतीयासमर्थात् सम्पादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः सम्पत्तिः। आवश्यके णिनिः (३.३.१७०/३३११)। [20]कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं [21]मुखम्। वास्त्रयुगिकं शरीरम्। वस्त्रयुगेन विशेषतः शोभते इत्यर्थः॥

---

1. एवं मासे दीयते कार्यं वा मासिकम्। आर्धमासिकम् इत्यधिकम् ब.क.ड.फ.ह. 2. वासन्तं नास्ति फ. 3. हैमन्तिकं नास्ति ह. 4. तदेव च फ. 5. वर्तते इत्यधिकम् क. 6. अग्निष्टोमे दीयते इत्यधिकम् क. 7. वाजपेयिकम् नास्ति ड. 8. अन्येन इत्यधिकम् ब, विधानम् फ, प्रत्ययः क. 9. प्रातिपदिकेभ्यः इत्यधिकम् क.ड. 10. अर्थयोः इत्यधिकम् क.ड. 11. कर्तव्यम् इत्यधिकम् क.ड.फ. 12. आग्निपदम् – न वक्तव्यम् नास्ति ह.ग. 13. तीर्थ नास्ति क.ड. 14. सम्भ्रम नास्ति फ. ह. 15. प्रवास नास्ति फ. ह. 16. दीर्घ उपवास इत्यधिकम् ब. 17. कार्यम् नास्ति फ. 18. तेन क. 19. तेन इत्येव नास्ति फ, तेन इति क. 20. कर्णवेष्टनाभ्याम् क. 21. मुखम् नास्ति क.

## कर्मवेषाद्यत् । (१००/१७६४)

कर्मवेषशब्दाभ्यां तृतीयासमर्थाभ्यां यत् प्रत्ययो भवति सम्पादिनि इत्येतस्मिन् विषये । ठञोऽपवादः । कर्मणा [1]सम्पद्यते कर्मण्यं [2]शरीरम् । वेषेण संपद्यते वेष्यो नटः[3] ॥

## तस्मै प्रभवति सन्तापादिभ्यः । (१०१/१७६५)

तस्मै इति चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः [4]प्रभवति इत्यस्मिन् [5]विषये ठञ् प्रत्ययो भवति । समर्थः, शक्त प्रभवति इत्युच्यते । [6]अलमर्थे चतुर्थी । सन्तापाय [7]प्रभवति सान्तापिकः । [8]सान्नाहिकः ।

सन्ताप । सन्नाह । सङ्ग्राम । संयोग । संपराय[9] । [10]संपेष । निष्पेष । निसर्ग । [11]असर्ग । विसर्ग । उपसर्ग । उपवास । प्रवास । सङ्घात । [12]संमोदन । सक्तुमांसौदनाद्विगृहीतादपि[13] ॥

## योगाद्यच्च । (१०२/१७६६)

योगशब्दात् यत् प्रत्ययो भवति, चकारात् ठञ्, तस्मै प्रभवति इत्यस्मिन् [14]विषये । योगाय [15]प्रभवति योग्यः[16], यौगिकः ॥

## कर्मण उकञ् । (१०३/१७६७)

कर्मन्शब्दात् उकञ् प्रत्ययो भवति तस्मै प्रभवति इत्येतस्मिन्नर्थे । [17]ठञोऽपवादः । कर्मणे प्रभवति कार्मुकं धनुः । [18]धनुषोऽन्यत्र न भवति, अनभिधानात् ॥

## समयस्तदस्य प्राप्तम् । (१०४/१७६८)

समयशब्दात् तत् इति प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्राप्तं चेद् तद् भवति । समयः प्राप्तोऽस्य सामयिकं कार्यम् । उपनतकालम् इत्यर्थः । समर्थविभक्तिनिर्देश उत्तरार्थः ॥

## ऋतोरण् । (१०५/१७६९)

तदस्य प्राप्तम् [19]इत्यनुवर्तते । [20]ऋतुशब्दात् तदिति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे अण् प्रत्ययो भवति [21]तदस्य प्राप्तम् इत्येतस्मिन् विषये । ऋतुः प्राप्तोऽस्य आर्तवं पुष्पम्[22] ।

[५३३] तदस्य प्रकरणे उपवस्त्रादिभ्यः उपसङ्ख्यानम् ।
[23]उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । [24]प्राशिता प्राप्तोऽस्य प्राशित्रम् ॥

---

1. सम्पादि ह. 2. शौर्यम् ब. ह, सौख्यम् क. 3. वेष्या स्त्री । वेष्यम् इत्यधिकम् ब. 4. प्रातिपदिकेभ्यः इत्यधिकम् क. 5. अर्थे फ. 6. अलमित्यर्थे फ. 7. शक्तः ह, प्रभवति नास्ति ग. 8. सांग्रामिकः ब, सान्नाहिकम् ड. 9. युद्धम् इत्यधिकम् ग. 10. नास्ति फ, संवेश क. 11. असर्ग नास्ति ड, उत्सर्ग क. 12. संमोहन ड, संमोह क. 13. सन्तापादिः इत्यधिकम् ड. फ. 14. अर्थे ह. फ, इत्यर्थे क. 15. शक्तः ग. 16. मुनिः इत्यधिकम् ग. 17. ठञोऽपवादः नास्ति फ. 18. धनुषः – अनभिधानात् नास्ति ब. क. ड. 19. इत्येव ह. 20. ऋतुशब्दात् प्रथमासमर्थात् प्राप्तोपाधिकादस्येति षष्ठ्यर्थे अण् प्रत्ययो भवति ब. क. ड. ह. 21. तदस्य – विषये नास्ति ड. 22. सस्यं फलम् इत्यधिकम् ब. क, सस्यम् इत्यधिकम् ह, फलम् इत्यधिकम् फ. 23. उपवस्त्रं प्राप्तमस्य औपवस्त्रम् क. 24. प्रमितं प्राप्तमस्य प्रामितं क, उदाहरणमिदं नास्ति ड.

## छन्दसि घस्। (१०६/३४९५)

ऋतुशब्दाच् छन्दसि विषये घस् प्रत्ययो भवति तदस्य प्राप्तम् इत्यस्मिन् विषये। अणोऽपवादः। 'अयं ते योनिर्ऋत्वियः' (ऋ. ३.२९.१०) ॥

## कालाद्यत्। (१०७/१७७०)

[1]कालशब्दात् यत् प्रत्ययो भवति तदस्य प्राप्तम् इत्यस्मिन् विषये। कालः प्राप्तोऽस्य काल्यः [2]तापः। काल्यं [3]शीतम् ॥

## प्रकृष्टे ठञ्। (१०८/१७७१)

कालात् इत्येव, तदस्य इति च। प्राप्तम् इति निवृत्तम्। [4]प्रकर्षेण कालो विशेष्यते। [5]प्रकर्षे वर्तमानात् [6]कालात् प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति[7]। प्रकृष्टो दीर्घः कालोऽस्य कालिक[8]मृणम्। कालिकं वैरम्। ठञ्ग्रहणं विस्पष्टार्थम् ॥

## प्रयोजनम्। (१०९/१७७२)

तदस्य [9]इत्येव। तद् इति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं प्रयोजनं चेद् तद् भवति। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। [10]गाङ्गामहिकम् ॥

## विशाखाषाढादण् मन्थदण्डयोः। (११०/१७७३)

विशाखाषाढाशब्दाभ्याम् अण् प्रत्ययो भवति तदस्य प्रयोजनम् इत्येतस्मिन् [11]विषये [12]यथासङ्ख्यम् मन्थ-दण्डयोर[13]भिधेययोः। [14]विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढो दण्डः।

[५३४] चूडादिभ्य उपसङ्ख्यानम्।

चूडा प्रयोजनमस्य चौडम्[15]। श्रद्धा प्रयोजनमस्य श्राद्धम् ॥

## अनुप्रवचनादिभ्यश्छः। (१११/१७७४)

[16]अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति तदस्य प्रयोजनमित्यस्मिन्[17]विषये ठञोऽपवादः। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्। उत्थापनीयम्।

[५३५] विशिपूरिपति[18]रुहिप्रकृतेरनात् सपूर्वपदादुपसङ्ख्यानम्। (म.भा. २.३६२)

गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम्। प्रपापूरणीयम्। अश्वप्रपतनीयम्। प्रासादारोहणीयम्।

[५३६] स्वर्गादिभ्यो यद् वक्तव्यः। (म.भा. २.३६२)

स्वर्गः प्रयोजनमस्य स्वर्ग्यम्[19]। यशस्यम्। आयुष्यम्। काम्यम्। धन्यम्।

---

1. तदस्य प्राप्तमित्येव इत्यधिकम् ब.क. 2. स्वापः ड. 3. गीतम् ग. 4. प्रकृष्टेन क.ह. 5. प्रकृष्टे क.ड, प्रकृष्टे प्रकर्षेऽर्थे ह. 6. कालशब्दात् ह.फ. 7. तदस्य प्राप्तमित्येतस्मिन् विषये इत्यधिकम् फ. 8. मरणम् ह. 9. इति फ. 10. गाङ्गमहिकम् ड, गङ्गामहिकम् क. 11. अर्थे क.ड.ह. 12. यथासङ्ख्यम् नास्ति फ. 13. अर्थयोः फ. 14. ठञोऽपवादः इत्यधिकम् फ. 15. कर्म इत्यधिकम् ग. 16. अनुप्रवचन इत्येवमादिभ्यः फ. 17. अर्थे ह. 18. पदि इत्यधिकम् भाष्ये। 19. स्वर्गारोहणीयम् इत्यधिकम् ब.

[५३७] पुण्याहवाचनादिभ्यो लुग् वक्तव्यः। (म. भा. २.३६२)

[1]पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम्। स्वस्तिवाचनम्। शान्तिवाचनम्।

अनुप्रवचन। उत्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन। संवेशन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। [2]आरम्भण। आरोहण। प्ररोहण। अन्वारोहण। अनुप्रवचनादिः॥

## समापनात् सपूर्वपदात्। (११२/१७७७)

समापनशब्दात् [3]सपूर्वपदात् विद्यमानपूर्वपदाच्[4] छः प्रत्ययो भवति तदस्य प्रयोजनम् इत्येतस्मिन् [5]विषये। ठञोऽपवादः। छन्दःसमापनं प्रयोजनमस्य छन्दःसमापनीयम्। व्याकरणसमापनीयम्। पदग्रहणं बहुच्-पूर्वनिरासार्थम्॥

## ऐकागारिकट् चौरे। (११३/१७७६)

ऐकागारिकट् इति निपात्यते चौरेऽभिधेये। एकागारं प्रयोजनम् अस्य ऐकागारिकः चौरः। ऐकागारिकी। किमर्थमिदं [6]निपात्यते, यावता प्रयोजनम् [7]इत्येव सिद्धष्ठञ्? चौरे नियमार्थं [8]वचनम्। [9]इह मा भूत्, एकागारं प्रयोजनमस्य भिक्षोः इति। टकारः कार्यावधारणार्थः, ङीबेव भवति न ञित्स्वरः इति। अपरे [10]पुनर् इकट् प्रत्ययं वृद्धिं च निपातयन्ति॥

## आकालिकडाद्यन्तवचने। (११४/१७७७)

आकालिकट् इति निपात्यते आद्यन्तवचने। [11]समानकालशब्दस्य [12]आकालशब्द आदेशः। [13]आद्यन्तयो-श्चैतद् विशेषणम्। इकट् प्रत्ययश्च निपात्यते। समानकालौ आद्यन्तौ अस्य आकालिकः स्तनयित्नुः। आकालिकी विद्युत्। जन्मना तुल्यकालविनाशा। [14]उत्पादानन्तरं विनाशिनीत्यर्थः।

[५३८] आकालाट् ठंश्च।

चात् ठञ् च। आकालिका विद्युत्[15]। ठञः पूर्णोऽवधिः॥

## तेन तुल्यं क्रिया चेद्वतिः। (११५/१७७८)

तेन इति तृतीयासमर्थात् तुल्यम् इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति, यत् तुल्यं क्रिया चेत् सा भवति। ब्राह्मणेन तुल्यं वर्तते[17] ब्राह्मणवत्। राजवत्[18]। क्रियाग्रहणम् किम्? [19]गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यो गोमान्[20]॥

---

1 पुण्याहवचनं ड. 2. अनारम्भणम् क. 3. सपूर्वपदात् नास्ति क. ह. 4. प्रातिपदिकात् च इत्यधिकम् क. ह. 5. अर्थे क. ह. 6. निपातनम् क, निपतनं ह. 7. इत्यनेनैव ठञ्सिद्धिः क. 8. वचनम् नास्ति क. 9. तेन इत्यधिकम् क. 10. पुनर् नास्ति क. फ. 11. समानकालस्य क. 12. आकालादेशः क. 13. आद्यन्त-विशेषणयुक्तात् इकट् प्रत्ययो निपात्यते क. 14. उत्पादनं तदन्तविनाशनिमित्तमित्यर्थः ब, उत्पन्नानन्तरम् प. म. 15. आकालिनी इत्यधिकम् ब. ह. 16. इत्यर्थे अ. ब. ड 17. इति इत्यधिकम् क. फ. 18. क्षत्रियवत् इत्यधि-कम् क. फ. ड. ह. 19. गुणद्रव्यतुल्ये ब. ड, गुणतौल्ये क, गुणतुल्यत्वे ह. 20. यन्त्रेण तुल्यः इत्यधिकम क.

## तत्र तस्येव । (११६/१७७९)

तत्र इति सप्तमीसमर्थात् तस्य इति षष्ठीसमर्थाच्च इवार्थे वतिः प्रत्ययो भवति । मथुरायामिव मथुरावत् स्रुघ्ने [1]प्राकारः । पाटलिपुत्रवत् साकेते परिखा । षष्ठीसमर्थात् – देवदत्तस्य इव देवदत्तवत् यज्ञदत्तस्य [2]गावः । [3]यज्ञदत्तस्य इव यज्ञदत्तवत् देवदत्तस्य दन्ताः[4] ॥

## तदर्हम् । (११७/१७८०)

तत् इति द्वितीयासमर्थात् [5]अर्हम् इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति । राजानमर्हति राजवत् [6]पालनम् । [7]ब्राह्मणवत् । ऋषिवत् । क्षत्रियवत् ॥

## उपसर्गाच्छन्दसि धात्वर्थे । (११८/३४०६)

उपसर्गात् [8]ससाधने धात्वर्थे वर्तमानात् स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये । 'यदुद्वतो निवतो [9]यासि बप्सद्' (ऋ. १०.१४२.४) । उद्गतानि निगतानि च[10] (म.भा. २.३६५) ॥

## तस्य भावस्त्वतलौ । (११९/१७८१)

तस्य इति षष्ठीसमर्थाद् भावः इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः । भवतोऽस्मादभिधानप्रत्ययौ इति भावः । शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते । अश्वस्य भावः अश्वत्वम्, अश्वता । गोत्वम्, गोता ॥

## आ च त्वात् । (१२०/१७८२)

'ब्रह्मणस्त्वः' (५.१.१३६/१८०१) इति वक्ष्यति । [11]आ एतस्मात् त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ । वक्ष्यति – 'पृथ्वादिभ्य इमनिज् वा' (५.१.१२२/१७८४) इति । प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता । म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता । अपवादैः सह समावेशार्थं वचनम् । कर्मणि च विधानार्थं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५.१.१२४/१७८८) इति । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । [12]स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता । पुंसो भावः पुंस्त्वम्, पुंस्ता, पौंस्नम् ॥

## न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवट[13]बुधकतरसलसेभ्यः । (१२१/१७८३)

इत उत्तरे ये [14]भावप्रत्ययाः, ते नञ्पूर्वात् तत्पुरुषात् न भवन्ति चतुरादीन् वर्जयित्वा । वक्ष्यति – 'पत्यन्तपुरोहितादिभ्यो यक्' (५.१.१२८/१७९३) इति । अपतित्वम्, अपतिता । अपटुत्वम्, अपटुता । [15]अरमणीयत्वम्, अरमणीयता । नञ्पूर्वात् इति किम् ? [16]बार्हस्पत्यम् । प्राजापत्यम् । तत्पुरुषात् इति किम् ? नास्य पटवः सन्ति इति अपटुः, तस्य भावः आपटवम् । [17]आलघवम् । अचतुरादिभ्यः इति किम् ? आचतुर्यम् । आसङ्गत्यम् । आलवण्यम् । [18]आवटच्यम् । [19]आबुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् ॥

---

1. प्रासादाः ब. 2. अगारम् क. 3. देवदत्तस्य इव देवदत्तवत् यज्ञदत्तस्य क. 4. शुक्लाः इत्यधिकम् ह. 5. अर्हति ह. 6. पालनम् नास्ति फ. 7. ब्राह्मणवत् ऋषिवत् नास्ति फ. 8. साधारणे क. फ. 9. यासि बप्सत् नास्ति ह, बप्सत् नास्ति फ. 10. उद्गतान्निर्गतान् इत्यर्थः क. 11. आ—पृथुत्वम् नास्ति ड. 12. स्त्रियाः भावः नास्ति ड. 13. युध सि.कौ. 14. भाव नास्ति क.फ.ह. 15. अकमनीयत्वम् अकमनीयता क. 16. नास्ति क, गार्हस्पत्यम् ह, प्राजापत्यम् नास्ति ह. 17. आलघवम् नास्ति फ. 18. आघटच्यम् फ. 19 आबुध्यम् नास्ति ब.ड.फ.ह.

## पृथ्वादिभ्य इमनिज्वा । (१२२/१७८४)

पृथु इत्येवमादिभ्यः प्रातिपदिकेभ्यः इमनिच् प्रत्ययो भवति वा तस्य भावः इत्येतस्मि[1]न्नर्थे । वावचन- म[2]णादेः समावेशार्थम् । पृथोर्भावः प्रथिमा, पार्थवम् । म्रदिमा, मार्दवम् । '[3]तुरिष्ठेमेयःसु' (६.४.१५४/२००८), 'टेः' (६.४.१५५/१७८६) इति टिलोपः । 'र ऋतो हलादेर्लघोः' (६.४.१६१/१७८५) इति रेफादेशः । त्वतलौ सर्वत्र भवत एव । पृथुत्वम्, पृथुता । मृदुत्वम्, मृदुता ।

पृथु । मृदु । महत् । पटु । तनु । लघु । बहु । साधु । वेणु[4] । आशु । बहुल । गुरु[5] । दण्ड । ऊरु । [6]खण्ड । चण्ड । बाल । अकिंचन । [7]होड । पाक । [8]वत्स । मन्द । स्वादु । ह्रस्व । दीर्घ । प्रिय । वृष । ऋजु । क्षिप्र । क्षुप्र । क्षुद्र । पृथ्वादिः ॥

## वर्णदृढादिभ्यः ष्यञ् च । (१२३/१७८७)

वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारात् इमनिच् च, तस्य भावः इत्येतस्मिन् [9]विषये । शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता । कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता । दृढादिभ्यः[10] – दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता । षकारो ङीषर्थः । औचिती । [11]याथाकामी ।

[12]दृढ । परिवृढ । भृश । कृश । [13]चक्र । [14]आम्र । लवण । ताम्र । अम्ल । शीत । उष्ण । जड । बधिर । पण्डित । मधुर । मूर्ख । मूक[15] । 'वेर्यातलाभमतिमनःशारदानाम्' (ग.सू.१११) । 'समो मतिमनसोः[16] (ग.सू. ११२) ॥

## गुणवचनब्राह्मणादिभ्यः कर्मणि च । (१२४/१७८८)

गुणमुक्तवन्तो गुणवचनाः । गुणवचनेभ्यो [17]ब्राह्मणादिभ्यश्च तस्य इति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ् प्रत्ययो भवति । चकाराद् भावे च । कर्मशब्दः क्रियावचनः । जडस्य भावः कर्म वा जाड्यम्[18] । ब्राह्मणादिभ्यः खल्वपि – ब्राह्मण्यम् । माणव्यम् ।

आपादपरिसमाप्ते[19]र्भावकर्माधिकारः । ब्राह्मणादिराकृतिगणः । आदिशब्दः प्रकारवचनः ।

[५३९] चातुर्वर्ण्यादिभ्यः स्वार्थे उपसङ्ख्यानम् । (म.भा.२.३७०)

चत्वार एव वर्णाः चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैलोक्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । [20]औपम्यम् । सौख्यम् ।

ब्राह्मण । वाडव । माणव । चोर । मूक । [21]आराधय । विराधय । अपराधय । उपराधय । एकभाव । द्विभाव । त्रिभाव । अन्यभाव । समस्थ । विषमस्थ । परमस्थ । [22]मध्यमस्थ । अनीश्वर । कुशल । [23]कपि । चपल । अक्षेत्रज्ञ । निपुण । 'अर्हतो नुम् च' (ग.सू. ११३) आर्हन्त्यम् । संवादिन् । संवेशिन् । बहुभाषिन् । बालिश । दुष्पुरुष । कापुरुष । दायाद । विशसि । धूर्त । राजन् । संभाषिन् । शीर्षपातिन् । अधिपति । अलस । पिशाच । पिशुन । विशाल । गणपति । धनपति । नरपति । गडुल । निव । निधान । विष । 'सर्ववेदादिभ्यः स्वार्थे' (ग.सू. ११४) । 'चतुर्वेदस्योभयपदवृद्धिश्च' (ग.सू. ११५) । चातुर्वैद्यम् । इति ब्राह्मणादिः ॥

---

1. विषये ग. फ. 2. अणादिसमावेशार्थम् कः 3. तुरिष्ठे – रेफादेशः नास्ति क. 4. अणु इत्यधिकम् क. 5. अञ्चु विणु इत्यधिकम् ड. 6. खण्ड नास्ति ड. 7. चारु वक्र तृप होठ इत्यधिकम् ड. ब, महरज भोग इत्यधिकम् ह. 8. आररु इत्यधिकम् क. 9. अर्थे क. फ. 10. खल्वपि इत्यधिकम् ब. क. फ. ह. 11. यथाकामा आनुपूर्वा क. 12. वृढ इत्यधिकम् ड. फ. ह. 13. वक्र इत्यधिकम् फ, चुक्र ड. 14. अम्र ड. 15. आर्द्र मुखर इत्यधिकम् क. 16. जवने इत्यधिकम् ड. फ. ह. 17. शब्देभ्यः इत्यधिकम् क. फ. 18. मौढ्यम् इत्यधिकम् क. ड. फ, मौर्ख्यम् इत्यधिकम् फ. 19. भावकर्मणोः क. 20. आयस्यम् ड. 21. आराधय नास्ति ड. 22. उपरमस्थ ड. 23. कवि ड.

## स्तेनाद्यन्नलोपश्च । (१२५/१७९०)

स्तेनशब्दात् षष्ठीसमर्थाद् भावकर्मणोः[1] यत्प्रत्ययो भवति, नशब्दस्य लोपश्च [2]भवति । स्तेनस्य भावः कर्म वा स्तेयम् । [3]स्तेनात् इति केचिद् योगविभागं [4]कुर्वन्ति । स्तेनात् ष्यञ् भवति । स्तैन्यम् । ततो यन्नलोपश्च । स्तेयम्[5] ॥

## सख्युर्यः । (१२६/१७९१)

सखिशब्दात् यः प्रत्ययो भवति भावकर्मणोरर्थयोः । सख्युः भावः कर्म वा सख्यम् ।

[५४०] दूतवणिग्भ्यां चेति वक्तव्यम् ।

दूत्यम् । वणिज्यम् । [6]कथं वाणिज्यम् ? ब्राह्मणादित्वात् ॥

## कपिज्ञात्योर्ढक् । (१२७/१७९२)

कपिज्ञातिशब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोर[7]र्थयोः । कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् । यथासङ्ख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते ॥

## पत्यन्तपुरोहितादिभ्यो यक् । (१२८/१७९३)

पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोर[8]र्थयोः । सेनापतेः भावः कर्म वा सैनापत्यम् । गार्हपत्यम् । प्राजापत्यम् । पौरोहित्यम् । राज्यम् ।

पुरोहित । राजन् । संग्रामिक । एषिक । वर्मित । खण्डिक । दण्डिक[9] । छत्रिक । [10]मिलिक । पिण्डिक । बाल । मन्द । [11]स्तनिक । चूडितिक । कृषिक । पूतिक । पत्रिक । प्रतिक । अजानिक । सलनिक । सूचिक । शाक्वर । सूचक । पक्षिक । सारथिक । जलिक । सूतिक । अञ्जलिक । 'राजासे' (ग.सू. ११६)[12] । पुरोहितादिः ॥

## प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । (१२९/१७९४)

प्राणभृज्जातिवाचिभ्यः [13]प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्च अञ् प्रत्ययो भवति भावकर्मणोर[14]र्थयोः । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । वयोवचनेभ्यः – कौमारम् । कैशोरम् । उद्गात्रादिभ्यः – औद्गात्रम् । औन्नेत्रम् ।

उद्गातृ । उन्नेतृ । [15]प्रतिहर्तृ । रथगणक । पक्षिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । [16]वधू । 'सुभग मन्त्रे' (ग.सू. ११७) । उद्गात्रादिः ॥

---

1. अर्थयोः इत्यधिकम् क.फ. 2. भवति नास्ति ड. 3. स्तेनात् इति नास्ति क.ड. 4. इच्छन्ति क. 5. इति इत्यधिकम् ह.फ. 6. कथं नास्ति क.फ. 7. अर्थयोः नास्ति फ. 8. अभिधेययोः क.ड. 9. धार्मिक शिनिक मृतक अन्तलिक कम्बलिक पर्वतिक अजविक सारक इत्यधिकम् क. 10. पिलिक फ. 11. सादिक फ. 12. सत्र संचलिक आजातिक इत्यधिकम् फ, गर्मिक चर्मिक कर्मिक शीतिक मूलिक तिलिका तिश्विक अञ्जलिका ऋषिक पुत्रक पथिक प्रचिक प्रविक परीक्षक पूजनिक सूत्रिक स्वरिक इति पुरोहितादिः इत्यधिकम् क.ड.फ. 13. प्रातिपदिकेभ्यः नास्ति फ. 14. अभिधेययोः क.ह. 15. प्रशास्तृ होतृ बन्धुगणक इत्यधिकम् क.ह. 16. वधू गमने ह.

## हायनान्तयुवादिभ्योऽण्। (१३०/१७९८)

हायनान्तेभ्यः प्रातिपदिकेभ्यः युवादिभ्यश्च अण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। [1]युवादिभ्यः – यौवनम्। स्थाविरम्।

[५४१] श्रोत्रियस्य [2]यलोपश्च वाच्यः। (म.भा. २.३७१)

श्रोत्रियस्य भावः कर्म वा श्रौत्रम्।

युवन्। स्थविर। होतृ। यजमान। कमण्डलु। '[3]पुरुषासे' (ग. सू. ११८)। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्री। सुहृदय। सुभ्रातृ। वृषल। दुर्भ्रातृ। 'हृदयासे' (ग.सू. ११९)। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस। युवादिः॥

## इगन्ताश्च लघुपूर्वात्। (१३१/१७९९)

इगन्ताच्च [4]लघुपूर्वात् अण् प्रत्ययो भवति भावकर्मणोः[5]। लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते। लघुः पूर्वोऽवयवो[6]ऽस्य इति [7]लघुपूर्वः। कुतः पुनरसौ [8]लघुः पूर्वः। इक्सन्निधानादिकः इति विज्ञायते। [9]लघुः पूर्वो यस्मादिकः तदन्तान् प्रातिपदिकाद् इत्ययमर्थो विवक्षितः। अपरे [10]तत्पुरुषकर्मधारयं वर्णयन्ति। इक् चासावन्तश्च इति इगन्तः। लघुपूर्वग्रहणेन स एव[11] विशेष्यते, पश्चात् तेन प्रातिपदिकस्य तदन्तविधिः इति। अस्मिन् व्याख्यानेऽन्तग्रहणमतिरिच्यते। [12]लघुपूर्वादिकः इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। [13]नागरम्। हारीतकम्। पाटवम्। लाघवम्। इगन्तात् इति किम्? [14]पटत्वम्। घटत्वम्। लघुपूर्वात् इति किम्? कण्डूत्वम्। पाण्डुत्वम्। कथं काव्यम् इति? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः॥

## योपधाद्गुरूपोत्तमाद् वुञ्। (१३२/१८००)

त्रिप्रभृतीनाम[15]न्तस्य समीपमुपोत्तमम्। [16]गुरुः उपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारोपधात्[17] गुरूपोत्तमाद् वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। [18]वासनीयकम्। योपधात् इति किम्? [19]विमानत्वम्। गुरूपोत्तमात् इति किम्? क्षत्रियत्वम्।

[५४२] सहायाद्वेति वक्तव्यम्।

साहायकम्, साहाय्यम्॥

---

1. खल्वपि इत्यधिकम् क. ह. 2. अण् च इत्यधिकम् क. 3. पुरुषादसमासे क, कुटुम्बक स्वसृ कुटुम्ब दुर्हृदय सुकृत दुष्कृत इत्यधिकम् क, पुरुष होतृ कृत्रिम रुत असुरु दुःस्त्री इत्यधिकम् ड. 4. प्रातिपदिकात् इत्यधिकम् ब. क. ह. 5. अर्थयोः इत्यधिकम् ग. फ. ह, अभिधेययोः इत्यधिकम् क. 6. यस्य क. ग. 7. लघुपूर्वः नास्ति फ. 8. लघुपूर्वैः क. ड, पूर्त्रः ह. 9. लघुपूर्वः ब. ग. ह. 10 तत्पुरुषं कर्मधारयं च ब. ड, कर्मधारयं क. 11. इग् इत्यधिकम् ड. 12. इह इत्यधिकम् फ. 13. नागरजनम् ब, नारवर्जनम् ड, नारवरं जनं क, महाराजनथ् ह. 14. पदत्वं मघत्वम् ह. 15. अन्त्यात् पूर्यम् ब. ड. 16. गुरु ब. 17. प्रातिपदिकात् इत्यधिकम् ब. क. फ. 18. कामनीयकम् क. 19. विज्ञानत्वम् क, कुलीनत्बम् ब.

## द्वन्द्वमनोज्ञादिभ्यश्च। (१३३/१७९८)

द्वन्द्वसञ्ज्ञकेभ्यः[1] मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः[2]। गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका। मनोज्ञादिभ्यः[3] – मानोज्ञकम्। काल्याणकम्।

मनोज्ञ। कल्याण। प्रियरूप। छान्दस। छात्र। मेधाविन्। अभिरूप। आढच। कुलपुत्र। श्रोत्रिय। चोर। धूर्त। [4]वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपत्र। [5]कुशल। मनोज्ञादिः॥

## गोत्रचरणाच् छ्लाघात्याकारतदवेतेषु। (१३४/१७९९)

गोत्रवाचिनः चरणवाचिनः च प्रातिपदिकात् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। तत्र श्लाघा विकत्थनम्। अत्याकारः [6]पराधिक्षेपः। तदवेतः तत्प्राप्तः [7]तज्ज्ञो वा। तद् इति गोत्रचरणयोः [8]भावकर्मणी निर्दिश्येते। तत्प्राप्तः तदवगतवान् तदवेत इत्युच्यते। श्लाघायां तावत् – गार्गिकया श्लाघते। काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थते इत्यर्थः। अत्याकारे – गार्गिकया [9]अत्याकुरुते। काठिकया [10]अत्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपति इत्यर्थः। [11]तदवेतः – गार्गिकामवेतः। काठिकामवेतः। गार्ग्यत्वं कठत्वं च प्राप्तः इत्यर्थः। [12]तद्वा अवगतवान् इत्यर्थः। श्लाघादिषु इति किम्? गार्ग्यत्वम्। कठत्वम्॥

## होत्राभ्यश्छः। (१३५/१८००)

होत्राशब्दः [13]ऋत्विग्विशेषवचनः। [14]ऋत्विग्विशेषवाचिभ्यः छः प्रत्ययो भवति भावकर्मणोः[15]। अच्छावाकस्य भावः कर्म वा अच्छावाकीयम्। [16]मित्रावरुणीयम्। ब्राह्मणाच्छंसीयम्। [17]आग्नीध्रीयम्। प्रतिप्रस्थात्रीयम्। त्वष्ट्रीयम्। पोत्रीयम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## ब्रह्मणस्त्वः। (१३६/१८०१)

होत्राभ्यः इत्यनुवर्तते। ब्रह्मन्शब्दाद् [18]होत्रावाचिनः त्वः प्रत्ययो भवति भावकर्मणोः[19]। छस्यापवादः। [20]ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्। न इति वक्तव्ये त्ववचनं तलो बाधनार्थम्। यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्-शब्दः, ततः त्वतलौ[21] भवत एव। ब्रह्मत्वम्, ब्रह्मता। [22]भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः॥

इति [23]काशिकायां वृत्तौ पञ्चमाध्यायस्य

प्रथमः पादः[24]

---

1. प्रातिपदिकेभ्यः इत्यधिकम् ब. फ. 2. अर्थयोः इत्यधिकम् फ. ह, अभिधेययोः इत्यधिकम् कः 3. खल्वपि इत्यधिकम् क. ग. फ. ह. 4. विश्वदेव क. 5. कुशलपुत्र क, कुपुत्र ग्रामकुलाल ड. 6. पराधिकार. फ. 7. तज्ज्ञातः ड. 8. भावश्च कर्मच ब. क. 9–10. अधिकुरुते ड. 11. तदवेते ड. 12. तद्वान् गतवान् ह, तद्वारगतः इत्यर्थः क. 13. ऋत्विजां वाचकः ह. 14. होत्राभ्यः इत्यधिकम् ब. क. 15. अर्थयोः इत्यधिकम् ब, अभिधेययोः इत्यधिकम् क. ह. 16. मैत्रावरुणीयम् ग. 17. आग्नीध्रीयम् – पोत्रीयम् नास्ति ड. 18. होतृ-वाचिनः ह. 19. अर्थयोः इत्यधिकम् ब. ह. 20. बह्माख्यस्य ऋत्विजो भावः कर्म वा ब्रह्मत्वम् क. ग. 21. प्रत्ययौ इत्यधिकम् ब. क. 22. भावकर्मणोः नञ्स्नञोश्च पूर्णोऽवधिः क. 23. श्री इत्यधिकम् क. ड. 24. समाप्तः इत्यधिकम् क.

## पञ्चमाध्यायस्य द्वितीयः पादः

### धान्यानां भवने क्षेत्रे खञ्। (१/१८०२)

निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः[1] षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति, तच्चेद् भवनं क्षेत्रं भवति। भवनम् इति भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रम् मौद्गीनम्। कौद्रवीणम्। [2]कौलत्थीनम्। धान्यानाम् इति किम्? तृणानां भवनं क्षेत्रम् इत्यत्र न भवति। क्षेत्रम् इति किम्? [3]मुद्गानां [4]भवनं कुसूलम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

### व्रीहिशाल्योर्ढक्। (२/१८०३)

व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रे अभिधेये। खञोऽपवादः। व्रीहीणां भवनं क्षेत्रम् व्रैहेयम्[5]। शालेयम्॥

### यवयवकषष्टिकाद् यत्। (३/१८०४)

[6]यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। यवानां भवनं क्षेत्रम् यव्यम्। [7]यवक्यम्। षष्टिक्यम्॥

### विभाषा तिलमाषोमाभङ्गाणुभ्यः। (४/१८०५)

[8]तिल माष उमा भङ्गा अणु इत्येतेभ्यः विभाषा यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञि प्राप्ते वचनं, पक्षे सोऽपि भवति। उमाभङ्गयोरपि धान्यत्वमाश्रितमेव। [9]तिलानां भवनं क्षेत्रम् तिल्यम्, तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यम्, भाङ्गीनम्। अणव्यम्, आणवीनम्॥

### सर्वचर्मणः कृतः खखञौ। (५/१८०६)

सर्वचर्मन् शब्दात् तृतीयासमर्थात् कृतः इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र [10]प्रत्ययार्थेन कृतेन[11] सम्बध्यते, न चर्मणा। तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृतः इत्येतस्मिन् वाक्यार्थे[12] वृत्तिः। सर्वचर्मीणः, सार्वचर्मीणः॥

---

1. शब्देभ्यः इत्यधिकम् ब. ड, प्रातिपदिकेभ्यः इत्यधिकम् क. 2. कौलत्थीनम् नास्ति फ. 3. मुद्गादीनाम् क. 4. भवनः कुशूलः ब. क. ड. फ. 5. क्षेत्रम् इत्यधिकम् फ. 6. यव यवक षष्टिक इत्येतेभ्यः क. 7. यव एव यवकः। अजमोदा इत्यन्ये इत्यधिकम् फ. 8. तिलादिभ्यः शब्देभ्यः ब. क. फ. 9. तिलादीनाम् फ, तिल माष उमा भङ्गा अणु एषां भवनम् ब. क. ह. 10. प्रत्ययेनार्थेन क. 11. सह इत्यधिकम् क. 12. तद्धितवृत्तिः क.

## यथामुखसम्मुखस्य दर्शनः खः। (६/१८०७)

यथामुखशब्दात् सम्मुखशब्दात् [1]षष्ठीसमर्थाद् दर्शनः इत्येतस्मिन्नर्थे खः [2]प्रत्ययो भवति। दृश्यतेऽस्मिन् इति दर्शनः आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात् सादृश्येऽव्ययीभावः। यथामुखं दर्शनः यथामुखीनः। [3]सर्वस्य मुखस्य दर्शनः सम्मुखीनः॥

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति। (७/१८०८)

तत् इति द्वितीया समर्थविभक्तिः। [4]व्याप्नोति इति प्रत्ययार्थः। [5]परिशिष्टं प्रकृतिविशेषणम्। सर्वादेः प्रातिपदिकात् पथिन् अङ्ग कर्मन् पत्र पात्र [6]इत्येवमन्ताद् [7]द्वितीयासमर्थाद् व्याप्नोति इत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणः तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीणः ओदनः॥

## आप्रपदं प्राप्नोति। (८/१८०९)

प्रपदम् इति पादस्याग्रमुच्यते। आङ् मर्यादायाम्। तयोरव्ययीभावः। आप्रपदशब्दात् तदिति द्वितीया-समर्थात् प्राप्नोति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेण असम्बद्धस्यापि पटस्य प्रमाणमाख्यायते॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु। (९/१८१०)

अनुपदादिभ्यः [8]शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः यथासङ्ख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुः आयामे सादृश्ये वा। अनुपदं बद्धा उपानत् अनुपदीना। पदप्रमाणा इत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। [9]अयः प्रदक्षिणम्, अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः [10]पदानामसमावेशः सोऽयानयः। अयानयं नेयः अयानयीनः शारः (म.भा. २.३७३)। [11]फलक[12]शिरःस्थित इत्यर्थः॥

## परोवरपरम्परपुत्रपौत्रमनुभवति। (१०/१८११)

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यः[13] तद् इति द्वितीयासमर्थेभ्यः अनुभवति इत्यस्मिन्नर्थे खः प्रत्ययो भवति। परांश्चावरांश्चानुभवति परोवरीणः (म. भा. २. ३७३)। परोवर इति [14]परस्योत्वं प्रत्ययसंनियोगेन निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः[16]। [15]परपरतराणां च परम्परभावो निपात्यते। [17]परम्परशब्दो विनापि प्रत्ययेन दृश्यते, [18]मन्त्रिपरम्परा मन्त्रं भिनत्ति इति[19]। तच्छब्दान्तरमेव द्रष्टव्यम्॥

---

1. च इत्यधिकम् क.फ. 2. प्रत्ययः नास्ति फ. 3. संमुखस्य दर्शनः फ, सम्यक् मुखं संमुखम्, संमुखस्य दर्शनः क. ह. 4. प्राप्नोति ह. 5. परिशिष्टः फ, प्रत्ययार्थमिष्टं प्रकृतिविशेषणम् क. 6. इत्यन्तात् फ. 7. तद् इत्यधिकम् फ. ह. 8. परे इत्यधिकम् क, परैः शब्दैः इत्यधिकम् ब. ह, शब्देभ्यः नास्ति ह. 9. अयम् ह, अयः प्रदक्षिणगमनम्, अनयः सव्यगमनम् ड. 10. पदानाम् नास्ति ह. 11. प्रथमसंनिवेशितः क. 12. शिरसि स्थितः ड. 13. प्रातिपदिकेभ्यः इत्यधिकम् ब. क, शब्देभ्यः इत्यधिकम् फ. 14. परस्य अवरस्य ओत्ववचनम् फ, परस्य ओद्वचनम् ड. 15. पराणाम् इतराणाम् च फ. 16. वृद्धः इत्यधिकम् ब.क.फ. 17. कथं परोवर्ये पराशब्दः इत्यधिकम् ड. 18. सेयम् इत्यधिकम् क, सैषा इत्यधिकम् ड. 19. नैष दोषः इत्यधिकम् क.ड.

## अवारपारात्यन्तानुकामं गामी । (११/१८१२)

अवारपार अत्यन्त अनुकाम इत्येतेभ्यो द्वितीयासमर्थेभ्यः गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति । [1]गमिष्यति इति गामी, 'भविष्यति गम्यादयः' (३.३.३/३१७१) इति । 'अकेनोर्भविष्यदाधमर्ण्ययोः' (३.२.७०/६२८) इति षष्ठीप्रतिषेधः । अवारपारं गामी अवारपारीणः ।

[५४३] विपरीताच्च ।

पारावारीणः ।

[५४४] विगृहीतादपी[2]ष्यते ।

अवारीणः[3] ।

अत्यन्तं गामी अत्यन्तीनः । भृशं गन्ता इत्यर्थः । अनुकामं गामी अनुकामीनः । यथेष्टं गन्ता इत्यर्थः ॥

## समांसमां विजायते । (१२/१८१३)

समांसमाम् इति वीप्सा । सुबन्तसमुदायः प्रकृतिः । विजायते गर्भं धारयति [4]इति प्रत्ययार्थः । गर्भधारणेन [5]सकलाऽपि समा व्याप्यते इति अत्यन्तसंयोगे द्वितीया (२.१.२९/६९१) । [6]समांसमां विजायते समांसमीना गौः । समांसमीना वडवा ।

[५४५] [7]पूर्वपदे सुपो[8]ऽलुग् वक्तव्यः ।

केचित्तु समायां [9]समायां विजायते इति विगृह्णन्ति, [10]गर्भमोचने तु विजनिर्वर्तते इत्याहुः । तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्य[11] अलुग्वक्तव्यः ।

[५४६] अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः । (म. भा. २.३७४)

[12]समांसमां विजायते, समायां समायां विजायते इति वा ॥

## अद्यश्वीनावष्टब्धे । (१३/१८१४)

विजायते इति वर्तते । अद्यश्वीन इति निपात्यते अवष्टब्धे विजने, आसन्ने प्रसवे । आविदूर्ये [1]हि[3] मूर्धन्यो विधीयते 'अवाच्चालम्बनाविदूर्ययोः' (८.३.६८/२२७३) इति । अद्य वा श्वो वा विजायतेऽद्यश्वीना गौः । अद्यश्वीना वडवा । केचित् तु विजायते इति नानुवर्तयन्ति, अवष्टब्धमात्रे निपातनमित्याहुः । अद्यश्वीनं मरणम्, अद्यश्वीनो वियोगः इति ॥

---

1. गमेः भविष्यति इत्यधिकम् ह. 2. भवति क. 3. पारीणः इत्यधिकम् क. फ. 4. प्रसूता इत्यर्थः क. 5. च इत्यधिकम क. फ. 6. समांसमांशब्दात् तदिति द्वितीयासमर्थात् विजायते इत्येतस्मिन्नर्थे खप्रत्ययो भवति इत्यधिकम् क. 7. पूर्वपदस्य ह. 8. निपातनात् इत्यधिकम् ह. 9. समायां नास्ति फ. 10. गर्भविमोचने ब. क. ड. फ. 11. च इत्यधिकम् फ. 12. चकारात् पूर्वपदस्य च लोपो वक्तव्यः इत्यधिकम् ड. 13. वा ड.

## आगवीनः । (१४/१८१५)

आगवीनः इति निपात्यते । [1]गोः आङ्पूर्वाद् आ तस्य गोः [2]प्रतिपादनात् कर्मकारिणि खः प्रत्ययो निपात्यते (म. भा. २.३७४) । आगवीनः कर्मकरः । [3]यो गवा भृतः कर्म करोति[4] आ तस्य गोः प्रत्यर्पणात् ॥

## अनुग्वलङ्गामी । (१५/१८१६)

गोः पश्चाद् अनुगु । अनुगुशब्बाद् [5]अलङ्गामी [6]इत्यतस्मिन्नर्थे खः प्रत्ययो भवति । अनुगु [7]पर्याप्तं गच्छति अनुगवीनः [8]गोपालकः ॥

## अध्वनो यत्खौ । (१६/१८१७)

तत् इति द्वितीया समर्थविभक्तिरनुवर्तते । अलङ्गामी इति च प्रत्ययार्थः । अध्वन्शब्दात् द्वितीयासमर्थाद् अलङ्गामी इत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः । अध्वानम[9]लङ्गामी अध्वन्यः, अध्वनीनः । 'ये चाभावकर्मणोः' (६.४. १६८/११५४), '[10]आत्माध्वानौ खे' (६.४. १६९/१६७१) इति[11] प्रकृतिभावः ॥

## अभ्यमित्राच्छ च । (१७/१८१८)

अभ्यमित्रशब्दात्[12]द्वितीयासमर्थात् अलङ्गामी इत्यस्मिन्नर्थे छः प्रत्ययो भवति । चकाराद् यत्खौ च । अभ्यमित्रम् [13]अलङ्गामी अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छति इत्यर्थः ॥

## गोष्ठात् खञ् [14]भूतपूर्वे । (१८/१८१९)

गावस्तिष्ठन्त्यस्मिन् इति [15]गोष्ठम् । गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते । भूतपूर्वग्रहणं तस्यैव विशेषणम् । गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे [16]खञ् प्रत्ययो भवति । गोष्ठो भूतपूर्वः[17] गौष्ठीनो देशः[18] । भूतपूर्वग्रहणं किम् ? गोष्ठो वर्तते ॥

## अश्वस्यैकाहगमः । (१९/१८२०)

निर्देशादेव समर्थविभक्तिः । अश्वशब्दाद् षष्ठीसमर्थात् एकाहगमः इत्येतस्मिन्नर्थे खञ् प्रत्ययो भवति । एकाहेन गम्यते इति एकाहगमः । अश्वस्य एकाहगमोऽध्वा आश्वीनः[19] । 'आश्वीनानि शतं पतित्वा' (तां. ब्रा. २१. १. ९) ॥

---

1. गोराङ्पूर्वायाः क, गोराङ्पूर्वात् आगतस्य ड. 2. प्रतिदानात् कारिणि ह. 3. यो नास्ति फ. 4. इत्यर्थः इत्यधिकम् फ. 5. द्वितीयासमर्थात् इत्यधिकम् क. 6. इत्येतस्मिन्नर्थे फ. ह. 7. गोः पश्चात् अत्यन्तं गच्छति ग. ह. 8. गोपालः ग. 9. अलं गच्छति क. ड. फ. 10. इति इत्यधिकम् क. 11. च इत्यधिकम् ड. 12. तत् इति इत्यधिकम् क. फ. 13. अलं गच्छति ब.क.फ.ह. 14. भूतपूर्वात् क. 15. गोष्ठो देशः ड. 16. खः मुद्रितः पाठः. 17. देशः इत्यधिकम् क, गोष्ठीनः मुद्रितः पाठः. 18. लिङ्गविशिष्टगत्या गोष्ठीशब्दस्यापि ग्रहणम् इत्यधिकम् ग. 19. अध्वा इत्यधिकम् ब. क.

## शालीनकौपीने अधृष्टाकार्ययोः। (२०/१८२१)

शालीनकौपीनशब्दौ निपात्येते यथासङ्ख्यमधृष्टे अकार्ये चाभिधेये। अधृष्टः अप्रगल्भः। अकार्यमकरणार्हं विरुद्धम्[1]। [2]शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ[3] यथाकथञ्चिद् व्युत्पादयितव्यौ। शालाप्रवेशनमर्हति, कूपावतारमर्हति (म.भा. २.३७४) इति [4]खञ् प्रत्ययः उत्तरपदलोपश्च निपात्यते। शालीनो जडः। कौपीनं [5]पापम्॥

## व्रातेन जीवति। (२१/१८२२)

निर्देशादेव [6]तृतीया समर्थविभक्तिः। व्रातशब्दात् तृतीयासमर्थात् जीवति इत्यस्मिन्नर्थे [7]खञ् प्रत्ययो भवति। नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः (म.भा. २.३७४)। उत्सेधः शरीरं, [8]तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म व्रातम्। तेन व्रातेन जीवति व्रातीनः। तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन[9] जीवति तत्र नेष्यते॥

## साप्तपदीनं सख्यम्। (२२/१८२३)

साप्तपदीनम् इति निपात्यते [10]सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। सख्यं [11]जनाः साप्तपदीनमाहुः। कथं [12]साप्तपदीनः सखा, साप्तपदीनं मित्रम् इति? [13]यदा गुणप्रधानः साप्तपदीनशब्दः [14]सखिभावे [6]तत्कर्मणि च [16]वर्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया[17] वर्तते [18]तदा पुरुषेण [19]सामानाधिकरण्यं भवति॥

## हैयङ्गवीनं सञ्ज्ञायाम्। (२३/१८२४)

हैयङ्गवीनं[20] निपात्यते सञ्ज्ञायां विषये। ह्योगोदोहस्य हियङ्गवादेशः, तस्य विकारे (म.भा. २.३७५) खञ् [21]प्रत्ययो भवति [22]सञ्ज्ञायाम्। ह्योगोदोहस्य विकारः हैयङ्गवीनम्[23]। घृतस्य[24] सञ्ज्ञा। [25]तेनेह न भवति, ह्योगोदोहस्य विकार उदश्वित्[26] (म.भा. २.३७५)॥

## तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ। (२४/१८२५)

तस्य इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः [27]कर्णादिभ्यश्च यथासङ्ख्यं पाकमूलयोरर्थयोः कुणप् जाहच् इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः[28] पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः – कर्णस्य मूलं कर्णजाहम्[29]।

पीलु। [30]कर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः।

कर्ण। अक्षि। नख। मुख। [31]मख। केश। पाद। गुल्फ। [32]भ्रूभङ्ग। दन्त। ओष्ठ। [33]पृष्ठ। [34]अङ्गुष्ठ। कर्णादिः[35]॥

---

1. विरूपमित्यर्थः इत्यधिकम फ. 2. शालीनकौपीनशब्दौ फ. 3. तौ इत्यधिकम् फ. 4. खप्रत्ययः फ. 5. अकार्यम् क. 6. तृतीया नास्ति फ. 7. खप्रत्ययः फ. 8. तदायासेन ब.क.ड. 9. कर्मणा इत्यधिकम् ब.क.ड.ह. 10. सख्यं चेत् तद् भवति फ.ह. 11. जनाः नास्ति ड.फ. 12. साप्तपदीनः सखा नास्ति फ. 13. यदा नास्ति ड, धर्मधर्मिणोरभेदोपचारात् इत्यधिकम् ह. 14. सखिभावेन क. 15. सत्कर्मणि प्रा.भा. 16. वर्तमानः ब.क.ड.ह. 17. तद्वति इत्यधिकम् ब.क.फ.ह 18. तस्य ड. 19. समानाधिकरणो ब.क. 20. इति इत्यधिकम् ब.ड.फ. 21. च इत्यधिकम् ह. 22. सञ्ज्ञायाम् नास्ति फ. 23. घृतम् इत्यधिकम् क.ड.ह. 24. इयम् इत्यधिकम् ब.ड.फ.ह, एषा इत्यधिकम् क. 25. तेन नास्ति क.फ. 26. इति इत्यधिकम् क.फ.ह. 27. कल्कादिभ्यः ह. 28. परिणामः इत्यधिकम् क.ड. 29. अक्षिजाहम् इत्यधिकम् ब.क.ड. 30. कर्कन्धू ड. 31. मख नास्ति ब.क.ड.ह. 32. भ्रू। शृङ्ग क.ड, भानु शृङ्गा ह. 33. पुष्प क.फ. 34. अङ्गुष्ठ नास्ति फ. 35. आकृतिगणश्चायम् इत्यधिकम् ग.

## पक्षात्तिः । (२५/१८२६)

तस्य इत्येव[1] । तस्य इति षष्ठीसमर्थात् पक्षशब्दात् मूलेऽभिधेये [2]तिः प्रत्ययो भवति । मूलग्रहणमनुवर्तते, न पाकग्रहणम् (म.भा. २.३७५) । 'एकयोगनिर्दिष्टानामप्येकदेशो[3]ऽनुवर्तते' (व्या.प. २३) इति । पक्षस्य मूलं पक्षतिः प्रतिपत् ॥

## तेन वित्तश्चुञ्चुप्चणपौ । (२६/१८२७)

तेन इति तृतीयासमर्थात् वित्तः इत्येतस्मिन्नर्थे [4]चुञ्चुप् चणप् इत्येतौ प्रत्ययौ भवतः । वित्तः प्रतीतः [5]ज्ञात इत्यर्थः । विद्यया वित्तः [6]विद्याचुञ्चुः, [7]विद्याचणः[8] ॥

## विनञ्भ्यां नानाञौ नसह । (२७/१८२८)

वि नञ् इत्येताभ्यां यथासङ्ख्यं ना नाञ् इत्येतौ [9]प्रत्ययौ भवतः । [10]नसह इति प्रकृतिविशेषणम् (म.भा. २.३७५) । असहार्थे पृथग्भावे वर्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः । विना । नाना ॥

## वेः शालच्छङ्कटचौ । (२८/१८२९)

विशब्दात् शालच् शङ्कटच् इत्येतौ [11]प्रत्ययौ भवतः । [12]ससाधनक्रियावचनात् उपसर्गात् स्वार्थे प्रत्ययौ भवतः । विगते शृङ्गे विशाले, [13]विशङ्कटे । तद्योगाद् गौरपि विशालः, विशङ्कटः इत्युच्यते । परमार्थतस्तु [14]गुणशब्दा एते यथाकथञ्चिद् व्युत्पाद्यन्ते । नात्र प्रकृतिप्रत्ययार्थयोर[15]भिनिवेशः ॥

## संप्रोदश्च कटच् । (२९/१८३०)

सम् प्र उद् इत्येतेभ्यः[16] कटच् प्रत्ययो भवति । चकाराद् वेश्च । सङ्कटम् । प्रकटम् । उत्कटम् । विकटम् ।

[५४७] [17]कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम् ।

अलाबूनां रजः अलाबूकटम् । तिलकटम् । उमाकटम् । भङ्गाकटम् ।

[५४८] गोष्ठादयः स्थानादिषु [18]पशुनामादिभ्य उपसङ्ख्यानम् ।

गवां स्थानं गोगोष्ठम् । [19]महिषीगोष्ठम् ।

[५४९] सङ्घाते कटच् [20]वक्तव्यः ।

---

1. एव नास्ति फ. 2. तिप्रत्ययः फ. 3. एकदेशानुवृत्तिः फ, एकदेशानुवृत्तिः भवति क. ड, एकदेशानुवर्तनम् ग. व्या.पाठः 4. चञ्चुप् ड. 5. प्रख्यातः फ. 6. विद्याचञ्चुः ड, विद्यया चुञ्चुः इत्यधिकम् क. 7. विद्याचणः नास्ति ब.क.ह. 8. केशचुञ्चुः इत्यधिकम् क, केशचणः इत्यधिकम् ब.क.ह, सेवाचुञ्चुः इत्यधिकम् ड. 9. प्रत्ययौ नास्ति ह. 10. नसह–भवतः नास्ति क. 11. प्रत्ययौ नास्ति ग. 12. साधन° ह.ग. 13. विशङ्कटे नास्ति ग. 14. गुणशब्दात् क. 15. अभिनिवेष्टव्यम् क.फ.ह, नात्र प्रकृतिप्रत्ययार्थोऽभिनिवेष्टव्यः ड. 16. च इत्यधिकम् ब.ह. ग. 17. कटच्प्रकरणे नास्ति क.फ. 18. पशुनामभ्यः इति ड. 19. महिषीगोष्ठम् नास्ति क, अजागोष्ठम् ग. 20. वक्तव्यः नास्ति फ.

अवीनां सङ्घातः [1]अविकटम् ।

[५५०] विस्तारे पटच् [2]वक्तव्यः ।

[3]अविपटम् ।

[५५१] द्वित्वे गोयुगच् ।

[4]उष्ट्रगोयुगम् । [5]अश्वगोयुगम् ।

[५५२] प्रकृत्यर्थस्य षट्त्वे षड्गवच् ।

[6]हस्तिषड्गवम् । अश्वषड्गवम् ।

[५५३] [7]विकारे स्नेहे तैलच् ।

एरण्डतैलम् । इङ्गुदीतैलम् । तिलतैलम् ।

[५५४] भवने क्षेत्रे इक्ष्वादिभ्यः [8]शाकटशाकिनौ ।

[9]इक्षुशाकटम्, इक्षुशाकिनम् । [10]मूलशाकटम्, मूलशाकिनम् ॥

## अवात् कुटारच्च । (३०/१८३१)

अवशब्दात् कुटारच् प्रत्ययो भवति । चकारात् कटच्[11] । [12]अवकुटारम्, अवकटम् ॥

## नते नासिकायाः सञ्ज्ञायां टीटञ्नाटज्भ्रटचः । (३१/१८३२)

अवात् इत्येव । नमनं नतम् । [13]नासिकायाः सम्बन्धिनि नते [14]अभिधेये टीटच् नाटच् भ्रटच् इत्येते प्रत्यया भवन्ति सञ्ज्ञायां विषये । नासिकाया नतम् अवटीटम्, अवनाटम्, अवभ्रटम् । तद्योगान्नासिकाऽपि । पुरुषोऽपि तथोच्यते, अवटीटः[15], अवनाटः, अवभ्रटः इति ॥

## नेर्बिडज्बिरीसचौ । (३१/१८३२)

नते नासिकायाः [16]इत्यनुवर्तते, सञ्ज्ञायाम् इति च । निशब्दान् नासिकाया नतेऽभिधेये बिडच् बिरीसच् इत्येतौ प्रत्ययौ भवतः । निबिडम्, निबिरीसम् । तद्योगात् नासिकाऽपि । पुरुषोऽपि, निबिडः, निबिरीसः[17] । कथं निबिडाः केशाः, निबिडं वस्त्रम्[18] ? उपमानाद् भविष्यति ॥

---

1. अविकटः ब.क.ड.फ. 2. वक्तव्यः नास्ति फ. 3. अवीनां विस्तारः अविपटः ब, अविपटः क. 4. द्वौ उष्ट्रौ इत्यधिकम् ब. 5. अश्वगोयुगम् नास्ति फ. 6. गोषड्गवम् ग, महिषषड्गवम् फ. 7. विकारे नास्ति ड.फ, स्नेहने तैलच् ब.क. 8. शाकटच्शाकिनौ ड. 9. वृक्षशाकटम् वृक्षशाकिनम् इत्यधिकम् ड. 10. मूलकशाकटम् मूलकशाकिनम् ब. क. 11. च इत्यधिकम् ब.ड. 12. अवकुटारः अवकटः क.ह. 13. अवशब्दात् इत्यधिकम् क.ड.फ, तस्मिन् नासि सम्बधिनि ड. 14. वाच्ये क. 15. पुरुषः इत्यधिकम् क. 16. सञ्ज्ञायाम् इत्येव ह. 17. घनः पदार्थः उच्यते इत्यधिकम् ग. 18. इति इत्यधिकम् क.ड.फ.

## इनच् पिटच् चिक चि च । (३३/१८३४)

नेः इत्येव, नते नासिकायाः इति च । निशब्दान् नासिकाया नतेऽभिधेये इनच् पिटच् इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासङ्ख्यं चिक चि इत्येतावादेशौ भवतः । चिकिनः, [1]चिपिटः ।

[५५५] ककारः प्रत्ययो वक्तव्यश्चिक् च प्रकृत्यादेशः[2] । (म. भा. २. ३७७)

चिक्कः । तथा चोक्तम् –'इनच्पिटच्काश्चिकचिचिकादेशाश्च [3]वक्तव्याः' (म.भा.२. ३७७) इति ।

[५५६] क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी । (म. भा. २. ३७७)

क्लिन्नस्य चिल् पिल् इत्येतावादेशौ भवतः [4]लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मि[5]न्नर्थे । क्लिन्ने अस्य चक्षुषी चिल्लः, पिल्लः (म. भा. २. ३७७) ।

[५५७] [6]चुलादेशो वक्तव्यः । (म.भा. २. ३७७)

चुल्लः । अस्य इत्यनेन नार्थः । चक्षुषोरेवाभिधाने प्रत्यय इष्यते । क्लिन्ने चक्षुषी चिल्ले, पिल्ले, चुल्ले । तद्योगात् तु पुरुषस्तथो[7]च्यते ॥

## उपाधिभ्यां त्यकन्नासन्नारूढयोः । (३४/१८३५)

उप अधि इत्येताभ्यां यथासङ्ख्यम् आसन्नारूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन् प्रत्ययो भवति । सञ्ज्ञाधिकाराच् च [8]नियतविषयमासन्नारूढं गम्यते । पर्वतस्य [9]आसन्नम् उपत्यका । तस्यैवारूढम् अधित्यका । प्रत्यय–स्थात् कात्पूर्वस्य (७. ३. ४४/४६३) इति इत्वमत्र न भवति, सञ्ज्ञाधिकारादेव ॥

## कर्मणि घटोऽठच् । (३५/१८३६)

[10]निर्देशादेव समर्थविभक्तिः । कर्मशब्दात् सप्तमीसमर्थाद् घटः इत्येतस्मिन्नर्थे अठच् प्रत्ययो भवति । घटते इति घटः[11] । कर्मणि घटते कर्मठः पुरुषः[12] ॥

## तदस्य सञ्जातं तारकादिभ्य इतच् । (३६/१८३७)

तद् इति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे इतच् प्रत्ययो भवति । सञ्जातग्रहणं प्रकृतिविशेषणम् । तारकाः सञ्जाता अस्य [13]नभसः तारकितं नभः । पुष्पितो वृक्षः ।

तारका । [14]पुष्प । [15]मुकुल । [16]कण्टक । पिपासा । सुख । दुःख । ऋजीष । कुड्मल । सूचक । रोग । विचार । व्याधि । निष्क्रमण । मूत्र । [17]पुरीष । किसलय । [18]कुसुम । प्रचार । [19]तन्द्रा[20] । वेग । पुक्षा । श्रद्धा[21] । उत्कण्ठा । भर । द्रोह[22] । 'गर्भादप्राणिनि' (ग. सू. १२०) । तारकादिराकृतिगणः ॥

---

1. चिकिटः ह. 2. वक्तव्यः इत्यधिकम् ह. 3. वक्तव्याः नास्ति ह. 4. लच् ह. 5. अभिधेये फ. 6. चुल्लादेशः क. ह. 7. व्यपदिश्यते क. 8. नियतं ह. 9. आसन्ना भूः ड, आसन्नं समीपं ग. 10. सप्तमी ड. 11. कर्मणि ठक् इत्यधिकम् क. 12. अकारः इकादेशाभावार्थः इत्यधिकम् ड. 13. नभसः नास्ति ह. फ. 14. वृक्ष ह. 15. मञ्जरी फ. 16. इषीक ह. 17. उच्चार ह. 18. स्तबक ह. फ. 19. निद्रा ह. फ. 20. बुभुक्षा इत्यधिकम् ह. 21. अभिषङ्ग अङ्गारक वर्ण इत्यधिकम् ह. 22. व्रण इत्यधिकम् ह.

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।** (३७/१८३८)

तदस्य इत्यनुवर्तते । तद् इति प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच् इत्येते प्रत्यया भवन्ति यत् तत् प्रथमासमर्थं [1]प्रमाणं चेत् तद् भवति । ऊरुः प्रमाणम् अस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम् । जानुद्वयसम्[2] । जानुदघ्नम् । जानुमात्रम् । 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' (म. भा. २. ३७७) । ऊरुद्वयसम् उदकम् । ऊरुदघ्नम् उदकम् । मात्रच् पुनरविशेषेण, प्रस्थमात्रम् इत्यपि भवति ।

[५५८] प्रमाणे लो वक्तव्यः । (म. भा. २. ३७८)

[3]प्रमाणशब्दा इति ये प्रसिद्धाः, तेभ्य [4]उत्पन्नस्य प्रत्ययस्य लुग् भवति । [5]शमः प्रमाणमस्य [6]शमः । दिष्टिः[7] । वितस्तिः ।

[५५९] द्विगोर्नित्यम् । (म. भा. २. ३७८)

द्वौ [8]शमौ प्रमाणमस्य द्वि[9]शमः । त्रिशमः । द्विवितस्तिः । नित्यग्रहणं [10]किम् ? संशये श्राविणं (वा. ५६३) वक्ष्यति, तत्रापि द्विगोर्लुगेव यथा स्यात् । द्वे दिष्टी स्यातां [11]वा न वा द्विदिष्टिः ।

[५६०] डट् स्तोमे वक्तव्यः । (म. भा. २. ३७८)

[12]पञ्चदशः स्तोमः । [13]पञ्चदशी रात्रिः । टित्त्वाद् ङीप् ।

[५६१] शन्शतोर्डिनिर्वक्तव्यः[14] । (म. भा. २. ३७८)

'पञ्चदशिनोऽर्धमासाः, त्रिंशिनो मासाः' (तै. ७. ५. २०. १) ।

[५६२] विंशतेश्चेति वक्तव्यम् । (म. भा. २. ३७८)

'विंशिनो[15]ऽङ्गिरसः' (गो. ब्रा. १. १. ८. १) ।

[५६३] प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये मात्रच् वक्तव्यः । (म. भा. २. ३७८)

[16]शममात्रम् । [17]दिष्टिमात्रम् । प्रस्थमात्रम् । कुडवमात्रम् । [18]पञ्चमात्रम् । दशमात्रा गावः ।

[५६४] वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ [19]बहुलम् । (म. भा. २. ३७८)

तावदेव तावद्द्वयसम्, तावन्मात्रम् । एतावद्द्वयसम्, [20]एतावन्मात्रम् । यावद्द्वयसम्, यावन्मात्रम् ॥

1. प्रमाणे क. 2. जानुद्वयसी नदी इत्यधिकम् ग. 3. प्रमाणशब्दा नास्ति फ. 4. उत्पन्नस्य नास्ति क. 5–6. समः क. ड, शमादिष्टिः ह. 7. पुष्टिः मुष्टिः इत्यधिकम् क. 8. समौ क. 9. समः क. 10. किमर्थम् ह. 11. वा न वा नास्ति क. 12. सप्तदशः क. ह. 13. सप्तदशी रात्रिः ह, सप्तदशी ड. 14. छन्दसि इत्यधिकम् क. 15. अङ्किरसः क. 16. संयममात्रम् क, सममात्रम् ड. 17. मुष्टिमात्रम् क, वितस्तिमात्रम् फ. 18. पञ्चमात्राः दशमात्राः क. ड, पञ्चमात्राः गावः ह. 19. प्रत्ययौ भवतः क. 20. एतावन्मात्रम् नास्ति फ.

## पुरुषहस्तिभ्यामण् च । (३८/१८३९)

तदस्य [1]इत्येव, प्रमाणे इति च । पुरुषहस्तिभ्यां[2] प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्याम् अस्य इति षष्ठ्यर्थे अण् प्रत्ययो भवति, चकाराद् द्वयसजादयः[3] । पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदघ्नम्, पुरुषमात्रम् । हास्तिनम्, हस्तिद्वयसम्, हस्तिदघ्नम्, हस्तिमात्रम्[4] । द्विगोर्नित्यं लुक् । द्विपुरुषम् [5]उदकम् । त्रिपुरुषमुदकम् । द्विहस्ति । त्रिहस्ति । द्विपुरुषी[6] । त्रिपुरुषी[7] । द्विहस्तिनी । त्रिहस्तिनी ॥

## यत्तदेतेभ्यः परिमाणे वतुप् । (३९/१८४०)

तदस्य [8]इत्येव । यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः अस्य इति षष्ठ्यर्थे वतुप् प्रत्ययो भवति । [9]यत् परिमाणम् अस्य [10]यावान् । तावान् । एतावान् । प्रमाणग्रहणे[11]ऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात् ।

[12]डावतावर्थवैशेष्यान् निर्देशः पृथगुच्यते ।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः (म. भा. २.३७८) ॥

[५६५] वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम् । (म. भा. २.३७९)

'न त्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते' (ऋ. ७.३२.२३) । 'त्वावतः पुरूवसो' (ऋ. ८.४६.१) 'यज्ञं [13]विप्रस्य मावतः' (ऋ. १.१४२.२) । [14]त्वत्सदृशस्य, मत्सदृशस्य इत्यर्थः ॥

## किमिदम्भ्यां वो घः । (४०/१८४१)

किमिदम्भ्यामुत्तरस्य वतुपो वकारस्य [15]घकारादेशो भवति । कियान् । [16]इयान् । एतदेव चादेश[17]विधानं ज्ञापकं [18]किमिदम्भ्यां वतुप्प्रत्ययो भवति इति । [19]अथ वा योगविभागेन वतुपं विधाय पश्चाद् वो घो [20]विधीयते (म. भा. २.३७९) ॥

## किमः सङ्ख्यापरिमाणे डति च । (४१/१८४२)

[21]सङ्ख्यायाः परिमाणं सङ्ख्यापरिच्छेदः इत्यर्थः । [22]सङ्ख्यापरिमाणे वर्तमानात् किमः प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे डतिः प्रत्ययो भवति, चकाराद् वतुप्[23] । तस्य च [24]वकारस्य [25]घादेशो भवति । पृच्छ्यमानत्वात्

---

1. इत्यनुवर्तते ह. 2. शब्दाभ्याम् इत्यधिकम् ड. ह. 3. च इत्यधिकम् ह. 4. त्रिहस्तिमात्रम् इत्यधिकम् ह. 5. उदकम् नास्ति फ. 6–7. गङ्गा इत्यधिकम् क. ड. फ. ह. 8. अनुवर्तते ह. 9. तत् फ, 10. तावत् एतावत् ह. 11. इति इत्यधिकम् फ. ह. 12. तावतो क. 13. विश्वस्य क. 14. त्वत्सदृशः मत्सदृशः क. 15. यकारादेशः क. 16. इयान् नास्ति क. 17. वचनम् क. 18. किमिदम्भ्यां – विधीयते नास्ति क. 19. अथ वा नास्ति ड. फ. ह. 20. विधीयेते फ. 21. तदस्य तदेव इत्यधिकम् ड, संख्याप्रमाणं फ, संख्यापरिमाणं ह. 22. संख्यापरिच्छेदे क. 23. च इत्यधिकम् ड. फ. 24. वकारस्य नास्ति फ. 25. घत्वादेशः ड. फ, घकारः ह.

[1]परिच्छेदोपाधिकायां सङ्ख्यायां वर्तमानात् किमः प्रत्ययो विज्ञायते। का सङ्ख्या [2]परिमाणमेषां ब्राह्मणानाम् कति ब्राह्मणाः, [3]कियन्तो ब्राह्मणाः। अथ वा सङ्ख्यैव परिमाणात्मिका [4]परिच्छेदस्वभावा गृह्यते, का सङ्ख्या [5]परिमाणं येषाम् इति। ननु च सङ्ख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं [6]परिमाणेन [7]विशेष्यते? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति। क्षेपे हि परिच्छेदो नास्ति, केयमेषां सङ्ख्या दशानाम् इति॥

## सङ्ख्याया अवयवे तयप्। (४२/१८४३)

तदस्य इत्येव। सङ्ख्याया अवयवे वर्तमानायाः अस्य इति षष्ठ्यर्थे तयप् प्रत्ययो भवति। [8]अवयवावयविनः सम्बन्धिनः इति सामर्थ्यात् अवयवी प्रत्ययार्थो [9]विज्ञायते। पञ्च अवयवा यस्य [10]पञ्चतयम्। दशतयम्। चतुष्टयम्। चतुष्टयी[11]॥

## द्वित्रिभ्यां तयस्यायज्वा। (४३/१८४४)

पूर्वेण[12] विहितस्य तयस्य द्वित्रिभ्यां [13]परस्य वा अयजादेशो भवति। द्वौ अवयवौ अस्य द्वयम्, द्वितयम्। त्रयम्, त्रितयम्। [14]तयग्रहणं स्थानिनिर्देशार्थम्। अन्यथा प्रत्ययान्तरमयज् विज्ञायेत। [15]तत्र को दोषः? त्रयी गतिः इति [16]तयनिबन्धन ईकारो (४.१.१५/४७०) न स्यात्, 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' (१. १. ३३/२२६) [17]इत्येष विधिर्न स्यात्। द्वये। [18]द्वयाः। चकारः स्वरार्थः॥

## उभादुदात्तो नित्यम्। (४४/१८४५)

उभशब्दात् परस्य तयपो नित्यमयजादेशो भवति, स चोदात्तः। [19]वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते। [20]उभशब्दो यदि लौकिकी सङ्ख्या ततः पूर्वेणैव विहितस्य तयप [21]आदेशविधानार्थं वचनम्। अथ न सङ्ख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते। उभयो [22]मणिः। 'उभयेऽस्य देवमनुष्याः' (तै.सं. १. ६. ८. १)॥

## तदस्मिन्नधिकमिति दशान्ताड्डः। (४५/१८४६)

तत् इति प्रथमासमर्थात् अस्मिन् इति सप्तम्यर्थे दशान्तात् प्रातिपदिकात् डः प्रत्ययो भवति यत् तत्प्रथमासमर्थमधिकं चेत् तद् भवति। इतिकरणस्ततश्चेद् विवक्षा। एकादश अधिका अस्मिन् शते एकादशं शतम्। एकादशं सहस्रम्। द्वादशं शतम्। द्वादशं सहस्रम्[23]। दशान्तात् इति किम्? पञ्च अधिका अस्मिन्[24] शते। अन्तग्रहणं किम्? दशाधिका अस्मिन् शते।

---

1. परिच्छेदात्मिकायाम् क. 2. परिमाणं नास्ति क.ड.ह. 3. कति गुणिनः फ. 4. परिच्छेदात्मिका क.फ, परिच्छेदिका ह. 5. परिमाणं नास्ति क. 6. परिमाणग्रहणेन ब.क.ड.फ.ह. 7. विशिष्यते क. 8. अवयवा अवयविनमपेक्ष्य भवन्ति इति सामर्थ्यात् अवयवी प्रत्ययार्थो विज्ञायते ह, अवयवा अवयवसम्बन्धिनः इति सामर्थ्यात् क. 9. अपि इत्यधिकम् फ. 10. पञ्चतयः दशतयः फ. 11. रज्जुः इत्यधिकम् ब.क.ड. 12. यो विहितः तयप् तस्य ग. फ. 13. उत्तरस्य ग. 14. तयब्ग्रहणम् क. 15. तत्र – द्वयाः नास्ति फ. 16. तयब्निबन्धनः ह. 17. इति चैष ह. ड. 18. द्वयाः नास्ति फ. 19. वचन – विधीयते नास्ति ह. 20. तच्छब्दो लौकिकी क. 21. आदेशार्थम् फ, आदेशविधानवचनम् क. 22. देवमणिः क. 23. त्रयोदशं शतम् इत्यधिकम् फ.ह, त्रयोदशम् इत्यधिकम् क.ड. 24 शब्दे ह.

प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते (म.भा. २. ३८०)। एकादश कार्षापणा अधिका अस्मिन् [1]कार्षापणशते एकादशं कार्षापणशतम् इति। इह [2]तु न भवति, एकादश माषा अधिका अस्मिन् कार्षापणशते इति (म. भा. २. ३८०)। शतसहस्रयोश्चेष्यते (म. भा. २. ३८०)। इह न भवति, एकादशाधिका अस्यां त्रिंशति इति। इतिकरणो विवक्षार्थ [3]इत्युक्तं, तत इदं सर्वं लभ्यते। कथम् एकादशं शतसहस्रम् इति? शतानां सहस्रं, सहस्राणां वा शतम् इति शतसहस्रम् इत्युच्यते। तत्र शतसहस्रयोः इत्येव सिद्धम्।

अधिके समानजाताविष्टं शतसहस्रयोः।
यस्य सङ्ख्या तदाधिक्ये डः कर्तव्यो [4]मतो मम ॥ (म. भा. २.३८०)

## शदन्तविंशतेश्च। (४८/१८४७)

तदस्मिन्नधिकम् इत्यनुवर्तते, डः इति च। शदन्तात् प्रातिपदिकात् [5]विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकम् इत्येतस्मिन् [6]विषये। त्रिंशदधिका अस्मिन् शते त्रिंशं शतम्[7]। शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात् स तदादेरधिकार्थम्। एकत्रिंशं शतम्। एकचत्वारिंशं शतम्।

[५६६] सङ्ख्याग्रहणं च कर्तव्यम्। (म. भा. २. ३८१)

इह मा भूत्, गोत्रिंशदधिका अस्मिन् गोशते इति।

[५६७] विंशतेश्च। (म. भा. २. ३८१)

[8]विंशं शतम्।

[५६८] तदन्तादपीति वक्तव्यम्। (म. भा. २. ३८१)

एकविंशं शतम्। सङ्ख्याग्रहणं च कर्तव्यम्। इह मा भूत्, गोविंशतिरधिकाऽस्मिन् गोशते इति ॥

## सङ्ख्याया गुणस्य निमाने मयट्। (४९/१८४८)

तदस्य इत्यनुवर्तते, तदस्य सञ्जातम् (५. २. ३६/१८३७) इत्यतः। तद् इति प्रथमासमर्थात् सङ्ख्या–वाचिनः प्रातिपदिकात् अस्य इति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत् तत् प्रथमासमर्थं गुणस्य चेन् निमाने[9] वर्तते। गुणो भागः। निमानं मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद् भाग एव [10]विज्ञायते। यवानां द्वौ भागौ निमानमस्य उदश्विद्भागस्य द्विमयमुदश्विद् यवानाम्। [11]त्रिमयम्। चतुर्मयम्। भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे। तेन सामान्याधिकरण्यं भवति द्विमयमुदश्वित् इति। गुणस्य [12]इति चैकत्वं विवक्षितं, तेनेह न भवति, द्वौ [13]भागौ यवानां त्रय उदश्वितः (म. भा. २. ३८२) इति।

---

1. कार्षापणशते नास्ति फ. 2. तु नास्ति क. 3. इति फ. 4. मते क. 5. विंशतिशब्दात् क. ड. फ. ह. 6. अर्थे क. फ. 7. चत्वारिंशं शतम् विंशं शतम् इत्यधिकम् ड. ह. 8. विंशतिः अधिका यस्मिन् इति इत्यधिकम् क. 9. तद् इत्यधिकम् क. 10. विज्ञाप्यते ह. 11. त्रिद्विमयम् क. 12. इति नास्ति क. 13. भागौ नास्ति क.

[५६९] [1]भूयसश्च वाचिकायाः सङ्ख्यायाः प्रत्यय इष्यते। (म. भा. २.३८१)

इह[2] न भवति, एको भागो निमानमस्य इति। भूयसः इति च प्रत्ययार्थात् प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्। बहुत्वमतन्त्रं, तेन द्विशब्दादपि भवति। गुणशब्दः समानावयववचनः। तेनेह न भवति, द्वौ [3]भागौ यवानामध्यर्धं [4]उदश्वितः (म. भा. २.३८२) इति।

[५७०] निमेये चापि दृश्यते। (म. भा. २.३८२)

निमेये वर्तमानायाः सङ्ख्याया निमाने प्रत्ययो दृश्यते। [5]उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा [6]उदश्वितः। चतुर्मयाः (म. भा. २.३८२)।

गुणस्य इति किम्? द्वौ व्रीहियवौ निमानमस्योदश्वितः। निमाने इति किम्? द्वौ गुणौ क्षीरस्य एकस्तैलस्य, द्विगुणं पच्यते तैलं क्षीरेण [7]इत्यत्र मा भूत्॥

## तस्य पूरणे डट्। (४८/१८४९)

तस्य इति षष्ठीसमर्थात् सङ्ख्यावाचिनः प्रातिपदिकात् पूरणे इत्यस्मिन्नर्थे डट् प्रत्ययो भवति। पूर्यतेऽनेन इति पूरणम्। येन सङ्ख्या [8]सङ्ख्यानं पूर्यते [9]सम्पद्यते, स तस्याः[10] पूरणः। एकादशानां पूरणः एकादशः। [11]त्रयोदशः। [12]यस्मिन्नुपसञ्जाते[13]ऽन्या सङ्ख्या सम्पद्यते स प्रत्ययार्थः। इह न भवति, पञ्चानां [14]मुष्टिकानां पूरणो घटः इति॥

## नान्तादसङ्ख्यादेर्मट्। (४९/१८५०)

डट् इति [15]वर्तते। [16]नकारान्तात् सङ्ख्यावाचिनः प्रातिपदिकात् असंख्यादेः परस्य डटो मडागमो भवति। नान्तात् इति पञ्चमी डट [17]आगमसम्बन्धे षष्ठीं प्रकल्पयति। पञ्चानां पूरणः पञ्चमः। सप्तमः[18]। नान्तात् इति किम्? विंशतेः पूरणः [19]विंशः। असङ्ख्यादेः इति किम्? एकादशानां पूरणः एकादशः॥

## थट् च छन्दसि। (५०/३४०७)

नान्तादसङ्ख्यादेः [20]परस्य डटः छन्दसि विषये थडागमो भवति। चकारात् पक्षे मडपि [21]भवति। 'पर्णमयानि पञ्चथानि भवन्ति' (काठ. सं. ८.२)। 'पञ्चथः' (काठ. सं. ९.३)। 'सप्तथः (काठ.सं. ३७.११)। [22]मट् – 'पञ्चममिन्द्रिय[22]स्यापाक्रामत्' (काठ. सं. ९.१२)॥

---

1. भूयश्च वार्चिकायाः क. ड, भूयश्च ह. 2. तु इत्यधिकम् ह. 3. भागौ नास्ति क. 4. भागोऽस्त्यस्याम् इत्यधिकम् फ, चापि इत्यधिकम् ड. 5. उदश्वित्यौ क. 6. उदश्वितः नास्ति क. ह. 7. अत्र नास्ति क. 8. सङ्ख्यानं नास्ति ह, सङ्ख्यायाः सङ्ख्यानं क. 9. सम्पाद्यते क. 10. संख्यायाः इत्यधिकम् ड. 11. द्वादशः क. ड. फ, त्रयोदशः नास्ति ब. क. ड. 12. यस्मिन्नुपजाते ब. क. ड. ह. 13. सा ब. क. ड. ह. 14. मुष्टीनाम् क. 15. अनुवर्तते क. ह. 16. नकारान्तात् नास्ति क. ह. 17. आगमसम्बन्धेन क. 18. अष्टमः इत्यधिकम् क. ह. 19. विंशकः ह. 20. प्रातिपदिकात् इत्यधिकम् फ. 21. अभ्यनुज्ञायते ब. क. ड. फ. ह. 22. मटः खल्वपि क. 23. °स्योपाक्रमेत् क, इन्द्रियमस्य मुद्रितः पाठः

## षट्कतिकतिपयचतुरां थुक्। (५१/१८५१)

डट् इति अनुवर्तते, [1]तदिह सप्तम्या विपरिणम्यते । षट् कति कतिपय चतुर् इत्येषां डटि पुरतस्थुगागमो भवति । कतिपयशब्दो न [2]सङ्ख्या । तस्यास्मादेव ज्ञापकात् डट् प्रत्ययो [3]विज्ञायते । षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः[4] । चतुर्थः ।

[५७१] चतुरश्छयतावाद्यक्षरलोपश्च । (म. भा. २. ३८४)

चतुर्णां पूरणः तुरीयः, तुर्यः ।।

## बहुपूगगणसङ्घस्य तिथुक् । (५२/१८५२)

डट् इत्येव । [5]बहु पूग गण सङ्घ इत्येतेषां डटि परतः तिथुगागमो भवति । पूगसङ्घशब्दयोर[6]सङ्ख्यात्वादिदमेव ज्ञापकं डटो भावस्य । बहूनां पूरणः बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ।।

## वतोरिथुक् । (५३/१८५३)

डट् इत्येव । वतोर्डटि परतः इथुगागमो भवति । वत्वन्तस्य संख्यात्वात् [7]पूर्वेण[8] डड् विहितः, तस्मिन्न[9]यमागमः विधीयते । यावतां पूरणः यावतिथः । तावतिथः । [10]एतावतिथः ।।

## द्वेस्तीयः । (५४/१८५४)

द्विशब्दात् तीयः प्रत्ययो भवति तस्य पूरणे [11]इत्यस्मिन् [12]विषये । डटोऽपवादः । द्वयोः पूरणः द्वितीयः ।।

## त्रेः सम्प्रसारणं च । (५५/१८५५)

त्रिशब्दात् तीयः प्रत्ययः भवति तस्य पूरणे [13]इत्येतद्विषये । डटोऽपवादः । तत्संनियोगेन[14] त्रेः संप्रसारणं च भवति । त्रयाणां पूरणः तृतीयः । 'हलः' (६. ४. २/२५५९) इति संप्रसारणस्य दीर्घत्वं न भवति । अणः इति तत्रानुवर्तते [15]ढ्रलोपे (६. ३. १११/१७४) इत्यतः । पूर्वेण च णकारेणा[16]ण्ग्रहणम् ।।

---

1. इह नास्ति ब. क. फ. ग. 2. संख्यावाची ड. 3. भवति इति ड, विधीयते ह, भवति इति ज्ञायते क. 4. कतिथी कतिपयथी इत्यधिकम् ग. 5. बहुपूगगुणसंख्यानाम् क. 6. असंख्यावाचित्वात् ब. ड. फ. ग. 7. पूरणे ड. 8. एव इत्यधिकम् ब. 9. इथुगागमः ब. क. फ. 10. एतावतिथः नास्ति ह. 11. इत्येतस्मिन् ब. 12. अर्थे क. 13. इत्येतस्मिन् क. 14. च इत्यधिकम् ड. 15. ढ्रलोपे नास्ति फ. 16. अण्प्रत्याहारग्रहणम् क.

## विंशत्यादिभ्यस्तमडन्यतरस्याम्। (५६/१८५६)

विंशत्यादिभ्यः परस्य [1]डटः तमडागमो भवत्यन्यतरस्याम्। [2]पूरणाधिकारात् डट्प्रत्यय आगमी विज्ञायते। विंशतेः पूरणः विंशतितमः, विंशः। एकविंशतितमः, एकविंशः। [3]त्रिविंशतितमः, त्रिविंशः। त्रिंशत्तमः, त्रिंशः। [4]एकत्रिंशत्तमः, एकत्रिंशः।

विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसंनिविष्टाः। तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् (व्या.प. ८९)। एवं च सति 'षष्ट्यादेश्चासङ्ख्यादेः' (५.२.५८/१८५८) इति पर्युदासो[5]युज्यत [6]एव ॥

## नित्यं शतादिमासार्धमाससंवत्सराच्च। (५७/१८५७)

शतादयः संख्याशब्दाः लौकिका गृह्यन्ते। शतादिभ्यः [7]मासार्धमाससंवत्सरशब्देभ्यश्च परस्य डटो नित्यं तमडागमः भवति। मासादयः संख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकात् डट् प्रत्ययो [8]विज्ञायते। शतस्य पूरणः शततमः। सहस्रतमः। लक्षतमः। मासस्य पूरणः मासतमो दिवसः। अर्धमासतमः। संवत्सरतमः। 'षष्ट्यादेश्चासङ्ख्यादेः' (५.२.५८/१८५८) इति [9]वक्ष्यमाणेन सिद्धे शतादिग्रहणं सङ्ख्याद्यर्थम्। एकशततमः। द्विशततमः[10] ॥

## षष्ट्यादेश्चासङ्ख्यादेः। (५८/१८५८)

षष्ट्यादेः सङ्ख्याशब्दादसङ्ख्यादेः परस्य डटो नित्यं तमडागमः भवति। विंशत्यादिभ्यः (५. २. ५६/१८५६) इति[11] विकल्पेन प्राप्ते नित्यार्थम्। [12]षष्टितमः। सप्ततितमः[13]। असंख्यादेः इति [14]किम्? एकषष्टः, एकषष्टितमः। [15]एकसप्ततः, एकसप्ततितमः ॥

## मतौ छः सूक्तसाम्नोः (५९/१८५९)

मतौ इति मत्वर्थ उच्यते। प्रातिपदिकान् मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि चाभिधेये। मत्वर्थग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषणं, प्रत्ययार्थः इति [16]सर्वमाक्षिप्यते। अच्छावाकशब्दो[17]ऽस्मिन्निति अच्छावाकीयं सूक्तम्। [18]मित्रावरुणीयम्। यज्ञायज्ञीयं साम। [19]वारवन्तीयम्। [20]अनुकरणशब्दाश्च स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति। तेनानेकपदादपि सिद्धम्[21]। अस्यवामीयम्। [22]कयाशुभीयम् ॥

---

1. डट् इत्यस्यान्तरस्याम् तमडागमो भवति ड. 2. पूरणाधिकारडट्प्रत्ययः क. 3. त्रिविंशतितमः नास्ति ड. 4. एकत्रिंशत्तमः नास्ति फ. 5. अपि इत्यधिकम् ड. 6. एव नास्ति क. 7. मासार्धमाससंवत्सरेभ्यः क.फ. 8. भवति क. 9. अनेन इत्यधिकम् फ, एवं इत्यधिकम् क. 10. एकसहस्रतमः इति इत्यधिकम् ब. क. ड.फ. 11. नित्ये प्राप्तेऽनित्यार्थं वचनम्। संख्यादेस्तु विकल्प एव क.ड.ह. 12. षष्टेः पूरणः इत्यधिकम् क.ड.ह. 13. अशीतितमः नवतितमः इत्यधिकम् ह, अशीतितमः इत्यधिकम् क. 14. किमर्थः फ. 15. एकसप्तः ह. 16. सर्वमाक्षिप्यते नास्ति फ. 17. अस्मिन्नस्ति ब.क.ड.ह. 18. मैत्रावरुणीयम् क. 19. वारतन्तुवीयम् क, वारभक्तीयम् ह. 20. अलुक्शब्दाः क. 21. भवति इत्यधिकम् क. 22. तददारीयम् ड.

## अध्यायानुवाकयोर्लुक् । (६०/१८६०)

मतौ इत्येव । मत्वर्थे उत्पन्नस्य छस्य लुक् भवति अध्यायानुवाकयोः अभिधेययोः । [1]केन पुनरध्यायानुवाकयोः [2]प्रत्ययः ? इदमेव [3]लुग्वचनं ज्ञापकं तद्विधानस्य । विकल्पेन [4]लुगयमिष्यते । गर्दभाण्डशब्दो[5]ऽस्मिन्निति गर्दभाण्डोऽध्यायः, अनुवाको वा गर्दभाण्डीयः (म. भा. २.३८६) । दीर्घजीवितः, दीर्घजीवितीयः । [6]पलितस्तम्भः, पलितस्तम्भीयः ॥

## विमुक्तादिभ्योऽण् । (६१/१८६१)

मतौ इत्येव, अध्यायानुवाकयोः इति च । विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति मत्वर्थे अध्यायानुवाकयोरभिधेययोः । विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः अनुवाको वा । दैवासुरः ।

विमुक्त । देवासुर । वसुमत् । सत्वत् । उपसत्[7] । दशार्हपयस् । हविर्द्धान । मित्री । सोमापूषन् । अग्नाविष्णु । वृत्रहति । इडा । रक्षोसुर । सदसत् । परिषादक् । वसु । मरुत्वत् । [8]पत्नीवत् । महीयल[9] । दशार्ह । वयस् । पतत्रि । सोम । महित्री । हेतु । विमुक्तादिः ॥

## गोषदादिभ्यो वुन् । (६२/१८६२)

मतौ इत्येव, अध्यायानुवाकयोः इति च । गोषदादिभ्यः प्रातिपदिकेभ्यः वुन् प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोः[10] । गोषदशब्दोऽस्मिन्निति गोषदकोऽध्यायोऽनुवाको वा । इषेत्वकः । [11]मातरिश्वकः ।

गोषद । इषेत्वा । मातरिश्वन् । देवस्यत्वा । देवीरापः । कृष्णोस्याखरेष्टः । [12]दैवींधियम् । रक्षोहण । अञ्जन । [13]प्रभूत । प्रतूर्त । कृशानु । गोषदादिः ॥

## तत्र कुशलः पथः । (६३/१८६३)

वुन् इत्येव । तत्र इति सप्तमीसमर्थात् पथिन्शब्दात् कुशलः इत्यस्मिन्नर्थे वुन् प्रत्ययो भवति । पथि कुशलः पथकः ॥

## आकर्षादिभ्यः कन् । (६४/१८६४)

[14]तत्र इत्येव, कुशलः इति च । आकर्षादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः कुशलः इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति । [15]आकर्षे कुशलः आकर्षकः । त्सरुकः ।

आकर्ष । त्सरु । पिपासा । [16]पिचण्ड । अशनि । अश्मन् । [17]विचय । चय । जय । [18]आचय । अय । नय । निपाद[19] । [20]गद्गद । दीप । ह्रद । ह्राद । ह्लाद । शकुनि । आकर्षादिः ॥

---

1. केन–लुगयमिष्यते नास्ति फ. 2. विहितयोः लुक् ब. 3. प्रत्ययस्य इत्यधिकम् क. 4. च इत्यधिकम् इ. ह. 5. अस्मिन्नध्याये ह, अस्ति इत्यधिकम् क. 6. पलितस्कम्भः पलितस्कम्भीयः क, स्कम्भः स्कम्भीयः ड. 7. सुपर्ण इत्यधिकम् ड. 8. पत्नीवस्तु क. 9. दशार्ण इत्यधिकम् ड. 10. अभिधेययोः इत्यधिकम् क. 11. मतेः इष्वन् इत्यधिकम् क. 12. देवीत्वियम् क. 13. प्रभूत नास्ति क. 14. तत्रैव क. 15. आकर्षके क. 16. पिचिण्ड क. 17. निचय क. 18. आचय नास्ति क. 19. निवाद निच्छाद इत्यधिकम् ह. 20. गद्गद दीप ह्रद नास्ति ह.

## धनहिरण्यात् कामे । (६५/१८६५)

तत्र इत्येव, कन् इति च । धनहिरण्यशब्दाभ्यां तत्र इति सप्तमीसमर्थाभ्यां कामे इत्यस्मिन्नर्थे कन् प्रत्ययो भवति । कामः इच्छा, अभिलाषः । धने कामः धनको [1]देवदत्तस्य । हिरण्यको देवदत्तस्य ।।

## स्वाङ्गेभ्यः प्रसिते । (६६/१८६६)

तत्र इत्येव, कन् इति च । [2]स्वाङ्गवाचिभ्यः शब्देभ्यः तत्र इति सप्तमीसमर्थेभ्यः प्रसिते इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति । प्रसितः प्रसक्तस्तत्परः इत्यर्थः । केशेषु प्रसितः केशकः[3] । केशादिरचनायां प्रसक्त [4]एवमुच्यते । बहुवचनं [5]स्वाङ्गसमुदायशब्दादपि यथा स्यात् । दन्तौष्ठकः । [6]केशनखकः ।।

## उदराट् ठगाद्यूने । (६७/१८६७)

तत्र इत्येव, प्रसिते इति च । उदरशब्दात् सप्तमीसमर्थात् प्रसिते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । आद्यूने इति [7]प्रत्ययार्थविशेषणम् । उदरेऽविजिगीषुर्भण्यते । यो बुभुक्षयाऽत्यन्तं पीडयते स एवमुच्यते । उदरे [8]प्रसितः औदरिकः आद्यूनः[9] । आद्यूने इति किम् ? उदरकः (५.२.६६/१८६६) ।।

## सस्येन परिजातः । (६८/१८६८)

कन् प्रत्ययः इत्येव स्वर्यते, [10]न ठक् । निर्देशादेव [11]तृतीयासमर्थविभक्तिः । सस्यशब्दात् तृतीयासमर्थात् [12]परिजातः इत्यस्मिन्नर्थे कन् प्रत्ययो भवति । सस्यशब्दोऽयं [13]गुणवाची । परिः सर्वतो भावे [14]वर्तते । यो गुणैः सम्बद्धो[15] जायते, यस्य किञ्चिदपि वैगुण्यं नास्ति, तस्येदमभिधानम् । सस्येन परिजातः सस्यकः शालिः[16] । सस्यकः [17]साधुः । सस्यको मणिः । [18]आकरशुद्ध इत्यर्थः ।।

## अंशं हारी । (६९/१८६९)

अंशशब्दान् निर्देशादेव द्वितीयासमर्थाद् हारी इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति । अंशं हारी अंशको दायादः । अंशकः पुत्रः । हारी इति आवश्यके णिनिः (३.३.१७०/३३११) । तत्र [19]षष्ठीप्रतिषेधात् कर्मणि द्वितीया एव भवति ।।

---

1. महादेवस्य ड, धनकामः देवदत्तस्य ह. 2. स्वाङ्गविषयवाचिभ्यः ड. 3. दन्तकः नखकः इत्यधिकम् ब, दन्तकः इत्यधिकम् क. ह. 4. एवम् नास्ति ब. क. 5. स्वाङ्गसमुदायादपि क. ह. 6. दन्तनखकः ह. 7. क्रियाविशेषणम् क. 8. प्रसक्तः ड. 9. निरुद्योगः इत्यर्थः इत्यधिकम् क. 10. न ठक् नास्ति क. 11. तृतीया नास्ति क. 12. सपरिजातः क. 13. धान्यवाची ड. 14. वर्तते नास्ति. 15. सर्वतो इत्यधिकम् ह. 16. सस्यको वत्सः इत्यधिकम् ब.क.ड. 17. सीधुः क, नास्ति ह. 18. आकरजःड. 19. अकेनोर्भविष्य-दाधमर्ण्ययोः इति निषेधात् इत्यधिकम् ड.

## तन्त्रादचिरापहृते । (७०/१८७०)

तन्त्रशब्दात् निर्देशादेव पञ्चमीसमर्थात् अचिरापहृते इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति । अचिरापहृतः स्तोककालापहृतः इत्यर्थः । [1]तन्त्रादचिरापहृतः तन्त्रकः पटः । तन्त्रकः प्रावारः । प्रत्यग्रो [2]नव उच्यते ॥

## ब्राह्मणकोष्णिके सञ्ज्ञायाम् । (७१/१८७१)

ब्राह्मणक उष्णिक इत्येतौ शब्दौ निपात्येते कन् प्रत्ययान्तौ सञ्ज्ञायाम् विषये । ब्राह्मणको देशः । [3]उष्णिका यवागूः । यत्रायुधजीविनो ब्राह्मणाः सन्ति [4]तत्र ब्राह्मणकः इति [5]सञ्ज्ञा । अल्पान्ना यवागूः उष्णिका [6]इत्युच्यते ॥

## शीतोष्णाभ्यां कारिणि । (७२/१८७२)

शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन् प्रत्ययो भवति । क्रियाविशेषणाद् द्वितीयासमर्थादयं प्रत्ययः । [7]शीतं करोति शीतकः[8] । अलसो, जड [9]उच्यते । उष्णं करोति उष्णकः । [10]शीघ्रकारी, दक्ष उच्यते[11] ॥

## अधिकम् । (७३/१८७३)

अधिकम् इति निपात्यते । [12]अध्यारूढस्य उत्तरपदलोपः कन् च प्रत्ययः (म.भा.२.३८७) । अधिको द्रोणः खार्याम् । अधिका खारी द्रोणेन । कर्तरि कर्मणि च अध्यारूढशब्दः ॥

## अनुकाभिकाभीकः कमिता । (७४/१८७४)

अनुक अभिक [13]अभीक इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते कमिता [14]इत्येतस्मिन्नर्थे । अभेः पक्षे दीर्घत्वं [15]च निपात्यते । अनुकामयते अनुकः । [16]अभिकः । अभीकः ॥

## पार्श्वेनान्विच्छति । (७५/१८७५)

पार्श्वशब्दात् तृतीयासमर्थाद् अन्विच्छति इत्यस्मिन्नर्थे कन् प्रत्ययो भवति । अनृजुरुपायः [17]पार्श्वम्, तेनार्थानन्विच्छति पार्श्वकः । [18]मायावी, कौसृतिकः, [19]जालिकः उच्यते ॥

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । (७६/१८७६)

अन्विच्छति इत्येव । अयःशूलदण्डाजिनाभ्यां [20]तृतीयासमर्थाभ्याम् अन्विच्छति इत्येतस्मिन्नर्थे[21] ठक्-ठञौ [22]प्रत्ययौ भवतः । तीक्ष्णः उपायः [23]अयःशूलम् उच्यते । तेन अन्विच्छति [24]आयःशूलिकः (म.भा.२.३८८) साहसिकः इत्यर्थः । दम्भो दण्डाजिनम्, तेनान्विच्छति [25]दाण्डाजिनिकः । दाम्भिकः इत्यर्थः ॥

---

1. तन्तुवायार्था शलाका तन्त्रम्, तस्मात् इत्यधिकम् क. 2. नवकः ड, अतिनवकः क. 3. उष्णिया क, अग्नेरचिरोपहृता उष्णिका ह. 4. तस्य ड. ह. 5. इयम् इत्यधिकम् क. 6. इति नास्ति क. फ. 7. शीतं मन्दकरणम् ग. 8. मन्दः इत्यधिकम् ग. 9. इत्यर्थः क. ड. ह. 10. तीव्रतादक्षः ह, पटुः ग. 11. इत्यर्थः इत्यधिकम् क. ड. ह. 12. अध्यारूढशब्दस्य ब. 13. अभीकः नास्ति फ. 14. इत्यर्थे क. 15. वा फ, च नास्ति ड. 16. अभिकामयते इत्यधिकम् क. 17. पार्श्वः ग. फ. 18. मायावी नास्ति ब. क. ड. इ. 19. जालिमकः ग. 20. शब्दाभ्याम् इत्यधिकम् फ, अयःशूलदण्डाजिनशब्दात् क. 21. यथासङ्ख्यम् इत्यधिकम् ब. क. ड. 22. प्रत्ययौ नास्ति क. 23. अयःशूलः फ. 24. अयःशूलिकः राभसिकः ह. 25. दाण्डाजिनकः क.फ.

## तावतिथं ग्रहणमिति लुग् वा । (७७/१८७७)

तावतां पूरणं तावतिथम् । गृह्यतेऽनेन इति ग्रहणम् । प्रकृतिविशेषणं चैतत् । [1]पूरणप्रत्ययान्तात् प्रातिपदिकात् ग्रहणोपाधिकात् स्वार्थे कन् प्रत्ययो भवति । [2]पूरणस्य प्रत्ययस्य वा [3]लुक् । द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम् । त्रिकम्, तृतीयकम् । चतुष्कम्, चतुर्थकम् ।

[५७२] तावतिथेन गृह्णातीति कन् वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् । (म.भा. २.३८८)

षष्ठेन रूपेण [4]ग्रन्थं गृह्णाति षट्को देवदत्तः । पञ्चकः । चतुष्कः[5] । इतिकरणो विवक्षार्थः । तेन ग्रन्थविषयमेव ग्रहणम् विज्ञायते, नान्यविषयम् ॥

## स एषां ग्रामणीः । (७८/१८७८)

स इति प्रथमासमर्थात्[6] एषामिति षष्ठ्यर्थे कन् प्रत्ययो भवति, यत् [7]तत् प्रथमासमर्थं ग्रामणीश्चेत् [8]स भवति । ग्रामणीः[9] प्रधानः, मुख्यः [10]इत्यर्थः । देवदत्तः ग्रामणीः एषाम् देवदत्तकाः । [11]ब्रह्मदत्तकाः । ग्रामणीः इति किम् ? देवदत्तः शत्रुरेषाम् ॥

## शृङ्खलमस्य बन्धनं करभे । (७९/१८७९)

शृङ्खलशब्दात् प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं बन्धनं चेद् तद् भवति, यत् तद् अस्य इति निर्दिष्टं करभश्चेत् स भवति । शृङ्खलं बन्धनमस्य करभस्य शृङ्खलकः[12] । उष्ट्राणां बालकाः करभाः । तेषां[13] काष्ठमयं [14]पाशकं पादे व्यतिषज्यते,[15]तदुच्यते शृङ्खलमिति । यद्यपि रज्ज्वादिकमपि तत्रास्ति तथापि शृङ्खलमस्यास्वतन्त्रीकरणे भवति साधनमिति [16]बन्धनमित्युच्यते ॥

## उत्क उन्मनाः । (८०/१८८०)

उत्कः इति निपात्यते, उन्मनाश्चेद् स भवति । उद्गतं मनो यस्य स उन्मनाः । उच्छब्दात् [17]ससाधन-क्रियावचनात् तद्वति कन् प्रत्ययो [18]निपात्यते । उत्को देवदत्तः । उत्कः प्रवासी । उत्सुकः[19] इत्यर्थः ॥

## कालप्रयोजनाद्रोगे । (८१/१८८१)

[20]अर्थलभ्या समर्थविभक्तिः । कालात् प्रयोजनाच्च यथायोगं समर्थविभक्तियुक्तात् रोगेऽभिधेये कन् प्रत्ययो भवति । कालो दिवसादिः । प्रयोजनं कारणं रोगस्य फलं[21] वा । द्वितीयेऽह्नि भवो द्वितीयको ज्वरः[22] । चतुर्थकः[23] । प्रयोजनात् – विषपुष्पैर्जनितो विषपुष्पको ज्वरः । काशपुष्पकः । उष्णं कार्यमस्य उष्णको ज्वरः । [24]शीतको ज्वरः । उत्तरसूत्रात् इह सञ्ज्ञाग्रहणम् [25]अपकृष्यते । तेनायं प्रकारनियमः सर्वो लभ्यते[26] ॥

---

1. पूरणान्तात् ग, पूरणग्रहणोपाधिकान्तात् ह. 2. पूरणप्रत्ययस्य ब.क.ड.फ.ह. 3. लुक् नास्ति क.फ. ह. 4. ग्रन्थम् नास्ति क. 5. नवकः इत्यधिकम् ड. 6. प्रातिपदिकात् इत्यधिकम् क. 7. तत् नास्ति क. 8. स नास्ति ह. 9. इति इत्यधिकम् फ, प्रधानं ड. 10. उच्यते फ. 11. यज्ञदत्तकाः ग. 12. करभः इत्यधिकम् ब.क.ड.ह. 13. यत् इत्यधिकम् ड.फ. 14. पाशरूपं ब.फ, पाशं ह. 15. यत् इत्यधिकम् ड. 16. बन्ध-मुच्यते क. 17. संसाधन° ड. 18. विज्ञायते फ, भवति ग. 19. उत्कण्ठित इत्यधिकम् ग. 20. अर्थाभ्यां ग. 21. च प्रयोजनम् इति जयादित्यः इत्यधिकम्, वा नास्ति क. 22. तृतीयकः इत्यधिकम् ब.क.ड.फ. 23. पञ्चकः इत्यधिकम् ह. 24. शीतं कार्यमस्य इत्यधिकम् ग. 25. अनुकृष्यते फ, अनुवर्तिष्यति ग. 26. रोगे इति किम् ? द्वितीयो दिवसोऽस्य द्वितीयकः इत्यधिकम् ड.

## तदस्मिन्नन्नं प्राये सञ्ज्ञायाम् । (८२/१८८२)

तत् इति प्रथमासमर्थादस्मिन् इति सप्तम्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं अन्नं चेत् प्रायविषयं तद् भवति । प्रायो बाहुल्यम् । सञ्ज्ञाग्रहणं तदन्तोपाधिः । [1]गुडापूपाः प्रायेणान्नम् अस्यां पौर्णमास्यां [2]गुडापूपिका । [3]तिलापूपिका पौर्णमासी ।

[५७३] वटकेभ्य इनिर्वक्तव्यः । (म. भा. २. ३८८)

वटकिनी [4]पौर्णमासी ॥

## कुल्माषादञ् । (८३/१८८३)

कुल्माषशब्दात् अञ् प्रत्ययो भवति, 'तदस्मिन्नन्नं प्राये सञ्ज्ञायाम्' (५.२.८२/१८८२) इत्येतस्मिन्नर्थे[5] । ञकारो [6]वृद्धिस्वरार्थः । [7]कुल्माषाः प्रायेण अन्नमस्याम् [8]कौल्माषी पौर्णमासी ॥

## श्रोत्रियंश्छन्दोऽधीते । (८४/१८८४)

श्रोत्रियन् इति निपात्यते छन्दोऽधीते इत्येतस्मिन्नर्थे[9] । नकारः स्वरार्थः । श्रोत्रियो ब्राह्मणः । 'श्रोत्रियंश्छन्दोऽधीते' इति वाक्यार्थे पदवचनम् (म. भा. २. ३८९), छन्दसो वा श्रोत्रभावः, तदधीते इति घन् च प्रत्ययः (म. भा. २. ३८९) । कथं छन्दोऽधीते छान्दसः[10] ? वाग्रहणमनुवर्तते 'तावतिथं ग्रहणमिति लुग्वा' (५. २. ७७/१८७७) इत्यतः ॥

## श्राद्धमनेन भुक्तमिनिठनौ । (८५/१८८५)

श्राद्धम् इति प्रकृतिः । अनेन इति प्रत्ययार्थः । भुक्तम् इति प्रकृतिविशेषणम् । श्राद्धशब्दाद् भुक्तोपाधिकाद् [11]अनेन इत्यस्मिन्नर्थे [13]इनिठनौ प्रत्ययौ भवतः । श्राद्धशब्दः कर्मनामधेयं तत्साधनद्रव्ये [13]वर्तित्वा प्रत्ययमुत्पादयति । श्राद्धं भुक्तमनेन श्राद्धी, श्राद्धिकः । इनिठनोः समानकालग्रहणं कर्तव्यम् (म. भा. २. ३८९), अद्य भुक्ते श्राद्धे श्वः श्राद्धिकः इति मा भूत् ॥

## पूर्वादिनिः । (८६/१८८६)

अनेन इति प्रत्ययार्थः कर्ताऽनुवर्तते । न च क्रियामन्तरेण कर्ता सम्भवति इति यां काञ्चित् क्रियाम[14]ध्याहृत्य प्रत्ययो [15]विधेयः । [16]पूर्वात् अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं गतमनेन पीतं भुक्तं वा पूर्वी, पूर्विणौ, पूर्विणः ॥

---

1. इडापूर्वाः ह. 2, इडापूपिकाः ह. 3. कृसरिका त्रिपुटिका क. ड, तृत्सरिका त्रिपुटिका ह. 4. पौर्णमासी नास्ति ब. 5. विषये फ. ह. 6. वृद्ध्यर्थः फ, स्वरार्थः वृद्ध्यर्थश्च क. ह. 7. कुल्मासाः फ. 8. पौर्णमास्याम् इत्याधिकम् फ, कौल्मासी फ. ह. 9. विषये ह. 10. ब्राह्मणः इत्यधिकम् फ. 11. प्रथमासमर्थात् इत्यधिकम् ब. फ, तृतीयासमर्थेन इत्यधिकम् क. 12. इनिठञौ क. 13. वर्तित्वात् ह. 14. अध्यास्य क. 15. अभिधेयः ह. 16. पूर्वशब्दात् ब. क. ड. फ. ह.

## सपूर्वाच्च । (८७/१८८७)

[1]विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः । सपूर्वात् प्रातिपदिकात् पूर्वशब्दान्तात् अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं कृतमनेन[2] कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । सुप् सुपा (२. १.४/६४९) इति समासं कृत्वा तद्धित [3]उत्पाद्यते । [4]योगद्वयेन चानेन 'पूर्वादिनिः' (५. २. ८६/१८८६), 'सपूर्वाच्च' (५. २. ८७/१८८७) इति परिभाषाद्वयं [5]ज्ञाप्यते, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शा. प.६५), 'ग्रहणवता प्रातिपदिकेन तदन्तविधि[6]र्नास्ति' (व्या. प.८९) इति ॥

## इष्टादिभ्यश्च । (८८/१८८८)

[7]अनेन इत्येव । [8]इष्टादिभ्यः प्रातिपदिकेभ्यः अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । इष्टमनेन इष्टी यज्ञे । पूर्ती श्राद्धे । 'क्तस्येन्विषयस्य कर्मणि' (वा. १३३) इति सप्तम्युपसङ्ख्यायते ।

इष्ट । पूर्त । [9]उपसादित । निगदित । [10]परिवादित । निकथित । [11]परिकथित । [12]सङ्कलित । निपठित । सङ्कल्पित । अनर्चित । विकलित । संरक्षित । निपतित । पठित । परिकलित । अर्चित[13] । परिरक्षित । पूजित । परिगणित । उपगणित । अवकीर्ण । परित । आयुक्त[14] । आम्नात । श्रुत । अधीत । आसेवित । [15]अपवारित । अवकल्पित । निराकृत । उपकृत । उपाकृत । अनुयुक्त । उपनत । [16]अनुगुणित । [17]अनुपठित । व्याकुलित । निगृहीत । इष्टादिः ॥

## छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि । (८९/१८८९)

परिपन्थिन् परिपरिन् इत्येतौ [18]शब्दौ छन्दसि विषये निपात्येते, पर्यवस्थातरि वाच्ये । पर्यवस्थाता प्रतिपक्षः, [19]सपत्न उच्यते । 'मा त्वा परिपन्थिनो विदन् मा त्वा परिपरिणो विदन्' (वा.सं. ४. ३४) ॥

## अनुपद्यन्वेष्टा । (९०/१८९०)

अनुपदी इति निपात्यते अन्वेष्टा चेत् [20]स भवति । पदस्य [21]पश्चादनुपदम् । अनुपदी गवाम् । अनुपदी उष्ट्राणाम् ॥

## साक्षाद् द्रष्टरि सञ्ज्ञायाम् । (९१/१८९१)

साक्षाच्छब्दोऽव्ययम् । तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये । सञ्ज्ञाग्रहणमभिधेयनियमार्थम् । साक्षाद् द्रष्टा साक्षी । साक्षिणौ । साक्षिणः । सञ्ज्ञाग्रहणाद् [22]उपद्रष्टा एव उच्यते, न दाता [23]ग्रहीता वा ॥

---

1. अनेन इत्येव इत्यधिकम् ड. 2. इति इत्यधिकम् क. 3. क्रियते क. 4. योगविभागेन फ. 5. ज्ञायते क. 6 न भवति व. क. फ. 7. अनेन इत्येव नास्ति क. 8. इष्ट इत्येवमादिभ्यः फ. 9. उपासादित क, उपसाहित फ. 10. परिवादित नास्ति क. 11. परिकलित क. 12. सङ्कुचित ह. 13. गणित इत्यधिकम् क, गुणित इत्यधिकम् ह. 14. गृहीत इत्यधिकम् ह. 15. अवधारित क. फ. 16. अनुगणित क. 17. परिविहित फ. 18. शब्दौ नास्ति फ. 19. सम्पन्नः बा. शा, सम्पन्नप्रतिपक्षः प्रा. भा. 20. स नास्ति फ. 21. पश्चात् नास्ति व. क. ड. ह. 22. अनुद्रष्टा क. ह. 23. निग्रहीता फ, प्रतिग्रहीता ह.

## क्षेत्रियच् परक्षेत्रे चिकित्स्यः । (९२/१८९२)

क्षेत्रियच् इति निपात्यते परक्षेत्रे चिकित्स्यः इत्येतस्मिन्[1] वाक्यार्थे पदवचनम् । परक्षेत्राद्[2] तत्र इति [3]सप्तमीसमर्थात् चिकित्स्यः इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते । परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः । क्षेत्रियं कुष्ठम् । परक्षेत्रं जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः । असाध्यः प्रत्याख्येयो व्याधिरुच्यते । नामृतस्य निवर्तते इत्यर्थः । अथ वा क्षेत्रियं विषम् यत् परक्षेत्रे परशरीरे संक्रमय्य चिकित्सते । अथ वा क्षेत्रियाणि तृणानि [4]यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि [5]नाशयितव्यानि । अथ वा क्षेत्रियः पारदारिकः । परदाराः परक्षेत्रं तत्र चिकित्स्यः निग्रहीतव्यः । सर्वं चैतत् प्रमाणम् ॥

## इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । (९३/१८९३)

इन्द्रियम् इत्यन्तोदात्तं शब्दरूपं निपात्यते । रूढिरेषा चक्षुरादीनां [6]करणानाम् । तथा च व्युत्पत्तेरनियमं दर्शयति । इन्द्रशब्दात् षष्ठीसमर्थात् लिङ्गम् इत्येतस्मिन्नर्थे घच्प्रत्ययो[7] भवति । इन्द्रस्य लिङ्गम् इन्द्रियम् । इन्द्र आत्मा, स चक्षुरादिना करणेनानुमीयते । नाकर्तृकं करणमस्ति[8] । इन्द्रेण दृष्टम्[9] । तृतीयासमर्थात् प्रत्ययः । आत्मना दृष्टम् इत्यर्थः । इन्द्रेण सृष्टम्,[10] आत्मना सृष्टम्[11] । तत्कृतेन शुभाशुभकर्मणोत्पन्नम् इति कृत्वा । इन्द्रेण जुष्टम्,[12] आत्मना[13]जुष्टं, सेवितम् । [14]तद्द्वारेण विज्ञानोत्पादनात् । इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय । इतिकरणः प्रकारार्थः । सति सम्भवे व्युत्पत्तिरन्यथाऽपि कर्तव्या, [15]रूढेरनियमात् इति । वाशब्दः [16]प्रत्येकमभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति ॥

## तदस्यास्त्यस्मिन्निति मतुप् । (९४/१८९४)

तत् इति प्रथमा समर्थविभक्तिः । अस्य अस्मिन् इति [17]प्रत्ययार्थौ । अस्ति इति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे[18]वा मतुप् प्रत्ययो भवति, यत् तत् प्रथमासमर्थमस्ति चेत् तद् भवति । [19]अस्त्यर्थोपाधिकं चेद् तद्भवति इत्यर्थः । इतिकरणस्ततश्चेद् विवक्षा । गावोऽस्य सन्ति गोमान् देवदत्तः[20] । वृक्षाः अस्मिन् सन्ति वृक्षवान् पर्वतः । यवमान् । प्लक्षवान् । इतिकरणाद् [21]विषयनियमः ।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ (म.भा. २.३९३)

---

1. विषये इत्यधिकम् फ. 2. शब्दात् इत्यधिकम् फ. 3. सप्तमीसमर्थात् नास्ति फ. 4. यानि नास्ति फ. 5. विनाशयितव्यानि ड. फ. 6. करणानाम् नास्ति फ. 7. निपात्यते फ, वर्तते ड. 8. इति इत्यधिकम् फ. 9. इन्द्रदृष्टम् इत्यधिकम् ड. ह. 10. इन्द्रसृष्टम् इत्यधिकम् ड. 11. इत्यर्थः इत्यधिकम् फ. 12. इन्द्रजुष्टम् इत्यधिकम् ब.फ. 13. जुष्टं नास्ति फ. 14. तेन द्वारेण ड. 15. रूढिष्वनियमात् ब. ड, रूढिषु नियमात् क.. 16. प्रत्येकम् नास्ति ग. 17. प्रत्ययार्थे ह. 18. च फ, नास्ति ह. 19. अस्त्युपाधिकम् क. 20. यवमान् देवदत्तः इत्यधिकम् ह. 21. विषयनिमयार्थः ड.फ.

भूम्नि तावत् – [1]गोमान् । निन्दायाम् – कुष्ठी । [2]ककुदावर्तिनी । प्रशंसायाम् – रूपवती कन्या । नित्ययोगे – क्षीरिणो वृक्षाः । अतिशायने – उदरिणी कन्या । संसर्गे – दण्डी । छत्री । अस्तिविवक्षायाम् – अस्तिमान् ।

[५७४] गुणवचनेभ्यो मतुपो लुग्वक्तव्यः । (म. भा. २. ३९४)
शुक्लो गुणोऽस्यास्ति शुक्लः [3]पटः । कृष्णः । [4]श्वेतः ॥

## रसादिभ्यश्च । (९८/१८९८)

रसादिभ्यः प्रातिपदिकेभ्यः मतुप् प्रत्ययो भवति तदस्यास्त्यस्मिन् इत्येतस्मिन् [5]विषये । रसवान् । रूपवान् । किमर्थमिदमुच्यते, [6]न पूर्वसूत्रेणैव मतुप् सिद्धः ? रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् (म. भा. २. ३९४), अन्ये मत्वर्थीया मा भूवन्निति । कथं [7]रूपिणी कन्या, रूपिको दारकः ? प्रायिकमेतद्वचनम् । इतिकरणो विवक्षार्थोऽनुवर्तते । अथ वा 'गुणात्' (ग. सू. १२१) इति अत्र पठ्यते । [8]तेन ये रसनेन्द्रियादिग्राह्या गुणाः, [9]तेषामत्र पाठः । इह मा भूत्, रूपिणी,[10] रूपिकः[11] इति । [12]शोभायोगो गम्यते । रसिको नटः (म. भा. २. ३९४) [13]इत्यत्र भावयोगः ।

रस । [14]रूप । गन्ध । स्पर्श । शब्द । स्नेह । 'गुणात्' (ग. सू. १२१) । 'एकाचः'[15] (ग. सू. १२२) । गुणग्रहणं रसादीनां विशेषणम् ॥

## प्राणिस्थादातो लजन्यतरस्याम् । (९६/१९०३)

प्राणिस्थवाचिनः [16]शब्दात् आकारान्तात् लच् प्रत्ययो भवत्यन्यतरस्यां [17]मत्वर्थे । चूडालः, चूडावान् । कर्णिकालः, कर्णिकावान् । प्राणिस्थात् इति किम् ? शिखावान् प्रदीपः । [18]आत् इति किम् ? हस्तवान् । पादवान् ।

[५७५] प्राण्यङ्गादिति [19]वक्तव्यम् । (म. भा. २. ३९५)

[20]इह मा भूत्, चिकीर्षाऽस्यास्ति चिकीर्षावान्, जिहीर्षाऽस्यास्ति जिहीर्षावान् । प्रत्ययस्वरेणैवा[21]न्तोदात्तत्वे सिद्धे, चकारश्चूडालोऽस्ति [22]इत्यत्र 'स्वरितो वानुदात्ते पदादौ' (८. २. ६/३६५९) इति स्वरितबाधनार्थः ॥

## सिध्मादिभ्यश्च । (९७/१९०४)

लजन्यतरस्याम् इति वर्तते । सिध्मादिभ्यः प्रातिपदिकेभ्यो लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे । सिध्मलः, सिध्मवान् । गडुलः, गडुमान् । अन्यतरस्यांग्रहणेन मतुप्[23]समुच्चीयते, न तु प्रत्ययो विकल्प्यते । तस्मात् अकारान्तेभ्यः इनिठनौ प्रत्ययौ न भवतः ।

सिध्म । गडु । मणि । नाभि । [24]जीव । निष्पाव । पांसु । सक्तु । हनु । मांस । परशु । 'पार्ष्णिधमन्योर्दीर्घश्च' (ग. सू. १२३) । [25]पार्ष्णीलः । धमनीलः । पर्ण । उदक । प्रज्ञा । मण्ड । पार्श्व । गण्ड । ग्रन्थि[26] ।

---

1. गावोऽस्य सन्ति इत्यधिकम् ह. 2. काकतालुकी ड. फ. 3. पटः नास्ति फ, रक्तः इत्यधिकम् ह. 4. पीतः ग. 5. अर्थे क. 6. न नास्ति क. फ. 7. रूपवती ड. फ. ग. 8. तत्र क. 9. तेषामेवायं ब. क. फ. ह. 10. कन्या इत्यधिकम् क. 11. पुरुषः इत्यधिकम् क. 12. शोभायोग्यता ग, दर्शनीयता क. ड. 13. अत्र नास्ति ब. फ. ह 14. वर्ण इत्यधिकम् ब. क. फ. ड. 15. स्ववान् इत्यधिकम् ड. फ. 16. प्रातिपदिकात् फ. 17. सम्बन्धे क. 18. आतः ड. फ. 19. वाच्यम् क. 20. तेन इत्यधिकम् क. 21. अन्तोदात्तत्वे नास्ति क. फ. 22. अत्र नास्ति फ. 23. सम्बन्धीयते क. 24. बीज क. ड, विजय फ. 25. पार्ष्णिकम् क. ह. 26. इति सिध्मादिः इत्यधिकम् फ. ह.

'वातदन्तबलललाटानामूङ् च' (ग. सू. १२४)। वातूलः। दन्तूलः। बलूलः। ललाटूलः। 'जटाघटाकलाः क्षेपे' (ग. सू. १२५)। जटालः। घटालः। कलालः। सक्थि। कर्ण। स्नेह। शीत। श्याम। पिङ्ग। पित्त। शुष्क। पृथु। मृदु। मञ्जु। पत्र। चटु। कपि। कण्डु। सञ्ज्ञा। '[1]क्षुद्रजन्तूपतापाच्चेष्यते' (ग. सू. १२६)। क्षुद्रजन्तु – यूकालः। मक्षिकालः। उपताप – विर्चाचकालः। विपादिकालः। मूर्च्छालः। सिध्मादिः॥

## वत्सांसाभ्यां कामबले। (९८/१९०५)

वत्सांसशब्दाभ्यां लच् प्रत्ययो भवति[2] यथासङ्ख्यं कामवति बलवति चार्थे[3]। वत्सलः। अंसलः। वृत्तिविषये वत्सांसशब्दौ स्वभावात् कामबलयोर्वर्तमानौ तद्वति प्रत्ययमुत्पादयतः। नह्यत्र वत्सार्थः [4]अंसार्थो वा विद्यते। वत्सलः इति स्नेहवानुच्यते, वत्सलः स्वामी, वत्सलः पिता इति। अंसलः इति च उपचितमांसो बलवानुच्यते। न चायमर्थो मतुपि सम्भवति इति नित्यं लजेव [5]भवति। अन्यत्र [6]अंसवती गौः, [7]अंसवान् दुर्बलः॥

## फेनादिलच्च। (९९/१९०६)

फेनशब्दात् इलच् प्रत्ययो भवति मत्वर्थे। चकारात् लच् च। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रैवानुवर्तते। फेनिलः, फेनलः, फेनवान्॥

## लोमादिपामादिपिच्छादिभ्यः शनेलचः। (१००/१९०७)

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासङ्ख्यं श न इलच् इत्येते प्रत्यया भवन्ति मत्वर्थे, मतुप् च। लोमादिभ्यः शो भवति – लोमशः, लोमवान्[8]। पामादिभ्यो नो भवति – पामनः, पामवान्। पिच्छादिभ्यः [9]इलच् भवति – पिच्छिलः, पिच्छवान्। उरसिलः, उरस्वान्।

लोमन्। रोमन्। वल्गु। [10]बभ्रु। हरि। कपि। शुनि। तरु। लोमादिः।

पामन्। वामन्। [11]हेमन्। श्लेष्मन्। [12]कद्रु। बलि। श्रेष्ठ। पलल। सामन्। 'अङ्गात् कल्याणे' (ग. सू. १२७)[13]। 'शाकीपलालीदद्र्वां ह्रस्वत्वं च' (ग. सू. १२८)। 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' (ग. सू. १२९)। 'लक्ष्म्या अच्च' (ग. सू. १३०)। पामादिः।

पिच्छ। उरस्। ध्रुवका। क्षुवका। 'जटाघटाकलाः क्षेपे' (ग. सू. १३१)। वर्ण। उदक। पङ्क। प्रज्ञा। पिच्छादिः॥

## प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः। (१०१/१९०८)

प्रज्ञा श्रद्धा अर्चा वृत्ति इत्येतेभ्यः णः प्रत्ययो भवति मतुबर्थे। मतुप् सर्वत्र [14]समुच्चीयते। प्राज्ञः, प्रज्ञावान्। श्राद्धः, श्रद्धावान्। आर्चः, अर्चावान्। वार्त्तः, [15]वृत्तिमान्[16]॥

---

1. क्षुत्रजन्तूपतापयोश्चेष्यते प. मं. 2. मत्वर्थे इत्यधिकम् क. ड. ह. 3. अभिधेये इत्यधिकम् क. फ. ह, वाच्ये इत्यधिकम् ड. 4. अंसार्थो वा नास्ति फ. 5. वर्तते क. 6. वत्सवती ब. ड. 7. उदाहरणमिदं नास्ति फ. 8. रोमशः रोमवान् इत्यधिकम् ड. 9. इल फ. 10. बभ्लु फ. 11. वेमन् ड. फ. 12. कद्रु नास्ति ब. 13. अन्या अङ्गवती इत्यधिकम् ड. 14. सम्बन्धीयत एव क. 15. वृत्तिवान् क. 16. स्त्रियां प्राज्ञा, श्राद्धा इत्यधिकम् फ.

## तपःसहस्राभ्यां विनीनी । (१०२/१९०९)

तपःसहस्रशब्दाभ्यां [1]विनि इनि इत्येतौ प्रत्ययौ भवतः मत्वर्थे । प्रत्ययार्थयोस्तु यथासङ्ख्यं [2]सर्वत्रैवास्मिन् प्रकरणे नेष्यते । तपोऽस्य अस्मिन् वा विद्यते तपस्वी । सहस्री । असन्तत्वाद[3]दन्तत्वाच्च सिद्धे [4]प्रत्यये (५.२.१२१, ११५/१९२८, १९२२) पुनर्वचनम् [5]अणा (५.२.१०३/१९१०) [6]वक्ष्यमाणेन बाधा मा भूत् इति । सहस्रात् तु ठन् अपि बाध्यते ॥

## अण् च । (१०३/१९१०)

तपःसहस्राभ्याम्[7] अण् च प्रत्ययो भवति[8] । तापसः । साहस्रः । योगविभाग उत्तरार्थः, यथासङ्ख्यार्थश्च ।

[५७६] अणप्रकरणे ज्योत्स्नादिभ्य उपसङ्ख्यानम्[9] । (म.भा. २.३९७)

ज्योत्स्ना विद्यतेऽस्मिन् पक्षे ज्योत्स्नः पक्षः । तामिस्रः । [10]कौण्डलः । कौतपः । वैसर्पः । वैपादिकः ॥

## सिकताशर्कराभ्यां च । (१०४/१९११)

सिकताशर्कराभ्याम् अण् प्रत्ययो भवति मत्वर्थे । [11]सैकतो घटः । शार्करं मधु । अदेशे इहोदाहरणम् । देशे [12]तु लुबिलचौ भविष्यतः ॥

## देशे लुबिलचौ च । (१०५/१९१२)

सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ भवतः । चकाराद् अण् च, मतुप् च । कस्य पुनरयं लुप् ? मतुबादीनामन्यतमस्य, विशेषाभावात् । सिकता अस्मिन्[13]विद्यते सिकता देशः, सिकतिलः, सैकतः, सिकतावान् । [14]एवं शर्करा देशः, शर्करिलः, शार्करः, शर्करावान् । देशे इति किम् ? सैकतो घटः । [15]शार्करं मधु[16] ॥

## दन्त उन्नत उरच् । (१०६/१९१३)

[1]उन्नत इति प्रकृतिविशेषणम् । दन्तशब्दाद् उन्नतोपाधिकाद् उरच् प्रत्ययो भवति मत्वर्थे । दन्ताः उन्नता अस्य सन्ति दन्तुरः । उन्नत इति किम् ? दन्तवान् ॥

## ऊषसुषिमुष्कमधो रः । (१०७/१९१४)

ऊष सुषि मुष्क मधु इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे । ऊषरं क्षेत्रम् । सुषिरं काष्ठम् । मुष्करः

---

1. यथासंख्यम् इत्यधिकम् ब. ड. 2. सर्वस्मिन्नेवाच्प्रकरणे क. 3. अदन्तत्वात् च नास्ति फ. 4. एव क. 5. अणो बाधा मा भूत् क. 6. वक्ष्यमाणेन नास्ति ब. क. फ. 7. शब्दाभ्याम् इत्यधिकम् फ. 8. मत्वर्थे इत्यधिकम् ब.क.ड. 9. कर्तव्यम् इत्यधिकम् क. 10. कौमण्डलः क.फ, कौण्डिनः ग. 11. सैकतम् शार्करं मधु ह. 12. तु नास्ति क. 13. देशे इत्यधिकम् फ. 14. एवं नास्ति क. 15. शार्करं मधु नास्ति क. 16. इति इत्यधिकम् क. 17. उन्नतग्रहणम् क.फ.

पशुः। मधुरो गुडः। इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति। इह न भवति, ऊषोऽस्मिन् घटे विद्यते, मधु अस्मिन् घटे विद्यते (म.भा. २.३९७) इति।

[५७७] रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्। (म.भा. २.३९७)

खमस्यास्ति कण्ठविवरं महत् खरः। मुखमस्यास्तीति सर्वस्मिन् वक्तव्ये मुखरः। कुञ्जावस्य स्तः कुञ्जरः। हस्तिहनू कुञ्जशब्देनोच्येते।

[५७८] नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्। (म.भा. २.३९७)

नगरम्। पांसुरम्। पाण्डुरम्।

[५७९] कच्छ्वा ह्रस्वत्वं च।

[1]कच्छुरम्॥

## द्युद्रुभ्यां मः। (१०८/१९१७)

द्युद्रुशब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे। द्युमः। द्रुमः। रूढिशब्दौ एतौ। रूढिषु मतुप् पुनर्न [2]विकल्प्यते॥

## केशाद्वोऽन्यतरस्याम्। (१०९/१९१८)

केशशब्दाद् वः प्रत्ययो भवति मत्वर्थे अन्यतरस्याम्। ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्तत एव? मतुप्समुच्चायार्थं तदित्युक्तम्। अनेन तु इनिठनौ प्राप्येते। ततश्चातूरूप्यं [3]भवति, केशवः, केशी, केशिकः, केशवान् इति।

[५८०] वप्रकरणेऽन्येभ्योऽपि दृश्यते इति वक्तव्यम्। (म.भा. २.३९७)

मणिवः। हिरण्यवः। [4]कुररावः। [5]कुमारावः। [6]कुञ्जावः। [7]राजीवम्। इष्टकावः। बिम्बावः।

[५८१] अर्णसो [8]लोपश्च।

अर्णवः।

[५८२] छन्दसीवनिपौ च वक्तव्यौ। (म.भा. २.३९७)

'रथीरभून् मुद्गलानी गविष्ठौ' (ऋ. १०.१०२.२)। '[9]सुमङ्गलीरियं वधूः' (ऋ. १०.८५.३३)। वनिप् – 'मघवानमीमहे' (ऋ. १०.१६७.२)। वकारमतुपौ च। उद्वा च उद्वती च।

[५८३] मेधारथाभ्यामिरन्निरचौ वक्तव्यौ। (म.भा. २.३९७)

'मेधिरः' (ऋ. १.३१.२)। रथिरः (ऋ. ३.१.१७)॥

---

1. कच्छुरः ड. 2. विद्यते ह. 3. भवति नास्ति फ. 4. कूवरम् इत्यधिकम् क. 5. कुमारावः नास्ति फ. 6. कुञ्जारवः ह. 7. राजीवः ड. 8. सलोपश्च ह. 9. उदाहरणमिदं नास्ति फ.

गाण्ड्यजगात् सञ्ज्ञायाम् । (११०/१९१७)

गाण्डी अजग इत्येताभ्यां वः प्रत्ययो भवति सञ्ज्ञायां विषये मत्वर्थे । गाण्डीवं धनुः । [1]अजगवं धनुः । ह्रस्वादपि भवति[2] गाण्डिवं धनुः इति । तत्र तुल्या हि संहिता दीर्घह्रस्वयोः । उभयथा च सूत्रं प्रणीतम् ॥

काण्डाण्डादीरन्नीरचौ । (१११/१९१८)

काण्ड अण्ड [3]इत्येताभ्यां यथासङ्ख्यम् ईरन्नीरचौ[4] प्रत्ययौ भवतो मत्वर्थे । काण्डीरः । [5]अण्डीरः ॥

रजःकृष्यासुतिपरिषदो वलच् । (११२/१९१९)

रजःप्रभृतिभ्यः प्रातिपदिकेभ्यः वलच् प्रत्ययो भवति [6]मत्वर्थे । रजस्वला[7]स्त्री । कृषीवलः कुटुम्बी । [8]आसुतीवलः शौण्डिकः । परिषद्वलो राजा । 'वले' (६.३.११८/१०४०) इति दीर्घत्वम् । इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते । तेनेह न भवति, रजोऽस्मिन् ग्रामे विद्यते इति ।

[५८४] वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । (म. भा. २. ३९७)

भ्रातृवलः[9] । पुत्रवलः । [10]उत्साहवलः[11] ॥

दन्तशिखात् सञ्ज्ञायाम् । (११३/१९२०)

दन्तशिखाशब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे सञ्ज्ञायां विषये । दन्तावलः [12]सैन्यः । दन्तावलो गजः । शिखावलं नगरम्[13] । [14]शिखावला स्थूणा ॥

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । (११४/१९२१)

[15]ज्योत्स्नादयः शब्दाः निपात्यन्ते मत्वर्थे सञ्ज्ञायां विषये । ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते – ज्योत्स्ना चन्द्रप्रभा । तमस उपधाया [16]इकारो रश्च – तमिस्रा [17]रात्रिः । स्त्रीत्वमतन्त्रम् । अन्यत्रापि दृश्यते – तमिस्रं नभः । शृङ्गाद् इनच् प्रत्ययो निपात्यते – शृङ्गिणः । ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ[18] – ऊर्जस्वी, ऊर्जस्वलः । [19]गोर्मिनि प्रत्ययो निपात्यते – गोमी । मलशब्दाद् इनजीमसचौ प्रत्ययौ निपात्येते – मलिनः, मलीमसः ॥

अत इनिठनौ । (११५/१९२२)

अकारान्तात् प्रातिपदिकात् इनिठनौ प्रत्ययौ भवतः[20] । दण्डी, दण्डिकः । छत्री, छत्रिकः । अन्यतरस्याम् इत्यधिकारान् मतुब् अपि भवति । दण्डवान् । छत्रवान्[21] । तपरकरणं किम् ? [22]श्रद्धावान्[23] ।

एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ (म.भा.२.३९८) ।

[24]एकाक्षरात् तावत् – स्ववान् । खवान् । कृतः – [25]कारकवान् । जातेः – व्याघ्रवान् । सिंहवान् ।

1. अजकवं धनुः ह. 2. इति वक्तव्यम् इत्यधिकम् क. 3. इति शब्दाभ्यां ड. फ, शब्दाभ्यां क. 4. इत्येतौ इत्यधिकम् क. 5. आण्डीरः ड, काण्डवान् आण्डवान् इत्यधिकम् ड. 6. मत्वर्थे नास्ति फ. 7. कान्या ड. 8. आसतीवलः क. 9. मातृवलः इत्यधिकम् ग. 10. उत्सङ्गवलः म. भा. ब. ड, उत्साहावलः ड. 11. मदावलः इत्यधिकम् क. 12. धौम्यः ड, नास्ति क. 13. शिखावलो मयूरः इत्यधिकम् क. 14. उदाहरणमिदं नास्ति क. 15. मतुब् इति वर्तते इत्यधिकम् ब. फ. ह. 16. इत्वं रश्च प्रत्ययः ब. क. फ. 17. रात्रिः नास्ति फ. 18. भवतः इत्यधिकम् फ. 19. गोशब्दात् क. ग. 20. मत्वर्थे इत्यधिकम् ब. क. ड. 21. इति इत्यधिकम् ड. 22. खट्वावान् ब. क. ड. फ. 23. मालावान् इत्यधिकम् ड. फ. 24. एकाक्षरान्तत्वात् क. 25. हारकवान् ब. ड. फ.

सप्तम्याम् – दण्डा अस्यां सन्ति दण्डवती शाला इति । इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते इत्युक्तम्, तेन क्वचिद् भवत्यपि, [1]कार्यी, हार्यी, तण्डुली, तण्डुलिकः इति ॥

## व्रीह्यादिभ्यश्च । (११६/१९२३)

व्रीह्यादिभ्यः प्रातिपदिकेभ्यः इनिठनौ प्रत्ययौ भवतो मत्वर्थे । मतुब् भवत्येव । व्रीही, व्रीहिकः, व्रीहिमान् । मायी, मायिकः, मायावान् । न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वय[2]मिष्यते । किं तर्हि ?

शिखादिभ्य इनिर्वाच्य [3]इकन् यवखदादिषु (म. भा. २. ३९८) ।

परिशिष्टेभ्य उभयम् । शिखा मेखला सञ्ज्ञा बलाका माला वीणा वडवा [4]अष्टका पताका कर्मन् चर्मन् हंसा इत्येतेभ्य इनिरेवेष्यते । यवखद कुमारी नौ इत्येतेभ्य [5]इकन्नेवेष्यते । परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः । व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते ? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं [6]विज्ञायते । शालयोऽस्य सन्ति शालिनः, शाली, शालिकः, शालिमान् इति । व्रीहिशिखादयः पूर्वं पठिताः ।

यवखद । कुमारी । नौ । 'शीर्षान् नञः' (ग. सू. १३२)–अशीर्षी, अशीर्षिकः ॥

## तुन्दादिभ्य इलच्च । (११७/१९२४)

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे । चकाराद् इनिठनौ मतुप् च । तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । उदरिलः, उदरी, उदरिकः, उदरवान् ।

तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । '[7]स्वाङ्गाद्विवृद्धौ च' (ग. सू. १३३)[8] । तुन्दादिः ॥

## एकगोपूर्वाट्ठञ् नित्यम् । (११८/१९२५)

एकपूर्वाद् गोपूर्वाच्च प्रातिपदिकान् नित्यं ठञ् प्रत्ययो भवति मत्वर्थे । एकशतमस्यास्ति इति [9]ऐकशतिकः । ऐकसहस्रिकः । गोपूर्वात् च – गौशतिकः । [10]गौसहस्रिकः । अत[11] इत्येव, एकविंशतिरस्यास्ति इति न भवति । कथम् ऐकगविकः ? समासान्ते कृते भविष्यति । कथं गौशकटिकः ? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति, ततो भविष्यति । अवश्यं च अतः इत्यनुवर्त्यम्, द्वन्द्वोपतापगर्ह्यात् (५. २. १२८/१९३४) इत्येवमाद्यर्थम् । नित्यग्रहणं मतुपो बाधनार्थम् । कथमेकद्रव्यवत्त्वात् इति ? नैवायं साधुः । एकेन वा द्रव्यवत्त्वादिति समर्थनीयम् ॥

## शतसहस्रान्ताच्च निष्कात् । (११९/१९२६)

शतान्तात् सहस्रान्तात् च प्रातिपदिकात् ठञ् प्रत्ययो भवति मत्वर्थे तौ चेत् शतसहस्रशब्दौ निष्कात् परौ भवतः । निष्कशतमस्यास्ति नैष्कशतिकः । नैष्कसहस्रिकः । सुवर्णनिष्कशतमस्यास्ति इति अनभिधानान्न भवति ॥

---

1. कार्यिकः ब, कार्यं हार्यं क. 2. अपि इत्यधिकम् फ. 3. ठन् ड, यवखलादिभ्यः क. 4. इष्टकाः क. इ. 5. ठन् ड. फ. 6. विधीयते क. 7. स्वाङ्गात् वृद्धौ क. फ, च नास्ति ड. 8. खलकर्णोऽस्यास्ति कर्णिलः इत्यधिकम् क. 9. एकशतिकः एकसहस्रिकः ह. 10. गोसहस्रिकः ह. 11. इति वर्तते ग.

## रूपादाहतप्रशंसयोर्यप् । (१२०/१०२७)

आहतप्रशंसे प्रकृत्युपाधी । आहतप्रशंसा[1]विशिष्टार्थे वर्तमानाद् रूपशब्दात् यप् प्रत्ययो भवति मत्वर्थे । आहतं रूपमस्य रूप्यो दीनारः । रूप्यः [2]केदारः । रूप्यं कार्षापणम् । [3]प्रशस्तं रूपम् अस्यास्ति रूप्यः [4]पुरुषः । [5]निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते । आहतप्रशंसयोः इति किम् ? रूपवान् ।

[५८५] यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । (म. भा. २.३९९)
[6]हिम्याः पर्वताः । [7]गुण्याः ब्राह्मणाः ॥

## अस्मायामेधास्रजो विनिः (१२१/१०२८)

असन्तात् प्रातिपदिकात्, माया मेधा स्रज् इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे । मतुप् सर्वत्र समुच्चीयते एव । असन्तात् तावत् – यशस्वी, तपस्वी, पयस्वी । मायावी । मेधावी[8] । स्रग्वी । मायाशब्दाद् व्रीह्यादिषु पाठात् इनिठनौ अपि भवतः । मायी, मायिकः ॥

## बहुलं छन्दसि । (१२२/३४०८)

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे । '[9]अग्ने तेजस्विन्' (तै. सं. ३.३.११) । न[10] भवति । सूर्यो वर्चस्वान् ।

[५८६] [11]छन्दसि विनिप्रकरणे[12]ऽष्ट्रामेखलाद्वयोभयरुजा[13]हृदयानां दीर्घत्वं चेति वक्तव्यम् । (म. भा. २.३९९)

'[14]अष्ट्रावी' (१०.१०२.८) । 'मेखलावी' (अ. प्रा. ३.४.१) । 'द्वयावी' (अ. प्रा. ३.४.१) 'उभयावी' (ऋ. ५.७.१०) । रुजावी । हृदयावी । द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति ।

[५८७] [15]मर्मणश्चेति वक्तव्यम् । (म. भा. २.३९९)
मर्मावी ।

[५८८] सर्वत्रामयस्योपसङ्ख्यानम् । (म.भा.२.३९९)
छन्दसि भाषायां च । आमयावी (तै. सं. ३.२.३) ।

[५८९] शृङ्गवृन्दाभ्यामारकन् [16]वक्तव्यः ।
शृङ्गारकः । वृन्दारकः (श. ब्रा. १४.६.११.१) ।

[५९०] फलबर्हाभ्यामिनच् वक्तव्यः । (म. भा. २.३९९)
फलिनः । बर्हिणः ।

---

1. विशिष्टेऽर्थे फ. ह. 2. केदारः नास्ति फ. 3. प्रशंसायाम् इत्यधिकम् फ. 4. गौः ब. ड. फ, पशुः ह. 5. निघातनात् ताडनात् ड. 6. उदाहरणमिदं नास्ति क. 7. गुण्यः ब्राह्मणः ड, गुण्याः मुनयः फ, पुण्याः क. 8. मायावान् मेधावान् इत्यधिकम् ड, भवन्ति मायाविषु ये न माथिनः इत्यधिकम् ग. 9. अग्निस्तेजस्वी फ. 10. च इत्यधिकम् क. 11. छन्दोविन्प्रकरणे क. 12. ऊर्ण क. 13. हृदयंगमानां ड. 14. ऊर्णावी क, ऊष्ट्रावी ग. 15. कर्मणश्च क. ह, कर्णावी ह, चर्मणश्च चर्मावी ड, शर्मणः ग. 16. प्रत्ययो भवति ड. ग, भवति फ.

[५९१] हृदयाच्चालुरन्यतरस्याम्। (म. भा. २.३९९)

हृदयालुः, हृदयी, हृदयिकः, [1]हृदयवान्।

[५९२] शीतोष्ण[2]तृप्रेभ्यस्तन्न सहत इत्यालुच् वक्तव्यः। (म. भा. २.३९९)

शीतं न सहते शीतालुः। उष्णालुः। [3]तृप्रालुः।

[५९३] तन्न सहत इति हिमाच्चेलुः। (म.भा.२. ३९९)

हिमं न सहते [4]हिमेलुः।

[५९४] बलादूलच्। (म.भा. २. ३९९)

बलं न सहते बलूलः।

[५९५] वातात् समूहे च। (म.भा.२.३९९)

[५९६[ वातं न सहत इति च।

वातानां समूहः, वातं न सहते इति वा वातूलः।

[५९७] पर्वमरुद्भ्यां तन् वक्तव्यः। (म.भा.२.४००)

'पर्वतः' (मै.सं ४.१२.५)। मरुत्तः।

[५९८] अर्थात्तदभाव इनिर्वक्तव्यः।

अर्थी। [5]तदभावे इत्येव, अर्थवान्। तदेतत् [6]सर्वं बहुलग्रहणेन सम्पद्यते॥

## ऊर्णाया युस्। (१२३/१९२९)

ऊर्णाशब्दाद् युस् प्रत्ययो भवति मत्वर्थे। सकारः पदसञ्ज्ञार्थः। ऊर्णा अस्य विद्यते ऊर्णायुः (वा.सं. १३.५०)। केचिच् छन्दोग्रहणमनुवर्तयन्ति॥

## वाचो ग्मिनिः। (१२४/१९३०)

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे। वाग्मी, वाग्मिनौ, वाग्मिनः॥

## आलजाटचौ बहुभाषिणि। (१२५/१९३१)

वाच्शब्दात् प्रथमासमर्थाद् आलच् आटच् इत्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिणि अभिधेये। ग्मिने[7]रपवादः। वाचालः। वाचाटः।

[५९९] कुत्सित इति वक्तव्यम्। (म.भा.२.४००)

यो हि सम्यग् बहु भाषते वाग्मीत्येव स भवति॥

1. हृदयावी ड. 2. ०तिग्मेभ्यः क. 3. तिग्मालुः क. 4. हिमालुः क. 5. वाक्यमिदं नास्ति फ. 6. सर्वं नास्ति ब. क. फ. ग. 7. अपवादौ क.

## स्वामिन्नैश्वर्ये । (१२६/१७३२)

स्वामिन् इति निपात्यते ऐश्वर्ये गम्यमाने । स्वशब्दाद् ऐश्वर्यवाचिनो मत्वर्थे [1]आमिन् प्रत्ययो निपात्यते । [2]स्वमस्यास्ति इति ऐश्वर्यमस्यास्ति इति स्वामी । [3]स्वामिनौ । स्वामिनः । ऐश्वर्ये इति किम् ? स्ववान् ॥

## अर्शआदिभ्योऽच् (१२७/१०३३)

अर्शस् इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच् प्रत्ययो भवति मत्वर्थे । अर्शांसि अस्य विद्यन्ते अर्शसः । [4]उरसः । आकृतिगणश्चायम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् ।

अर्शस् । उरस् । तुन्द[5] । चतुर । पलित । जटा । घटा । अभ्र । [6]कर्दम । आम । लवण । 'स्वाङ्गाद्धीनात्' (ग.सू. १३४) । 'वर्णात्' (ग.सू. १३५) । अर्शआदिः ॥

## द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः । (१२८/१०३४)

द्वन्द्वः समासः । उपतापो रोगः । गर्ह्यं निन्द्यम् । तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्यः[7] इनिः प्रत्ययो भवति मत्वर्थे । द्वन्द्वात् तावत् – कटकवलयिनी । [8]शङ्खनूपुरिणी । उपतापात् – कुष्ठी । किलासी[9] । गर्ह्यात् – [10]ककुदावर्ती । [11]काकतालुकी । प्राणिस्थात् इति किम् ? पुष्पफलवान् वृक्षः । प्राण्यङ्गान्नेष्यते, पाणिपादवती । अतः इति अनुवर्तते । तेनेह न भवति, चित्रललाटिकावती । सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ॥

## वातातिसाराभ्यां कुक् च । (१२९/१०३५)

वातातिसारशब्दाभ्यां इनिः प्रत्ययो भवति,[12] तत्संनियोगेन च तयोः कुगागमो भवति । वातातिसारयो[13]-रुपतापत्वात् पूर्वेणैव सिद्धे प्रत्यये कुगर्थमेवेदं वचनम् । वातकी । [14]अतिसारकी ।

[६००] पिशाचाच्चेति वक्तव्यम् । (म.भा. २.४००)

पिशाचकी वैश्रवणः । रोगे चायमिष्यते । इह न भवति, वातवती गुहा ॥

## वयसि पूरणात् । (१३०/१०३६)

इनिरनुवर्तते । [15]पूरणप्रत्ययान्तात् प्रातिपदिकात् इनिः प्रत्ययो [16]भवति मत्वर्थे वयसि द्योत्ये । पञ्चमोऽस्यास्ति मासः संवत्सरो वा पञ्चमी उष्ट्रः । नवमी । दशमी[17] । सिद्धे सति नियमार्थं वचनम्, इनिरेव भवति, [18]ठन् न भवति [19]इति । [20]वयसि इति किम् ? पञ्चमवान् ग्रामरागः ॥

---

1. इनिच् क. फ, आमिनिच् ङ. 2. स्वम् ऐश्वर्यं इत्यधिकम् ङ. 3. स्वामिनौ नास्ति ब. ग. 4. नास्ति क. 5. तुलित इत्यधिकम् ह. 6. कर्दम नास्ति ह. 7. प्रातिपदिकेभ्यः इत्यधिकम् फ. 8. शृङ्ग-नाशंसलूप्रेरिणी फ. 9. शूली कदन्नसेवनात् इत्यधिकम् क. 10. ककुदावर्तिनी कन्या क. 11. काकतालुकिनी फ, हयः इत्यधिकम् क. 12. मत्वर्थे इत्यधिकम् क. ङ. फ. 13. शब्दयोः इत्यधिकम् फ. 14. अतीसारकी ङ. 15. पूरणप्रत्ययात् क. 16. नियम्यते ङ. 17. वृद्धः इत्यधिकम् ङ. 18. ठन् न भवति नास्ति क. फ. 19. इति नास्ति ह. 20. वयसि–ग्रामरागः नास्ति फ.

## सुखादिभ्यश्च । (१३१/१९३७)

सुख इत्येवमादिभ्यः प्रातिपदिकेभ्यः इनिः प्रत्ययो नियम्यते मत्वर्थे । सुखी । दुःखी । 'माला क्षेपे' (ग.सू.१३६) इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं[1] वचनम् ।

सुख । दुःख । [2]तृप्र । कृच्छ्र । [3]आस्र । [4]अलीक । करुणा । [5]कृपण । सोढ । [6]प्रमीप । [7]शील । [8]हल । 'माला क्षेपे' (ग.सू.१३६) । प्रणय ॥

## धर्मशीलवर्णान्ताच्च । (१३२/१९३८)

अन्तःशब्दः प्रत्येकमभिसम्बध्यते । धर्माद्यन्तात् प्रातिपदिकात् इनिः प्रत्ययो [9]नियम्यते । ब्राह्मणानां धर्मो [10]ब्राह्मणधर्मः, सोऽस्यास्ति इति ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

## हस्ताज्जातौ । (१३३/१९३९)

हस्तशब्दात् इनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज् जातिरभिधीयते । हस्तोऽस्य अस्ति इति हस्ती[11] । हस्तिनौ । हस्तिनः । जातौ इति किम् ? हस्तवान् पुरुषः ॥

## वर्णाद् ब्रह्मचारिणि । (१३४/१९४०)

वर्णशब्दात् इनिः प्रत्ययो [12]भवति मत्वर्थे समुदायेन चेद् ब्रह्मचारी [13]भण्यते । [14]ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेतः । स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, [15]नियममासेवते इत्यर्थः । वर्णी, वर्णिनौ, वर्णिनः । ब्रह्मचारिणि इति किम् ? वर्णवान् । ब्राह्मणादयस्त्रयो वर्णा वर्णिनः उच्यन्ते ॥

## पुष्करादिभ्यो देशे । (१३५/१९४१)

पुष्कर इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो [16]भवति समुदायेन चेद् देशोऽभिधीयते । पुष्करिणी । पद्मिनी । देशे इति किम् ? पुष्करवान् हस्ती ।

[६०१] इनिप्रकरणे बलाद् बाहूरुपूर्वादुपसङ्ख्यानम् । (म.भा.२.४००)

बाहुबली । ऊरुबली ।

[६०२] सर्वादेश्च । (म.भा.२.४०१)

सर्वधनी । सर्वबीजी । सर्वकेशी नटः ।

---

1. पुनर् इत्यधिकम् क. ड. फ. 2. तृप्त कृष्ण ड. 3. अस्र ड, आस्र ह. 4. अतीत करुण ड. 5. अकृपण इत्यधिकम् ह. 6. प्रतीप क. ड. फ. ह. 7. फल इत्यधिकम् ड. 8. हल नास्ति ह. 9. भवति मत्वर्थे क. ड. 10. नास्ति फ. 11. ब्राह्मणधर्मतः इत्यधिकम् क. 12. नियम्यते क. फ. 13. गम्यते क. 14. ब्रह्मचारिणो ब्राह्मणाः क. 15. नियमानासेवते क. 16. नियम्यते क. ड. फ.

[६०३] अर्थाच्चासन्निहिते। (म. भा. २.४०१)

अर्थी[1]। असन्निहिते इति किम्? अर्थवान्।

[६०४] तदन्ताच्चेति वक्तव्यम्।

[2]धान्यार्थी। हिरण्यार्थी।

पुष्कर। पद्म। उत्पल। तमाल। कुमुद। नड। कपित्थ। बिस। मृणाल। कर्दम। शालूक। [3]विगर्ह। करीष[4]। शिरीष। यवास। प्रवास। हिरण्य। पुष्करादिः॥

## बलादिभ्यो मतुबन्यतरस्याम्। (१३६/१९४२)

बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति[5]। अन्यतरस्यांग्रहणेन प्रकृतः इनिः समुच्चीयते। बलवान्, बली। उत्साहवान्, उत्साही।

बल। उत्साह[6]। उद्भाव। उद्वास। उद्वाम। शिखा। पूग। मूल। दंश। कुल। आयाम। व्यायाम। [7]उपयाम। आरोह। अवरोह। परिणाह। [8]युद्ध[9]॥

## सञ्ज्ञायां मन्माभ्याम्। (१३७/१९४३)

मन्नन्तात् प्रातिपदिकान् मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत् सञ्ज्ञा गम्यते। प्रथिमिनी। दामिनी। [10]मशब्दान्तात् – होमिनी। सोमिनी। सञ्ज्ञायाम् इति किम्? [11]सोमवान्। [12]होमवान्॥

## कंशंभ्यां बभयुस्तितुतयसः। (१३८/१९४४)

कम् शम् इति मकारान्तौ उदकसुखयोर्वाचकौ, ताभ्यां ब भ युस् ति तु त यस् इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे। कम्बः, कम्भः, कंयुः, कन्तिः[13], कन्तुः, कन्तः, कंयः। शम्बः, शम्भः, शंयुः, शन्तिः[14], शन्तुः, शन्तः, शंयः। सकारः पदसञ्ज्ञार्थः, तेनानुस्वारपरसवर्णौ सिद्धौ भवतः। सञ्ज्ञायां हि असत्यां [15]कम्यः, शम्यः इति स्यात्॥

## तुन्दिबलिवटेर्भः। (१३९/१९४५)

तुन्दि बलि वटि [16]इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे। तुन्दिः इति [17]वृद्धा नाभिरुच्यते, सा अस्यास्ति इति तुन्दिभः। बलिभः। वटिभः। बलिशब्दः पामादिषु पठ्यते, [18]तेन बलिनः इत्यपि भवति॥

---

1. असंनिहितोऽर्थोऽस्य इति अर्थी याचकः इत्यधिकम् ग. 2. धनार्थी ह. 3. विग्रह ह. 4. शीर्ष इत्यधिकम् ह. 5. अन्यतरस्याम् इत्यधिकम् क. ड. फ. 6. चूडा इत्यधिकम् क. ह. 7. उपमान क. 8. नास्ति ह. 9. सुलाङ्गल इत्यधिकम् ड. 10. मशब्दान्तात् नास्ति फ. 11. सामवान् ह. 12. नास्ति ड. ह. 13. कर्णः इत्यधिकम् क. 14. शर्णः इत्यधिकम् क. 15. कम्युः शम्युः क. 16. इति शब्देभ्यः फ. 17. वृद्धनाभिः क. 18. तेन नास्ति फ.

अहंशुभमोर्युस् । (१४०/१९४६)

अहम् इति शब्दान्तरमहङ्कारे वर्तते, [1]शुभम् इत्यव्ययं शुभपर्यायः, ताभ्यां युस प्रत्ययो भवति मत्वर्थे। सकारः पदसञ्ज्ञार्थः । अहंयुः । अहङ्कारवान् इत्यर्थः । शुभंयुः । कल्याणवान् इत्यर्थः[2] ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

पञ्चमाध्यायस्य द्वितीयः पादः ॥

———o———

1. शुभंशब्दः कल्याणपर्यायः क. ड. 2. इति मत्वर्थीयाः इत्यधिकम् फ. ह.

## पञ्चमाध्यायस्य तृतीयः पादः

### प्रागदिशो विभक्तिः । (१/१९४७)

'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (५.३.२७/१९७४) इति वक्ष्यति । प्रागेतस्माद् दिक्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसञ्ज्ञास्ते वेदितव्याः । वक्ष्यति – 'पञ्चम्यास्तसिल्' (५.३.७/१९५३) । ततः । [1]यतः । कुतः । [2]तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः इदमो विभक्तिस्वरश्च । [3]इह । ऊडिदम् (६.१.१७६/३७१७) इति विभक्त्युदात्तत्वं सिद्धं भवति । [4]अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नो[5]पयुज्यते इति निवृत्तम् । [6]वावचनं तु वर्तत एव । तेन विकल्पेन तसिलादयो भवन्ति, कुतः, कस्मात्, [7]कुत्र, कस्मिन् इति ॥

### किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । (२/१९४८)

प्रागदिशः इत्येव । किमः सर्वनाम्नो बहुशब्दाच्च प्रागदिशः प्रत्ययाः वेदितव्याः[8] । सर्वनामत्वात् [9]प्राप्ते ग्रहणे [10]द्व्यादिपर्युदासः क्रियते । कुतः, कुत्र । यतः, यत्र । ततः, तत्र । बहुतः, बहुत्र । अद्व्यादिभ्यः इति किम् ? द्वाभ्याम् । द्वयोः । [11]प्रकृतिपरिसङ्ख्यानं किम् ? वृक्षात् । वृक्षे । प्रागदिशः इत्येव, वैयाकरणपाशः[12] । सर्वनामत्वादेव [13]सिद्धे किमो ग्रहणं द्व्यादिपर्युदासात्[14] ।

[६०५] [15]बहुग्रहणे सङ्ख्याग्रहणम् । (म.भा. २.४०२)

[16]इह न भवति, बहोः सूपात्, बहौ सूपे इति ॥

### इदम इश् । (३/१९४९)

प्राग् दिशः । इदम इश् इत्ययमादेशो भवति प्रागदिशीयेषु प्रत्ययेषु परतः । शकारः सर्वादेशार्थः । इह[17] ॥

### एतेतौ रथोः । (४/१९५०)

[18]रेफथकारादौ प्रागदिशीये प्रत्यये परतः [19]इदमः एतेतौ [20]आदेशौ भवतः । इशोऽपवादः । रेफेऽकार उच्चारणार्थः । 'इदमोर्हिल्' (५.३.१६/१९६५) - एतर्हि । 'इदमस्थमुः' (५.३.२४/१९७२) – इत्थम् ॥

---

1. यतः नास्ति फ. 2. बहुलं इत्यधिकम् फ. 3. इत इत्यत्र ड. 4. इतः परम् ब.क.फ. 5. नोपपद्यत क. 6. वाग्रहणम् क. 7. कुत्र नास्ति फ. 8. द्व्यादीनि वर्जयित्वा इत्यधिकम् ग.क.ड.फ.ह. 9. द्व्यादिग्रहणे प्राप्ते क. 10. अद्व्यादिभ्यः इति क. ड. 11. प्रकृतिग्रहणम् क. 12. छान्दसपाशः इत्यधिकम् क. 13. किमो ग्रहणे सिद्धे द्व्यादिपर्युदासात् न प्राप्नोति इति किमो ग्रहणम् क. 14. किमः पर्युदासेन मा भूत् इत्यधिकम् ड. 15. बहुशब्देन क. 16. तेन इत्यधिकम् क. 17. इतः इत्यधिकम् क.ड.ग.फ.ह. 18. रेफादौ थकारादौ च ड.फ. 19. इतः ड. 20. यथासंख्यम् इत्यधिकम् क.फ.

## एतदोऽश्[1]। (५/१९६१)

प्रागदिशः इत्येव। एतदः[2] प्राग्दिशीये परतः अश् इत्ययमादेशो भवति। शकारः सर्वादेशार्थः। अतः। अत्र। एतदः इति योगविभागः कर्तव्यः (म. भा. २.४०३)। एतदो रथोः परत एत इत् इत्येतावादेशौ भवतः। एतर्हि। इत्थम्[3]। रेफादिः 'अनद्यतने र्हिलन्यतरस्याम्' (५.३.२१/१९६९) इति विद्यत एव। थमुप्रत्ययः पुनरेतद उपसङ्ख्येयः॥

## सर्वस्य सोऽन्यतरस्यां दि। (६/१९६२)

सर्वस्य स इत्ययमादेशो भवति प्रागदिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम्। [4]सर्वदा। सदा। प्रागदिशीये इत्येव, सर्वं ददाति इति सर्वदा ब्राह्मणी॥

## पञ्चम्यास्तसिल्। (७/१९६३)

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यः [5]तसिल् प्रत्ययो भवति। कुतः। यतः। ततः। बहुतः॥

## तसेश्च। (८/१९६४)

'प्रतियोगे पञ्चम्यास्तसिः' (५.४.४४/२१११), 'अपादाने चाहीयरुहोः' (५.४.४५/२११२) इति वक्ष्यति। तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति। कुत आगतः। यतः[6]। ततः[7]। बहुत आगतः। तसेस्तसिल्वचनं स्वरार्थं [8]विभक्त्यर्थं च॥

## पर्यभिभ्यां च। (९/१९६५)

परि अभि इत्येताभ्यां तसिल् प्रत्ययो भवति। सर्वोभयार्थे वर्तमानाभ्यां [9]प्रत्यय इष्यते। परितः। सर्वतः इत्यर्थः। अभितः। उभयतः इत्यर्थः॥

## सप्तम्यास्त्रल्। (१०/१९६६)

[10]किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति। कुत्र। यत्र। तत्र। बहुत्र॥

## इदमो हः। (११/१९६७)

इदमः सप्तम्यन्ताद् हः प्रत्ययो भवति। त्रलोऽपवादः। इह॥

---

1. अन् अष्टाध्यायी. म. भा. (2.403) 2. स्थाने इत्यधिकम् क. 3. इत्था हैतौ छन्दसि – इत्था इत्यधिकम् ड. 4 सर्वैकान्यकियत्तदः काले दा (5.3.15/1964) इत्यधिकम् क. ड. फ. 5. स्वार्थे इत्यधिकम् ड. 6–7. आगतः इत्यधिकम् क. 8. विभक्त्यर्थं च नास्ति क. 9. प्रत्ययः नास्ति फ. 10. किंसर्वनामभ्यः फ.

## किमोऽत्। (१२/१९६०)

किमः सप्तम्यन्ताद् अत् प्रत्ययो भवति। त्रलोऽपवादः। [1]क्व भोक्ष्यसे। क्वाध्येष्यसे। त्रलमपि केचिदिच्छन्ति – कुत्र[2]। तत्कथम्? उत्तर[3]सूत्राद् वावचनं पुरस्ताद[4]पकृष्यते॥

## वा ह च च्छन्दसि। (१३/१९६१)

किमः सप्तम्यन्ताद् वा हः प्रत्ययो भवति छन्दसि विषये। [5]यथाप्राप्तं [6]च। क्व। [7]'कुह' (ऋ. ८.७३.४)। कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः॥

## इतराभ्योऽपि दृश्यन्ते। (१४/१९६३)

सप्तमीपञ्चम्यपेक्षमितरत्वम्। इतराभ्यो विभक्तिभ्यस्तसिलादयो [8]दृश्यन्ते। दृशिग्रहणं प्रायिकविध्यर्थं, तेन [9]भवदादिभिर्योग एवैतद्विधानम्। के पुनर्भवदादयः? भवान् दीर्घायुरायुष्मान् देवानां प्रियः इति। स भवान्, ततो भवान्, तत्र भवान्। तं भवन्तम्, तत्र भवन्तम्, ततो भवन्तम्। तेन भवता, तत्र भवता, ततो भवता। तस्मै भवते, तत्र भवते, ततो भवते। तस्माद्भवतः, तत्र भवतः, ततो भवतः। तस्मिन्भवति, तत्र भवति, ततो भवति। एवं [10]दीर्घायुःप्रभृतिष्वप्युदाहार्यम्॥

## सर्वैकान्यकिंयत्तदः काले दा। (१५/१९६४)

सप्तम्याः इति [11]वर्तते, न तु इतराभ्यः इति। सर्वादिभ्यः [12]प्रातिपदिकेभ्यो दा प्रत्ययो भवति। [13]त्रलोऽपवादः। सर्वस्मिन् काले [14]सर्वदा। एकदा। अन्यदा। कदा। [15]यदा। तदा। काले इति किम्? [16]सर्वत्र देशे॥

## इदमो र्हिल्। (१६/१९६५)

सप्तम्याः इत्येव,[17] काले इति च। इदमः सप्तम्यन्तात् काले वर्तमानात् र्हिल् प्रत्ययो भवति। हस्यापवादः। लकारः स्वरार्थः। अस्मिन् काले एतर्हि[18]। काले इत्येव, इह देशे[19]॥

## अधुना। (१७/१९६६)

अधुना इति निपात्यते। [20]इदमोऽश्भावो धुना च प्रत्ययः। अस्मिन् काले अधुना॥

---

1. क्व गमिष्यसि क्व भक्षयिष्यसि इत्यधिकम् क. 2. इति इत्यधिकम् क. 3. सूत्रे क. 4. अवकृष्यते क, अनु कृष्यते ह. 5. चकारात् इत्यधिकम् ब. 6. अत् इत्यधिकम् ड. 7. कुशदित्यस्य ब्राह्मणस्य क्वचिद् वचः इत्यधिकम् क, कुहस्थः कुह जग्मथुः। कुह विद्यस्य सुनृतेः। कुत्रादित्यस्य दूरे क्वास्मिन् ब्राह्मणस्य ब. ड, कुत्रहाहरुच। कुत्रास्य सूनृतेः क्वचित् दूरेऽस्मिन् ब्राह्मणस्य वचः ह. 8. प्रत्ययाः गृह्यन्ते फ.ह. 9. भवदाभिः प्रयोगे फ. 10. दीर्घायुरपि ह. 11. अनुवर्तते ग. 12. सप्तम्यन्तेभ्यः इत्यधिकम् क. फ, सप्तम्यर्थेभ्यः काले वर्तमानेभ्यः इत्यधिकम् ड.ग.ह. 13. त्रलादेरपवादः ह. 14. सदा ड. 15. यदि ड. 16. सर्वस्मिम् देशे ड. 17. अनुवर्तते इत्यधिकम् क. 18. काले इत्यधिकम् क. 19. सूत्रस्यास्य वृत्तिर्न विद्यते ह. 20. इदमोऽन्ते धुना च प्रत्ययः ह.

## दानीं च (१८/१८६७)

इदमः सप्तम्यन्तात् काले वर्तमानाद् दानीं प्रत्ययो भवति। अस्मिन् काले इदानीम्[1]॥

## तदो दा च। (१९/१९६८)

तदः सप्तम्यन्तात् काले वर्तमानाद् दा [2]प्रत्ययो भवति, चकाराद् दानीं च। तस्मिन् काले तदा, तदानीम्। तदो दावचनमनर्थकं,[3] विहितत्वात्[4]॥

## तयोर्दार्हिलौ च छन्दसि। (२०/३४०९)

तयोः इति प्रातिपदिकनिर्देशः। तयो[5]रिदमः तदश्च यथासङ्ख्यं दार्हिलौ प्रत्ययौ भवतश्छन्दसि विषये। चकाराद् यथाप्राप्तं च। [6]इदावत्सरीयः (काठ. सं. १३.१५)। इदं तर्हि। इदानीम्। तदानीम्॥

## अनद्यतने र्हिलन्यतरस्याम्। (२१/१९६९)

छन्दसि इति न [7]स्वर्यते। सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः अनद्यतने [8]कालविशेषे [9]वर्तमानेभ्यः र्हिल् प्रत्ययो भवत्यन्तरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा[10]॥

## सद्यः परुत् परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः। (२२/१९७०)

सप्तम्याः इति काले इति च [11]वर्तते। सद्यःप्रभृतयः शब्दाः निपात्यन्ते। [12]प्रकृतिः, प्रत्ययः, आदेशः, कालविशेषः इति सर्वमेतन्निपातनाल् लभ्यते। समानस्य सभावो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये। (म. भा. २.४०७)। समानेऽह्नि सद्यः। पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरेऽभिधेये (म. भा. २. ४०७)। पूर्वस्मिन् संवत्सरे परुत्। पूर्वतरे संवत्सरे परारी। इदम इश्भावः समसण् प्रत्ययः [13]निपात्यते संवत्सरेऽभिधेये। अस्मिन् संवत्सरे ऐषमः (म.भा. २.४०७)। [14]परस्माद् एद्यवि प्रत्ययोऽहनि। परस्मिन्नहनि परेद्यवि। इदमोऽश्भावो[15] द्यश्च प्रत्ययोऽहनि[16] (म.भा. २.४०७)। अस्मिन्नहनि अद्य। पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् प्रत्ययो निपात्यते अहन्यभिधेये (म.भा. २.४०७)। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। [17]उभयोरह्नोः उभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः।

[६०५] द्युश्चोभयाद् वक्तव्यः। (म.भा. २.४०८)

उभयद्युः॥

---

1. योगविभागः उत्तरार्थः इत्यधिकम् क. 2. प्रत्ययो नास्ति फ. 3. सर्वैकान्यत्किंयत्तदः काले दा (5.3.15/2964) इत्यधिकम् क. ड. 4. वैचित्र्यार्थः इत्यधिकम् क. 5. सप्तम्यन्तात् काले इत्यधिकम् ड. इदावत्सरीयम् ब.ड, इदावसेरियं क, तर्हि त्वेदानीम् अवकल्पयेथाः इत्यधिकम् क, इदावत्सरीयं तर्हि त्वेदानीं कल्पये-थास्तदानीम् ह. 7. स्मर्यते क. 8. काले क. 9. वर्तमानेभ्यः नास्ति फ. 10. एतस्मिन् काले एतर्हि एतदा इत्यधिकम् ग. 11. अनुवर्तते ब.क. 12. प्रकृतिप्रत्ययादेशाः क. 13. भवति। णकारोऽचो ञ्णिति इति विशेषणार्थः। अनेनैव च वृद्धेः संवत्सरेऽभिधेये क. 14. परशब्दाद् क. 15. निपात्यते इत्यधिकम् क. 16. अभि-धेये इत्यधिकम् क. 17. उभयोरह्नोः नास्ति फ.

## प्रकारवचने थाल्। (२३/१९७१)

'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' (५.३.२/१९४८) इति वर्तते। सप्तम्याः इति काले इति च निवृत्तम्। सामान्यस्य भेदकः विशेषः प्रकारः। प्रकृत्यर्थविशेषणं चैतत्। प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति। तेन प्रकारेण तथा। यथा। सर्वथा[1]। जातीयरोऽपीदृशमेव लक्षणम्। स तु स्वभावात् प्रकारवति वर्तते, थाल् पुनः प्रकारमात्रे॥

## इदमस्थमुः। (२४/१९७२)

इदंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। थालोऽपवादः। अनेन प्रकारेण इत्थम्। उकारो [2]मकारपरित्राणार्थः॥

## किमश्च। (२५/१९७३)

किंशब्दात् प्रकारवचने[3] थमुः प्रत्ययो भवति[4]। केन प्रकारेण कथम्। योगविभागः उत्तरार्थः॥

## था हेतौ च च्छन्दसि। (२६/३६००)

किंशब्दाद्धेतौ वर्तमानात् था प्रत्ययो भवति, चकारात् प्रकारवचने छन्दसि विषये। हेतौ तावत् – 'कथा ग्रामं न पृच्छसि' (ऋ. १०.१४६.१)। केन हेतुना न पृच्छसि इत्यर्थः। प्रकारवचने – कथा देवा आसन् [5]पुराविदः। विभक्तिसञ्ज्ञायाः पूर्णोऽवधिः॥

## दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। (२७/१९७४)

दिशां[6] शब्दाः दिक्शब्दाः। तेभ्यो [7]दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यः अस्तातिः प्रत्ययो भवति स्वार्थे। यथासङ्ख्यमत्र नेष्यते। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्। दिक्शब्देभ्यः इति किम्? ऐन्द्र्यां दिशि वसति। सप्तमीपञ्चमीप्रथमाभ्यः इति किम्? पूर्वं ग्रामं गतः। दिग्देशकालेषु इति किम्? पूर्वस्मिन् गुरौ वसति। [8]इकारस्तकारपरित्राणार्थः॥

## दक्षिणोत्तराभ्यामतसुच्। (२८/१९७८)

दक्षिणोत्तराभ्यां[9] दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां [10]स्वार्थेऽतसुच् प्रत्ययो भवति। अस्तातेरपवादः। दक्षिणाशब्दः काले न सम्भवति इति दिग्देशवृत्तिः [11]परिगृह्यते। दक्षिणतो वसति। दक्षिणत आगतः। दक्षिणतो रमणीयम्। उत्तरतो वसति। उत्तरत आगतः। उत्तरतो रमणीयम्। अकारो विशेषणार्थः 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०/६०९) [12]इति॥

---

1. अन्यथा इत्यधिकम् ग. 2. मकारस्य इत्संज्ञापरित्राणार्थः। एतस्मादेव ज्ञापकात् 'न विभक्तौ तुस्माः' इति इह प्रकरणे न प्रवर्तते क. 3. वर्तमानात् स्वार्थे इत्यधिकम् क. 4. थालोऽपवादः इत्यधिकम् ब. क. ड. ग. 5. पुराविदः नास्ति फ, पुरा क. ह. 6. वाचकाः इत्यधिकम् ग. फ 7. दिक्शब्देभ्यो नास्ति फ. 8. वाक्यमिदं नास्ति ब. फ. 9. शब्दाभ्याम् इत्यधिकम् फ. 10. स्वार्थे नास्ति फ. 11. गृह्यते ब. क. 12. इति नास्ति क.

## विभाषा परावराभ्याम् । (२९/१९७९)

[1]परावरशब्दाभ्यां विभाषा अतसुच् प्रत्ययो भवति [2]अस्तातेरर्थे । परतो वसति । परत आगतः । परतो रमणीयम् । परस्ताद् वसति । परस्तादागतः । परस्ताद् रमणीयम् । अवरतो वसति । [3]अवरत आगतः । अवरतो रमणीयम् । अवरस्ताद् वसति । अवरस्तादागतः । अवरस्ताद् रमणीयम् ॥

## अञ्चेर्लुक् । (३०/१९८०)

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति । प्राच्यां दिशि वसति । 'लुक् तद्धितलुकि' (१.२.४९/१४०८) इति स्त्रीप्रत्ययोऽपि निवर्तते । प्राग् वसति । प्रागागतः । प्राग्रमणीयम् । प्रत्यग् वसति । प्रत्यगागतः । प्रत्यग् रमणीयम् ॥

## उपर्युपरिष्टात् । (३१/१९८१)

उपरि उपरिष्टात् इत्येतौ [4]शब्दौ निपात्येते अस्तातेरर्थे । [5]ऊर्ध्वस्य उपभावः [6]रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते । ऊर्ध्वायां दिशि वसति उपरि वसति । उपर्यागतः । उपरि रमणीयम् । उपरिष्टाद् वसति । उपरिष्टादागतः । उपरिष्टाद् रमणीयम् ॥

## पश्चात् । (३२/१९८२)

पश्चाद् इत्ययं शब्दो निपात्यतेऽस्तातेरर्थे । [7]अपरस्य पश्चभावः आतिश्च प्रत्ययः (म.भा.२.४०९) । [8]अपरस्यां दिशि वसति पश्चाद्दिशि वसति[9] । पश्चादागतः । पश्चाद् रमणीयम् ।

[६०७] दिक्पूर्वपदस्या[10]परस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययः । (म.भा.२.४०९)
दक्षिणपश्चात् । उत्तरपश्चात् ।

[६०८] अर्धोत्तरपदस्य दिक्पूर्वस्य पश्चभावो वक्तव्यः । (म.भा.२.४०९)
दक्षिणपश्चार्धः । उत्तरपश्चार्धः ।

[६०९] विनाऽपि पूर्वपदेन पश्चभावो वक्तव्यः । (म.भा.२.४०९)
पश्चार्धः ॥

## पश्च पश्चा च छन्दसि । (३३/३५०१)

पश्चपश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे । चकारात् पश्चादपि भवति । [11]अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते । [12]पुरा व्याघ्रो [13]जायते पश्च सिंहः । पश्चा सिंहः । पश्चात् सिंहः ॥

---

1. सप्तमीपञ्चमीप्रथमान्ताभ्यां दिग्देशकालेषु वर्तमानाभ्यां इत्यधिकम् क. 2. अस्तातेरपवादः पक्षे सोऽपि भवति इत्यधिकम् क. 3. अवरतः – अवरस्ताद् रमणीयम् नास्ति ड. 4. शब्दौ नास्ति क. 5. ऊर्ध्वशब्दस्य क. 6. रिरिष्टातिलौ ब. क. ह. 7. अवरशब्दस्य क. 8. अवरस्यां क. 9. पश्चाद् वसति इत्यधिकम् क. फ. 10. अवरस्य क. फ. 11. अवरशब्दस्य क. 12. परो व्याप्तो जायते प्रा. भा. चौ. 13 अपजायते ब. ड. फ.

## उत्तराधरदक्षिणादातिः । (३४/१९८३)

उत्तराधरदक्षिणशब्देभ्यः आतिः प्रत्ययो भवति अस्तातेरर्थे । उत्तरस्यां दिशि वसति उत्तराद् वसति । उत्तरादागतः । उत्तराद् रमणीयम् । अधराद् वसति । अधरादागतः । अधराद् रमणीयम् । दक्षिणाद् वसति । दक्षिणादागतः । दक्षिणाद् रमणीयम् ॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः । (३५/१९८४)

उत्तराधरदक्षिणशब्देभ्यः एनप् प्रत्ययो भवत्यन्तरस्यामस्तातेरर्थे अदूरे चेदवधिमानवधेर्भवति । विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी [1]पर्युदस्यते । तेनायं सप्तमीप्रथमान्ताद् विज्ञायते प्रत्ययः । उत्तरेण वसति, उत्तराद् वसति, उत्तरतो वसति । उत्तरेण रमणीयम्, उत्तराद् रमणीयम्, उत्तरतो रमणीयम् । अधरेण वसति, अधराद् वसति, अधस्ताद् वसति । अधरेण रमणीयम्, अधराद् रमणीयम्, अधस्ताद् रमणीयम् । दक्षिणेन वसति, दक्षिणाद् वसति, दक्षिणतो वसति । दक्षिणेन रमणीयम्, दक्षिणाद् रमणीयम्, दक्षिणतो रमणीयम् । अदूरे इति किम् ? उत्तराद् वसति । अपञ्चम्याः इति किम् ? उत्तरादागतः[2] । अपञ्चम्याः इति प्रागसेः (५.३.३९/१९७५) । असिप्रत्ययस्तु पञ्चम्यन्ताद् अपि भवति । केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति । [3]दिक्शब्दमात्रात् प्रत्ययं मन्यन्ते । पूर्वेण[4] ग्रामम् । अपरेण ग्रामम् ॥

## दक्षिणादाच् । (३६/१९८५)

अदूरे इति न स्वर्यते । अपञ्चम्याः इति वर्तते । दक्षिणशब्दात् आच्प्रत्ययो भवति अस्तातेरर्थे । दक्षिणा वसति । दक्षिणा रमणीयम् । अपञ्चम्याः इत्येव, दक्षिणत आगतः । चकारो विशेषणार्थः, अञ्चूत्तर-पदाजाहियुक्ते (२.३.२९/५९५) इति ॥

## आहि च दूरे । (३७/१९८६)

दक्षिणशब्दाद् आहिः प्रत्ययो भवति अस्तातेरर्थे, चकाराद् आच्,[5] दूरे चेद् अवधिमानवधेर्भवति । दक्षिणाहि वसति, दक्षिणा वसति । दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम् । दूरे इति किम् ? दक्षिणतो वसति[6] । अपञ्चम्याः इत्येव, दक्षिणत आगतः ॥

## उत्तराच्च । (३८/१९८७)

उत्तरशब्दाद् आजाही [7]प्रत्ययौ भवतः अस्तातेरर्थे दूरे चेदवधिमानवधेर्भवति । उत्तरा वसति, उत्तराहि वसति । उत्तरा रमणीयम्, उत्तराहि रमणीयम् । [8]दूरे इत्येव, उत्तरेण प्रयाति । पञ्चम्याः इत्येव, [9]उत्तरादागतः ॥

---

1. पर्युदास्यते फ, पर्युदासः क्रियते क. 2. पकारः स्वरार्थः इत्यधिकम् ब. 3. तेन इत्यधिकम् ड, दिक्शब्दे प्राप्ते क. 4. वसति इत्यधिकम् क. 5. च इत्यधिकम् फ. 6. दक्षिणात् दक्षिणेन इत्यधिकम् ड 7. इत्येतौ इत्यधिकम् ग. 8. दूरे – प्रयाति नास्ति ड. 9. उत्तरत आगतः क.ड.

## पूर्वाधरावराणामसि पुरधवश्चैषाम्। (३९/१०७८)

अपञ्चम्याः इति निवृत्तम्। तिसृणां[1] विभक्तीनामिह ग्रहणम्। पूर्वाधरावराणाम् असिः प्रत्ययो भवति अस्तातेरर्थे। तत्संनियोगेन चैषां यथासङ्ख्यं पुर् अध् अव् इत्येते आदेशा भवन्ति। [2]असि इत्यविभक्तिको निर्देशः। पुरो वसति। पुर आगतः। पुरो रमणीयम्। अधो वसति। अध आगतः। अधो रमणीयम्। अवो वसति। अव आगतः। अवो रमणीयम्॥

## अस्ताति च। (४०/१०७६)

[3]सप्तम्यन्तमेतत्। [4]अस्तातिप्रत्यये परतः पूर्वादीनां[5] यथासङ्ख्यं पुरादय आदेशा भवन्ति। इदमेवा[6]देश-विधानं ज्ञापकम्, अस्तातिरेभ्यो भवति, असिप्रत्ययेन न बाध्यते इति। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्[7]॥

## विभाषाऽवरस्य। (४१/१०७७)

पूर्वेण [8]नित्ये प्राप्ते विकल्प उच्यते। अवरस्यास्तातौ[9] परतो विभाषा अव् इत्ययमादेशो भवति। अवस्ताद् वसति। अवस्तादागतः। अवस्ताद् रमणीयम्। अवरस्ताद् वसति। अवरस्तादागतः। अवरस्ताद् रमणीयम्॥

## सङ्ख्याया विधार्थे धा। (४२/१०८८)

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा प्रकारः, [10]स च सर्वक्रियाविषय [11]एव गृह्यते। [12]क्रियाप्रकारे वर्तमानायाः सङ्ख्याया [13]धा प्रत्ययः[14]। एकधा भुङ्क्ते[15]। द्विधा गच्छति। त्रिधा[16]। चतुर्धा। पञ्चधा॥

## अधिकरणविचाले च। (४३/१०८९)

सङ्ख्यायाः इत्येव। अधिकरणं द्रव्यं, तस्य विचालः सङ्ख्यान्तरापादनम्। एकस्यानेकीकरणमनेकस्य वा एकीकरणम्। अधिकरणविचाले गम्यमाने सङ्ख्यायाः स्वार्थे धा प्रत्ययो भवति। एकं राशिं पञ्चधा कुरु। [17]अष्टधा कुरु। अनेकमेकधा कुरु॥

## एकाद्धो ध्यमुञन्यतरस्याम्। (४४/१०९०)

एकशब्दात् परस्य धाप्रत्ययस्य ध्यमुञ् आदेशः भवत्यन्यतरस्याम्। एकधा राशिं कुरु, ऐकध्यं[18] कुरु (म. भा. २.४१०)। [19]एकधा भुङ्क्ते, ऐकध्यं भुङ्क्ते। [20]प्रकरणादेव लब्धे पुनर्धाग्रहणं विधार्थे[21] विहितस्यापि यथा स्यात्। अनन्तरस्यैव[22] ह्येतत् प्राप्नोति॥

---

1. अपि इत्यधिकम् क. ह. 2. वाक्यमिदं नास्ति ब. ड. फ. ह. 3. वाक्यमिदं नास्ति ब. फ. 4. अस्तातौ प्रत्यये ड. 5. स्थाने इत्यधिकम् क, यथासङ्ख्यम् नास्ति ब. 6. आदेशवचनम् क. ह. 7. अवरस्तात् वसति, अवरस्तात् आगतः, अवरस्ताद् रमणीयम् इत्यधिकम् क. ड. फ. 8. नित्यः प्राप्तोऽवादेशो विकल्प्यते क. ग. 9. प्रत्यये इत्यधिकम् ह. 10. स च नास्ति ग. ह. 11. इह ब. क. ड. फ, इह परिगृह्यते ह. 12. क्रियायां क. 13. धा नास्ति फ. 14. इष्यते इत्यधिकम् क. 15. द्विधा भुङ्क्ते इत्यधिकम् क. ड. 16. गच्छति इत्यधिकम् क. 17 सप्तधा क. ड. ह. 18. राशिं इत्यधिकम् ड. 19. प्रकरणादेव विधार्थे इत्यधिकम् ड. 20. धा इत्यधिकम् ब. ड. ग. 21. अपि विहितस्य क. ह. 22. हि. नास्ति क. ग, एतत् नास्ति क.

## द्वित्र्योश्च धमुञ्। (४७/१९९१)

[1]धा इत्यनुवर्तते। द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य विधार्थे अधिकरणविचाले च विहितस्य धमुञादेशो भवति अन्यतरस्याम्। चकारो विकल्पा[2]नुकर्षणार्थः। द्विधा, द्वैधम्। त्रिधा, त्रैधम्।

[६१०] धमुञन्तात् स्वार्थे डदर्शनम्। (म.भा. २.४११)

[3]मतिद्वैधानि [4]संश्रयन्ते। [5]मतित्रैधानि [6]संश्रयन्ते॥

## एधाच्च। (४८/१९९२)

द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाच् आदेशो भवत्यन्यतरस्याम्। चकारो विकल्पा[7]नुकर्षणार्थः। द्वेधा, द्वैधम्, [8]द्विधा। त्रेधा, त्रैधम्, [9]त्रिधा॥

## याप्ये पाशप्। (४७/१९९३)

याप्यः कुत्सितः इति उच्यते। याप्ये[10] वर्तमानात् प्रातिपदिकात् [11]स्वार्थे पाशप् प्रत्ययो भवति[12]। याप्यो वैयाकरणः, कुत्सितो वैयाकरणः वैयाकरणपाशः। याज्ञिकपाशः[13]।

यो व्याकरणशास्त्रे प्रवीणो [14]दुःशीलः, तत्र कस्मान् न भवति? यस्य[15] गुणस्य [16]सद्भावाद् द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः॥

## पूरणाद् भागे तीयादन्। (४८/१९९४)

पूरणप्रत्ययो यस्तीयः, तदन्तात् प्रातिपदिकाद् भागे वर्तमानात् स्वार्थे [17]अन् प्रत्ययो भवति। स्वरार्थं वचनम्। द्वितीयो भागः द्वितीयः। तृतीयः। भागे इति किम्? [18]द्वितीयम्। तृतीयम्[19]। [20]पूरणग्रहण-मुत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति। मुखतीयादिरनर्थकः॥

## प्रागेकादशभ्योऽच्छन्दसि। (४९/१९९५)

पूरणाद् भागे इत्येव। प्रागेकादशभ्यः सङ्ख्या[21]शब्देभ्यः पूरणप्रत्ययान्तेभ्यः भागे वर्तमानेभ्यः स्वार्थेऽन् प्रत्ययो भवति अच्छन्दसि विषये। स्वरार्थं वचनम्। पञ्चमः[22]। सप्तमः[23]। [24]नवमः। [25]दशमः। प्रागेकादशभ्यः इति किम्? एकादशः। द्वादशः। अच्छन्दसि इति किम्? 'तस्य पञ्चममिन्द्रियस्यापाक्रामत्[26]' (मै.सं. १.९.४)॥

---

1. धः इति क. 2. अनुकरणार्थः क. 3, 5. पथि ब. ड. फ. ग. 4, 6. संश्रयन्ते नास्ति क. ह. 7. अनुकरणार्थः क. 8. द्विधा नास्ति ड.ह. 9. त्रिधा नास्ति ड.ह. 10. अर्थे इत्यधिकम् ब.क.फ. 11. स्वार्थे नास्ति क. 12. पकारः स्वरार्थः इत्यधिकम् क. 13. छन्दस्पाशः इत्यधिकम् ब.ड.फ.ह. 14. स्वयं इत्यधिकम् ड. 15. हि इत्यधिकम् ब. क. 16. भावात् ब, स्वभावात् क, तद्भावात् ड. 17. भागे इत्यधिकम् ह. 18. द्वितीयः तृतीयः क. 19. भोजनम् इत्यधिकम् ड.फ. 20. पूरणम् ह. 21. वाचिभ्यः ड.फ.ग.ह, संख्या-शब्देभ्यः नास्ति क. 22–23. भागः इत्यधिकम् क. 24–25. नास्ति क. 26. अपक्रमभाग इत्येव पञ्चमम् इत्यधिकम् क.

## षष्ठाष्टमाभ्यां ञ च। (५०/१००६)

भागे इत्येव, अच्छन्दसि इति च। षष्ठाष्टमाभ्यां[1] भागे अभिधेये अच्छन्दसि विषये ञः प्रत्ययो भवति। चकाराद् अन् च[2]। षष्ठो भागः षाष्ठः, षष्ठः। आष्टमः, अष्टमः॥

## मानपश्वङ्गयोः कन्लुकौ च। (५१/१००७)

भागे इत्येव। षष्ठाष्टमाभ्यां यथासङ्ख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः। षष्ठको भागो मानं चेत् [3]तद् भवति। अष्टमो भागः पश्वङ्गं चेत् [4]तद् भवति। [5]कस्य लुक्? ञस्य लुक्। अनो वा। चकाराद् यथाप्राप्तं च। षाष्ठः, [6]षष्ठः। आष्टमः, [7]अष्टमः। मानपश्वङ्गयोः इति किम्? षाष्ठः, षष्ठः। आष्टमः, अष्टमः॥

## एकादाकिनिच् चासहाये। (५२/१००८)

एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् प्रत्ययो भवति। चकारात् कन्लुकौ च। आकिनिचः कनो वा लुग् विज्ञायते। स च[8] विधानसामर्थ्यात् पक्षे भवति। एकाकी, एककः, एकः। असहायग्रहणं [9]सङ्ख्याशब्दनिरासार्थम्। तदुपादाने हि द्विबह्वोर्न स्यात्[10], एकाकिनौ, एकाकिनः[11]॥

## भूतपूर्वे चरट्। (५३/१९९९)

पूर्वं भूतः इति विगृह्य सुप्सुपेति समासः। भूतपूर्वशब्दोऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं चैतत्। [12]भूतपूर्वत्वविशिष्टेऽर्थेवर्तमानात् प्रातिपदिकात् स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्वः आढ्यचरः। [13]सुकुमारचरः। टकारो ङीबर्थः। आढ्यचरी[14]॥

## षष्ठ्या रूप्य च। (५४/२०००)

षष्ठ्यन्तात् प्रातिपदिकात्[15] रूप्यः प्रत्ययो भवति। चकाराच् चरट् च। षष्ठ्यन्तात् [16]प्रत्ययविधानात् संप्रति [17]भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं, न तु [18]प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः, देवदत्तचरः[19]॥

---

1. शब्दाभ्याम् इत्यधिकम् क. फ. ह. 2. यथासङ्ख्यमत्र नेष्यते इत्यधिकम् ङ. 3–4. तद् नास्ति फ. 5. कस्य लुक् नास्ति ड. 6–7. नास्ति फ. ह. 8. शब्दात् फ, सामर्थ्यात् क. 9. सङ्ख्यानिरासार्थम् ङ. ग. ह. 10. एकाकी इत्यधिकम् क. 11. एकवचनस्य एकवचनत्वात् इत्यधिकम् ङ. 12. भूतपूर्वविशिष्टेऽर्थे ह. 13. स्वर्गमार्गचरः क, दर्शनीयचरः ङ. 14. सुकुमारचरी इत्यधिकम् क. 15. भूतपूर्वे इत्यधिकम् ह, भूतपूर्वे अर्थे इत्यधिकम् क. ङ. 16. प्रत्ययविधाने क. ङ. 17. भूतपूर्वस्य ग्रहणं प्रत्ययान्तस्य प्रतियोगिनः विशेषणम् क. 18. प्रकृत्यर्थस्य ङ. ह. 19. यज्ञदत्तरूप्यः यज्ञदत्तचरः इत्यधिकम् ङ. ह.

## अतिशायने तमबिष्ठनौ। (५५/२००१)

अतिशयनमतिशायनं प्रकर्षः। निपातनाद् दीर्घत्वम्। प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात् [1]प्रातिपदिकात् स्वार्थे [2]तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति। सर्वे इमे आढ्याः, अयमेषामतिशयेन आढ्यः आढ्यतमः। दर्शनीयतमः। [3]सुकुमारतमः। [4]अयमेषामतिशयेन पटुः पटिष्ठः[5]। लघिष्ठः[6]। गरिष्ठः[7]। यदा [8]च प्रकर्षवतां[9] पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्ताद[10]परः प्रत्ययो भवत्येव। 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' (वा.सं. १.१)। युधिष्ठिरः श्रेष्ठतमः कुरूणाम् [11]इति॥

## तिङश्च। (५६/२००२)

तिङन्तात् च अतिशायने[12] द्योत्ये तमप् प्रत्ययो भवति। 'ङ्याप्प्रातिपदिकात्' (४.१.१/२८२) इत्यधिकारात् तिङो न प्राप्नोति इति इदं वचनम्[13]। सर्वे इमे पचन्ति इति, अयमेषाम् अतिशयेन पचति पचतितमाम्। [14]जल्पतितमाम्। इष्ठन्नोदाह्रियते, [15]गुणवचने तस्य [16]नियतत्वात्॥

## द्विवचनविभज्योपपदे तरबीयसुनौ। (५७/२००३)

द्वयोरर्थयोर्वचनं द्विवचनम्। विभक्तव्यो विभज्यः। निपातनाद् यत् [17]भवति। द्व्यर्थे विभज्ये चोपपदे [18]प्रातिपदिकात् [19]तिङन्ताच्च अतिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमबिष्ठनोरपवादौ। यथासङ्ख्यमत्र नेष्यते[20]। द्वाविमावाढ्यौ, अयमनयोरतिशयेन [21]आढ्यः आढ्यतरः। सुकुमारतरः[22]। [23]पचतितराम्। जल्पतितराम्। ईयसुन् खल्वपि – द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान्। लघीयान्। विभज्ये चोपपदे[24] – माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। [25]दर्शनीयतराः। पटीयांसः। लघीयांसः॥

## अजादी गुणवचनादेव। (५८/२००४)

इष्ठन्नीयसुनौ अजादी सामान्येन [26]विहितौ, तयोरयं विषयनियमः क्रियते, [27]गुणवचनादेव भवतस्तौ नान्यस्माद् इति। पटीयान्। लघीयान्। [28]पटिष्ठः। लघिष्ठः। इह न भवतः, पाचकतरः, पाचकतमः [29]इति। [30]एवकारः इष्टतोऽवधारणार्थः, प्रत्ययनियमोऽयं न प्रकृतिनियमः [31]इति। [32]पटुतरः। [33]पटुतमः[34]॥

---

1. प्रातिपदिकात् नास्ति फ. 2. तमप् इष्ठन् इत्येतौ फ. ह. 3. सुकुमारतमः नास्ति ब. 4. सर्वे इमे पटवः इत्यधिकम् ब. क. ड. फ. ह. 5. पटुतमः इत्यधिकम् फ. 6. लघुतमः इत्यधिकम् फ. 7. गुरुतमः इत्यधिकम् फ. 8. च नास्ति फ. 9. पुंसां इत्यधिकम् फ. 10. प्रातिपदिकात् इत्यधिकम् क. फ. 11. इति नास्ति फ. 12. अर्थे इत्यधिकम् क, स्वार्थे ब, द्योत्ये नास्ति ग. 13. आरभ्यते इत्यधिकम् क. फ 14. पठतितराम् फ. 15. गुणवचनादेव क. ड. फ. 16. नियमात् क, इति विधानत्वात् ब. 17. प्रत्ययः इत्यधिकम् फ. 18. ङ्याप् इत्यधिकम् ब. ड. ह. 19. तिङश्च फ. 20. अस्वरितत्वात् इत्यधिकम् क. 21. आढ्यः नास्ति ब. फ. ह, अतिशयेन नास्ति ह. 22. दर्शनीयतरः इत्यधिकम् ब. ड. फ. 23. पठतितराम् फ. 24. खल्वपि इत्यधिकम् ड. फ. ह. 25. सुकुमारतराः ड, पञ्चालाः गौडेभ्यः पटुतराः इत्यधिकम् फ. 26. विहितयोः क. 27. अजादी प्रत्ययौ इत्यधिकम् क. 28. पटिष्ठः नास्ति क. 29. इति नास्ति फ. 30. एवकारकरणं फ. 31. इति नास्ति क. 32. तेन इत्यधिकम् क. 33. इति भवति इत्यधिकम् क.

## तुश्छन्दसि । (५९/२००७)

तुः इति तृन्तृचोः सामान्येन ग्रहणम् । त्रन्ताच्छन्दसि विषये अजादी प्रत्ययौ भवतः । पूर्वेण गुणवचनादेव[1] नियमे कृते छन्दसि[2] प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, [3]त्रन्तादप्यजादी [4]भवत इति । [5]'आसुतिं करिष्ठः' (ऋ. ७.९७.७) । दोहीयसी धेनुः ।

[6]भस्याढे तद्धिते (६.३.३५/८३६ वा.) इति पुंवद्भावे कृते 'तुरिष्ठेमेयःसु' (३.४.१५४/२००८) इति तृचो निवृत्तिः ॥

## प्रशस्यस्य श्रः । (६०/२००९)

प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः । अजादी इति प्रकृतस्य [7]सप्तमी विभक्ति-विपरिणम्यते । ननु च प्रशस्यशब्दस्यागुणवचनत्वाद[8]जादी न सम्भवतः ? एवं [9]तर्हि आदेश[10]विधानसामर्थ्यात् तद्विषयो नियमो न प्रवर्तते, अजादी गुणवचनादेव इति । एवमुत्तरेष्वपि योगेषु विज्ञेयम् । [11]सर्वे इमे प्रशस्याः, अयमेषाम् अतिशयेन प्रशस्यः श्रेष्ठः । उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः श्रेयान् । अयमस्मात् श्रेयान् । प्रकृत्यैकाच् (६.४.१६३/२०१०) इति प्रकृतिभावात् [12]श्रशब्दस्य टिलोपयस्येतिलोपौ न भवतः ॥

## ज्य च । (६१/२०११)

प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः । सर्वे इमे प्रशस्याः, [13]अयमेषामतिशयेन प्रशस्यः ज्येष्ठः । उभाविमौ प्रशस्यौ, अयमनयो[14]रतिशयेन प्रशस्यः ज्यायान् । अयमस्मात् [15]ज्यायान् । 'ज्यादादीयसः' (६.४.१६०/२०१२) इत्याकारः ॥

## वृद्धस्य च । (६२/२०१३)

वृद्धशब्दस्य च ज्य इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः । तयोश्च सत्त्वं [16]नियमाभावेन पूर्ववज् [17]ज्ञाप्यते । सर्वे इमे वृद्धाः, अयमेषामतिशयेन वृद्धः ज्येष्ठः । उभाविमौ वृद्धौ, अयमनयोरतिशयेन [18]वृद्धः ज्यायान् । अयमस्माज् ज्यायान् । प्रियस्थिर (६.४.१५७/२०१६) इत्यादिना वृद्धशब्दस्य [19]वर्षादेशो विधीयते । वचनसामर्थ्यात् पक्षे सोऽपि भवति । वर्षिष्ठः । वर्षीयान् ॥

---

1. इति नियमे प्राप्ते ड. 2. विषये इत्यधिकम् ग, प्रकृत्यन्तरम् क. 3. तस्मात् इत्यधिकम् क. 4. प्रत्ययौ इत्यधिकम् ड. 5. आसुतं कर्तिष्ठ क. 6. भस्याढे – निवृत्तिः नास्ति ड. 7. प्रथमा तस्य अजादी इत्यस्य विभक्तिः क. 8. अजादीनां संभवत एव क. 9. तर्हि नास्ति ब. 10. विधानात् एव क.फ. 11. सर्वे –लोपौ न भवतः नास्ति ह. 12. श्रस्य फ. 13. अयमेषां श्रेष्ठः क. 14. ज्यायान् क. 15. श्रेयान् ह. 16. नियमाभावात् क. 17. ज्ञातव्यः क. 18. वृद्धः नास्ति. 19. वर्षादेशं वक्ष्यति क, वर्षादेशो वक्ष्यते ह.

## अन्तिकबाढयोर्नेदसाधौ । (६३/२०१४)

अन्तिकबाढयोः [1]यथासङ्ख्यं नेद साध इत्येतावादेशौ भवतोऽजाद्योः[2] परतः । तयोश्च सत्त्वं पूर्ववद् विज्ञेयम् । निमित्तभूतयोर्यथासङ्ख्यमत्र नेष्यते । सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेन अन्तिकम् नेदिष्ठम् । उभे इमे अन्तिके, इदमनयोरतिशयेन अन्तिकं नेदीयः । इदमस्मान् नेदीयः । सर्वे इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते साधिष्ठः । उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते साधीयः । अयमस्मात् [3]साधीयोऽधीते[4] ॥

## युवाल्पयोः कनन्यतरस्याम् । (६४/२०१९)

युवाल्प[5]शब्दयोः कन् इत्ययमादेशो भवत्यन्यतरस्यामजाद्योः[6] परतः । तयोश्च सत्त्वं पूर्ववज्[7]ज्ञेयम् । सर्वे इमे युवानः, अयमेषाम[8]तिशयेन युवा कनिष्ठः । [9]द्वाविमौ युवानौ, अयमनयोर[10]तिशयेन युवा कनीयान् । [11]अयमस्मात् कनीयान् । यविष्ठः, यवीयान् [12]इति वा । सर्वे इमेऽल्पाः, अयमेषाम[13]तिशयेन अल्पः कनिष्ठः । उभाविमावल्पौ, अयमनयोर[14]तिशयेन अल्पः कनीयान् । अयमस्मात् कनीयान् । अल्पिष्ठः, अल्पीयान् इति वा ॥

## विन्मतोर्लुक् । (६५/२०२०)

विनो [15]मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः । इदमेव[16] वचनं ज्ञापकमजादि[17]सद्भावस्य । सर्वे इमे [18]स्रग्विणः, अयमेषा[19]मतिशयेन स्रग्वी स्रजिष्ठः । उभाविमौ स्रग्विणौ, अयमनयोर[20]तिशयेन स्रग्वी स्रजीयान् । अयमस्मात् स्रजीयान् । सर्वे इमे त्वग्वन्तः, अयमेषामतिशयेन त्वग्वान् त्वचिष्ठः । उभाविमौ त्वग्वन्तौ, अयमनयोर[21]तिशयेन त्वग्वान् त्वचीयान् । अयमस्मात् त्वचीयान् ॥

## प्रशंसायां रूपप् । (६६/२०२१)

प्रशंसा स्तुतिः । प्रकृत्यर्थस्य विशेषणं चैतत् । प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति[22] । स्वार्थिकाश्च प्रत्ययाः [23]प्रकृत्यर्थविशेषस्य द्योतका भवन्ति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । याज्ञिकरूपः[24] ।

प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति । वृषलरूपोऽयं यः पलाण्डुना सुरां पिबति (म. भा. २.४११) । चोररूपः, [25]दस्युरूपः, योऽक्ष्णोरप्यञ्जनं हरेत् ।

---

1. शब्दयोः इत्यधिकम् ब. ह. 2. प्रत्यययोः इत्यधिकम् ग. फ. ह. 3. साधिष्ठं ह, अयमपि साधीयोऽधीते क, उभौ इमौ बाढमधीयाते, अयमनयोः साधीयोऽधीते क. 4. इत्यर्थः इत्यधिकम् ग. 5. इत्येतयोः फ. 6. प्रत्यययोः इत्यधिकम् क. फ. ग. 7. विज्ञेयम् ड. फ. 8. अतिशयेन नास्ति फ. 9. उभौ इमौ क. ड. फ. 10. अतिशयेन नास्ति फ. 11. अयमस्मात् कनीयान् नास्ति ब. क. ड. 12. इति वा नास्ति ब. ड. फ. ग. 13–14. अतिशयेन नास्ति फ. 15. मतोश्च क. ह. 16. लुग् इत्यधिकम् ड. 17. सर्वस्य क, भावस्य ड. 18. स्रग्विणः नास्ति क. 19–20–21. अतिशयेन नास्ति क. ह. 22. विशेषे इत्यधिकम् क. ड, वैशिष्ट्ये इत्यधिकम् ह. 23. प्रकृत्यर्थस्य विशेषणं द्योतयन्ति ड. 24. छान्दसरूपः इत्यधिकम् क. फ. 25. दस्युरूपम् फ.

'तिङश्च' (५.३.५६/२००२) इत्यनुवर्तते। [1]पचतिरूपम्। [2]पचतोरूपम्। पचन्तिरूपम्। क्रियाप्रधानमाख्यातम्। एका च क्रिया इति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः। नपुंसकलिङ्गं तु भवति, लोकाश्रयत्वाल्लिङ्गस्य ॥

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। (६७/२०२२)

सम्पूर्णता [3]पदार्थानां समाप्तिः। स्तोकेनासम्पूर्णता ईषदसमाप्तिः। प्रकृत्यर्थविशेषणं चैतत्।। ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात्[4] कल्पप् देश्य देशीयर् इत्येते प्रत्यया भवन्ति। ईषदसमाप्तः पटुः पटुकल्पः, पटुदेश्यः, पटुदेशीयः। मृदुकल्पः, [5]मृदुदेश्यः, मृदुदेशीयः। 'तिङश्च' (५.३.५६/२००२) इत्येव, पचतिकल्पम्। जल्पतिकल्पम्[6] ॥

## विभाषा सुपो बहुच् पुरस्तात्तु। (६८/२०२३)

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् [7]सुबन्तात् विभाषा बहुच् प्रत्ययो भवति। स तु पुरस्तादेव भवति, न परतः। चित्करणमन्तोदात्तार्थम्। ईषदसमाप्तः पटुः बहुपटुः। बहुमृदुः। बहुगुडो द्राक्षा। [8]विभाषावचनात् कल्पबादयोऽपि भवन्ति[9]। सुब्ग्रहणं तिङन्तान्मा भूदिति ॥

## प्रकारवचने जातीयर्। (६९/२०२४)

सामान्यस्य भेदको विशेषः प्रकारः, तस्य वचने। [10]प्रकृत्यर्थविशेषणं चैतत्। सुबन्तात् प्रकारविशिष्टे[11]ऽर्थे वर्तमानात् प्रातिपदिकात् [12]स्वार्थे जातीयर् प्रत्ययो भवति। प्रकारवति चायं [13]प्रत्ययः। [14]थाल् पुनः [15]प्रकारमात्र एव भवति। पटुप्रकारः पटुजातीयः। मृदुजातीयः। दर्शनीयजातीयः[16] ॥

## प्रागिवात् कः। (७०/२०२५)

'इवे प्रतिकृतौ' (५.३.९६/२०५१) इति वक्ष्यति। प्राक् एतस्मादिवसंशब्दनाद् [17]यानित ऊर्ध्वमनुक्रमिष्यामः कप्रत्ययस्तेषु[18]अधिकृतो वेदितव्यः। वक्ष्यति – 'अज्ञाते' (५.३.७३/२०२८) [19]इति। अश्वकः। गर्दभकः। तिङन्तादयं [20]प्रत्ययो नेष्यते, अकजिष्यते। 'तिङश्च' (५.३.५६/२००२) इत्यनुवृत्तमुत्तरसूत्रेणैव [21]सम्बन्धनीम् ॥

---

1. पिबतिरूपम् क, पचन्तिरूपम् ह. 2. नास्ति ब. 3. अर्थानां ह. 4. स्वार्थे इत्यधिकम् क. ड. फ. 5. मृदुदेश्यः मृदुदेशीयः नास्ति फ. 6. णचः स्त्रियाम् इति स्त्रीग्रहणं ज्ञापकम्, स्वार्थिकाः प्रकृतितः लिङ्गवचनान्यनुवर्तन्ते इत्यधिकम् ह. 7. प्रातिपदिकात् फ. 8. विभाषाग्रहणात् क. 9. पटुकल्पः मृदुकल्पः इत्यधिकम् क. 10. प्रकृति नास्ति क. ड. फ. ह. 11. अर्थे नास्ति फ. 12. स्वार्थे नास्ति फ. 13. इष्यते फ, इष्यते। थालपि। सादृश्यमेव लक्षणम्। स तु प्रकारमात्रे भवति। जातीयर् तद्वति वर्तमानात् इत्यधिकम् ग. 14. थाल् प्रत्ययः क. ह. 15. प्रकार एव 16. शोभनजातीयः इत्यधिकम् क.ड. 17. यानर्थान् इत ड.ह. 18. अर्थेषु इत्यधिकम् ह. 19. कुत्सिते च इत्यधिकम् क. 20. कप्रत्ययः क. 21. सम्बन्धं नीयते क, सम्बध्यते ह.

## अव्ययसर्वनाम्नामकच् प्राक् टेः । (७१/२०२६)

'तिङश्च' (५.३.५६/२००२) [1]इत्येव । अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेषु अकच् प्रत्ययो भवति, स च प्राक् टेः, न [2]परतः । [3]कस्यापवादः । उच्चकैः । नीचकैः । [4]शनकैः । सर्वनाम्नः खल्वपि – [5]सर्वके । विश्वके । उभयके । प्रातिपदिकात्, सुपः इति द्वयमपीहानुवर्तते । तत्राभिधानतो व्यवस्था [6]भवति । क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति , क्वचित् सुबन्तस्य । युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोः इत्यत्र प्रातिपदिकस्य । त्वयका, मयका, त्वयकि, मयकि इत्यत्र सुबन्तस्य ।

[६११] अकच्प्रकरणे तूष्णीमः काम्प्रत्ययो वक्तव्यः । (म.भा. २. ४२२)

स च मित्त्वादन्त्यात्[7]अचः परो भवति । [8]तूष्णीकामास्ते । तूष्णीकां तिष्ठति ।

[६१२] शीले को मलोपश्च [9]वक्तव्यः । (म.भा. २. ४२३)

तूष्णींशीलः तूष्णीकः ।

'तिङश्च' (५.३.५६/२००२) इति प्रकृतमत्र सम्बध्यते । पचतकि । जल्पतकि ॥

## कस्य च दः । (७२/२०२७)

ककारान्तस्य प्रातिपदिकस्य[10]अकच्सन्नियोगेन दकारादेशो भवति । चकारः [11]सन्नियोगार्थः । सामर्थ्याच्चाव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम् । ककारान्तस्य सर्वनाम्नो[12]ऽसम्भवात् । धिक् – धकित् । हिरुक् – हिरकुत् । पृथक् – पृथकत् ॥

## अज्ञाते । (७३/२०२८)

अज्ञातविशेषः अज्ञातः । अज्ञातत्वोपाधिकेऽर्थे वर्तमानात् [13]प्रातिपदिकात् तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति । स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधानमेतत् । [14]कस्यायमश्वः इति स्वस्वामिसम्बन्धेनाज्ञाते अश्वे प्रत्ययः, अश्वकः । गर्दभकः । उष्ट्रकः । एवमन्यत्रापि यथायोगम् [15]अज्ञातता विज्ञेया । उच्चकैः । नीचकैः । [16]सर्वके । विश्वके । पचतकि । जल्पतकि ॥

---

1. इति फ.ह, प्रकृतमनुवर्तते क. 2. परः क.फ. 3. कस्यायमपवादः क. 4. शनकैः नास्ति क. ह. 5. सर्वकः विश्वकः उभयकः क.ड. 6. भवति नास्ति क.ह. 7. अचः नास्ति फ. 8. तूष्णीमास्ते । तूष्णीकामास्ते । मकारो देशविध्यर्थः ह. 9. वक्तव्यः नास्ति फ. 10. अकच्नियोगेन ह. 11. सहयोगार्थः 12. अभावः ह. 13. ङ्याप् इत्यधिकम् ड. 14. वाक्यमिदं नास्ति क. 15. अज्ञातत्वं ज्ञेयम् क, अज्ञातता विज्ञायते ग. 16. सर्वकैः विश्वकैः ह.

## कुत्सिते। (७४/२०२९)

[1]कुत्सितो गर्हितो, निन्दितः। प्रकृत्यर्थविशेषणं चैतत्। कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् [2]प्रातिपदिकात् स्वार्थे यथाविहितं प्रत्ययो भवति। कुत्सितोऽश्वः अश्वकः। उष्ट्रकः। गर्दभकः। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि॥

## सञ्ज्ञायां कन्। (७५/२०३०)

कुत्सिते इत्येव। [3]कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति, कस्यापवादः, [4]प्रत्ययान्तेन चेत् सञ्ज्ञा गम्यते। शूद्रकः। [5]धारकः। [6]पूर्णकः[7]॥

## अनुकम्पायाम्। (७६/२०३१)

कारुण्येनाभ्युपपत्तिः परस्य अनुकम्पा। तस्यां गम्यमानायां [8]सुबन्तात् तिङन्ताच्च यथाविहितं प्रत्ययो भवति। पुत्रकः। वत्सकः। दुर्बलकः। [9]बुभुक्षितकः। स्वपितकि। [10]श्वसितकि[11]॥

## नीतौ च तद्युक्तात्। (७७/२०३२)

सामदानादिरुपायो नीतिः। नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद् [12]यथाविहितं प्रत्ययो भवति। हन्त ते धानकाः[13]। हन्त ते तिलकाः[14]। एहकि। अद्धकि। [15]परस्यानुकम्पामात्रोपादानेनाराधयति। पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धात् अनुकम्प्यमानादेव [16]प्रत्ययो [17]विहितः। संप्रति व्यवहितादपि यथा स्यादिति वचनम्॥

## बह्वचो मनुष्यनाम्नष्ठज्वा। (७८/२०३३)

'अनुकम्पायाम्' (५. ३. ७६/२०३१), 'नीतौ च तद्युक्तात्' (५. ३. ७७/२०३२) इति वर्तते। बह्वचः प्रातिपदिकात् मनुष्यनामधेयाद् वा ठच् प्रत्ययो भवति, अनुकम्पायां गम्यमानायां [18]नीतौ च। देविकः, देवदत्तकः। [19]यज्ञिकः, यज्ञदत्तकः। बह्वचः इति किम्? दत्तकः। गुप्तकः। मनुष्यनाम्नः इति किम्? [20]मद्रबाहुकः। [21]भद्रबाहुकः॥

---

1. कुत्सितं गर्हितं निन्दितम् ब. ड. क. ह. 2. ङ्याप्प्रातिपदिकात् तिङन्ताच्च क. ड. 3. कुत्सि–ततोपाधिके फ. 4. तदन्तेन क. 5. साधकः ड. ह, राजकः ब.फ, बाधकः क. 6. चूर्णकः ड. 7. स्वार्थं वचनम् इत्यधिकम् क. ड. 8. प्रातिपदिकात् इत्यधिकम् क. 9. जल्पतकिः ड. फ. 10. नास्ति क. फ, ज्वरित क. ड. ह. 11. ज्वरितकिः इत्यधिकम् फ. 12. सुबन्तात् तिङन्ताच्च इत्यधिकम् क. 13. हन्त ते गुडकाः इत्यधिकम् ड. ह, हन्तते वालकः, हन्त ते गवकः, हन्त ते वस्त्रकम्. हन्त तेऽश्वकाः इत्यधिकम् क. 14. धानकि, अर्धकि [इत्यधिकम् [ग. ह, एककि इत्यधिकम् क. 15. अनुकम्पमानो दानेन ब.ड.ह. 16. एतत्प्रत्ययो ग. 17. भवति क. 18. नीतौ नास्ति फ. 19. यज्ञिकः नास्ति फ. 20. मद्रबाहुकः नास्ति फ, मद्रकाः क. 21. भद्रबाहुः ह, बाहुकाः क.

## घनिलचौ च। (७९/२०३४)

अनुकम्पायाम् [1]इत्यादि सर्वमनुवर्तते। [2]पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। बह्वचो मनुष्यनाम्नो[3] घन् इलच् इत्येतौ प्रत्ययौ भवतः। चकाराद् यथाप्राप्तं [4]च। देवियः, देविलः, देविकः, देवदत्तकः। यज्ञियः, यज्ञिलः, यज्ञिकः, यज्ञदत्तकः॥

## प्राचामुपादेरडज्वुचौ च। (८०/२०३६)

पूर्ववत् सर्वमनुवर्तते। उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नः अडच्वुच्-[5]प्रत्ययौ भवतः[6]। चकाराद् घनिलचौ[7] प्रत्ययौ भवतः ठच् च वा। उपडः, उपकः, उपियः, [8]उपिलः, उपिकः, उपेन्द्रदत्तकः। [9]प्राचांग्रहणं पूजार्थम्। वा [10]इत्येव हि वर्तते॥

## जातिनाम्नः कन्। (८१/२०३७)

बह्वचः इति नानुवर्तते। सामान्येन विधानम्। जातिशब्दो यो मनुष्यनामधेयो व्याघ्र सिंह इत्येव[11]मादिः, तस्माद् अनुकम्पायां नीतौ च[12] कन्प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः[13]। वावचनानुवृत्ते-र्यथादर्शनमन्योऽपि [14]भवति। [15]व्याघ्रिलः। सिंहिलः। नामग्रहणं स्वरूपनिवृत्त्यर्थम्॥

## अजिनान्तस्योत्तरपदलोपश्च। (८२/२०३९)

कन् इत्यनुवर्तते, मनुष्यनाम्नः इति च। अजिनशब्दान्तात् प्रातिपदिकान् मनुष्यनाम्नोऽनुकम्पायां कन्-प्रत्ययो भवति, तस्य चोत्तरपदलोपः। [16]व्याघ्राजिनो नाम कश्चिन्मनुष्यः, सोऽनुकम्पितः व्याघ्रकः। सिंहकः[17]॥

## ठाजादावूर्ध्वं द्वितीयादचः। (८३/२०३८)

लोपः इत्यनुवर्तते। अस्मिन् प्रकरणे यः ठः अजादिश्च प्रत्ययः, तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः। यज्ञिकः, यज्ञियः, यज्ञिलः। उपडः, उपक, उपियः, उपिलः, उपिकः। ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। अजादि-लक्षणे [18]हि माथितिकादिवत् प्रसङ्गः। वायुदत्तः वायुकः। [19]पितृदत्तः पितृकः।

[६१३] चतुर्थादच [20]ऊर्ध्वस्य लोपो वक्तव्यः। (म. भा. २. ४२५)

अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः बृहस्पतियः बृहस्पतिलः (म.भा. २. ४२५)।

---

1. नीतौ च तद्युक्तात् बह्वचः सर्वनाम्नः इति क. ड. ह. 2. पूर्ववच्च क. 3. प्रातिपदिकात् इत्यधिकम् क. 4. च नास्ति फ. ह. 5. इत्येतौ इत्यधिकम् ह. 6. प्राचां मतेन इत्यधिकम् क. ह. 7. च इत्यधिकम् ब. ड. 8. उफिलः ग. 9. प्राग्ग्रहणं ग. 10. इत्यनुवर्तते क. ह. 11. आदिः नास्ति फ. 12. गम्यमानायां इत्यधिकम् क. फ. 13. वराहकः इत्यधिकम् ड. ह. 14. प्रत्ययः इत्यधिकम् फ. 15. व्याघ्रियः, सिंहियः ह. 16. व्याघ्राजिन नामा क. 17. कृष्णकः इत्यधिकम् ब. क. ड. इ. फ. ह, उष्ट्रकः इत्यधिकम् ग. 18. हि नास्ति क. 19. पितृदत्तकः क. 20. ऊर्ध्वस्य नास्ति ह.

[६१४] अनजादौ विभाषा लोपो वक्तव्यः। (म. भा. २. ४२५)

देवदत्तकः, [1]देवकः। यज्ञदत्तकः, यज्ञकः।

[६१५] लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः। (म.भा. २.४२५)

दत्तिकः, दत्तिलः, दत्तियः, [2]दत्तकः।

[६१६] विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोः विभाषा लोपो वक्तव्यः।

देवदत्तो दत्तः, देव इति वा।

[६१७] [3]उवर्णाल्ल इलस्य च। (म. भा.२. ४२५)

भानुदत्तो भानुलः। [4]वसुदत्तो वसुलः।

चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च (म.भा. २.४२५)॥

[६१८] द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्।

[5]लहोडः लहिकः। कहोडः कहिकः।

[६१९] एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः। (म. भा.२.४२५)

[6]वागाशीः वाचिकः। [7]स्रुचिकः। त्वचिकः। कथं षडङ्गुलिदत्तः षडिकः इति ? षषष्ठाजादिवचनात् सिद्धम्॥

## शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्। (८४/२०३८)

[8]शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादचः [9]ऊर्ध्वस्य लोपो भवति। पूर्वस्यायमपवादः। अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः, सुपरियः, सुपरिलः। विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः। अर्यमिकः, अर्यमियः, अर्यमिलः।

[६२०] [10]शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम्। (म. भा.२.४२६)

शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः शेवलिकः, [11]सुपरिकः इति यथा स्यात्। शेवलयिकः, सुपर्यिकः इति मा भूत्॥

---

1. देवियः ग. 2. दत्तकः नास्ति क. 3. उवर्णान्तात् क. 4. वायुदत्तः वायुलः क. 5. उपलः, नहोलः, नहिलः क. 6. वागाशीर्दत्तः क. 7. स्रुचिकः नास्ति क, शुचियः ब. 8. शेवल सुपरि विशाल वरुण अर्यमन् इत्येवमादीनाम् क. ह. फ. 9. ऊर्ध्वं ह, ऊर्ध्वं यत् शब्दरूपं तस्य फ. 10. वरुणादीनाम् इति भाष्यपाठः क· 11. सुपरिलः ड.

## अल्पे । (८५/२०४०)

परिमाणापचये अल्पशब्दः । [1]प्रकृतिविशेषणं चैतत् । अल्पत्वविशिष्टे अर्थे वर्तमानात् [2]प्रातिपदिकात् यथाविहितं [3]प्रत्ययो भवति । अल्पं तैलम् तैलकम् । घृतकम् । सर्वकम् । [4]विश्वकम् । उच्चकैः । नीचकैः । पचतकि । जल्पतकि ॥

## ह्रस्वे । (८६/२०४१)

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् [5]प्रातिपदिकात् यथाविहितं प्रत्ययो भवति । [6]दीर्घप्रतियोगी ह्रस्वः । ह्रस्वो वृक्षः वृक्षकः । [7]प्लक्षकः । [8]स्तम्भकः ॥

## सञ्ज्ञायां कन् । (८७/२०४२)

ह्रस्वे इत्येव । [9]ह्रस्वत्वहेतुका या सञ्ज्ञा तस्यां गम्यमानायां कन्प्रत्ययो भवति । [10]पूर्वस्यायमपवादः । वंशकः । वेणुकः । [11]दण्डकः ॥

## कुटीशमीशुण्डाभ्यो रः । (८८/२०४३)

ह्रस्वे इत्येव । सञ्ज्ञाग्रहणं नानुवर्तते । सामान्येन विधानम् । [12]कुटीशमी[13]शुण्डाभ्यो [14]ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति । कस्यापवादः । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । स्वार्थिकत्वेऽपि पुंलिङ्गता, लोकाश्रयत्वाल् लिङ्गस्य [15](व्या.प. ७४) ॥

## कुत्वा डुपच् । (८९/२०४४)

ह्रस्वे इत्येव । कुतूशब्दाद् ह्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति । कस्यापवादः । ह्रस्वा कुतूः [16]कुतुपम् । चर्ममयं स्नेहभाजनमुच्यते । [17]कुतूः इत्यावपनस्याख्या ॥

## कासूगोणीभ्यां ष्टरच् । (९०/२०४५)

ह्रस्वे इत्येव । कासूगोणीशब्दाभ्यां [18]ह्रस्वत्वे द्योत्ये ष्टरच् प्रत्ययो भवति । कस्यापवादः । षकारो ङीषर्थः । ह्रस्वा कासूः [19]कासूतरी । गोणीतरी । [20]कासूः इति शक्तिः, आयुधविशेषः उच्यते[21] ॥

---

1. प्रकृति नास्ति ह. 2. शब्दात् ब. 3. काकचौ प्रत्ययौ भवतः ग. 4. विश्वाकम् क. 5. शब्दात् स्वार्थे ड.फ. 6. दीर्घत्वप्रतियोगी गुणो ह्रस्वः । ह्रस्वः पटः पटकः ग. 7. प्लक्षकः नास्ति ड. 8. स्तम्बकः क, स्तबकः ह. 9. ह्रस्वहेतुका फ, ह्रस्वहेतुः सञ्ज्ञा क. 10. कस्यापवादः क. 11. नडकः क.ह, दन्तकः ग. 12. कुटी शमी शुण्डा इत्येतेभ्यः शब्देभ्यः ब.फ. 13. शुण्डाशब्देभ्यः ह. 14. ह्रस्वत्वे क. 15. इति इत्यधिकम् क. 16. कुतुपः चर्ममयस्नेहभाजनम् क. 17. कुतुपः इति तस्यैवाख्या क. 18. ह्रस्वे क. 19. कासुतरी क.फ. 20. कासुः शक्तिः ग. 21. गोणीतरी आवपनस्याख्या इत्यधिकम् क.

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे। (९१/२०४६)

ह्रस्वे इति निवृत्तम्। वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यः[1] तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः तस्य तनुत्वे प्रत्ययः (म.भा. २.४२६)। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वम् अन्यपितृकता। अनड्वान् ऋषभः, तस्य तनुत्वं [2]भारवहने मन्दशक्तिता॥

## किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्। (९२/२०४७)

किम् यत् तत् इत्येतेभ्यः प्रातिपदिकेभ्य द्वयोरेकस्य निर्धारणे[3] डतरच्प्रत्ययो भवति। निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः। [4]जात्या, क्रियया, गुणेन, सञ्ज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। कतरो भवतोः कठः। कतरो भवतोः कारकः। कतरो भवतोः पटुः। कतरो भवतोर्देवदत्तः[5]। यतरो भवतोः कारकः। यतरो भवतोः पटुः। यतरो भवतोर्देवदत्तः, ततर आगच्छतु। महाविभाषया चात्र [6]प्रत्ययो विकल्प्यते। को भवतोर्देवदत्तः,[7] स आगच्छतु। निर्धारणे इति [8]विषयसप्तमीनिर्देशः। द्वयोः इति [9]समुदायान् निर्धारणविभक्तिः। एकस्य इति [10]निर्देशः निर्धार्यमाणनिर्देशः॥

## वा बहूनां जातिपरिप्रश्ने डतमच्। (९३/२०४८)

किंयत्तदः इति वर्तते, निर्धारणे, एकस्य इति च। [11]बहूनाम् इति निर्धारणे षष्ठी। बहूनां [12]मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यः वा डतमच् प्रत्ययो भवति। [13]कतमो भवतां कठः। यतमो भवतां कठः, ततम आगच्छतु। वावचनम् अकजर्थम्। [14]यको भवतां कठः, सक आगच्छतु। महाविभाषा च [15]प्रत्ययविकल्पार्था अनुवर्तते [16]एव। को भवतां कठः। यो भवतां कठः, स आगच्छतु। जातिपरिप्रश्ने इति किम्? को भवतां देवदत्तः। परिप्रश्नग्रहणं च किम एव विशेषणं, न यत्तदोः, असम्भवात्। [17]जातिग्रहणं तु सर्वैरेव सम्बध्यते। किमोऽस्मिन् विषये डतरमपीच्छन्ति [18]केचित्, कतरो भवतां कालापः इति। तत्र 'कतरकतमौ जातिपरिप्रश्ने' (२.१.६३/७४२) इति वचनात् [19]सिद्धम्॥

## एकाच्च प्राचाम्। (९४/२०४९)

एकशब्दात् प्राचामाचार्याणां मतेन डतरच् डतमच् इत्येतौ प्रत्ययौ भवतः स्वस्मिन् विषये। चकारो डतरचोऽनुकर्षणार्थः। द्वयोर्निर्धारणे डतरच्, बहूनां निर्धारणे डतमच्। जातिपरिप्रश्ने इति नानुवर्तते। सामान्येन विधानम्। एकतरो भवतोर्देवदत्तः। एकतमो भवतां देवदत्तः। [20]प्राचांग्रहणं पूजार्थं, विकल्पोऽनुवर्तते एव॥

---

1. शब्देभ्यः तनुत्वोपाधिकेऽर्थे वर्तमानेभ्यः स्वार्थे ब.क.ड.फ.ह. 2. भारसहने क. 3. गम्यमाने इत्यधिकम् क.ह.फ. 4. जात्या नास्ति क.ड.ग. 5. यज्ञदत्तो वा इत्यधिकम् ड. 6. प्रत्ययविकल्पो भवति क. 7. यो भवतोः देवदत्तः इत्यधिकम् क.ह. 8. विषयनिर्देशः क.ह. 9. समुदायनिर्धारण° क. 10. निर्देशः नास्ति ड फ ह, द्वितीयनिर्धार्यमाणनिर्देशः क. 11. वाक्यमिदं नास्ति क. 12. मध्ये--गम्यमाने नास्ति क. 13. एकतमः क. 14. ककः ड. 15. प्रत्यय नास्ति क. 16. एव नास्ति फ. 17. एकग्रहणं तु ह. 18. केचित् नास्ति ड. 19. सिद्धः ड.ह. 20. प्राग्ग्रहणं क.

## अवक्षेपणे कन्। (९५/२०५०)

अवक्षिप्यते येन तदवक्षेपणम्। तस्मिन् वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति। व्याकरणकेन नाम त्वं गर्वितः। याज्ञिक्यकेन नाम त्वं गर्वितः। [1]परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम्। यत् पुनः स्वयमेव कुत्सितं तत्र[2] 'कुत्सिते' (५.३.७४/२०२९) इत्यनेन कन्प्रत्ययो भवति, देवदत्तकः, यज्ञदत्तकः (म. भा. २.४२८) इति। प्रागिवीयस्य पूर्णो[3]ऽवधिः॥

## इवे प्रतिकृतौ। (९६/२०५१)

[4]कन् इत्यनुवर्तते। इवार्थे यत् प्रातिपदिकं [5]वर्तते तस्मात् कन् प्रत्ययो भवति। इवार्थः सादृश्यं, तस्य विशेषणं प्रतिकृतिग्रहणम्। प्रतिकृतिः प्रतिरूपकं, प्रतिच्छन्दकम्। अश्व इवायम् [6]अश्वप्रतिकृतिः अश्वकः। उष्ट्रकः। गर्दभकः। प्रतिकृतौ इति किम्? गौरिव गवयः॥

## सञ्ज्ञायां [7]च। (९७/२०५२)

[8]इव इत्यनुवर्तते, कन् इति च। इवार्थे गम्यमाने[9] कन्प्रत्ययो भवति, समुदायेन चेत् सञ्ज्ञा गम्यते। अप्रतिकृत्यर्थ[11] आरम्भः। [12]अश्वसदृशस्य सञ्ज्ञा अश्वकः। उष्ट्रकः। गर्दभकः॥

## लुम्मनुष्ये। (९८/२०५३)

सञ्ज्ञायाम् इत्येव। सञ्ज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुब् भवति। [13]चञ्चेव मनुष्यः चञ्चा[14]। दासी। खरकुटी (म. भा. २.४२८)। मनुष्ये इति किम्? अश्वकः। उष्ट्रकः। गर्दभकः। देवपथादेराकृतिगणत्वात् तस्यैवायं प्रपञ्चो [15]वेदितव्यः॥

## जीविकार्थे चापण्ये। (९९/२०५४)

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति। [16]विक्रीयते यत् तत् [17]पण्यम्। वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः। देवलकादीनां [18]जीविकार्था देवप्रतिकृतय उच्यन्ते। अपण्ये इति किम्? हस्तिकान् विक्रीणीते। [19]अश्वकान्। [20]रथकान्। देवपथादे[21]रेवायं प्रपञ्चः॥

## देवपथादिभ्यश्च। (१००/२०५५)

'इवे प्रतिकृतौ' (५.३.९६/२०५१), 'सञ्ज्ञायां च' (५.३.९७/२०५२)[22] विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति। आदिशब्दः प्रकारे। आकृतिगणश्चायम्। देवपथः। हंसपथः[23]।

---

1. पुरुषस्य कुत्सायाम् क. 2. एव इत्यधिकम् फ. ह. 3. विधिः फ. 4. वाक्यमिदं नास्ति फ. 5. वर्तते नास्ति फ. 6. प्रतिरूपम् क. ड. 7. च नास्ति ग. 8. इव इति ड. 9. प्रातिपदिकात् इत्यधिकम् ड. 10. भवति फ. ह. 11. अयम् इत्यधिकम् क. 12. अश्वसादृश्यस्य ह. 13. वंश इव मनुष्यः वंशः क. 14. चञ्चा तृणमयः पुरुषः। तत्सदृशः पुरुषजातिः इत्यधिकम् फ, वर्धिका इत्यधिकम् क. ड. 15. वेदितव्यः नास्ति क. फ. 16. न इत्यधिकम् क. 17. अपण्यम् क. 18. जीविकार्थदेवताप्रतिकृतयः क. 19. अश्वकान् नास्ति ह. 20. रथिकान् विक्रीणीते ह, वासुदेवकान् विक्रीणीते ड. 21. आकृतिगणत्वात् तस्य इत्यधिकम् क. 22. इत्येव इत्यधिकम् ग. 23. वारिपथः इत्यधिकम् ड.

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

अर्चासु तावत् – शिवः । विष्णुः । चित्रकर्मणि – अर्जुनः । [1]दुर्योधनः । [2]ध्वजेषु – [3]कपिः । गरुडः । सिंहः ।

देवपथ । [4]हंसपथ । वारिपथ । [5]जलपथ । राजपथ । शतपथ । [6]सिंहगति । उष्ट्रग्रीवा । [7]चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य ॥

## वस्तेर्ढञ् । (१०१/२०५६)

इव इत्यनुवर्तते । [8]इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ चाप्रतिकृतौ च । वस्तिशब्दादिवार्थे द्योत्ये ढञ् प्रत्ययो भवति । वस्तिरिव वास्तेयः । वास्तेयी ॥

## शिलाया ढः । (१०२/२०५७)

शिलाशब्दाद् [9]इवार्थे ढः प्रत्ययो भवति । शिलेव शिलेयं [10]दधि । केचिदत्र ढञमपि इच्छन्ति, तदर्थं योगविभागः कर्तव्यः । शिलायाः ढञ् प्रत्ययो भवति । शैलेयम् । ततो ढः । शिलेयम् ॥

## शाखादिभ्यो [11]यत् । (१०३/२०५८)

शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्यः यत्प्रत्ययो भवति इवार्थे । शाखेव [12]शाख्यः । मुख्यः । जघन्यः ।

शाखा । [13]मुख । जघन । शृङ्ग । [14]मेघ । चरण । [15]स्कन्ध । शिरस् । उरस् । अग्र । शरण । शाखादिः ॥

## द्रव्यं च भव्ये । (१०४/२०५९)

द्रव्यशब्दो निपात्यते भव्येऽभिधेये । द्रुशब्दाद् इवार्थे [16]यत्प्रत्ययो निपात्यते । [17]द्रव्यम्, भव्यः, आत्मवान् अभिप्रेतानाम् अर्थानां [18]पात्रभूत उच्यते । [19]द्रव्योऽयं राजपुत्रः । द्रव्योऽयं माणवकः[20] ॥

## कुशाग्राच्छः । (१०५/२०६०)

कुशाग्रशब्दाद् इवार्थे छः प्रत्ययो भवति । कुशाग्रम् इव [21]सूक्ष्मत्वात् कुशाग्रीया बुद्धिः । कुशाग्रीयं [22]स्त्रम् ॥

---

1. दुर्योधनः नास्ति क. 2. ध्वजे क. 3. कपिध्वजः इत्यधिकम् क. 4. हंसपथ नास्ति क. 5. कुपथ क. ह, अजपथ इत्यधिकम् ह. 6. सिद्धगति ह. 7. वामरज्जु ह. 8. अतः ह. 9. स्वार्थे क. 10. ष्ठम् ड. 11. यः क. ड. 12. बाह्मण्यः क. 13. मुख नास्ति क. 14. अश्व क. 15. स्कन्ध – अग्र स्ति क. 16. यप्रत्ययः क. ड. 17. द्रव्यम् नास्ति क. ह. 18. पात्रं भव्यम् क. 19. द्रव्यमिव साधकक, द्रव्यमयः राजपुत्रः ह. 20. राजपुत्रो वा इत्यधिकम् ड. क. 21. तीक्ष्णत्वात् क. ह. 22. वस्त्रम् क. ह.

## समासाच्च तद्विषयात् । (१०६/२०६१)

तद् इत्यनेन प्रकृत इवार्थो निर्दिश्यते । इवार्थविषयात् समासादपरस्मिन्निवार्थे [1]एव छः प्रत्ययो भवति । कालतालीयम् । अजाकृपाणीयम् । [2]अन्धकवर्तकीयम् । अतर्कितोपनतं [3]चित्रीकरणमुच्यते । तत् कथम् ? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च[4] । तेन [5]तालेन पतता काकस्य वधः कृतः । एवमेव[6] देवदत्तस्य तत्रागमनं, दस्यूनां च उपनिपातः । तैश्च तस्य वधः कृतः । तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसदृशः इत्येकः उपमार्थः, अतश्च देवदत्तस्य वधः, स कालतालवधसदृशः इति द्वितीयः उपमार्थः । तत्र [7]प्रथमे समासः, द्वितीये प्रत्ययः । समासश्चायमस्मादेव ज्ञापकात्, न ह्यस्यापरं सक्षणमस्ति । सुप्सुपेति [8]वा समासः । [9]स चैवंविषय एव ॥

## शर्करादिभ्योऽण् । (१०७/२०६२)

[10]शर्करा इत्येवमादिभ्यः प्रातिपदिकेभ्यः इवार्थे अण् प्रत्ययो भवति । शर्करा इव [11]शार्करम् । [12]कापालिकम् ।

शर्करा । कपालिका । [13]पिष्टिक । पुण्डरीक । [14]शतपत्र । गोलोमन् । गोपुच्छ । [15]नरालि । [16]नकुला । सिकता । शर्करादिः ॥

## अङ्गुल्यादिभ्यष्ठक् । (१०८/२०६३)

अङ्गुल्यादिभ्यः इवार्थे ठक् प्रत्ययो भवति । अङ्गुलीव आङ्गुलिकः । [17]भारुजिकः ।

अङ्गुलि । [18]भरुज । बभ्रु । वल्गु । [19]मण्डर । मण्डल । शष्कुल[20] । कपि । [21]उदश्वित् । गोणी । [22]उरस् । [23]शिखर । कुलिश । अङ्गुल्यादिः ॥

## एकशालायाष्ठजन्यतरस्याम् । (१०९/२०६४)

एकशालाशब्दाद् इवार्थेऽन्यतरस्यां ठच् प्रत्ययो भवति । अन्यतरस्यांग्रहणेनानन्तरः ठक् प्राप्यते । एकशालेव [24]एकशालिकः, [25]ऐकशालिकः ॥

---

1. एव नास्ति क. 2. अन्धकवर्तीयम् ह, अलुकवर्तनीयम् क, शक्रार्जुनीयम् ड. 3. इति फलितोऽ: ड, नास्ति ह. 4. स्वाभाविकम् इत्यधिकम् क. 5. तालेन नास्ति क. 6. एव नास्ति क. 7. प्रथमः समासार्थः द्वितीयः प्रत्ययार्थः ड.ह. 8. वा नास्ति क. 9. स हि एवं ड. 10. शर्करादिभ्यः फ. 11. शारः क. 12. कापालकम् क. 13. कृपाष्टिका ह, कपिष्टिका ड. 14. शतपथ ड. 15. नराचि ग. 16. कुल ह.ड. 17. भारद्वाजिकः क, दारुलिकः ह. 18. भरद्वाज क, दारुल ह. 19. मण्डुर ड. 20 हरि इत्यधिकम् ह. 21. भरु बल इत्यधिकम् ह. 22. तरस् ह. 23. शिखा ग, नास्ति ह. 24. एकशलकम् ऐकशालिकम् ड. 25. नास्ति ग.

## कर्कलोहितादीकक् । (११०/२०६७)

कर्कलोहितशब्दाभ्याम् इवार्थे ईकक् प्रत्ययो भवति । कर्कः शुक्लो[1]ऽश्वः, तेन सदृशः कार्कीकः[2] । लौहितीकः स्फटिकः । स्वयमलोहितोऽ[3]प्युपाश्रयवशात् तथा [4]प्रतीयते ॥

## प्रत्नपूर्वविश्वेमात्थाल् छन्दसि । (१११/३५०२)

प्रत्न पूर्व विश्व इम इत्येतेभ्यः [5]इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये । '[6]तं प्रत्नथा पूर्वथा विश्वथेमथा[7]' (ऋ.५.४४.१) ॥

## पूगाञ्ञ्योऽग्रामणीपूर्वात् । (११२/२०६६)

[8]इवार्थे इति निवृत्तम् । नानाजातीया अनियतवृत्तयो[9]ऽर्थकामप्रधानाः सङ्घाः पूगाः । पूगवाचिनः प्रातिपदिकात् अग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति । लौहध्वज्यः, लौहध्वज्यौ, लोहध्वजाः । शैब्यः, शैब्यौ, शिबयः । चातक्यः, चातक्यौ, चातकाः । अग्रामणीपूर्वात् इति किम् ? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः । यज्ञदत्तकाः ॥

## व्रातच्फञोर[10]स्त्रियाम् । (११३/११००)

नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः । व्रातवाचिभ्यः प्रातिपदिकेभ्यः [11]च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम् । [12]कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः । व्रैहिमत्यः, व्रैहिमत्यौ, [13]व्रीहिमताः । च्फञः खल्वपि – कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः । ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः । अस्त्रियाम् इति किम् ? कपोतपाकी[14] । व्रीहिमती । कौञ्जायनी । [15]ब्राध्नायनी ॥

## आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् । (११४/२०६७)

आयुधजीविनां सङ्घः आयुधजीविसङ्घः । स वाहीकैर्विशेष्यते । वाहीकेषु य आयुधजीविसङ्घः, तद्वाचिनः प्रातिपदिकात् ब्राह्मणराजन्यवर्जितात् [16]स्वार्थे ञ्यट् प्रत्ययो भवति । ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये तु स्वरूपग्रहणमेव । टकारो ङीबर्थः, तेन अस्त्रियाम् इति नानुवर्तते । [17]कौण्डीबृस्यः, कौण्डीबृस्यौ, कौण्डीबृसाः । क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः । मालव्यः, मालव्यौ, मालवाः । स्त्रियाम् – [18]कौण्डीबृसी । क्षौद्रकी । मालवी । आयुधजीविग्रहणं किम् ? [19]मल्लाः । शयण्डाः । सङ्घग्रहणं किम् ? सम्राट् । वाहीकेषु इति किम् ? शबराः । पुलिन्दाः । अब्राह्मणराजन्यात् इति किम् ? [20]गोपालवा ब्राह्मणाः । शालङ्कायना राजन्याः ॥

---

1. वाजी क, नास्ति ह. 2. गौः इत्यधिकम् क. 3. उपाधिवशात् तथावगम्यते क. 4. अवभासते ड. फ. ह. 5. प्रातिपदिकेभ्यः इत्यधिकम् क. 6. त्वं क. 7. ज्येष्ठतातिं बर्हिषदं स्वर्विदम् इत्यधिकम् फ. 8. इवार्थो निवृत्तः च. 9. इत्येव इत्यधिकम् ग. 10. अन्यतरस्याम् क. 11. च्फञन्तेभ्यः इत्यधिकम् ड. फ. ह. 12. कापोतवाक्यः कापोतवाक्यौ कापोतवाक्याः ह. 13. व्रीहिमतयः ग. 14. स्त्री इत्यधिकम् क, कापोतका स्त्री ड. 15. ब्रध्नावती क. 16. स्वार्थे नास्ति फ. 17. कौण्डीवृक्ष्यः कौण्डीवृक्ष्याः क, कौञ्जीव्रश्यः कौञ्जीव्रश्यौ कुञ्जीव्रशाः ड. 18. कौञ्जीव्रशी ड. 19. खल्लाः इत्यधिकम् क. 20. गोपालयः ब. ड. फ, गोपावयः क.

## वृकाट् टचेण्यण् । (११५/२०६८)

आयुधजीविसङ्घात् इति वर्तते । वृकशब्दात् [1]आयुधजीविनः स्वार्थे टचेण्यण् प्रत्ययो भवति । टकारो ङीबर्थो, णकारो वृद्ध्यर्थः । वार्केण्यः, वार्केण्यौ, वृकाः[2] । [3]आयुधजीविसङ्घविशेषणं,[4] जातिशब्दान् मा भूत् । कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ॥

## दामन्यादित्रिगर्तषष्ठाच्छः । (११६/२०६९)

आयुधजीविसङ्घात् इति वर्तते । दामन्यादिभ्यः प्रातिपदिकेभ्यः त्रिगर्तषष्ठेभ्यः च आयुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति । येषामायुधजीविनां सङ्घानां षडन्तवर्गास्तेषां [5]च त्रिगर्तः षष्ठः । त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठाः इत्युच्यन्ते । तेषु चेयं स्मृतिः --

आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टकिर्जालमानिश्च ब्राह्मगुप्तोऽथ[6]जानकिः ॥

इति । दामन्यादिभ्यस्तावत् – दामनीयः, दामनीयौ, दामनयः । [7]औलपीयः, औलपीयौ, उलपयः । त्रिगर्तषष्ठेभ्यः खल्वपि – कौण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः । [8]दाण्डकीयः, दाण्डकीयौ, दाण्डकयः । क्रौष्टकीयः । जालमानीयः । ब्रह्मगुप्तीयः । [9]जानकीयः ।

दामनी । [10]औलपि । [11]आकिदन्ती । काकरन्ति । काकदन्ति । शत्रुन्तपि । सार्वसेनि । बिन्दु । मौञ्जायन । उलभ । सावित्रीपुत्र । दामन्यादिः ॥

## पर्श्वादियौधेयादिभ्यामणञौ । (११७/२०७०)

आयुधजीविसङ्घात् इत्येव । पर्श्वादिभ्यः यौधेयादिभ्यश्च प्रातिपदिकेभ्यः आयुधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययो भवतः । पार्शवः, पर्शवौ, पार्शवः । आसुरः, आसुरौ, असुराः । यौधेयः । शौभ्रेयः ।

पर्शु । असुर । रक्षस् । बाह्लीक । वयस् । मरुत् । दशार्ह । पिशाच । विशाल । अशनि । कार्षापण । सत्वत् । वसु । पर्श्वादिः ।

यौधेय । कौशेय । क्रौशेय । शौभ्रेय । शौभ्रेय । धार्तेय । वार्तेय । जाबालेय । त्रिगर्त । भरत । उशीनर । यौधेयादिः ॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् । (११८/२०७१)

आयुधजीविसङ्घात् इति निवृत्तम् । अभिजिदादिभ्योऽणन्तेभ्यः [12]प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति ।

---

1. आयुधजीविसङ्घवाचिनः ड. 2. वार्केणी स्त्री इत्यधिकम् क. 3. आयुधजीविसङ्घग्रहणम् ड. 4. किम् इत्यधिकम् क. 5. च नास्ति फ, तत्र च क. 6. जालिकः क. 7. तैपलीयः तैलपीयौ तैलपयः क. 8. एवं इत्यधिकम् क. 9. जालकीयः क. 10. तैलपि क. 11. वैजवापि, औदंकि, अच्युतति, अच्युतदन्ति, शाकुन्तकि, औडवि आविदन्ति कदन्तकि इत्यधिकम् ड. 12. प्रातिपादिकेभ्यः नास्ति ह.

अभिजितोऽपत्यम् इत्यण्, तदन्ताद् यञ्। आभिजित्यः, आभिजित्यौ, आभिजिताः। वैदभृत्यः, वैदभृत्यौ, वैदभृताः। शालावत्यः, शालावत्यौ, शालावताः। [1]शैखावत्यः। शामीवत्यः। [2]और्णावत्यः। श्रौमत्यः[3]। गोत्रप्रत्ययस्यात्राणो ग्रहण[4]मिष्यते। आभिजितो मुहूर्तः, आभिजितः [5]स्थालीपाकः इत्यत्र न भवति ॥

## ञ्यादयस्तद्राजाः। (११९/२०७२)

'पूगाञ् ञ्योऽग्रामणीपूर्वात्' (५.३.११२/२०६६) इत्यतः प्रभृति ये प्रत्ययाः[6], ते [7]तद्राजसञ्ज्ञा भवन्ति। तथा चैवोदाहृतम्। तद्राजप्रदेशाः – तद्राजस्य बहुषु (२.४.६२/११९३) इत्येवमादयः ॥

इति [8]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

पञ्चमाध्यायस्य तृतीयः पादः

———o———

1. शैखावत्यः शैखावत्यौ शैखावताः ह, शिखावत्यः शिखावत्यौ शिखावताः क. 2. और्णावत्यः और्णावत्यौ और्णावताः क. ह. 3. श्रौमत्यः श्रौमत्यौ श्रौमताः क. ह. 4. इहेष्यते ह. 5. स्थालिकः ह. 6. विहिताः इत्यधिकम् क. ड. 7. तद्राजसञ्ज्ञकाः क. फ. 8. श्रीजयादित्यविरचितायां नास्ति ब. क, वामनविरचितायां ड.

## पञ्चमाध्यायस्य चतुर्थः पादः

### पादशतस्य सङ्ख्यादेर्वीप्सायां वुन्लोपश्च । (१/२०७३)

[1]पादशतान्तस्य सङ्ख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति । तत्सन्नियोगेन चान्तस्य लोपो भवति । यस्येति (६.४.१४८/३११)[2] लोपेनैव सिद्धे [3]पुनर्वचनमनैमित्तिकार्थम् । यस्येति[4] लोपः परनिमित्तकः । तस्य स्थानिवद्भावात् 'पादः पत्' (६.४.१३०/४१४) इति पद्भावो न स्यात् । अस्य त्वनै–मित्तिकत्वान् न [5]स्थानिवत्त्वम् । द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति[6] । द्वे द्वे शते ददाति द्विशतिकां ददाति । तद्धितार्थ (२.१.५१/७२८) इति [7]समासः । ततः प्रत्ययः । स्वभावाच्च वुन्प्रत्ययान्तं स्त्रियामेव वर्तते । [8]पादशतस्य इति किम् ? द्वौ द्वौ माषौ ददाति । सङ्ख्यादेः इति किम्? [9]पादं पादं ददाति । वीप्सायाम् इति किम् ? द्वौ पादौ ददाति । द्वे शते ददाति । पादशतग्रहणमनर्थकम्, अन्यत्रापि दर्शनात् । द्विमोदकिकां ददाति । त्रिमोदकिकां ददाति ।।

### दण्डव्यवसर्गयोश्च । (२/२०७४)

[10]दमनं दण्डः । दानं व्यवसर्गः । दण्डव्यवसर्गयोः गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य सङ्ख्यादेः वुन्प्रत्ययो भवति, [11]अन्तलोपश्च । अवीप्सार्थोऽयमारम्भः । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः । द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति । द्विशतिकां[12] दण्डितः । त्रिशतिकाम्[13] । द्विशतिकां व्यवसृजति । त्रिशतिकाम्[14] ।।

### स्थूलादिभ्यः प्रकारवचने कन् । (३/२०७७)

स्थूलादिभ्यः[15] [16]प्रकारवचने द्योत्ये कन्प्रत्ययो भवति । जातीयरः (५.३.६९/२०२४) अपवादः । प्रकारो विशेषः । स्थूलप्रकारः स्थूलकः । अणुकः । माषकः[17] ।

[६२१] कन्प्रकरणे चञ्चद्बृहतोरुपसङ्ख्यानम् । (म.भा.२.४३०)

चञ्चत्प्रकारः चञ्चत्कः । बृहत्कः । चञ्चद्बृहयोः इति केचित् पठन्ति । तेषां चञ्चकः, [18]बृहकः [19]इति उदाहरणं [20]द्रष्टव्यम् ।

स्थूल । अणु । माष । इषु । 'कृष्ण तिलेषु' (ग.सू. १३७) । 'यव व्रीहिषु' (ग.सू. १३८) । '[21]पाद्यकालावदाताः सुरायाम्' (ग.सू.१३९) । 'गोमूत्र आच्छादने' (ग.सू.१४०) । 'सुराया अहौ' (ग.सू.१४१) । 'जीर्ण शालिषु' (ग.सू. १४२) । 'पत्रमूले समस्तव्यस्ते' (ग.सू.१४३) । कुमारीपुत्र । कुमार । श्वशुर । मणि । इति स्थूलादिः ।।

---

1. पादशतशब्दान्तस्य क. 2. इति इत्यधिकम् क, इति लोपो न भवति ड. 3. पुनर्लोपवचनम् ड. 4. च इति इत्यधिकम् क, हि इत्यधिकम् ड. 5. स्थानिवत्त्वं नास्ति ड. 6. त्रिशतिकां ददाति इत्यधिकम् ह. 7. समासे कृते ड. 8. पादशब्दस्य ह. 9. पादौ पादौ ददाति क. ड. 10. दण्डनं ड. 11. अन्त नास्ति ड. 12. त्रिपदिकां इत्यधिकम् ड. 13. दण्डितः इत्यधिकम् ह. 14. व्यवसृजति इत्यधिकम् क. ह. 15. प्रातिपदिकेभ्यः इत्यधिकम् ब. ड. फ. ह. 16. प्रकारे ह. 17. इषुकः इत्यधिकम् क. ह. 18. बृहकः नास्ति क. 19. इषुपञ्चकः ङ. 20. द्रष्टव्यम् नास्ति ग. 21. इक्षुतिल इत्यधिकम् ब. ड. फ. ह.

## अनत्यन्तगतौ क्तात् । (४/२०७६)

अत्यन्तगतिः [1]अशेषसम्बन्धः, तदभावोऽनत्यन्तगतिः । अनत्यन्तगतौ गम्यमानायां[2] क्तान्तात्[3] कन्प्रत्ययो भवति । [4]भिन्नकः । छिन्नकः । अनत्यन्तगतौ इति किम् ? भिन्नम् । छिन्नम्[5] ॥

## न सामिवचने । (५/२०७७)

सामिवचने [6]उपपदे क्तान्तात् कन्प्रत्ययो न भवति । सामिकृतम् । सामिभुक्तम् । वचनग्रहणं पर्यायार्थम् । अर्धकृतम् । नेमकृतम् । सामिवचने प्रतिषेधानर्थक्यम्, [7]प्रकृत्याभिहितत्वात् ? एवं तर्हि [8]नैवायमनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि, स्वार्थिकस्य । केन पुनः [9]स्वार्थिकः कन् विहितः ? [10]एतदेव ज्ञापकं [11]भवति स्वार्थे [12]कन् इति । तत्र यदेतदुच्यते, एवं [13]हि सूत्रमभिन्नतरकं भवति, एतर्हि बहुतरकं [14]व्याप्यते इत्येवमादि, [15]तदुपपन्नं भवति ॥

## बृहत्या आच्छादने । (६/२०७८)

कन्ननुवर्तते, न प्रतिषेधः । बृहतीशब्दादाच्छादने वर्तमानात् स्वार्थे कन् प्रत्ययो भवति । बृहतिका[16] । आच्छादने इति किम् ? बृहतीछन्दः ॥

## अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः । (७/२०७९)

अषडक्ष आशितङ्गु [17]अलङ्कर्म अलम्पुरुष इत्येतेभ्यः अध्युत्तरपदात् च[18] स्वार्थे खः प्रत्ययो भवति । अविद्यमानानि षडक्षीणि अस्य इति बहुव्रीहिः । [19]बहुव्रीहौ सक्थ्यक्ष्णोः (५.४.११३/८५२) इति षच्, ततः खप्रत्ययः । अषडक्षीणो मन्त्रः । यो द्वाभ्यामेव क्रियते न बहुभिः । आशिता गावोऽस्मिन्नरण्ये आशितङ्गवीनमरण्यम् । निपातनात् पूर्वपदस्य [20]मुमागमः । अकङ्कर्मन्, अलम्पुरुषः इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' (वा. ९३) इति समासः । अलं कर्मणे अलङ्कर्मीणः । अलं पुरुषाय अलंपुरुषीणः । अध्युत्तरपदस्तत्पुरुषः । अधिशब्दः शौण्डादिषु पठ्यते । राजाधीनः[21] । नित्यश्चायं प्रत्ययः, [22]उत्तरत्र विभाषाग्रहणात् । अन्येऽपि [23]स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते, [24]तमबादयः (५.३.५५/२००१) प्राक्कनः (५.३.६४/२०१९), ञ्यादयः (५.३.११२/२०६६) प्राग्वुनः (५.४.१/२०७३), आमादयः (५.४.११/२००४) प्राङ् मयटः (५.४.२१/२०८९), बृहतीजात्यन्ताः (५.४.६/२०७८) (५.४.९/२०८१) समानान्ताश्च इति ॥

---

1. अशेषेण सम्बन्धः ब.ड.ह. 2. वर्तमानात् इत्यधिकम् क. 3. प्रातिपदिकात् इत्यधिकम् क. ड. फ. ह. 4. भिन्नकं छिन्नकं ड.ह. 5. शकलम् इत्यधिकम् ड. 6. उपपदे नास्ति ह. 7. प्रकृत्यभिहितात् ड. 8. नायम् ह. 9. स्वार्थे कविधानम् क. 10. एवं तर्हि क. 11. अनुमास्यते प.मं. 12. अपि कन् अस्ति क. 13. हि नास्ति ह. 14. व्याख्यातम् ड, व्याकरणमधीतम् ग. 15. उदाहरणं इत्यधिकम् क. 16. शाटी इत्यधिकम् क. 17. अलङ्कर्मन् ड. 18. प्रातिपदिकात् इत्यधिकम् क.ड. 19. बहुव्रीहौ नास्ति क. 20. अमागमः क. 21. ब्राह्मणाधीनः इत्यधिकम् ग.ह. 22. उत्तरसूत्रे ब.क. 23. स्वार्थिकेषु ह. 24. तरबादयः ह.

## विभाषाञ्चेरदिक्स्त्रियाम् । (८/२०८०)

अञ्चत्यन्तात् प्रातिपदिकात् [1]अदिक्स्त्रियां वर्तमानात् स्वार्थे विभाषा खः प्रत्ययो भवति । प्राक्, [2]प्राचीनम् । अर्वाक्, अर्वाचीनम् । अदिक्स्त्रियाम् इति किम् ? प्राची दिक् । [3]प्रतीची दिक् । दिग्ग्रहणं किम् ? प्राचीना ब्राह्मणी । [4]अवाचीना शिखा । स्त्रीग्रहणं किम् ? प्राचीनं दिग्रमणीयम् । [5]उदीचीनं दिग्रमणीयम् ॥

## जात्यन्ताच्छ बन्धुनि । (९/२०८१)

[6]जात्यन्तात् प्रातिपदिकात् बन्धुनि वर्तमानात् स्वार्थे छः प्रत्ययो भवति । बध्यतेऽस्मिञ् जातिः इति बन्धुशब्देन द्रव्यमुच्यते । येन ब्राह्मणत्वादिजाति[7]र्व्यज्यते तद्बन्धु द्रव्यम् । ब्राह्मणजातीयः, क्षत्रियजातीयः, [8]वैश्यजातीयः इति ब्राह्मणादिरेवोच्यते । बन्धुनि इति किम् ? ब्राह्मणजातिः शोभना ॥

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् । (१०/२०८२)

स्थानान्तात् प्रातिपदिकात् विभाषा छः प्रत्ययो भवति सस्थानेन चेत् स्थानान्तमर्थवद् भवति । सस्थानः इति [9]तुल्य उच्यते, समानं स्थानमस्य इति कृत्वा । पित्रा तुल्यः पितृस्थानीयः, [10]पितृस्थानः । मातृस्थानीयः, मातृस्थानः । राजस्थानीयः, राजस्थानः । सस्थानेन इति किम् ? गोस्थानम् । अश्वस्थानम् । इतिकरणो विवक्षार्थः । तेन बहुव्रीहिः [11]सस्थानशब्दार्थ[12]मुपस्थापयति, न तत्पुरुषः । चेच्छब्दः सम्बन्धार्थः । द्वयोर्विभाषयो[13]र्नित्या विधयः इति [14]पूर्वत्र [15]नित्यविधयः ॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । (११/२००४)

किम एकारान्तात् तिङन्ताद[16]व्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात् प्रातिपदिकात् अद्रव्यप्रकर्षे[17] आमु[18]प्रत्ययो भवति । यद्यपि [19]द्रव्यस्य स्वतः प्रकर्षो नास्ति, तथापि[20] क्रियागुणस्थः प्रकर्षो यदा द्रव्ये उपचर्यते तदाऽयं प्रतिषेधः । [21]क्रियागुणयोरेव [22]अयं प्रकर्षे प्रत्ययः[23] । किंतराम् । किंतमाम् । [24]पूर्वाह्णेतराम् । पूर्वाह्णेतमाम् । [25]पचतितराम् । पचतितमाम् । [26]उच्चैस्तराम् । उच्चैस्तमाम्[27] । अद्रव्यप्रकर्षे इति किम् ? उच्चैस्तरः । [28]उच्चैस्तमः ॥

---

1. अदिक्स्त्रियाम् नास्ति क. ह. 2. प्राचीना दिग् रमणीया ह. 3. उदीची ब. क. फ. 4. उदीचीना क. 5. उदाहरणमिदं नास्ति क. ड. 6. जातिशब्दान्तात् फ. 7. व्यवतिष्ठते ड. 8. शूद्रजातीयः इत्यधिकम् ब. 9. तुल्यस्थानम् फ. स्थानतुल्यम् ह, जातितुल्यम् क. 10. पितृस्थानः नास्ति फ. 11. सस्थानशब्दोऽर्थम् प्रा.भा. 12. उपपादयति फ. 13. मध्ये इत्यधिकम् ब.क.ड.फ. 14. पूर्वसूत्रे ह, पूर्वसूत्रेण क. ड. 15. नित्यः प्रत्ययः ब. क.ड.ह.फ. 16. अव्ययात् च क.ड, तिङोऽव्ययेभ्यः च.ह. 17. वर्तमानात् इत्यधिकम् क.फ. 18. प्रत्ययो नास्ति ब.क. ड. 19. द्रव्यस्य नास्ति क. 20. गुणक्रियास्थः ब.फ. 21. तदा इत्यधिकम् क. 22. अयं नास्ति ह. 23. इति इत्यधिकम् क. 24. एत् इत्यधिकम् ह, एतः इत्यधिकम् ड. 25. तिङ इत्यधिकम् क. ड. 26. अव्यय इत्यधिकम् ड.ह. 27. नीचैस्तराम् नीचैस्तमाम् इत्यधिकम् ड. ह. 28. उच्चैस्तमः नास्ति क. ड.

## अमु च च्छन्दसि । (१२/३६०३)

किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये । चकाराद् आमु च । 'प्रतरं[1] न आयुः' (ऋ. ४.१२.६) । 'प्रतरां नय' (वा.सं.१७.५१) । स्वरादिषु [2]अम् आम् इति पठ्यते, तस्मात् तदन्तस्याव्ययत्वम् ॥

## अनुगादिनष्ठक् । (१३/२०८३)

अनुगदति इति अनुगादी । अनुगादिन्शब्दात् स्वार्थे ठक् प्रत्ययो भवति । आनुगादिकः ॥

## णचः स्त्रियामञ् । (१४/३२१६)

'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३/३२१५) इति णच् [3]विहितः, तदन्तात्[4] स्वार्थे अञ् प्रत्ययो भवति स्त्रियां विषये । व्यावक्रोशी[5] । व्यावहासी वर्तते । स्त्रीग्रहणं [6]किमर्थम्, यावता णच् स्त्रियामेव विहितः, ततः [7]स्वार्थिकस्तत्रैव भविष्यति ? एवं तर्ह्येतज् ज्ञापयति – स्वार्थिकाः [8]प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि (म. भा. २.४३२) इति । तेन [9]गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवता इत्येवमादि उपपन्नं भवति ॥

## अणिनुणः । (१५/३२१९)

'अभिविधौ भाव इनुण्' (३.३.४४/३२१८) विहितः, तदन्तात्[10] स्वार्थे अण् प्रत्ययो भवति । सांराविणं वर्तते । सांकूटिनम्[11] ॥

## विसारिणो मत्स्ये । (१६/२०८४)

विसरति इति विसारी । विसारिन्शब्दात् स्वार्थे अण् प्रत्ययो भवति [12]मत्स्येऽभिधेये । वैसारिणो मत्स्यः । मत्स्ये इति किम् ? विसारी देवदत्तः ॥

## सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । (१७/२०८८)

[13]सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति । पौनःपुन्यम् अभ्यावृत्तिः । एककर्तृणां तुल्यजातीयानां क्रियाणां जन्मसङ्ख्यानं क्रियाभ्यावृत्तिगणनं, तत्र प्रत्ययः । पञ्चवारान् भुङ्क्ते पञ्चकृत्वः[14] । सप्तकृत्वः । सङ्ख्यायाः इति किम् ? [15]भूरीन् वारान् भुङ्क्ते । क्रियाग्रहणं [16]किमर्थम्, यावता अभ्यावृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोः ? उत्तरार्थं क्रियाग्रहणम् । 'एकस्य सकृच्च' (५.४.१९/२०८९) इत्यत्र क्रियैव गण्यते, नाभ्यावृत्तिः, असम्भवात् । अभ्यावृत्तिग्रहणं किम् ? क्रियामात्रग्रहणे मा भूत् ।

---

1. नयामः मुद्रितः पाठः, प्रतरां न आयुः फ. 2. अम् नास्ति क. 3. प्रत्ययः इत्यधिकम् ब. क. फ. 4. प्रातिपदिकात् इत्यधिकम् क. 5. व्यावचर्ची इत्यधिकम् ब. ह, व्यावलेखी इत्यधिकम् क. ड. ह. 6. किम् ह. फ. 7. स्वार्थिकोऽञ् ब. ड. ह. 8 प्रत्ययाः नास्ति क. फ. ह. 9. बहुगुडा क. 10. प्रातिपदिकात् इत्यधिकम् क. 11. वर्तते इत्यधिकम् ब. ड. फ, सांकोटिनम् ई. ह. ड, सांमार्जिनम् इत्यधिकम् ब. ड. फ. ह. 12. मत्स्याभिधेये ह. 13. सङ्ख्यावाचिभ्यः फ. 14. अह्नः भुङ्क्ते इत्यधिकम् ह, षट्कृत्वः इत्यधिकम् फ, षट्कृत्वोऽह्नः भुङ्क्ते इत्यधिकम् ड. 15. प्रभूतान् क. 16. किम् क.

पञ्च पाकाः । [1]दश पाकाः । गणनग्रहणं [2]किमर्थम्, [3]यावता गणनात्मिकैव सङ्ख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः सङ्ख्येयवचनेभ्य एव प्रत्ययः स्यात्, [4]शतवारान् भुङ्क्ते शतकृत्वः इति । इह न स्यात्, शतं वाराणां भुङ्क्ते इति । न ह्यत्राभ्यावृत्तौ शतशब्दः, सङ्ख्यानमात्रवृत्तित्वात् । गणनग्रहणात् तु सर्वत्र सिद्धं भवति ॥

## द्वित्रिचतुर्भ्यः सुच् । (१८/२०८६)

द्वि त्रि चतुर् इत्येतेभ्यः सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने [5]वर्तमानेभ्यः सुच् प्रत्ययो भवति । कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुक्तम् । चकारः स्वरार्थः ॥

## एकस्य सकृच्च । (१९/२०८७)

एकशब्दस्य सकृत् इत्ययमादेशो भवति [6]सुच् च प्रत्ययः [7]क्रियागणने । [8]कृत्वसुचोऽपवादः । अभ्यावृत्तिस्त्विह न सम्भवति । सकृद् भुङ्क्ते । सकृदधीते । एकः पाकः इत्यत्र न भवति, अनभिधानात् ॥

## विभाषा बहोर्धाऽविप्रकृष्टकाले । (२०/२०८८)

बहुशब्दात् क्रियाभ्यावृत्तिगणने वर्तमानात् विभाषा धा प्रत्ययो भवति । कृत्वसुचोऽपवादः । पक्षे सोऽपि भवति । [9]अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम् । क्रियाणामुत्पत्तयश्चेद् आसन्नकालाः भवन्ति, न विप्रकृष्टकालाः । बहुधा दिवसस्य भुङ्क्ते, बहुकृत्वो दिवसस्य भुङ्क्ते । अविप्रकृष्टकाले इति किम् ? बहुकृत्वो मासस्य भुङ्क्ते ॥

## तत्प्रकृतवचने मयट् । (२१/२०८९)

तद् इति प्रथमासमर्थविभक्तिः । प्राचुर्येण प्रस्तुतं प्रकृतम् । प्रथमासमर्थात् प्रकृतोपाधिकेऽर्थे वर्तमानात्[10] स्वार्थे मयट् प्रत्ययो भवति । टकारो ङीबर्थः । अन्नं प्रकृतम् अन्नमयम् । [11]अपूपमयम् ।

अपरे पुनरेवं सूत्रार्थमाहुः । प्रकृतम् [12]इति उच्यतेऽस्मिन् इति प्रकृतवचनम् । तदिति [13]प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति । अन्नं प्रकृत[14]मस्मिन् अन्नमयो यज्ञः । [15]अपूपमयं पर्व । वटकमयी यात्रा । [16]द्वयमपि प्रमाणम्, उभयथा सूत्रप्रणयनात् ॥

## समूहवच्च बहुषु । (२२/२०९०)

तत्प्रकृतवचने [17]इत्येव । बहुषु प्रकृतेषु उच्यमानेषु समूहवत् प्रत्यया भवन्ति । चकारात् मयट् च । मोदकाः प्रकृताः प्राचुर्येण प्रस्तुताः मौदकिकम् (४.२.४७/१२५६), मोदकमयम् । शाष्कुलिकम्, शष्कुलीमयम् । अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि ।

---

1. दश पाकाः नास्ति क. 2. किम् फ. 3. यावता सङ्ख्या गणनात्मिकैव क. 4. शतं वारान् ह, शतं ड. 5. व्यावर्तमानेभ्यः क. 6. चकारात् इत्यधिकम् ह. 7. क्रियागणनमात्रे क. 8. वाक्यमिदं नास्ति ड. फ. 9. अविप्रकृष्टकालग्रहणं ड. 10. प्रातिपदिकात् इत्यधिकम् क. 11. यवागूमयम् क.ग.ह. 12. इदम् क, नास्ति ड. 13. प्रथमासमर्थविभक्तिप्रकृतवचने क, प्रकृतवचने नास्ति ह. 14. उच्यते ड. 15. शष्कुलीमयं ड. 16. उभयमपि ह, उभयथाऽपि सूत्रप्रणयनात् द्वयमपि प्रमाणम् क. 17. इत्यनुवर्तते फ.

[1]द्वितीये सूत्रार्थे – मोदकाः प्रकृताः [2]अस्मिन् यज्ञे [3]मौदकिको यज्ञः, मोदकमयः। शाष्कुलिकः, शष्कुलीमयः ॥

## अनन्तावसथेतिहभेषजाञ्ञ्यः। (२३/२०९१)

अनन्तादिभ्यः[4] स्वार्थे ञ्यः प्रत्ययो भवति। [5]अनन्त एव आनन्त्यम्। [6]आवसथ एव [7]आवसथ्यम्। इति ह ऐतिह्यम्। निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्तते। भेषजमेव भैषज्यम्। महाविभाषया विकल्पते प्रत्ययः ॥

## देवतान्तात् तादर्थ्ये यत्। (२४/२०९२)

देवताशब्दान्तात् [8]प्रातिपदिकात् चतुर्थीसमर्थात् तादर्थ्ये यत्प्रत्ययो भवति। तदर्थ एव तादर्थ्यम्। चातुवर्ण्यादित्वात् ष्यञ् (वा. ५३९)। तद् इति प्रकृत्यर्थो निर्दिश्यते। अग्निदेवतायै इदम् अग्निदेवत्यम्। [9]पितृदेवत्यम्। [10]वायुदेवत्यम् ॥

## पादार्घाभ्यां च। (२५/२०९३)

तादर्थ्ये इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्ये अभिधेये यत्प्रत्ययो भवति। पादार्थमुदकं पाद्यम्। अर्घ्यम्। अनुक्तसमुच्चयार्थश्चकारः। [11]यथादर्शनमन्यत्रापि प्रत्ययो भवति। 'एष वै छन्दस्यः प्रजापतिः' (तै. सं. १.६.११.४)। [12]वसु, [13]अपस्, [14]ओक, कवि, क्षेम, [15]उदक, वर्चस्, निष्केवल, उक्थ, [16]जन, पूर्व, नव, सूर, मर्त, यविष्ठ इत्येतेभ्यः छन्दसि [17]स्वार्थे यत्प्रत्ययो भवति। 'अग्निरीशे वसव्यस्य' (ऋ.४.५८.८)। [18]'अपस्यो वसानाः' (मै. सं. २.६.८)। [19]द्वितीयाबहुवचनस्यालुक्। [20]अपो वसानाः इत्यर्थः। 'स्व ओक्ये' (ऋ. १.९१.१३)। 'कव्योऽसि कव्यवाहनः' (मै. सं. १.३.१२)। 'क्षेम्यमध्यवस्यति' (तै. सं. ५.२.१.७)। वायुर्वर्चस्यः। 'निष्केवल्यं शंसन्ति' (का. सं. २८.१०)। उक्थ्यं शंसति। जन्यं ताभिः। 'पूर्व्या विदुः' (अ. १९.३४.६)। 'स्तोमं जनयामि नव्यम्' (ऋ. १.१०९.२)। 'सूर्यः' (ऋ. १.२३.१७)। 'मर्त्यः' (ऋ. १.१९.२)। 'यविष्ठ्यः' (ऋ. १.३६.६)।

[६२२] आमुष्यायणामुष्यपुत्रिकेत्युपसङ्ख्यानम्।

---

1. द्वितीयसूत्रार्थे क. 2. यस्मिन् क. 3. स इत्यधिकम् क. 4. शब्देभ्यः इत्यधिकम् फ. ह. 5. अनन्तभावः एव ह, अनन्तमेव ह. 6. आवसथभावः ह. 7. आवसथ्यः क. 8. प्रातिपदिकात् नास्ति ह. 9. नास्ति क. 10. नास्ति क. ह. 11. तेन इत्यधिकम् क. ह. 12. असु क. 13. अयस् मुद्रितः पाठः 14. सुक क. 15. नास्ति ह. 16. जनि ह. 17. विषये इत्यधिकम् ह. 18. अयस्यो मुद्रितः पाठः 19. अपशब्दात् इत्यधिकम् क. 20. अयो मुद्रितः पाठः

[६२३] समशब्दादावतुप्रत्ययो [1]वक्तव्यः ।

'[2]समावद् वसति' (मै. सं. २.२.७.७) ।

[६२४] [3]नवस्य नू आदेश[4]स्त्नप्तनप्खाश्च प्रत्ययाः ।

नूत्नम्, नूतनम्, नवीनम् ।

[६२५] नश्च पुराणे प्रात् ।

पुराणे वर्तमानात् प्रशब्दान् नप्रत्ययो भवति । चकारान् नप्त्नप्खाश्च[5] । प्रणम्, प्रत्नम्, (ऋ. १.३६.४), प्रतनम्, प्रीणम् ।

[६२६] भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः ।

भागधेयम् । रूपधेयम् । नामधेयम् ।

[६२७] मित्राच्छन्दसि ।

'मित्रधेये यतस्व' (तै. सं. ४.१.७.२) ।

[६२८] [6]आग्नीध्रसाधारणादञ्[7] ।

'आग्नीध्रम्' (तै. सं. ३.१.६.१) । 'साधारणम्' (तै. सं. २.६.१.६) । 'साधारणी' (ऋ. १.१६०.४) । स्त्रियां ङीप् – आग्नीध्री

वाप्रकरणाच्च [8]विकल्पन्ते एतान्युपसंख्यानानि, तेन यथाप्राप्तमपि भवति, आग्नीध्रा शाला, [9]साधारणा भूः इति ।

[६२९] [10]अयवसमरुद्‌भ्यां छन्दस्यञ् वक्तव्यः ।

'आयवसे रमन्ते' (तै. सं. ५.२.८.३) । 'मारुतं [11]शर्धः' (ऋ. १.१०६.१) ॥

## अतिथे[12]र्ञ्यः । (२६/२००४)

तादर्थ्ये इत्येव । अतिथिशब्दात् चतुर्थीसमर्थात् तादर्थ्ये अभिधेये [13]ञ्यः प्रत्ययो भवति । अतिथये इदम् आतिथ्यम् ॥

## देवात्तल् । (२७/२००६)

तादर्थ्ये इति निवृत्तम् । देवशब्दात् स्वार्थे तल्प्रत्ययो भवति । देव [14]एव देवता ॥

1. भवति ग. 2. समावद्वसतु मुद्रितः पाठः 3. नवशब्दस्य क. फ. 4. भवति इत्यधिकम् क. 5. प्रत्ययाः वक्तव्याः इत्यधिकम् ग. 6. अग्नीध्र ङ. 7. वक्तव्यः इत्यधिकम् क. 8. विकल्प्यन्ते ह. 9. साधारणी ग. क. 10. अयवस् ह. 11. शतम् ह, अयवसं मारुतं वसनम् क, आयवसः सामः ब. 12-13. ण्यः ङ. 14. एव नास्ति क.

## अवेः कः। (२८/२००६)

अविशब्दात् स्वार्थे कः प्रत्ययो भवति। अविरेव अविकः॥

## यावादिभ्यः कन्। (२९/२००७)

याव इत्येवमादिभ्यः[1] स्वार्थे कन्प्रत्ययो भवति। याव एव यावकः। मणिकः।

याव। मणि। अस्थि[2]। चण्ड। पीत। स्तम्ब। 'ऋतावुष्णशीते' (ग. सू. १४४)। 'पशौ लूनवियाते' (ग. सू. १४५)। 'अणु निपुणे' (ग. सू. १४६)। 'पुत्र कृत्रिमे' (ग. सू. १४७)। 'स्नात वेदसमाप्तौ' (ग. सू. १४८)। 'शून्य रिक्ते' (ग. सू. १४९)। 'दान कुत्सिते' (ग. सू. १५०)। 'तनु सूत्रे' (ग. सू. १५१)। 'ईयसश्च' (ग. सू. १५२)। श्रेयस्कः। ज्ञात। 'कुमारीक्रीडनकानि च' (ग. सू. १५३)। यावादिः॥

## लोहितान्मणौ। (३०/२००८)

लोहितशब्दात् मणौ वर्तमानात् स्वार्थे कन्प्रत्ययो भवति। लोहितो मणिः [3]लोहितकः[4]। मणौ इति किम्? लोहितः[5]॥

## वर्णे चानित्ये। (३१/२०९९)

अनित्ये वर्णे वर्तमानात् लोहितशब्दात् स्वार्थे [6]कन्प्रत्ययो भवति। लोहितकः कोपेन। लोहितकः पीडनेन। अनित्ये इति किम्? लोहितो गौः। लोहितं रुधिरम्[7]।

[६३०] लोहिताल्लिङ्गबाधनं वा[8] वक्तव्यम्। (म. भा. २.४३३)

लोहितिका कोपेन। लोहिनिका कोपेन॥

## रक्ते। (३२/२१००)

लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात् कन्प्रत्ययो भवति। लोहितकः कम्बलः। लोहितकः पटः। लिङ्गबाधनं वा इत्येव[9], लोहितिका, [10]लोहिनिका शाटी॥

## कालाच्च। (३३/२१०१)

'वर्णे चानित्ये' (५.४. ३१/२०९९), 'रक्ते' (५.४. ३२/२१००) इति द्वयमप्यनुवर्तते। कालशब्दात् अनित्ये[11] वर्तमानात् रक्ते च कन्प्रत्ययो भवति। कालकं मुखं वैलक्ष्येण। रक्ते – कालकः पटः। कालिका [12]शाटी॥

---

1. प्रातिपदिकेभ्यः इत्यधिकम् ब. क. 2. तालु मिता लोष्ट इत्यधिकम् फ. 3. लोहितिकः फ. 4. मणिः इत्यधिकम् क. 5. गौ इत्यधिकम् क. 6. कन् नास्ति क. 7. लोहितः पर्वतः इत्यधिकम् ब. ड. 8. इति इत्यधिकम् क. 9. वक्तव्यम् इत्यधिकम् फ. 10. उदाहरणमिदं नास्ति क. 11. वर्णे इत्यधिकम् क. ड. 12. पटी फ.

## विनयादिभ्यष्ठक् । (३४/२१०२)

विनय इत्येवमादिभ्यः[1] स्वार्थे ठक् प्रत्ययो भवति । विनय एव वैनयिकः । सामयिकः । औपयिकः । [2]विभाषाग्रहणेन प्रत्ययो विकल्प्यते ।

विनय । समय । 'उपायाद्ध्रस्वत्वं च' (ग. सू. १५४) । सङ्गति । कथञ्चित् । अकस्मात् । समयाचार । उपचार । समाचार । [3]व्यवहार । सम्प्रदान । समुत्कर्ष । समूह । विशेष । अत्यय[4] । [5]विनयादिः ॥

## वाचो व्याहृतार्थायाम् । (३५/२१०३)

[6]व्याहृतः प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्तमानाद् वाच्शब्दात् स्वार्थे ठक्प्रत्ययो भवति । पूर्वमन्ये-नोक्तार्थत्वात् सन्देशवाग् व्याहृतार्था इत्युच्यते । वाचिकं [7]कथयति । वाचिकं श्रद्दधे । व्याहृतार्थायाम् इति किम् ? मधुरा वाक् देवदत्तस्य ॥

## तद्युक्तात् कर्मणोऽण् । (३६/२१०४)

व्याहृतार्थया वाचा यत् कर्म [8]युक्तं, तदभिधायिनः कर्मशब्दात् स्वार्थे अण् प्रत्ययो भवति । [9]कर्म एव कार्मणम् । वाचिकं श्रुत्वा तथैव यत् कर्म [10]क्रियते तत् कार्मणम् इत्युच्यते ।

[६३१] अण्प्रकरणे कुलालवरुडनिषाद[11]कर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसङ्ख्यानम् । (म.भा.२.४३५)

कुलाल एव कौलालः (का. ३४. १.७) । वारुडः । 'नैषादः' (वा.सं. ३०.८) । '[12]कार्मारः' (ऋ. ९.११२.२) । 'चाण्डालः' (वा. सं ३०. ११) । 'मैत्रः' (वा. सं. ३९. ५) । 'आमित्रः' (ऋ. ६. २८. ३) ।

[६३२] साम्नायानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः । एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते (म. भा. २. ४३५) ।

'साम्नाय्यम्' (तै.सं. २.५.३.७) । 'आनुजावरः' (तै.सं. २. ३. ४. २) । 'आनुषूकः' (तै.सं. २.३.४.४) । आष्टुभः । 'चातुष्प्राश्यः' (काठ.सं. ८. १०) । 'राक्षोघ्नम्' (तै.सं.५.१.१०.२) । वैयातः । वैकृतः । 'वारिवस्कृतः' (तै.सं. ४.५.२.२) । 'आग्रायणः' (मै.सं. २.७.१९) । आग्रहायणः । 'सान्तपनः' (वा.सं. १७.८५) ॥

## ओषधेरजातौ । (३७/२१०५)

ओषधिशब्दादजातौ वर्तमानात् स्वार्थेऽण्प्रत्ययो भवति । औषधं पिबति । औषधं ददाति । अजातौ इति किम् ? ओषधयः [13]क्षेत्रे रूढा भवन्ति ॥

1. प्रातिपदिकेभ्यः इत्यधिकम् व. क. 2. महा इत्यधिकम् क. 3. संव्यवहार क. 4. अनत्ययः संदेशः इत्यधिकम् क. 5. नास्ति फ. 6. संदेशः इत्यधिकम् क, अन्येन इत्यधिकम् ड. 7. चिन्तयति ड. 8. युक्तं नास्ति क. 9. कर्मैव कार्मणः ह. 10. करोति क. 11. कर्मार नास्ति क. म. भा. 12. कार्मारः नास्ति क. 13. क्षेत्रे जाताः ह, क्षेत्रसुरा भवन्ति ड.

## प्रज्ञादिभ्यश्च। (३८/२१०६)

प्रजानाति इति प्रज्ञः। प्रज्ञ इत्येवमादिभ्यः [1]प्रातिपदिकेभ्यः स्वार्थे अण्प्रत्ययो भवति। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। यस्यास्तु प्रज्ञा [2]विद्यते सा [3]प्राज्ञा 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५.२.१०१/१९०८) इति। विदन्नित्यत्र पठ्यते। विदेः शत्रन्तस्य ग्रहणं, 'विदेः शतुर्वसुः' (७.१.३६/३१०५) [4]इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः। अन्यतरस्यांग्रहणं वा तत्रानुवर्तते, 'तुह्योस्तातङाशिष्यन्यतरस्याम्' (७.१.३५/२१९७) इति।

प्रज्ञ। [5]वणिज्। उशिज्। उष्णिज्। प्रत्यक्ष। विद्वस्। [6]विदन्। षोडन्। [7]षोडश। विद्या। मनस्। 'श्रोत्र शरीरे' (ग.सू. १५५)–श्रौत्रम्। 'जुह्वत् कृष्णमृगे' (ग.सू. १५६)। चिकीर्षत्। चोर। [8]शत्रु। योध। चक्षुस्। वक्षस्। धूर्त। [9]वस्। एत्। मरुत्। क्रुङ। राजा। सत्वन्तु। [10]दशार्ह। वयस्। [11]आतुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु[12]। प्रज्ञादिः॥

## मृदस्तिकन्। (३९/२१०७)

मृच्छब्दात् स्वार्थे[13] तिकन्प्रत्ययो भवति[14]। विकल्पः सर्वत्रानुवर्तते। मृद् एव मृत्तिका॥

## सस्नौ प्रशंसायाम्। (४०/२१०८)

[15]प्रशंसोपाधिकेऽर्थे वर्तमानान् मृच्छब्दात् [16]स स्न इत्येतौ प्रत्ययौ भवतः। रूपपः (५.३.६६/२०२१) अपवादः। प्रशस्ता मृद् मृत्सा, मृत्स्ना। नित्यश्चायं [17]प्रत्ययः, उत्तरसूत्रेऽन्यतरस्यांग्रहणात्॥

## वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि। (४१/३६०४)

प्रशंसायाम् [18]इत्येव। [19]वृकज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्तमानाभ्यां [20]यथासङ्ख्यम् तिल्तातिलौ प्रत्ययौ भवतः छन्दसि विषये। रूपपोऽपवादौ[21]। 'वृ॒कति॑ः' (ऋ. ४.३१.४)। ज्ये॒ष्ठता॑तिः (ऋ. ५.४४.१)[22]॥

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। (४२/२१०९)

बह्वर्थात् अल्पार्थाच्च कारकाभिधायिनः शब्दात् शस्प्रत्ययो भवति अन्यतरस्याम्। विशेषानभिधानाच्च सर्वं कर्मादिकारकं गृह्यते। बहूनि ददाति बहुशो ददाति। [23]अल्पं ददाति अल्पशो ददाति। बहुभिर्ददाति बहुशो ददाति। अल्पेन, अल्पशः[24]। बहुभ्यः,[25] बहुशः। अल्पाय, अल्पशः इत्येवमाद्युदाहार्यम्। बह्वल्पार्थात्

---

1. प्रातिपदिकेभ्यः नास्ति फ. 2. शेष्यते क. 3. प्राज्ञी भवति ग. 4. इत्यत्र क. 5. वेदिका ग. 6. विदर्थ ह. 7. षोडश, विद्या नास्ति फ.ह. 8. शतु क. 9. वसु ह. 10. दशार्ध ह. 11. आसुर ह. 12. बन्धक चण्डाल रोहिण दर्प आकृतिगणोऽयम् इत्यधिकम् क. 13. वर्तमानात् इत्यधिकम् क. 14. इति इत्यधिकम् फ. 15. प्रशंसोपाधिकात् स्वार्थे क. 16. स्वार्थे इत्यधिकम् ड.ह. 17. प्रत्ययः नास्ति क. 18. इति वर्तते क. 19. वृकज्येष्ठशब्दाभ्यां क. 20. यथासंख्यम् नास्ति ह. 21. छन्दसि विषये इत्यधिकम् ह. 22. वृकताति। यो नो मरुतो वृकताति मर्त्यैः इत्यधिकम् ग. 23. अल्पान् क. 24. अल्पेभ्यः ददाति इत्यधिकम् क. 25. ददाति इत्यधिकम् क.

इति [1]किम् ? गां ददाति। अश्वं ददाति। कारकात् इति किम् ? बहूनां स्वामी। अल्पानां स्वामी। अर्थग्रहणात् पर्यायेभ्योऽपि भवति। भूरिशो ददाति। स्तोकशो ददाति।

[६३३] बह्वल्पार्थान् मङ्गलामङ्गलवचनम्। (म. भा. २. ४३६)

यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते। बहुशो ददाति इति आभ्युदयिकेषु कर्मसु। अल्पशो ददाति इति अनिष्टेषु [2]कर्मसु॥

## सङ्ख्यैकवचनाच्च वीप्सायाम्। (४३/२११०)

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यः एकवचनाच् च[3] वीप्सायां [4]द्योत्यायां शस्प्रत्ययो भवति अन्यतरस्याम्। द्वौ द्वौ [5]मोदकौ ददाति द्विशः[6]। त्रिशः[7]। एकवचनात् खल्वपि – कार्षापणं कार्षापणं [8]ददाति कार्षापणशः[9]। माषशः[10]। पादशो ददाति[11]। एकोऽर्थ उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दाः वृत्तावेकार्था एव भवन्ति। सङ्ख्यैकवचनात् इति किम् ? घटं घटं ददाति। वीप्सायाम् इति किम् ? द्वौ ददाति। कार्षापणं ददाति। कारकात् इत्येव, द्वयोर्द्वयोः स्वामी। कार्षापणस्य कार्षापणस्य स्वामी॥

## प्रतियोगे पञ्चम्यास्तसिः। (४४/२१११)

प्रतिना [12]कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्[13] तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युरर्जुनतः प्रति। वाग्रहणानुवृत्ते[14]र्विकल्पेन भवति। वासुदेवादर्जुनादित्यपि [15]भवति।

[६३४] तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानम्।

आदौ आदितः[16]। मध्यतः। पार्श्वतः। पृष्ठतः। [17]आकृतिगणश्चायम्॥

## अपादाने चाहीयरुहोः। (४५/२११२)

अपादाने या पञ्चमी [18]तस्याः पञ्चम्याः वा तसिः प्रत्ययो भवति, तच्चेद् अपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामतः आगच्छति, ग्रामात्। चोरतः बिभेति, चोरात्[19]। अध्ययनतः पराजयते, अध्ययनात्[20]। अहीयरुहोः इति किम् ? सार्थाद् हीयते। पर्वतादवरोहति। [21]हीयते इति विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर्मा भूत्, भूमित उज्जिहीते, भूमेरुज्जिहीते। कथं 'मन्त्रो हीनः स्वरतो वर्णतो वा' (पा. शि. ५२) इति। नैषा पञ्चमी। किं तर्हि, तृतीया। स्वरेण वर्णेन वा हीनः [22]इत्यर्थः॥

---

1. किम् नास्ति क. 2. कर्मसु नास्ति क. 3. कारकात् इत्यधिकम् ब. ड. 4. गम्यमानायां क. 5. मोदकौ नास्ति क. 6. ददाति इत्यधिकम् क. फ. 7. ददाति इत्यधिकम् क. 8. ददाति नास्ति ब. ड. 9. ददाति इत्यधिकम् क. 10. कुडवशः इत्यधिकम् क. 11. कुण्डशो ददाति। प्रस्थशो ददाति इत्यधिकम् ड. 12. कर्मप्रवचनीयेषु ग. 13. प्रातिपदिकात् इत्यधिकम् क. 14. विकल्पोऽपि भवति ह. 15. भवति नास्ति क. 16. अग्रतः अन्ततः इत्यधिकम् क. ह, अन्ततः इत्यधिकम् ड. 17. आकृतिगणोऽयम् क. 18. तदन्तात् क. 19. बिभेति इत्यधिकम् क. 20. पराजयते इत्यधिकम् क. 21. हीय ड. 22. इति ह.

## अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः (४६/२११३)

अतिक्रम्य ग्रहः अतिग्रहः। अचलनमव्यथनम्। क्षेपो निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद्[1] वा तसिः प्रत्ययो भवति, सा चेत् कर्तरि न भवति। [2]वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते। [3]चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते। [4]सुष्ठुवृत्तवान् अन्यानतिक्रम्य [5]वृत्तेन गृह्यते इत्यर्थः। अव्यथने – वृत्तेन न व्यथते वृत्ततो न व्यथते। [6]चारित्रेण न व्यथते चारित्रतो न व्यथते। वृत्तेन न चलति इत्यर्थः। क्षेपे – वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः। वृत्तेन निन्दितः इत्यर्थः। अकर्तरि इति किम्? देवदत्तेन क्षिप्तः[7]॥

## हीयमानपापयोगाच्च। (४७/२११४)

'अकर्तरि तृतीयायाः' (५.४.४६/२११३) इत्येव। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात् परा या तृतीया विभक्तिरकर्तरि तदन्ताद् वा तसिः प्रत्ययो भवति। वृत्तेन हीयते वृत्ततो हीयते। चारित्रेण हीयते चारित्रतो हीयते। पापयोगात् – वृत्तेन पापः वृत्ततः पापः। चारित्रेण पापः चारित्रतः पापः।

क्षेपस्य च अविवक्षायां [8]तत्त्वाख्यायामिदमुदाहरणम्। क्षेपे हि पूर्वेणैव सिद्धम्[9]। अकर्तरि इत्येव, देवदत्तेन हीयते[10]॥

## षष्ठ्या व्याश्रये। (४८/२११५)

नानापक्षसमाश्रयो व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्जुनस्य पक्षे, कर्णस्य पक्षे इत्यर्थः। व्याश्रये इति किम्? वृक्षस्य शाखा॥

## रोगाच्चापनयने। (४९/२११६)

रोगो व्याधिः। तद्वाचिनः [11]शब्दाद् या षष्ठी विभक्तिः, तदन्ताद् वा तसिः प्रत्ययो भवति अपनयने गम्यमाने। अपनयनं प्रतीकारः। चिकित्सा इत्यर्थः। प्रवाहिकातः कुरु[12]। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुरु इत्यर्थः। अपनयने इति किम्? प्रवाहिकायाः प्रकोपनं कुरु॥

---

1. स्वार्थे इत्यधिकम् ड. 2. वृत्तेन अतिक्रम्य वर्तते क. 3. उदाहरणमिदं नास्ति क. 4. सुष्ठुन्यायेनातिक्रम्य गृह्यते इत्यर्थः क. 5. वृत्तेन नास्ति फ. 6. उदाहरणमिदं नास्ति फ. 7. अतिग्रहादिषु इति किम्? वृत्तेन भिन्नः देवदत्तेनातिगृहीतो यज्ञदत्तः। देवदत्तेन क्षिप्तः यज्ञदत्तः। तृतीयायाः इति किम्? वृत्तेन भिन्नं देवदत्तमतिगृह्णाति इत्यधिकम् ड. 8 तत्त्वाख्याने ब. ड. फ. ह. 9. स्यात् इत्यधिकम् फ, सिद्धत्वात् क. 10. हीयमानपापयोगात् इति किम्? वृत्तेन भिन्नः। तृतीयायाः इति किम्? देवदत्तं जहाति ग्रामे हीयते। ग्रामे पापः इत्यधिकम् ड. 11. प्रातिपदिकात् परा क. ह, परा ड. 12. प्रतिकारं कुरु इत्यर्थः इत्यधिकम् ब. ड. क.

## अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः । (५०/२११७)

कारणस्य विकाररूपेण अभूतस्य तदात्मना भावः अभूततद्भावः । सम्पद्यतेः कर्ता सम्पद्यकर्ता । सम्पद्यकर्तरि वर्तमानात् प्रातिपदिकात् अभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः प्रत्ययो भवति । अशुक्लः शुक्लः सम्पद्यते, [1]तं करोति शुक्लीकरोति । मलिनं शुक्लीकरोति । शुक्लीभवति । शुक्लीस्यात् । घटीकरोति [2]मृदम् । घटीभवति । घटीस्यात् । अभूततद्भावे इति किम् ? शुक्लं करोति । नात्र प्रकृतिर्विवक्षिता । कृभ्वस्तियोगे इति किम् ? अशुक्लः शुक्लो जायते । सम्पद्यकर्तरि इति किम्, यावता अभूततद्भावसामर्थ्याल् [3]लब्धमेव सम्पद्यकर्तृत्वम् ? कारकान्तर[4]सम्पत्तौ मा भूत्, अदेवगृहे देवगृहे [5]सम्पद्यते । देवगृहस्याधेयविशेष[6]सम्बन्धेनाभूततद्भावः सत्त्वाधिकरणस्य, न कर्तुः इति ॥

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । (५१/२१२१)

अरुःप्रभृतीना[7]मन्तस्य लोपो भवति च्विश्च प्रत्ययः । अत्र सर्वविशेषणसम्बन्धात् पूर्वेणैव प्रत्ययः सिद्धः, [8]लोपमात्रार्थ आरम्भः । अनरुररुः सम्पद्यते, [9]तं करोति अरूकरोति । अरूभवति । अरूस्यात् । मनस् – [10]उन्मनीकरोति । उन्मनीभवति । उन्मनीस्यात् । चक्षुस् – उच्चक्षूकरोति । उच्चक्षूभवति । उच्चक्षूस्यात् । चेतस् – विचेतीकरोति । विचेतीभवति । विचेतीस्यात् । रहस् – [11]विरहीकरोति । विरहीभवति । विरहीस्यात् । रजस् – विरजीकरोति । विरजीभवति । विरजीस्यात् ॥

## विभाषा साति कार्त्स्न्ये । (५२/२१२२)

अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि इति सर्वमनुवर्तते । अस्मिन् विषये विभाषा सातिः प्रत्ययो भवति कार्त्स्न्ये गम्यमाने । यदि प्रकृतिः [12]कृत्स्नां विकारात्मतामापद्यते इत्यर्थः । [13]अग्निसाद्भवति शस्त्रम्, अग्नीभवति [14]शस्त्रम् । [15]उदकसाद्भवति, उदकीभवति [16]लवणम् । कार्त्स्न्ये इति किम् ? एकदेशेन पटः शुक्लीभवति । विभाषाग्रहणं [17]च्वेः प्रापकम् । प्रत्ययविकल्पस्तु महाविभाषयैव सिद्धः ॥

## अभिविधौ सम्पदा च । (५३/२१२४)

अभिविधिः अभिव्याप्तिः । अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदा योगे[18], चकारात् कृभ्वस्तिभिश्च । विभाषाग्रहणानुवृत्तेः [19]च्विरप्यभ्यनुज्ञायते । स तु [20]कृभ्वस्तिभिरेव योगे भवति, न [21]सम्पदा । [22]अग्निसात्सम्पद्यते, अग्निसाद्भवति । उदकसात्सम्पद्यते[23], [24]उदकसाद्भवति लवणम् ।

---

1. तमन्यः करोति ड. 2. मृदं नास्ति क. 3. लभ्यमेव फ, लभ्यमेव अभूततद्भावसामर्थ्यम् ह, लभ्यते एव ड. 4. सम्भूतौ ह. 5. भवति ह. 6. सम्बन्धः क. 7. अन्त्यस्य क. ह. 8. लोपमात्रार्थं वचनम् ब. क. ह. फ. 9. तं करोति नास्ति फ. 10. मनीकरोति क. 11. रहीकरोति क. 12. कृत्स्नविकारात्मतां फ, कृत्स्ना सर्वा विकारमापद्यते ह. 13. अनग्निः अग्निः सम्पद्यते इत्यधिकम् क. 14. शस्त्रम् नास्ति ह. 15. उदकसात् करोति लवणम् । उदकीकरोति । उदकीस्यात् क. 16. लवणं नास्ति ह. 17. शेषभावज्ञापकम् क. 18. च इत्यधिकम् ह. 19. च्विरस्याभ्यनुज्ञायते फ, च्विरभ्यनुज्ञायते क. 20. कृभ्वस्तियोगे एव ड. 21. च इत्यधिकम् ह. 22. असम्पदा इत्यधिकम् क. 23. लवणम् इत्यधिकम् क. 24. योगे इत्यधिकम् ह.

[1]अग्नीभवति। [2]उदकीभवति। अथाभिविधेः कार्त्स्न्यस्य च को विशेषः? यत्रैकदेशेनापि सर्वा[3] प्रकृति[4]विकारमापद्यते सोऽभिविधिः, यथाऽस्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात्सम्पद्यते, वर्षासु सर्वं लवणमुदकसात्सम्पद्यते इति। कार्त्स्न्यं तु [5]सर्वात्मना [6]द्रव्यस्य विकाररूपापत्तौ भवति॥

## तदधीनवचने। (५४/२१२५)

अभूततद्भावे इति निवृत्तम्, अर्थान्तरोपादानात्। कृभ्वस्तियोगे सम्पदा च इति वर्तते। तदधीनं तदायत्तं, तत्स्वामिकमित्यर्थः। स्वामि[7]सामान्यम्, ईशितव्यसामान्यं च तदधीनशब्देन [8]निर्दिश्यते। स्वामि[9]विशेषवाचिनः प्रातिपदिकात् ईशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे। राजाधीनं करोति राजसात्करोति। राजसाद्भवति। राजसात्स्यात्। राजसात्सम्पद्यते। ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्सम्पद्यते॥

## देये त्रा च। (५५/२१२६)

तदधीनवचने च इति [10]अनुवर्तते। तस्य विशेषणं देयग्रहणम्। दातव्यं देयम्। तदधीने देये त्रा प्रत्ययो भवति, चकारात् सातिश्च कृभ्वस्तिभिः सम्पदा च योगे। ब्राह्मणेभ्यो देयम् इति यद् [11]विज्ञातम्, तद् यदा तेषां [12]समर्पणेन तदधीनं [13]क्रियते तदा[14]त्रा प्रत्ययः। ब्राह्मणाधीनं [15]देयं करोति ब्राह्मणसा[16]त्करोति। ब्राह्मणत्रा करोति। ब्राह्मणत्रा भवति। ब्राह्मणत्रा स्यात्। [17]ब्राह्मणत्रा सम्पद्यते। देये इति किम्? राजसाद् भवति [18]राष्ट्रम्॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्। (५६/२१२७)

सातिर्निवृत्तः, त्रा प्रत्ययोऽनुवर्तते। देवादिभ्यः प्रातिपदिकेभ्यः [19]द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो भवति बहुलम्। [20]कृभ्वस्तिभिः इति नात्र सम्बध्यते। [21]सामान्येन विधानम्। देवान् गच्छति देवत्रा गच्छति। देवेषु वसति देवत्रा वसति। मनुष्यान् गच्छति मनुष्यत्रा गच्छति। मनुष्येषु वसति मनुष्यत्रा वसति। [22]एवमन्येष्वप्युदाहार्यम्। पुरुषान् गच्छति पुरुत्रा गच्छति। मर्त्यान् [23]गच्छति मर्त्यत्रा [24]गच्छति। मर्त्येषु वसति मर्त्यत्रा वसति। [25]बहुलवचनादन्यत्रापि भवति, 'बहुत्रा [26]जीवतो मनः' (पै. सं. १९. ३४. ४) इति॥

## अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्। (५७/२१२८)

यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः। तस्यानुकरणमव्यक्तानुकरणम्। [27]द्व्यच् अवरार्धं यस्य तद् द्व्यजवरार्धम्। अवरशब्दो[28]ऽपकर्षे। [29]यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं सम्पद्यते,

---

1. अग्निर्भवति ह. 2. असम्पदा इत्यधिकम् ह. 3. च इत्यधिकम् फ. 4. विकाररूपं सम्पद्यते फ, ह, सर्वाः प्रकृतयो विकारमापद्यन्ते क. 5. सर्वात्मकस्य क. 6. द्रव्यविकाररूपापत्तौ क, विकारज्ञापकार्थम् ह. 7. सामान्यमिति तस्य सामान्यं च ह. 8. उच्यते क. 9. विशेषवाचिभ्यः प्रातिपदिकेभ्यः क. 10. वर्तते क. ह. 11. प्रतिज्ञानं क. 12. सम्पत्तौ ह. 13. भवति ब. ड. 14. त्रा नास्ति क. ड. ह. 15. देयं नास्ति क. 16. संपद्यते ब. ड. फ. 17. ब्राह्मणसात्सम्पद्यते ड. 18. राज्यम् ड, नास्ति क. 19. द्वितीयार्थेन ब, द्वितीयार्थे सप्तम्यर्थे च ड. 20. कृभ्वस्तियोगः ब. क. 21. सामान्येन नास्ति फ. 22. वाक्यमिदं नास्ति ब. क. ड. फ. 23–24. वसति ब. क. ड. फ. 25. बहुलग्रहणात् फ. 26. जीवति फ, गच्छति क. 27. द्वौ अचौ यत्र इत्यधिकम् ड. 28. प्रभूतार्थे ड. 29. यस्य नास्ति

तस्मादव्यक्तानुकरणाद् अनितिपराड् डाच् प्रत्ययो भवति । कृभ्वस्तियोगे [1]इत्यनुवर्तते । [2]यस्य च द्विर्वचने कृते [3]द्व्यजवरार्धं ततः प्रत्ययः । 'डाचि बहुलं द्वे भवतः' (६.१.९९/८२ वा.) इति विषयसप्तमी । डाचि विवक्षिते द्विर्वचनमेव पूर्वं [4]क्रियते, पश्चात्[5] प्रत्ययः । [6]पटपटाकरोति । पटपटाभवति । पटपटास्यात् । दमदमाकरोति । दमदमाभवति । दमदमास्यात् । अव्यक्तानुकरणात् इति किम् ? दृषत्करोति । द्व्यजवरार्धात् इति किम् ? श्रत्करोति । अवरग्रहणम् किम् ? खरटखरटाकरोति । त्रपटत्रपटाकरोति । अनितौ इति किम् ? पटिति करोति । चकारः स्वरार्थः, स्वरितबाधनार्थः । पटपटासि, [7]अत्र 'स्वरितो वाऽनुदात्ते पदादौ' (८.२.६/३६५९) इति [8]स्वरितो न भवति । केचिद् द्व्यजवराध्यार्दिति [9]यकारं पठन्ति, स स्वार्थिको विज्ञेयः ॥

## कृञो द्वितीयतृतीयशम्बबीजात् कृषौ । (५८/२१२९)

[10]द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे, [11]नान्यत्र । [12]पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थम् । द्वितीयाकरोति । द्वितीयं कर्षणं विलेखनं[13] करोति इत्यर्थः । तृतीयाकरोति । शम्बा[14]करोति । अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषति इत्यर्थः । बीजाकरोति । सह बीजेन[15] विलेखनं करोति इत्यर्थः । कृषौ इति किम् ? द्वितीयं करोति [16]पदम् ॥

## सङ्ख्यायाश्च गुणान्तायाः । (५९/२१३०)

कृञः इति अनुवर्तते, कृषौ इति च । सङ्ख्यावाचिनः [17]शब्दस्य गुणशब्दोऽन्ते समीपे यत्र [18]सम्भवति सा सङ्ख्या गुणान्ता इत्युच्यते । तादृशात् प्रातिपदिकात् [19]कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे । द्विगुणं [20]विलेखनं करोति क्षेत्रस्य [21]द्विगुणाकरोति क्षेत्रम् । त्रिगुणाकरोति[22] । कृषौ इति किम् ? द्विगुणां करोति रज्जुम्[23] ॥

## समयाच्च यापनायाम् । (६०/२१३१)

कृञः इत्येव । कृषौ इति निवृत्तम् । [24]कर्तव्यस्यावसरप्राप्तिः समयः, तस्यातिक्रमणं यापना । समयशब्दाद् यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे । समयाकरोति । समयं यापयति, कालक्षेपं करोति इत्यर्थः । यापनायाम् इति किम् ? समयं करोति[25] ॥

---

1. इति निवृत्तम् क, इति निवर्तते ह 2. यत्र क. ड. 3. द्व्यजवरार्धता सम्भवति क. ड. फ. ह. 4. क्रियते नास्ति क. 5. डाच् प्रत्ययः ह. 6. उदाहरणमिदं नास्ति क. 7. अत्र नास्ति क. 8. स्वरितप्रत्ययः ब. क. ड. 9. यकारान्तं ड. 10. द्वितीया तृतीया इत्येतेभ्यः ब. क. ह. 11. सति इत्याधिकम् क. ड, नान्यत्र नास्ति फ. 12. पुनः नास्ति क. 13. क्षेत्रस्य इत्यधिकम् ब. ड. 14. कृषति ब. क. ड. 15. कृषति इत्यधिकम् क. फ 16. पटन् ब. क. ड. ग. फ. ह. 17. शब्दस्य–सा सङ्ख्या नास्ति फ 18. भवति क. 19. कृषावभिधेयात् ह. 20. विलेखनं नास्ति फ. 21. द्विगुणं ह, द्विगुणीकरोति, द्विः कृषति इत्यर्थः क. 22. क्षेत्रम् इत्यधिकम् ड. 23. त्रिगुणां करोति रज्जुम् इत्यधिकम् फ. 24. कर्तव्यावसरप्राप्ति क. ह. 25. मिथो महाजनः सशपथं संकेतम् करोति इत्यर्थः इत्यधिकम् ड.

## सपत्रनिष्पत्रादतिव्यथने । (६१/२१३२)

कृञः इत्येव । सपत्रनिष्पत्रशब्दाभ्याम् अतिव्यथने डाच् प्रत्ययो [1]भवति कृञो योगे [2]सति । अतिव्यथनम् अतिपीडनम् । सपत्राकरोति मृगं व्याधः । सपत्रं शरमस्य शरीरे [3]प्रवेशयति इत्यर्थः । निष्पत्राकरोति । शरीराच्छरमपरपार्श्वे निष्क्रामयति इत्यर्थः । अतिव्यथने इति किम् ? सपत्रं वृक्षं करोति [4]जलसेचकः । निष्पत्रं वृक्षतलं करोति [5]भूमिशोधकः ॥

## निष्कुलान्निष्कोषणे । (६२/२१३३)

कृञः इत्येव । निष्कुलशब्दात् निष्कोषणे [6]वर्तमानात् कृञो योगे डाच् प्रत्ययो भवति । निष्कोषणम् अन्तरवयवानां बहिर्निष्कासनम् । निष्कुलाकरोति [7]पशून् । निष्कुष्णाति इत्यर्थः । निष्कोषणे[8] इति किम् ? [9]निष्कुलान् करोति शत्रून् ॥

## सुखप्रियादानुलोम्ये । (६३/२१३४)

[10]सुखप्रियशब्दाभ्याम् आनुलोम्ये[11] वर्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति । आनुलोम्यम् अनुकूलता, [12]आराध्यचित्तानुवर्तनम् । सुखाकरोति । प्रियाकरोति । स्वाम्यादेः [13]चित्तमाराधयति इत्यर्थः । सुखं प्रियं [14]वा कुर्वन्नप्यानुलोम्येऽवस्थित एवमुच्यते । आनुलोम्ये इति किम् ? सुखं करोति, प्रियं करोति औषधपानम् ॥

## दुःखात् प्रातिलोम्ये । (६४/२१३५)

कृञः इत्येव । दुःखशब्दात् प्रातिपदिकात् प्रातिलोम्ये[15] गम्यमाने डाच् प्रत्ययो भवति कृञो योगे । प्रातिकूल्यं प्रतिकूलता । स्वाम्यादेश्चित्तपीडनम् । दुःखाकरोति भृत्यः[16] । प्रातिलोम्ये इति किम् ? दुःखं करोति कदन्नम् ॥

## शूलात् पाके । (६५/२१३६)

[17]कृञः इत्येव । शूलशब्दात् पाकविषये[18] डाच् प्रत्ययो भवति कृञो योगे । [19]शूले पचति शूलाकरोति [20]मांसम् । पाके इति किम् ? शूलं करोति [21]कदन्नम् ॥

---

1. सम्पद्यते ब.क.ड.फ.ह. 2. सति नास्ति फ. 3. प्रयोजयति फ. 4. जलसेकः क.ह. 5. भूमिशोधः क. 6. अर्थे इत्यधिकम् ब.फ, वर्तमानात् नास्ति फ. 7. पर्णम् क, दाडिमं ब, पशुम् ड, फलम् फ. 8. इत्येव फ.ड. 9. निष्कुलं करोति शत्रुम् क.ह. 10. कृञ इत्येव इत्यधिकम् ब.क.ड. 11. अर्थे इत्यधिकम् ब.फ, गम्यमाने इत्यधिकम् क. 12. अनाराध्यस्य क. 13. चित्ताराधनं करोति, चित्तमनुवर्तयति इत्यर्थ क. 14. वा नास्ति ब.ड, सुखप्रियमकुर्वन्नपि अस्यानुलोम्ये वर्तमाने एवमुच्यते ड. 15. अर्थे इत्यधिकम् ह. 16. स्वामिनः चित्तम् इत्यधिकम् क. 17. वाक्यमिदं नास्ति क. 18. वर्तमानात् इत्यधिकम् क. 19. शूलेन क. 20. पशुम् क. 21. तदन्नम् फ.

## सत्यादशपथे । (६६/२१३७)

कृञः [1]इत्येव । सत्यशब्दात् अशपथे[2] डाच् प्रत्ययो भवति कृञो योगे । सत्यशब्दोऽनृतप्रतिपक्षवचनः । क्वचित्तु शपथे च वर्तते, सत्येन [3]शापयेद् द्विजम् इति[4], तस्यायं प्रतिषेधः । सत्याकरोति वणिक् भाण्डम् । मयैतत् क्रेतव्यम् इति [5]तथ्यं करोति । अशपथे इति किम् ? सत्यं करोति ब्राह्मणः ।।

## मद्रात् परिवापणे । (६७/२१३८)

[6]कृञः इत्येव । मद्रशब्दात् परिवापणे[7] डाच् प्रत्ययो भवति कृञो योगे । परिवापणं मुण्डनम् । मद्रशब्दो[8] [9]मङ्गलार्थः । [10]मङ्गलं मण्डनं करोति मद्राकरोति[11] ।

[६३५] भद्राच्चेति वक्तव्यम् । (म. भा. २. ४३७)

भद्राकरोति नापितः कुमारम् । परिवापणे इति किम् ? [12]भद्रं करोति ।।

## समासान्ताः । (६८/६७६)

अधिकारोऽयम् । आपादपरिसमाप्तेः [13]ये प्रत्ययाः विहितास्ते समासान्तावयवा एकदेशाः भवन्ति, तद्ग्रहणेन गृह्यन्ते इति [14]वेदितव्यम् । प्रयोजनम् – अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसञ्ज्ञाः (म. भा. २. ४३७) । उपराजम् । अधिराजम् । नाव्ययीभावात् (२.४. ८३/६५७) इत्येष विधिर्भवति, '[15]अनश्च' (५.४.१०८/६७८) इति टच् । द्विपुरी, त्रिपुरी इति । 'द्विगोः' (४.१.२१/४७९) इति ङीप् भवति । कटकवलयिनी । शङ्ख-नूपुरिणी । कोशनिषदिनी । स्रक्त्वचिनी । द्वन्द्वोपतापगर्ह्यात् (५.२.१२८/१९३४) इति इनिर्भवति । विधुरः । प्रधुरः । तत्पुरुषे तुल्यार्थ (६.२.२/३७३६) इत्येष स्वरो भवति । उच्चैर्धुरः । नीचैर्धुरः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (६.२.१/३७३५) इत्येतद् भवति ।।

## न पूजनात् । (६९/९७४)

[16]यान् शब्दान् उपादाय समासान्ता विधीयन्ते 'राजाहःसखिभ्यष्टच्' (५.४.९१/७८८) इत्येवमादीन्, [17]यदा ते पूजनात् पूजनवचनात् परे भवन्ति [18]तदा समासान्तो न भवति । सुराजा । अतिराजा । सुगौः । अतिगौः ।

[६३६] पूजायां [19]स्वतिग्रहणं कर्तव्यम् । (म.भा.२.४३९)

[20]इह मा भूत्, परमराजः, परमगवः इति ।

[३६७] प्राग्बहुव्रीहिग्रहणं च कर्तव्यम् । (म.भा. २.४३९)

बहुव्रीहौ सक्थ्यक्ष्णोः (५.४.११३/८५२) [21]इत्येवमादौ प्रतिषेधो न भवति । सुसक्थः । अतिसक्थः । स्वक्षः । अत्यक्षः (म.भा.२.४३९) ।।

---

1. एव नास्ति फ. 2. अर्थे इत्यधिकम् ब, अर्थे वर्तमानात् इत्यधिकम् क. ड. फ. 3. श्रावयेत् ह. 4. यथा इत्यधिकम् ड. 5. यथातथ्यं ड. 6. वाक्यमिदं नास्ति फ. 7. अर्थे वर्तमानात् इत्यधिकम् क. ड, अर्थे इत्यधिकम् ब. 8. अत्र इत्यधिकम् फ. 9. माङ्गल्यार्थः ड, मङ्गलवचनः क. 10. मङ्गल्यम् ब. फ. ह, शुभं क. 11. कुमारम् इत्यधिकम् फ. 12. मद्रं क. ड. फ. 13. इत ऊर्ध्वं इत्यधिकम् ड. 14. वक्तव्यम् क. 15. वाक्यमिदं नास्ति क. 16. इतः प्रभृति इत्यधिकम् क. 17. यदि ब. फ. 18. ततः ह. 19. प्रतिषेधः क. 20. इह न भवति फ, इह प्रतिषेधः क. 21. इत्येवमादेः ब.

## किमः क्षेपे। (७०/९५७)

[1]क्षेपे यः किंशब्दः ततः परस्य समासान्तो न भवति। [2]किंराजा यो न रक्षति। किंसखा यो[3]ऽभिद्रुह्यति। किंगौर्यो न वहति। '[4]किं क्षेपे' (२.१.६४/७४३) इति समासः। क्षेपे इति किम्? कस्य राजा किंराजः। किंसखः। किंगवः॥

## नञस्तत्पुरुषात्। (७१/९५६)

नञः परे वक्ष्यमाणा ये [5]राजादय[6]स्तदन्तात् तत्पुरुषात् समासान्तो न भवति। [7]अराजा। असखा। अगौः। तत्पुरुषात् इति किम्? अनृचो माणवकः। [8]अधुरं शकटम्॥

## पथो विभाषा। (७२/९५७)

[9]नञः परो यः पथिन्शब्दः, तदन्तात् तत्पुरुषात् समासान्तो विभाषा न भवति। पूर्वेण नित्यः प्रतिषेधः प्राप्तो [10]विकल्प्यते। अपथम्, अपन्थाः॥

## बहुव्रीहौ सङ्ख्येये डजबहुगणात्। (७३/८५१)

सङ्ख्येये यो बहुव्रीहिर्वर्तते तस्माद् अबहुगणान्तात् डच् प्रत्ययो[11] भवति। सङ्ख्ययाव्ययासन्न (२.२.२५/८४२) इति [12]यो बहुव्रीहिः तस्येदं ग्रहणम्। उपदशाः। उपविंशाः। उपत्रिंशाः। आसन्नदशाः[13]। अदूरदशाः[14]। अधिकदशाः। द्वित्राः। पञ्चषाः। [15]पञ्चदशाः। सङ्ख्येये इति किम्? चित्रगुः। शबलगुः। [16]अबहुगणात् इति किम्? उपबहवः। उपगणाः। अत्र स्वरे विशेषः।

[६३८] डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं [17]कर्तव्यं निस्त्रिंशाद्यर्थम्। (म.भा.२.४३९)

निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य। [18]निश्चत्वारिंशानि यज्ञदत्तस्य। [19]निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः॥

## ऋक्पूरब्धूःपथामानक्षे। (७४/९४०)

बहुव्रीहौ इति [20]न स्वर्यते। सामान्येन विधानम्। ऋक् पुर् अप् धुर् पथिन् इत्येवमन्तानां [21]समासानाम् अकारः प्रत्ययो भवति समासान्तो[22]ऽक्षे न। सामर्थ्याद् धुर एतद् विशेषणम्, ऋगादीनां न भवति। अक्षसम्बन्धिनी या धूः तदन्तस्य न[23] भवति। अनृचः। बह्वृचः। अर्धर्चः। पुर्–ललाटपुरम्। नान्दीपुरम्। अप्–द्वीपम्। [24]अन्तरीपम्। समीपम्। धुर्–राजधुरा। [25]महाधुरः। पथिन्–स्थलपथः। जलपथः (म.भा. २.४४०)। अनृचो अनक्षे इति किम्? [26]अक्षस्य धूः अक्षधूः। दृढधूः अक्षः। अनृचो माणवको ज्ञेयो, बह्वृचश्चरणाख्यायाम्। माणवकः। बह्वृचो ब्राह्मणः। अनृक्कं साम, बह्वृक्कं सूक्तम् इत्यत्र न भवति॥

---

1. क्षेपार्थः क. 2. कुत्सितो राजा इत्यधिकम् क. ड. 3. न द्वेष्टि ह. 4. किं क्षेपे–किंगवः नास्ति ड. फ. 5. ऋगादयः क. ड. फ. ह. 6. तदन्तात् नास्ति क. 7. अनृक् ह. 8. अधुरः शकटः फ. ह. 9. नञस्तत्पुरुषात् इति वर्तते इत्यधिकम् क. 10. अनेन इत्यधिकम् क. 11. समासान्तः इत्यधिकम् ड. फ. 12. यो नास्ति फ. 13. आसन्नविंशाः इत्यधिकम क. 14. अदूरविंशा इत्यधिकम् क. ड. 15. पञ्चदशाः नास्ति ब. क. ड. फ. 16. अबहुगणान्तात् क. 17. कर्तव्यम् नास्ति फ. 18. उदाहरणमिदं नास्ति फ. 19. उदाहरणमिदं नास्ति क. 20. नानुवर्तते क. 21. समासानाम् नास्ति फ. 22. अनक्षे इति क. 23. प्रत्ययः इत्यधिकम् फ. ड. 24. अन्तरीपम् नास्ति फ. 25. महाधुरा ड. फ. 26. अक्षस्य धूः नास्ति फ.

## अच् प्रत्यन्ववपूर्वात् सामलोम्नः । (७५/९४३)

प्रति अनु अव इत्येवंपूर्वात् सामान्तात् लोमान्तात् च समासाद् अच् प्रत्ययो भवति । [1]प्रतिसामम् । अनुसामम् । अवसामम् । [2]प्रतिलोमम् । अनुलोमम् । अवलोमम् ।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥

कृष्णभूमः । पाण्डुभूमः । उदग्भूमः । [3]पञ्चनदम् । [4]पञ्चगोदावरम् । [5]नदीभिश्च (२.१.४०/६७४) इति अव्ययीभावः । भूमेरपि सङ्ख्यापूर्वायाः [6]अच् प्रत्यय इष्यते – द्विभूमः प्रासादः । त्रिभूमः । [7]दशभूमकं सूत्रम् । अन्यत्रापि च दृश्यते – पद्मनाभः । ऊर्णनाभः । [8]दीर्घरात्रः । समरात्रः । अरात्रः । तदेतत् सर्वमिह योगविभागं कृत्वा [9]साधयन्ति ॥

## अक्ष्णोऽदर्शनात् । (७६/९४३)

[10]अच् इत्यनुवर्तते । दर्शनादन्यत्र योऽक्षिशब्दः तदन्तात्[11] अच् प्रत्ययो भवति[12] । लवणाक्षम् । [13]पुष्कराक्षम् । उपमितं व्याघ्रादिभिः (२.१.५६/७३५) इति समासः । अदर्शनात् इति किम् ? ब्राह्मणाक्षि । कथं [14]कबराक्षम्, [15]गवाक्षम् इति ? अश्वादीनां मुखप्रच्छादनार्थं बहुच्छिद्रं कबराक्षम्[16], तेनापि हि दृश्यते, गवाक्षेण च ? नैष दोषः । [17]चक्षुःपर्यायवचनो दर्शनशब्दः [18]प्राण्यङ्गवचन इहाश्रीयते ॥

## अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । (७७/९४७)

अच्प्रत्ययान्ता एते [19]शब्दा निपात्यन्ते । [20]समासे व्यवस्थापि निपातनादेव प्रतिपत्तव्या । आद्यास्त्रयो बहुव्रीहयः । अदृश्यानि अविद्यमानानि वा चत्वारि यस्य [21]सोऽचतुरः । विगतानि चत्वारि यस्य स विचतुरः । शोभनानि चत्वारि यस्य [22]स सुचतुरः ।

अतः परे एकादश द्वन्द्वाः । स्त्री च पुमांश्च स्त्रीपुंसौ । इह न भवति, स्त्रियाः पुमान् इति । धेनुश्चानड्वांश्च धेन्वनडुहौ । ऋक् च साम च ऋक्सामे । वाक् च मनश्च वाङ्मनसे । अक्षि च भ्रुवौ च अक्षिभ्रुवम् ।

---

1. प्रतिसामः फ. 2. प्रतिलोमः फ. 3. पञ्चनदः क, सप्तनदम् फ. 4. सप्तगोदावरम् ड. फ. 5. नदीभिश्च नास्ति क. फ. 6. अच् नास्ति क. फ. 7. दशभूमं ब. क, दशभूमः फ. 8. दीर्घरात्रम् गणरात्रम् ब, वर्षारात्रम् क. ड. ब, गणरात्रम् क. ड. फ, वर्षरात्रः ह. 9. साधयितव्यम् ब. 10. अच् – समासः नास्ति क. 11. समासात् इत्यधिकम् ब. फ. 12. समासान्तः इत्यधिकम् ग. 13. पुष्कराक्षः फ. 14. कम्बलाक्षः क. 15. गवामक्षि इव इत्यधिकम् ग. 16. उच्यते इत्यधिकम् क. 17. चक्षुःपर्यायः ड. 18. प्राणिलिङ्गः फ, प्राण्यङ्गः क. 19. शब्दाः नास्ति फ. 20. समासव्यवस्थापि क. ड, समासस्य फ. 21. सो नास्ति ब. 22. स नास्ति फ.

दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । टिलोपो निपात्यते । पादौ च अष्ठीवन्तौ च च पदष्ठीवम् । [1]पादस्य पद्भावो निपात्यते । नक्तं च दिवा च नक्तंदिवम् । सप्तम्यर्थवृत्तयोर[2]व्यययोः समासोऽपि[3] निपातनादेव । रात्रौ च दिवा च रात्रिंदिवम् । [4]पूर्वपदस्य मान्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । ननु च पर्यायावेतौ, कथमनयोर्द्वन्द्वः ? वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनि इत्यर्थः ।

एकोऽव्ययीभावः साकल्ये – सरजसमभ्यवहरति । बहुव्रीहौ न भवति, सह रजसा[5] सरजः पङ्कजम् इति । ततः तत्पुरुषः – निश्चितं श्रेयो निःश्रेयसम् । निःश्रेयस्कः पुरुषः इत्यत्र न भवति । ततः षष्ठीसमासः – पुरुषस्यायुः पुरुषायुषम् । द्वन्द्वे न भवति, पुरुषश्च आयुश्च पुरुषायुषी । ततो द्विगू – द्वे आयुषी समाहृते द्व्यायुषम् । त्र्यायुषम् । इह न भवति, द्वयोरायुः द्व्यायुः त्र्यायुः इति । ततो द्वन्द्वः – ऋक् च यजुश्च ऋग्यजुषम् । इह न भवति, ऋग्यजुरस्य उन्मुग्धस्य ऋग्यजुरुन्मुग्धः । जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः – जातोक्षः । महोक्षः । वृद्धोक्षः । बहुव्रीहौ न भवति, जातोक्षा ब्राह्मणः, महोक्षा, वृद्धोक्षा इति । ततोऽव्ययीभावः – शुनः समीपम् उपशुनम् । टिलोपाभावः सम्प्रसारणं च निपातनादेव । ततः सप्तमीसमासः – गोष्ठे श्वा गोष्ठश्वः ।

[६३९] चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानम् । (म. भा. २.४४०)

त्रिचतुराः । उपचतुराः ॥

## ब्रह्महस्तिभ्यां वर्चसः । (७८/९४६)

[6]ब्रह्महस्तिभ्यां परो यो वर्चःशब्दस्तदन्तात् समासाद् अच् प्रत्ययो भवति[7] । ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

[६४०] [8]पल्यराजभ्यां चेति वक्तव्यम् । (म. भा. २.४४१)

[9]पल्यवर्चसम् । राजवर्चसम् ॥

## अवसमन्धेभ्यस्तमसः । (७९/९४७)

अव सम् अन्ध इत्येतेभ्यो [10]यः परः तमस्शब्दः तदन्तात् समासात् अच् प्रत्ययो भवति । अवतमसम् । सन्तमसम् । अन्धतमसम् ॥

## श्वसो वसीयःश्रेयसः । (८०/९४८)

श्वसः परौ यौ वसीयस्श्रेयस्शब्दौ तदन्तात् समासात् अच् प्रत्ययो भवति[11] । श्वोवसीयसम् । श्वःश्रेयसम् । मयूरव्यंसकादित्वात् समासः । स्वभावाच्च चेह श्वःशब्दः उत्तरपदार्थस्य प्रशंसामाशीर्विषयामाचष्टे, श्वःश्रेयसं ते भूयात् । शोभनं [12]श्रेयस्ते भूयात् इत्यर्थः । श्वोवसीयस[13]मित्यस्यैवायं पर्यायः ॥

---

1. पादशब्दस्य फ. 2. अव्यययोः नास्ति क. ड. 3. अपि नास्ति ब. फ. 4. पूर्वस्य फ. 5. वर्तते इत्यधिकम् ब. क. ड. 6. ब्रह्महस्तिशब्दाभ्यां फ. 7. समासान्तः इत्यधिकम् फ. 8–9. पण्य° क. 10. यः नास्ति क, तमस्शब्दान्तात् ह. 11. समासान्तः इत्यधिकम् ब. 12. श्रेयः नास्ति ह 13. इत्येतस्यैव फ.

## अन्ववतप्ताद् रहसः । (८१/९४९)

अनु अव तप्त इत्येतेभ्यः परो [1]यो रहस्शब्दः तदन्तात् [2]समासाद् अच् प्रत्ययः भवति । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥

## प्रतेरुरसः सप्तमीस्थात् । (८२/९५०)

प्रतेः परो य उरस्शब्दः[3] तदन्तात् समासात् अच् प्रत्ययो भवति, स चेद् उरस्शब्दः सप्तमीस्थो भवति । सप्तम्यर्थे वर्तते इत्यर्थः । उरसि वर्तते । विभक्त्यर्थे अव्ययम् (२.१.६/६५२) इति समासः । प्रत्युरसम्[4] । सप्तमीस्थात् इति किम् ? प्रतिगतमुरः प्रत्युरः ॥

## अनुगवमायामे । (८३/९५१)

अनुगवम् इत्यच्प्रत्ययान्तं निपात्यते आयामे[5]ऽभिधेये[6] । अनुगवम् [7]यानम् । 'यस्य चायामः' (२.१.१६/६७०) इति समासः । आयामे इति किम् ? गवां पश्चादनुगु ॥

## द्विस्तावा त्रिस्तावा वेदिः । (८४/९५२)

द्विस्तावा त्रिस्तावा इति निपात्यते वेदिश्चेद् अभिधेया भवति । अच्प्रत्ययः, टिलोपः, समासश्च निपात्यते । यावती [8]प्रकृतौ वेदिः ततो द्विगुणा वा त्रिगुणा वा कस्यांचिद्विकृतौ[9] तत्रेदं निपातनम् । द्विस्तावा वेदिः । त्रिस्तावा वेदिः । वेदिः इति किम् ? द्विस्तावती, [10]त्रिस्तावती रज्जुः ॥

## उपसर्गादध्वनः । (८५/९५३)

उपसर्गात् परो योऽध्वन्शब्दः तदन्तात् समासात् अच् प्रत्ययो भवति[11] । प्रगतोऽध्वानं प्राध्वो[12]रथः । प्राध्वं शकटम् । निरध्वम् । [13]प्रत्यध्वम् । उपसर्गात् इति किम् ? परमाध्वा । उत्तमाध्वा ॥

## तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः । (८६/७८६)

अङ्गुलिशब्दान्तस्य तत्पुरुषस्य सङ्ख्यादेः[14] अव्ययादेश्च अच् प्रत्ययो भवति । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । त्र्यङ्गुलम्[15] । तद्धितार्थ (२.१.५१/७२८) इति समासः । 'प्रमाणे लो द्विगोर्नित्यम्' (६.२.१२/३७४६ वा.) इति मात्रचो लोपः । अव्ययादेः – निर्गतम् अङ्गुलिभ्यः निरङ्गुलम् । [16]अत्यङ्गुलम् । तत्पुरुषस्य इति किम् ? पञ्चाङ्गुलिः[17] । [18]अत्यङ्गुलिः पुरुषः । तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तात् (५.४.१०६/९३०) इति यावत् ॥

---

1. यो नास्ति फ. 2. प्रातिपदिकात् क. 3. सप्तम्यर्थवृत्तिः इत्यधिकम् फ. 4. वर्तते इत्यधिकम् फ. 5. अर्थे इत्यधिकम् ड. 6. आयामो दैर्घ्यम् इत्यधिकम् ड. 7. शकटम् ड. 8. प्रकृतिः क. 9. भवति इत्यधिकम् ड.फ. 10. त्रिस्तावती नास्ति क. 11. समासान्तः इत्यधिकम् फ. 12. नरः फ. 13. अत्यध्वम् क. फ. 14. च इत्यधिकम् फ. 15. चतुरङ्गुलम् इत्यधिकम् ब.ड.फ, त्र्यङ्गुलम् नास्ति क. 16. अत्यङ्गुलम् नास्ति फ. 17. हस्तः इत्यधिकम् ब.क. 18. उदाहरणमिदं नास्ति क.फ, अनङ्गुलिः ब.ह, खङ्गुलिः ड.

## अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः । (८७/७८३)

अहरादिभ्यः[1] परो [2]यो रात्रिशब्दः तदन्तस्य[3] तत्पुरुषस्य अच् प्रत्ययो भवति, चकारात् [4]सङ्ख्यादेः अव्ययादेश्च । अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्च अहोरात्रः । सर्वरात्रः[5] । एकदेशे - पूर्वं रात्रेः पूर्वरात्रः । [6]अपररात्रः । पूर्वपरावर (१.१.३४/२१८) [7]इति समासः । सङ्ख्याता रात्रिः [8]सङ्ख्यातरात्रः । विशेषणं विशेष्येण (२.१.५७/७३६) इति समासः । एवं पुण्या रात्रिः पुण्यरात्रः । सङ्ख्याव्ययादेः खल्वपि – द्वे रात्री समाहृते द्विरात्रः । त्रिरात्रः । [9]अतिक्रान्तो रात्रिम् अतिरात्रः । नीरात्रः ॥

## अह्नोऽह्न एतेभ्यः । (८८/७९०)

'राजाहःसखिभ्यष्टच्' (५.४.९१/७८८) इति[10] वक्ष्यति, तस्मिन् [11]परभूते अहन् [12]इत्येतस्य अह्नः [13]इत्ययमादेशो भवति एतेभ्य उत्तरस्य । [14]सङ्ख्याव्ययादयः प्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते । सामर्थ्याच्चाहः-शब्दः पूर्वत्वेन नाश्रीयते । परिशिष्टानां ग्रहणम् । न हि अहःशब्दात् परोऽहःशब्दः सम्भवति । सङ्ख्यायास्तावत् – द्वयोरह्नोर्भवः द्व्यह्नः । त्र्यह्नः । अव्ययात् – अहरतिक्रान्तः अत्यह्नः । [15]निरह्नः । सर्वाह्णः । पूर्वाह्णः । अपराह्णः । सङ्ख्याताह्नः । पुण्यशब्दात् प्रतिषेधं वक्ष्यति (५.४.९०/७९४) ॥

## न सङ्ख्यादेः समाहारे । (८९/७९३)

सङ्ख्यादेस्तत्पुरुषस्य समाहारे[16] वर्तमानस्य अहःशब्दस्य अह्नादेशो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । द्वे अहनी समाहृते द्व्यहः । त्र्यहः[17] । समाहारे इति किम् ? द्वयोरह्नोः भवः द्व्यह्नः । त्र्यह्नः । तद्धितार्थ (२.१.५१/७२८) इति समासे कृते [18]अणः (४.२.५४/१४२८) आगतस्य 'द्विगोर्लुगनपत्ये' (४.१.८८/१०८८) इति लुक् ॥

## उत्तमैकाभ्यां च । (९०/७९४)

[19]उत्तमैकाभ्यां च परस्य [20]अह्नः इत्ययमादेशो न भवति । उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे । [21]पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम् । पुण्याहः । एकाहः । केचित् तु उपोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति । तेन सङ्ख्यातशब्दादपि परस्य न भवति, सङ्ख्याताहः इति ॥

---

1. प्रातिपदिकेभ्यः इत्यधिकम् फ. 2. यो नास्ति फ. 3. प्रातिपदिकस्य इत्यधिकम् क. फ. 4. सङ्ख्यादेः नास्ति फ. 5. मध्यरात्रः इत्यधिकम् फ. 6. अपररात्रः नास्ति फ. 7. इत्यादिना क. 8. सङ्ख्यातरात्रः नास्ति फ. 9. अतिक्रान्ता रात्रिः क. ह. 10. प्रत्ययं इत्यधिकम् फ. ह. 11. परतः क. 12. इति शब्दस्य ब.फ. 13. इत्यादेशो फ. 14. सङ्ख्यादयः फ. 15. निरह्नः नास्ति फ. 16. च इत्यधिकम् क. 17. सप्ताहः दशाहः इत्यधिकम् ह. 18. अण् तस्य क. 19. उत्तमब्दात् एकशब्दात् च ब. क. फ. 20. अह्नः नास्ति क. फ. 21. पुण्यशब्दग्रहणमेव क. फ. ह.

## राजाहःसखिभ्यष्टच् । (९१/७८८)

राजन् अहन् सखि इत्येवमन्तात् [1]प्रातिपदिकात् टच् प्रत्ययो भवति[2]। महाराजः। मद्रराजः[3]। परमाहः। उत्तमाहः। [4]राज्ञः सखा राजसखः। [5]ब्राह्मणसखः। इह कस्मान् न भवति, मद्राणां राज्ञी मद्रराज्ञी? लिङ्गविशिष्टपरिभाषया (व्या. प. २९) प्राप्नोति? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजशब्दस्य सवर्णदीर्घार्थं प्रथमं प्रयोगं [6]कुर्वन्नेतद् ज्ञापयति यस्याकारेण सवर्णदीर्घत्वं सम्भवति तस्येदं ग्रहणम् इति ॥

## गोरतद्धितलुकि । (९२/७२९)

गोशब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति,[7] स चेत् तत्पुरुषस्तद्धितलुग्विषयो न भवति। परमगवः। उत्तमगवः। पञ्चगवम्। दशगवम्। अतद्धितलुकि इति किम्? पञ्चभिर्गोभिः क्रीतः पञ्चगुः। दशगुः। 'तेन क्रीतम्' (५.१.३७/१७०२) इत्यागतस्य आर्हीयस्य ठकोऽध्यर्धपूर्वाद् द्विगोः (५.१.२८/१६९३) इति लुक्। तद्धितग्रहणं किम्? सुब्लुकि प्रतिषेधो मा भूत्। राजगवमिच्छति राजगवीयति। लुग्ग्रहणं किम्? तद्धित एव मा भूत्। पञ्चभ्यो गोभ्यः आगतं पञ्चगवरूप्यम्, पञ्चगवमयम्। दशगवरूप्यम्, [8]दशगवमयम् ॥

## अग्राख्यायामुरसः । (९३/७०७)

उरस्शब्दान्तात् तत्पुरुषात् टच् प्रत्ययो[9] भवति, स चेद् उरस्शब्दः [10]अग्राख्यायां भवति। अग्रं प्रधानमुच्यते। यथा शरीरावयवानामुच्यते उरः प्रधानम्, एवमन्योऽपि प्रधानभूत उरस्शब्देनोच्यते। अश्वानामुरः अश्वोरसम्[11]। हस्त्युरसम्। रथोरसम्। अग्राख्यायाम् इति किम्? देवदत्तस्य उरः देवदत्तोरः ॥

## अनोऽश्मायस्सरसां जातिसञ्ज्ञयोः । (९४/७०६)

अनस् अश्मन् अयस् सरस् इत्येवमन्तात् तत्पुरुषात् टच् प्रत्ययो भवति[12] जातौ सञ्ज्ञायां च विषये। उपानसम् इति जातिः। महानसम् इति सञ्ज्ञा। अमृताश्म इति जातिः। [13]पिण्डाश्म इति सञ्ज्ञा। कालायसम् इति जातिः। लोहितायसम् इति सञ्ज्ञा। मण्डूकसरसम् इति जातिः। [14]जलसरसम् इति सञ्ज्ञा। जातिसञ्ज्ञयोः इति किम्? सदनः। सदश्मा। [15]सत्सरः ॥

## ग्रामकौटाभ्यां च तक्ष्णः । (९५/७२७)

जातिसञ्ज्ञयोः इति नानुवर्तते। [16]ग्रामकौटाभ्यां परो यः तक्षन्शब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति[17]। ग्रामस्य तक्षा ग्रामतक्षः। बहूनां साधारणः इत्यर्थः। कुट्यां भवः कौटः, [18]तस्य तक्षा कौटतक्षः। स्वतन्त्रः कर्मजीवी, न कस्यचित् [19]प्रतिबद्धः इत्यर्थः। ग्रामकौटाभ्याम् इति किम्? [20]राजतक्षा ॥

---

1. तत्पुरुषात् ब.क.ड.फ.ह. 2. समासान्तः इत्यधिकम् ग.फ. 3. परमराजः इत्यधिकम् ब. क. ड. फ. 4. तस्यैव इत्यधिकम् क. 5. ब्राह्मणस्य सखा इत्यधिकम् ग.फ. 6. कुर्वन्नेव ह. 7. समासान्तः इत्यधिकम् ब.क. 8. दशगवमयम् नास्ति फ. 9. समासान्तः इत्यधिकम् ब.फ. 10. अग्राख्यः ह. 11. अस्युरसम् इत्यधिकम् ह. 12. समासान्तः ब.फ. 13. षण्डाश्म ह. 14. कालसरसम् क. 15. सदयः क.फ, नास्ति ह. 16. ग्राम-कौटशब्दाभ्याम् क. 17. समासान्तः इत्यधिकम् ब.फ. 18. कौटस्य ड. 19. प्रतिरुद्धः क. 20. राज्ञः तक्षा इत्यधिकम् ब.क.ड.ह.

## अतेः शुनः । (९६/७९८)

अतिशब्दात् परः यः श्वन्शब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति[1] । अतिक्रान्तः श्वानम् अतिश्वो वराहः । [2]जववान् इत्यर्थः । अतिश्वः सेवकः । [3]सुष्ठु स्वामिभक्तः इत्यर्थः । [4]अतिश्वी सेवा । अतिनीचा इत्यर्थः ॥

## उपमानादप्राणिषु । (९७/७९९)

उपमानवाची यः [5]श्वन्शब्दोऽप्राणिषु वर्तते तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति[6] । आकर्षः श्वेव आकर्षश्वः । [7]फलकश्वः । उपमितं व्याघ्रादिभिः (२.१.५६/७३५) इति समासः । उपमानात् इति किम् ? न श्वा अश्वा लोष्टः । अप्राणिषु इति किम् ? वानरः श्वेव वानरश्वा ॥

## उत्तरमृगपूर्वाच्च सक्थ्नः । (९८/८००)

उत्तर मृग पूर्व इत्येतेभ्यः परो यः सक्थिशब्दः, चकारादुपमानं च, तदन्तात् तत्पुरुषाट् टच् प्रत्ययो भवति [8]समासान्तः । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । उपमानात् खल्वपि – फलकमिव सक्थि फलकसक्थम् ॥

## नावो द्विगोः । (९९/८०१)

नौशब्दान्तात् [9]द्विगोः टच् प्रत्ययो भवति [10]समासान्तः । द्वे नावौ समाहृते द्विनावम् । त्रिनावम् । द्विनावधनः[11] । पञ्चनावप्रियः । द्वाभ्यां नौभ्यामागतं द्विनावरूप्यम् । द्विनावमयम्[12] । द्विगोः इति किम् ? राजनौः । अतद्धितलुकि इत्येव, पञ्चभिर्नौभिः क्रीतः पञ्चनौः । दशनौः ॥

## अर्धाच्च । (१००/८०२)

अर्धशब्दात् परो यो नौशब्दः तदन्तात् तत्पुरुषाट् टच् प्रत्ययो भवति[13] । अर्धं नावः अर्धनावम् । 'अर्धं नपुंसकम्' (२.२.२/७१३) इति समासः । परवल्लिङ्गं न भवति, लोकाश्रयत्वात् लिङ्गस्य[14] ॥

## खार्याः प्राचाम् । (१०१/८०३)

द्विगोः, अर्धाच्च इति द्वयमप्यनुवर्तते । खारीशब्दान्तात् द्विगोरर्धाच्च परो यः खारीशब्दः तदन्तात् तत्पुरुषाट् टच् प्रत्ययो भवति[15] प्राचामाचार्याणां मतेन । द्वे खार्यौ समाहृते द्विखारम्, द्विखारि । [16]त्रिखारम्, त्रिखारि । अर्धं खार्याः अर्धखारम्, अर्धखारि ॥

---

1. समासान्तः इत्यधिकम् ब.ग.फ. 2. जवनः ब.ड. 3. अतिस्वामिभक्तः क. 4. अतिश्वा क. 5. समासान्तः श्वशब्दः ग. 6. समासान्तः इत्यधिकम् ब.क.ग. 7. फलकः श्वा इव इत्यधिकम् ग. 8. समासान्तः नास्ति फ.ह. 9. तत्पुरुषात् क. 10. समासान्तः नास्ति फ. 11. त्रिनावधनः इत्यधिकम् ब.ड.फ. 12. त्रिनावरूप्यम् त्रिनावमयम् इत्यधिकम् फ, क्लीबत्वं लोकात् इत्यधिकम् फ. ग 13. समासान्तः इत्यधिकम् ड. ग. फ. 14. इति इत्यधिकम् क. 16. समासान्तः इत्यधिकम् ब.ग.फ. 15. त्रिखारम् नास्ति फ.

## द्वित्रिभ्यामञ्जलेः। (१०२/८०४)

द्वित्रिभ्यां परो योऽञ्जलिशब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। द्वावञ्जली समाहृतौ द्व्यञ्जलम्। त्र्यञ्जलम्। द्विगोः इत्येव, द्वयोरञ्जलिः द्व्यञ्जलिः। अतद्धितलुकि इत्येव, द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचाम् इत्येव, द्व्यञ्जलिप्रियः॥

## अनसन्तान्नपुंसकाच्छन्दसि। (१०३/३२०७)

अन्नन्तात् असन्तात् च नपुंसकलिङ्गात् तत्पुरुषात् टच् प्रत्ययो भवति छन्दसि विषये[2]। हस्तिचर्मे जुहोति। '[3]ऋषभचर्मेऽभिषिच्यते' (काठ. सं. ३७. ३)। असन्तात् – 'देवच्छन्दसानि' (मै. सं. ३. २. ९)। 'मनुष्यच्छन्दसम्' (तै. सं. ५. ४. ८. ६)। अनसन्तात् इति किम्? बिल्वदारु जुहोति। नपुंसकात् इति किम्? 'सुत्रामाणं पृथिवीं [4]द्यामनेहसम्' (ऋ. १०. ६३. १०)।

[६४१] अनसन्ता[6]न्नपुंसका[6]च्छन्दसि वावचनम्। (म. भा. २.४४१)

'ब्रह्मसाम' (तां. ब्रा. ४.३.१), 'ब्रह्मसामम्' (तै. सं. १.८.१८.१)। '[7]देवच्छन्दः' (शां. ब्रा. १.५), 'देवच्छन्दसम्' (तै. सं. ५.४.८.५)॥

## ब्रह्मणो जानपदाख्यायाम्। (१०४/८०७)

ब्रह्मन्शब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति [8]समासेन चेद् ब्रह्मणो जानपदत्वमाख्यायते। [9]जनपदेषु भवः जानपदः। यस्य तत्पुरुषस्य जनपदशब्दः पूर्वपदं तस्मादेतत् प्रत्ययविधानम्। सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः[10]। योगविभागात् [11]सप्तमीसमासः। जानपदाख्यायाम् इति किम्? देवब्रह्मा नारदः॥

## कुमहद्भ्यामन्यतरस्याम्। (१०५/८०८)

कुमहद्भ्यां परो यो [12]ब्रह्मा तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवत्यन्यतरस्याम्[13]। [14]कुब्रह्मः, कुब्रह्मा। [15]महाब्रह्मः, [16]महाब्रह्मा। ब्राह्मणपर्यायो ब्रह्मन्शब्दः॥

## द्वन्द्वाच्चुदषहान्तात् समाहारे। (१०६/९०४)

[17]तत्पुरुषाधिकारो निवृत्तः। द्वन्द्वात् चवर्गान्तात्, दकारान्तात्, षकारान्तात्, हकारान्तात् च टच् प्रत्ययो भवति, [18]स चेद् द्वन्द्वः समाहारे वर्तते, नेतरेतरयोगे। वाक् च त्वक् च वाक्त्वचम्। [19]स्रक् च त्वक् च स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। [20]वागूर्जम्। [21]समिद्दृषदम्। सम्पद्विपदम्। [22]वाग्विप्रुषम्। छत्त्रोपानहम्। धेनुगोदुहम्। द्वन्द्वात् इति किम्? तत्पुरुषान् मा भूत्, पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तात् इति किम्? वाक्समित्। समाहारे इति किम्? प्रावृट्शरदौ॥

---

1. त्र्यञ्जलिः इत्यधिकम् ब. ड. 2. च इत्यधिकम् ड. 3. ऋषभचर्मेऽभिषिञ्चति मुद्रितः पाठः. 4. द्यामनेहसाम् क. 5. नपुंसकलिङ्गात् ग. फ. 6. छन्दसि नास्ति फ. 7. देवच्छन्दः, देवच्छन्दसम् नास्ति ह. 8. समासान्तः इत्यधिकम् फ. 9. जनपदे भवः फ. 10. राशिब्रह्मः ड, काशिब्रह्मः क.फ.ह. 11. समासः सप्तम्या ड. 12. ब्रह्मन्शब्दः ब. क. फ. ह. 13. समासान्तः इत्यधिकम् ब. 14. कुब्रह्मः नास्ति क. 15. महाब्रह्मः नास्ति क. 16. महाब्रह्मा नास्ति फ. 17. वाक्यमिदं नास्ति फ. 18. समासान्तः इत्यधिकम् फ. 19. उदाहरणमिदं नास्ति फ. 20. वाक्त्विषम् फ. 21. शमीदृषदम् फ. 22. नास्ति फ.

## अव्ययीभावे शरत्प्रभृतिभ्यः । (१०७/६७७)

शरत् इत्येवमादिभ्यः प्रातिपदिकेभ्यः टच् प्रत्ययो भवति[1] अव्ययीभावे[2] । शरदः समीपम् उपशरदम् । [3]प्रतिशरदम् । उपविपाशम् । प्रतिविपाशम् । अव्ययीभावे इति किम् ? परमशरत् । येऽत्र झयन्तः पठचन्ते तेषां नित्यार्थं ग्रहणम् । स्वर्यते चेदमव्ययीभावग्रहणं प्राग् बहुव्रीहेः ।

शरत् । विपाश् । अनस् । मनस् । उपानह् । दिव् । [4]हिमवत् । अनडुह् । दिश् । दृश् । चतुर् । यद् । तद् । 'जराया जरश्च' (ग. सू. १५७)। सदृश् । 'प्रतिपरसमनुभ्योऽक्ष्णः' (ग. सू. १५८) । पथिन् । प्रत्यक्षम् । परोक्षम् । समक्षम् । अन्वक्षम् । प्रतिपथम् । परपथम् । संपथम् । अनुपथम् ॥

## अनश्च । (१०८/६७८)

अन्नन्तादव्ययीभावात् टच् प्रत्ययो भवति समासान्तः । [5]उपराजम् । [6]प्रतिराजम् । [7]अध्यात्मम् । प्रत्यात्मम् ॥

## नपुंसकादन्यतरस्याम् । (१०९/६८०)

अनः इत्येव । नपुंसकग्रहणमुत्तरपदविशेषणम् । अन्नन्तं यद् नपुंसकं तदन्तादव्ययीभावात् अन्यतरस्यां टच् प्रत्ययो [8]भवति समासान्तः । पूर्वेण [9]नित्ये प्राप्ते विकल्प्यते । प्रतिचर्मम्, प्रतिचर्म । उपचर्मम्, उपचर्म[10] ॥

## नदी पौर्णमास्याग्रहायणीभ्यः । (११०/६८१)

नदी पौर्णमासी आग्रहायणी इत्येवमन्ताद् अव्ययीभावात् अन्यतरस्यां टच् प्रत्ययो भवति[11] । [12]नद्याः समीपम् उपनदम्, उपनदि । उपपौर्णमासम्, उपपौर्णमासि । उपाग्रहायणम्, उपाग्रहायणि ॥

## झयः । (१११/६८२)

झयः इति प्रत्याहारग्रहणम् । झयन्ताद् अव्ययीभावाद् अन्यतरस्याम् टच् प्रत्ययो भवति[13] । उपसमिमिधम्, उपसमित् । उपदृषदम्, उपदृषत्[14] ॥

## गिरेश्च सेनकस्य । (११२/६८३)

गिरिशब्दान्तात् अव्ययीभावाद् टच् प्रत्ययो भवति [15]सेनकस्य आचार्यस्य मतेन । अन्तर्गिरम्, अन्तर्गिरि । उपगिरम्, उपगिरि[16] । सेनकग्रहणं पूजार्थम् । विकल्पोऽनुवर्तते एव ॥

---

1. समासान्तः इत्यधिकम् क.फ. 2. समासे इत्यधिकम् ब.क.फ.ह. 3. प्रतिशरदम् नास्ति फ. 4. हेमन् क. 5. उपदशम् क. ग. 6. प्रतिराजम् नास्ति ब. ड. 7. प्रत्यात्मम् क, महात्मम् ड. 8. भवति नास्ति क. 9. नित्यप्राप्तः ड. 10. प्रत्यहम् प्रत्यह । यथार्थे यदव्ययम् इति समासः इत्यधिकम् क. 11. समासान्तः इत्यधिकम् ब. फ. 12. नद्याः समीपम् नास्ति फ, नदीति स्वरूपग्रहणम् सञ्ज्ञायाः इत्यधिकम् ड. 13. समासान्तः इत्यधिकम् ब क. फ. 14. झयः इति किम् ? उपगोधुक् इत्यधिकम् ड. 15. समासान्तः इत्यधिकम् फ, सेनकस्य मतेन नास्ति फ, आचार्यस्य नास्ति क. 16. अनुगिरम् अनुगिरि इत्यधिकम् ग.

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । (११३/८५२)

स्वाङ्गवाची यः सक्थिशब्दः अक्षिशब्दश्च तदन्तात् बहुव्रीहेः षच् प्रत्ययो भवति [1]समासान्तः । अयमर्थोऽभिप्रेतः । सूत्रे तु दुःश्लिष्टविभक्तीनि पदानि । दीर्घं सक्थि यस्य दीर्घसक्थः[2] । कल्याणाक्षः । लोहिताक्षः । विशालाक्षः । बहुव्रीहौ इति किम् ? परमसक्थि: । परमाक्षिः । सक्थ्यक्ष्णोः इति किम् ? [3]दीर्घजानुः । सुबाहुः । स्वाङ्गात् इति किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षिः इक्षुः । टचि प्रकृते षज्ग्रहणं स्वरार्थम् । [4]चक्रसक्थी स्त्री । दीर्घसक्थी स्त्री । 'सक्थं चाक्रान्तात्' (६.२.१९८/३९३२) इति विभाषयोत्तरपदस्य [5]अन्तोदात्तता विधीयते । तत्र यस्मिन् पक्षे नास्त्युदात्तत्वं तत्र ङीपि सति उदात्तनिवृत्तिस्वरस्याभावादनुदात्तः श्रूयेत । ङीषि तु सर्वत्रोदात्तः सिद्धो भवति । बहुव्रीहिग्रहणम् आ पादपरिसमाप्ते[6]रनुवर्तते ॥

## अङ्गुलेर्दारुणि । (११४/८५३)

अङ्गुलिशब्दान्ताद् बहुव्रीहेः षच् प्रत्ययो भवति [7]समासान्तः दारुणि समासार्थे । द्व्यङ्गुलं दारु । त्र्यङ्गुलं दारु । पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादीनां [8]विक्षेपणकाष्ठमुच्यते । यस्य तु द्वे अङ्गुली प्रमाणं दारुणः तत्र तद्धितार्थ (२.१.५१/७२८) इति समासे [9]कृते तत्पुरुषस्याङ्गुलेः (५.४.८६/७८६) इत्यचा [10]भवितव्यम् । दारुणि इति किम् ? पञ्चाङ्गुलिर्हस्तः ॥

## द्वित्रिभ्यां ष मूर्ध्नः । (११५/८५४)

द्वित्रिभ्यां परो यो मूर्धन्शब्दः तदन्ताद् बहुव्रीहेः [11]षप्रत्ययः भवति समासान्तः । द्विमूर्धः । त्रिमूर्धः । [12]द्वित्रिभ्याम् इति किम् ?[13] उच्चैर्मूर्धा ॥

## अप् पूरणीप्रमाण्योः । (११६/८३२)

पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः [14]शब्दाः पूरणीग्रहणेन गृह्यन्ते । प्रमाणी इति स्वरूपग्रहणम् । [15]पूरण्यन्तात् प्रमाण्यन्तात् च बहुव्रीहेः अप् प्रत्ययो [16]भवति समासान्तः । कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा [17]रात्रयः । कल्याणीदशमा रात्रयः । स्त्री प्रमाणी एषाम् स्त्रीप्रमाणाः कुटुम्बिनः । भार्याप्रधानाः इत्यर्थः ।

[६४२] अपि प्रधानपूरणीग्रहणं कर्तव्यम् । (म.भा. २.४४६)

यत्रान्यपदार्थे पूरणी अनुप्रविशति न केवलं [18]वर्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यम् । पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते । इह न भवति, कल्याणी पञ्चमी अस्मिन् पक्षे कल्याणपञ्चमीकः पक्षः इति ।

[६४३] नेतुर्नक्षत्र उपसङ्ख्यानम् । (म.भा. २.४४२)

---

1. समासान्तः नास्ति क.फ. 2. गौरसक्थः इत्यधिकम् क.ड.ह. 3. दीर्घबाहुः क.ड. 4. चक्रसक्थी नास्ति ड, लघुसक्थी क. 5. अन्तोदात्तत्वम् क. 6. इति इत्यधिकम् ब.क.ड. 7. समासान्तः नास्ति ह. 8. विक्षेपणकाष्ठादिः ह. 9. कृते नास्ति क. 10. नित्यं इत्यधिकम् ड. 11. षच् फ. 12. द्वित्रिभ्याम् – उच्चैर्मूर्धा नास्ति फ.ह. 13. पञ्चमूर्धा इत्यधिकम् क. 14. शब्दाः नास्ति क. 15. प्रमाणीशब्दात् पूरण्यन्तात् ह. 16. भवति नास्ति फ. 17. रात्रयः नास्ति फ. 18. वृत्ति क.

मृगो नेता आसां रात्रीणाम् मृगनेत्रा रात्रयः। पुष्यनेत्राः। नक्षत्रे इति किम ? [1]देवदत्तनेतृकाः।

[६४४] छन्दसि [2]च नेतुरुपसङ्ख्यानम्। (म.भा. २.४४२)

'बृहस्पतिनेत्रा देवाः' (तै.सं. १.८.२०.१)। 'सोमनेत्राः' (मै.सं. २.६.३)।

[६४५] मासाद् भृतिप्रत्ययपूर्वपदाट् ठञ्विधिः। (म.भा. २.४४२)

पञ्चको मासोऽस्य पञ्चकमासिकः [3]कर्मकरः। दशकमासिकः। 'सोऽस्यांशवस्नभृतयः' (५.१.५६/१७२२) इति 'सङ्ख्याया अतिशदन्तायाः कन्' (५.१.५२/१६८७)॥

## अन्तर्बहिर्भ्यां च लोम्नः। (११७/८५५)

अन्तर् बहिस् इत्येताभ्यां परो यो लोमन्शब्दः तदन्ताद् बहुव्रीहेः अप् प्रत्ययो भवति[4]। अन्तर्गतानि लोमानि अस्य [5]अन्तर्लोमः प्रावारः। बहिर्लोमः [6]पटः॥

## अञ् नासिकायाः सञ्ज्ञायां नसं चास्थूलात्। (११८/८५६)

नासिकान्तात् बहुव्रीहेः अच् प्रत्ययो भवति,[7] नासिका[8]शब्दश्च नसमा[9]देशमापद्यते। अस्थूलात् इति नासिकाविशेषणं, न चेत् स्थूलशब्दात् परा नासिका भवति इति। सञ्ज्ञायाम् इति समुदायोपाधिः। द्रुरिव नासिका अस्य द्रुणसः[10]। [11]वाद्ध्रीणसः। 'पूर्वपदात् सञ्ज्ञायामगः' (८.४.३/८५७) इति णत्वम्। गोनसः। सञ्ज्ञायाम् इति किम् ? तुङ्गनासिकः। अस्थूलात् इति किम् ? स्थूलनासिको [12]वराहः।

[६४६] खुरखराभ्यां नस् वक्तव्यः। (म.भा. २.४४३)

खुरणाः। खरणाः। पक्षेऽच्प्रत्ययोऽपि इष्यते। खुरणसः। खरणसः। शितिनाः, अहिनाः, अर्चनाः (म.भा. २.४४३) इति निगम [13]इष्यते॥

## उपसर्गाच्च। (११९/८५८)

उपसर्गात् परो यो नासिकाशब्दः तदन्तात् बहुव्रीहेः अच् प्रत्ययो भवति,[14] [15]नासिकाशब्दश्च नसमापद्यते। असञ्ज्ञार्थं वचनम्। उन्नता नासिका अस्य उन्नसः। प्रणसः। 'उपसर्गाद् बहुलम्' (८.४.२८/८५९) इति णत्वम्।

[६४७] वेर्ग्रो वक्तव्यः।

विगता नासिका अस्य विग्रः॥

---

1. देवदत्तनेतृकः क. 2. च नास्ति ड. 3. कर्मकारः क. 4. समासान्तः इत्यधिकम् ह. 5. असौ इत्यधिकम् ड. 6. पटः नास्ति क.फ. 7. समासान्तः इत्यधिकम् फ. 8. शब्दस्य ग. 9. आदेशं नास्ति फ.ह. 10. खरणसः इत्यधिकम् क.ग.ह. 11. वार्ध्रीणसः ड.फ. 12. वराहः नास्ति फ.ह. 13. इष्यते नास्ति फ. 14. समासान्तः इत्यधिकम् ग.फ.ह. 15. वाक्यमिदं नास्ति क.

### सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । (१२०/८६०)

सुप्रातादयो[1] बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते । अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम् । शोभनं प्रातर् अस्य सुप्रातः (शौ. १९.८.३) । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवा अस्य सुदिवः (ऋ.१०.३.५) । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादौ अस्य एणीपदः । अजस्येव पादावस्य अजपदः । [2]प्रोष्ठो गोः, तस्येव पादावस्य प्रोष्ठपदः (तै.सं. ४.४.१०.७) ॥

### नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । (१२१/८६१)

नञ् दुस् सु इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ तदन्ताद् बहुव्रीहेरन्यतरस्यामच् प्रत्ययो भवति समासान्तः । अविद्यमाना हलिरस्य अहलः, अहलिः । दुर्हलः, [3]दुर्हलिः । सुहलः, सुहलिः । अविद्यमानं सक्थि अस्य असक्थः, असक्थिः । दुःसक्थः, दुःसक्थिः । सुसक्थः, सुसक्थिः । हलिशक्त्योः इति केचित् पठन्ति । अविद्यमाना शक्तिः अस्य अशक्तः, अशक्तिः । [4]विरूपा शक्तिः अस्य दुःशक्तः, दुःशक्तिः । शोभना शक्तिः अस्य सुशक्तः, सुशक्तिः ॥

### नित्यमसिच् प्रजामेधयोः । (१२२/८६२)

नञ्दुस्सुभ्यः इत्येव । नञ् दुस् सु इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद् बहुव्रीहेः नित्यमसिच् प्रत्ययो भवति समासान्तः । अविद्यमाना प्रजा अस्य अप्रजाः । दुष्प्रजाः । सुप्रजाः । अविद्यमाना मेधा यस्य अमेधाः । दुर्मेधाः । सुमेधाः । नित्यग्रहणं किम्, यावता पूर्वसूत्रेऽन्यतरस्यांग्रहणं [5]नैव स्वर्यते ? एवं तर्हि नित्यग्रहणादन्यत्रापि [6]भवति इति सूच्यते ।

श्रोत्रियस्येव ते राजन् [7]मन्दकस्याल्पमेधसः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥

### बहुप्रजाश्छन्दसि । (१२३/३६०७)

बहुप्रजाः इति छन्दसि निपात्यते । 'बहुप्रजा [8]निर्ऋतिमाविवेश' (ऋ. १. १६४. ३२) । छन्दसि इति किम् ? बहुप्रजो ब्राह्मणः ॥

### धर्मादनिच् केवलात् । (१२४/८६३)

[9]केवलाद् यो धर्मशब्दः तदन्ताद् बहुव्रीहेः अनिच् प्रत्ययो भवति समासान्तः । [10]कल्याणो धर्मोऽस्य कल्याणधर्मा । प्रियधर्मा[11] । केवलात् इति किम् ? परमः स्वो धर्मः अस्य परमस्वधर्मः । यद्येवं त्रिपदे बहुव्रीहौ प्राप्नोति, परमः स्वो धर्मः अस्य इति ? एवं तर्हि केवलात् इति पूर्वपदं [12]निर्दिश्यते, [13]केवलात् पदाद् यो धर्मशब्दो न [14]पदसमुदायात्, तदन्ताद् बहुव्रीहेः प्रत्ययः[15] ॥

---

1. शब्दाः बहुव्रीहौ समासे क. 2. प्रोष्टस्य इव पादौ यस्य फ. 3. दुर्हलिः – सुशक्तिः नास्ति फ. 4. दुर्गता क. 5 एव नास्ति फ. 6. भविष्यति क. ब. 7. भक्षकस्य ड. 8. निर्वृत्तिम् ड. 9. केवलयो यो धर्मशब्दः असमस्तः ब. क. ड. 10. कल्याणो धर्मोऽस्य नास्ति ग. फ. 11. मनुष्यधर्मा इत्यधिकम् क. 12. विशिष्यते ब. 13. पूर्वपदात् परो ब. क. ड. ह. 14. पद नास्ति क, न च समुदायात् ह. 15. इति इत्यधिकम् ब. फ. ह.

## जम्भा सुहरिततृणसोमेभ्यः । (१२५/८६४)

बहुव्रीहौ समासे स्वादिभ्यः परं जम्भा इति कृतसमासान्तमुत्तरपदं निपात्यते । जम्भशब्दः [1]अभ्यवहार्य-वाची दन्तविशेषवाची [2]च । शोभनो जम्भः अस्य सुजम्भा देवदत्तः । [3]शोभनाभ्यवहार्यः शोभनदन्तो वा । एवं हरितजम्भा । तृणजम्भा । सोमजम्भा । [4]दन्तवचने – तृणमिव जम्भः अस्य, सोम इव जम्भः अस्य इति विग्र-हीतव्यम् । सुहरिततृणसोमेभ्यः इति किम् ? पतितजम्भः ।।

## दक्षिणेर्मा लुब्धयोगे । (१२६/८६५)

दक्षिणेर्मा इति कृतसमासान्तः[5] निपात्यते बहुव्रीहौ समासे लुब्धयोगे । दक्षिणम् ईर्मम् अस्य दक्षिणेर्मा मृगः । ईर्मम् व्रणमुच्यते । दक्षिणमङ्गं व्रणितम् [6]अस्य व्याधेन इत्यर्थः । लुब्धयोगे इति किम् ? दक्षिणेर्मं शकटम् ।।

## इच् कर्मव्यतिहारे । (१२७/८६६)

कर्मव्यतिहारे यो बहुव्रीहिः तस्माद् इच् प्रत्ययो भवति[7] । 'तत्र तेनेदमिति[8] सरूपे' (२.२.२७/८४६) इत्ययं बहुव्रीहिर्गृह्यते । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । कचाकचि । मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि[9] । दण्डादण्डि[10] । तिष्ठद्गुप्रभृतिषु (२.१.१७/६७१) अयम् [11]इच् प्रत्ययः पठ्यते ।।

## द्विदण्ड्यादिभ्यश्च । (१२८/८६७)

द्विदण्ड्यादयः शब्दाः इच् प्रत्ययान्ताः [12]साधवो भवन्ति । द्विदण्ड्यादिभ्यः इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी । [13]द्विदण्ड्याद्यर्थमिच् [14]प्रत्ययो भवति । तथा भवति यथा द्विदण्ड्यादयः सिध्यन्ति इत्यर्थः । समुदाय-निपातनाच्चार्थविशेषेऽवरुध्यन्ते । द्विदण्डि [15]प्रहरति । द्विमुसलि [16]प्रहरति । इह न भवति, द्विदण्डा शाला इति ।

बहुव्रीह्यधिकारेऽपि तत्पुरुषात् क्वचिद् विधानमिच्छन्ति । निकुच्य कर्णौ धावति निकुच्यकर्णि धावति । प्रोह्य पादौ हस्तिनं वाहयति [17]प्रोह्यपादि हस्तिनं वाहयति । मयूरव्यंसकादित्वात् समासः ।।

द्विदण्डि[18] । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु । एकपदि । प्रोह्यपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि । उभाबाहु, उभयाबाहु इति निपातनाद् इच्-प्रत्ययलोपः । प्रत्ययलक्षणेनाव्ययीभावसञ्ज्ञा ।।

---

1. अभ्यवहारवाची ड, तदन्तविशेषवाची ह. 2. वा ब. क. ड. 3. शोभनाभ्यवहारः ड. 4. तदन्त-वचने क. 5. बहुव्रीहिः इत्यधिकम् फ. 6. अस्य नास्ति क. 7. समासान्तः इत्यधिकम् ग. फ. 8. इति सरूपे नास्ति ग. 9. हलैश्च हलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं हलाहलि इत्यधिकम् क. 10. युद्धं वर्तते इत्यधिकम् ग. 11. इच् नास्ति क, प्रत्ययः नास्ति ह. 12. निपात्यन्ते फ. 13. द्विदण्ड्यादिभ्यः क. ड. फ. 14. प्रत्ययः नास्ति क. 15–16. प्रहरणम् ब. ह. 17. प्रोह्यपदि क. ड. 18. त्रिदण्डि इत्यधिकम् क.

## प्रसंभ्यां जानुनोर्ज्ञुः। (१२९/८६८)

प्र सम् इत्येताभ्यामुत्तरस्य जानुशब्दस्य [1]ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ[2]। [3]प्रकृष्टे जानुनी अस्य प्रज्ञुः। सञ्ज्ञुः॥

## ऊर्ध्वाद् विभाषा। (१३०/८६९)

[4]ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा ज्ञुः इत्ययमादेशो भवति[5]। ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः, ऊर्ध्वज्ञुः॥

## ऊधसोऽनङ्। (१३१/४८३)

ऊधस्शब्दान्तस्य बहुव्रीहेः अनङ् आदेशो भवति समासान्तः। [6]कुण्डमिव ऊधः अस्याः सा कुण्डोध्नी। [7]घटोध्नी।

[६४८] ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम्। (म. भा. २.४४३)

इह मा भूत्, महोधाः पर्जन्यः[8]। घटोधो धैनुकम्[9]॥

## धनुषश्च। (१३२/८७०)

धनुःशब्दान्तस्य बहुव्रीहेः अनङादेशो भवति समासान्तः। शार्ङ्गं धनुरस्य शार्ङ्गधन्वा। [10]गाण्डीवधन्वा। [11]पुष्पधन्वा। [12]अधिज्यधन्वा[13]॥

## वा सञ्ज्ञायाम्। (१३३/८७१)

[14]धनुःशब्दान्ताद् बहुव्रीहेरनङादेशो वा भवति[15] सञ्ज्ञायां विषये। पूर्वेण [16]नित्यः प्राप्तः विकल्प्यते। [17]शतधनुः, शतधन्वा। दृढधनुः, दृढधन्वा॥

## जायाया निङ्। (१३४/८७२)

जायाशब्दान्तस्य बहुव्रीहेर्निङादेशः भवति[18]। युवतिः जाया यस्य युवजानिः। वृद्धजानिः[19]॥

---

1. जुः प्रत्ययः फ, जुः इत्ययमादेशः ह. 2. समासे इत्यधिकम् ग. फ. ह. 3. प्रगते ग. ड. 4. ऊर्ध्वात् परस्य फ. ह. 5. समासान्तः बहुव्रीहौ समासे इत्यधिकम् क. ड. 6. कुण्डवत् ड. 7. घटोध्नी नास्ति फ. 8. कुण्डोधाः रेतोधाः इत्यधिकम् क. 9. इति इत्यधिकम् ग. फ. 10. गाण्डीव -- अधिज्यधन्वा नास्ति ह. 11. पिनाकधन्वा ड. 12. अधिधन्वा ड, नास्ति फ. 13. बहुव्रीहौ इति किम्? परमधनुः इत्यधिकम् ग. ड. 14. धनुःशब्दान्तस्य क. ड. 15. समासान्तः इत्यधिकम् क. ड. फ. 16. नित्यं प्राप्ते विकल्पार्थं वचनम् क. 17. शतधनुः नास्ति क. 18. समासान्तः इत्यधिकम् ब. क. फ. 19. वधूजानिः प्रियजानिः रेवतीजानिः इत्यधिकम् ब. ड.

## गन्धस्येदुत्पूतिसुसुरभिभ्यः । (१३५/८७४)

[1]उत् पूति सु सुरभि इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे । तकार उच्चारणार्थः । उद्गतो गन्धोऽस्य उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । एतेभ्यः इति किम् ? [2]तीव्रगन्धो वातः ।

[६४९] गन्धस्येत्वे तदेकान्तग्रहणम्[3] । (म. भा. २.४४३)

तेन शोभनः गन्धः अस्य [4]सुगन्धः [5]आपणिकः[6] ॥

## अल्पाख्यायाम् । (१३६/८७५)

अल्पाख्यायां यो गन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे । [7]सूपोऽल्पोऽस्मिन् सूपगन्धि भोजनम् । अल्पमस्मिन् भोजने घृतम् घृतगन्धि[8] । क्षीरगन्धि । अल्पपर्यायो गन्धशब्दः[9] ॥

## उपमानाच्च । (१३७/८७६)

उपमानात् परो यो गन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे । पद्मस्य इव गन्धोऽस्य पद्मगन्धिः । [10]उत्पलगन्धिः । करीषगन्धिः[11] ॥

## पादस्य लोपोऽहस्त्यादिभ्यः । (१३८/८७७)

उपमानात् इत्येव । उपमानात् हस्त्यादिवर्जितात् परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे । स्थानिद्वारेण लोपस्य समासान्तता [12]विज्ञायते । व्याघ्रस्येव पादौ अस्य व्याघ्रपात् । [13]सिंहपात् । अहस्त्यादिभ्यः इति किम् ? हस्तिपादः । [14]कटोलपादः ।

हस्तिन् । कटोल । गण्डोल । गण्डोलक । महिला । दासी । गणिका । कुसूल ॥

## कुम्भपदीषु च । (१३९/८७८)

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते । तत्र एवं सूत्रम् ज्ञेयम् । पादस्य लोपो भवति कुम्भपद्यादिविषये यथा कुम्भपद्यादयः सिध्यन्ति[15] । समुदायपाठस्य च प्रयोजनं [16]विषयनियमः – स्त्रियामेव, तत्र ङीप्प्रत्यये एव, नान्यदा[17] । कुम्भपदी । शतपदी । यच्च [18]इह उपमानपूर्वं सङ्ख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनम् । 'पादोऽन्यतरस्याम्' (४.१.८/४५७) इति विकल्पो न भवति ।

---

1. उदादिभ्यः ह, °सुरभिभ्यः शब्देभ्यः क. 2. तीक्ष्णगन्धं वस्त्रम् क. ह. 3. कर्तव्यम् इत्यधिकम् क. ह. 4. सुरभिगन्धः ग, सुरभिकः ह. 5. आपणः फ. ड. 6. पूतिगन्धः कटः इत्यधिकम् ड. फ. 7. सूपस्य अल्पः गन्धः यस्मिन् क. फ. 8. दधिगन्धि इत्यधिकम् ड. फ. 9. अल्पाख्यायाम् इति किम् ? पुष्पगन्धः पटः अल्पं स्तोकम् इत्यधिकम् ड. 10. अनलगन्धिः फ, चन्दनगन्धि ग. 11. उपमानात् इति किम् ? उत्पलानां गन्धः यस्मिन् तद् उत्पलगन्धं सरः इत्यधिकम् 12. विज्ञायते नास्ति क. फ. 13. सिंहपात् नास्ति क. 14. पटोलपादः ब, कपोतपादः क. 15. इति इत्यधिकम् ड. 16. विषये नियमः क. 17. इति इत्यधिकम् क. 18. इह नास्ति फ.

कुम्भपदी । शतपदी । अष्टापदी । जालपदी । एकपदी । मालापदी । मुनिपदी । गोधापदी । गोपदी । [1]कलशीपदी । घृतपदी । दासीपदी । निष्पदी । आर्द्रपदी । कुणपदी । कृष्णपदी । द्रोणपदी । द्रुपदी । शकृत्पदी । सूपपदी । पञ्चपदी । अर्वपदी । स्तनपदी[2] । कुम्भपद्यादिः ॥

## सङ्ख्यासुपूर्वस्य । (१४०/८७९)

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः । द्वौ पादौ अस्य द्विपात् । त्रिपात्[3] । शोभनौ पादौ अस्य सुपात्[4] ॥

## वयसि दन्तस्य दतृ । (१४१/८८०)

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दः, [5]तस्य दतृ इत्ययमादेशो भवति समासान्तः वयसि गम्यमाने । ऋकार उगित्कार्यार्थः । द्वौ दन्तौ अस्य [6]द्विदन् । [7]त्रिदन् । चतुर्दन् । शोभना दन्ताः अस्य [8]समस्ताः जाताः सुदन् कुमारः । वयसि इति किम् ? द्विदन्तः कुञ्जरः । सुदन्तो दाक्षिणात्यः[9] ॥

## छन्दसि च । (१४२/३६०)

छन्दसि [10]च दन्तशब्दस्य दतृ इत्ययमादेशो भवति समासान्तः बहुव्रीहौ समासे । [11]पत्रदतमालभेत । [12]उ॒भया॑दतः (ऋ. १०.९०.१०) आलभते[13] ॥

## स्त्रियां सञ्ज्ञायाम् । (१४३/८८१)

[14]स्त्रियामन्यपदार्थे सञ्ज्ञायां विषये [15]दन्तशब्दस्य दतृ इत्ययमादेशो भवति । [16]अयोदती । फालदती । सञ्ज्ञायाम् इति किम् ? समदन्ती । [17]स्निग्धदन्ती ॥

## विभाषा श्यावारोकाभ्याम् । (१४४/८८२)

श्याव अरोक इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययमादेशो भवति विभाषा [18]समासान्तो बहुव्रीहौ[19] । श्यावदन्, श्यावदन्तः । अरोकदन्, [20]अरोकदन्तः । अरोको [21]निर्दीप्तिः । सञ्ज्ञायाम् इत्येव, श्यावदन्तः । अरोकदन्तः ॥

---

1. कुशूलपदी क. फ. 2. स्थूलपदी सूत्रपदी कलहंसपदी द्विपदी विषपदी सुपदी सूकरपदी सूचीपदी इत्यधिकम् ब. 3. चतुष्पात् इत्यधिकम् ब.ङ. 4. कथं गूढपात् ? सञ्ज्ञायां सर्वस्य भवत्येव इत्यधिकम् ङ. 5. तदन्तस्य फ. 6. बालकस्य इत्यधिकम् ब.क.फ. 7. त्रिदन् नास्ति ङ. 8. समस्ताः जाताः नास्ति फ. 9. एकदन्तो विनायकः इत्यधिकम् ह, उगित्कार्यात् द्विदती त्रिदती सुदती इत्यधिकम् ङ. 10. विषये इत्यधिकम् ब.क.ग.ङ.फ.ह. 11. अपन्नदती भवति । उभयतोदतो यथा ह. 12. उभयतो दतः प्रतिगृह्णाति क. फ. 13. छन्दसि इति किम् ? उभयतोदन्ताः अश्वादयः इत्यधिकम् ङ. 14. नित्यविषये इत्यधिकम् क. 15. दन्तस्य क. 16. अयः इव दन्तः यस्याः इत्यधिकम् ङ. 17. सिद्धदन्ती ह. 18. सञ्ज्ञायां विषये इत्यधिकम् ङ. 19. समासे इत्यधिकम् क. 20. अरो[illegible]दन्तः नास्ति ङ. 21. निस्तेजाः क.

## अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । (१४५/८८३)

विभाषा इत्येव । अग्रान्तात् शब्दात् शुद्ध शुभ्र वृष वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे । [1]कुड्मलाग्रदन्, कुड्मलाग्रदन्तः । शुद्धदन्, शुद्धदन्तः । शुभ्रदन्, शुभ्रदन्तः । वृषदन्, वृषदन्तः । वराहदन्, वराहदन्तः । अनुक्तसमुच्चयार्थः चकारः । अहिदन्, अहिदन्तः । मूषिकदन्, मूषिकदन्तः । [2]गर्दभदन्, गर्दभदन्तः । [3]शिखरदन्, शिखरदन्तः ॥

## ककुदस्यावस्थायां लोपः । (१४६/८८४)

ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तः अवस्थायां गम्यमानायाम् । कालादिकृता [4]वस्तुधर्मा वयःप्रभृतयः अवस्था इत्युच्यते । [5]असञ्जातं ककुदमस्य असञ्जातककुत् । बालः इत्यर्थः । पूर्णककुत् । [6]मध्यमवयाः इत्यर्थः । [7]उन्नतककुत् । [8]वृद्धवयाः इत्यर्थः । स्थूलककुत् । बलवान् इत्यर्थः । यष्टिककुत् । [9]नातिस्थूलो नातिकृशः इत्यर्थः । अवस्थायाम् इति किम् ? श्वेतककुदः ॥

## त्रिककुत् पर्वते । (१४७/८८५)

त्रिककुदि[10] बहुव्रीहौ[11] ककुदशब्दस्य लोपः समासान्तो[12] निपात्यते पर्वतेऽभिधेये । त्रीणि ककुदान्यस्य त्रिककुत् पर्वतः । ककुदाकारं पर्वतस्य शृङ्गं ककुदम्[13]इत्युच्यते । न च सर्वस्त्रिशिखरः पर्वतः त्रिककुत् । किं तर्हि ? सञ्ज्ञैषा पर्वतविशेषस्य । पर्वते इति किम् ? त्रिककुदोऽन्यः ॥

## उद्विभ्यां काकुदस्य । (१४८/८८६)

उत् वि इत्येताभ्यां [14]परस्य काकुदशब्दस्य लोपो भवति[15] बहुव्रीहौ समासे । उद्गतं काकुदमस्य उत्काकुत् । विकाकुत् । तालु काकुदमुच्यते ॥

## पूर्णाद् विभाषा । (१४९/८८७)

पूर्णात्[16] परस्य काकुदशब्दस्य विभाषा लोपो भवति[17] बहुव्रीहौ[18] समासे । पूर्णं काकुदमस्य पूर्णकाकुत् पूर्णकाकुदः[19] ॥

---

1. कुड्मलाग्रवत् दन्ता यस्य इत्यधिकम् ड. 2. चारुदन् चारुदन्तः क. 3. शिखराग्रदन् शिखराग्रदन्तः ड.. 4. देहधर्मा ब. क. 5. अजातं क. 6. मध्यमः क. ड. 7. संपन्नककुद् क. 8. वृद्धः क. फ. 9. नातिदीर्घो नातिह्रस्वः क. 10. इति इत्यधिकम् क. ड. 11. समासे इत्यधिकम् ड. 12. अपि इत्यधिकम् ह. 13. इति नास्ति फ. 14. उत्तरस्य क. 15. समासान्तः इत्यधिकम् क. 16. शब्दात् इत्यधिकम् फ. 17. समासान्तइत्यधिकम् क. ड. 18. समासे नास्ति फ. 19. पूर्णात् इति किम् ? रक्तकाकुदः इत्यधिकम् ड.

## सुहृद्दुर्हृदौ मित्रामित्रयोः । (१५०/८८८)

सुहृत् दुर्हृत् इति [1]निपात्यते यथासङ्ख्यं मित्रामित्रयोरभिधेययोः । सुशब्दात् परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ[2], तथा दुःशब्दात् [3]परस्य । शोभनं हृदयम् अस्य सुहृत् मित्रम् । दुष्टं हृदयमस्य दुर्हृत् अमित्रम् । मित्रामित्रयोः इति किम् ? सुहृदयः [4]कारुणिकः । दुर्हृदयः चोरः ॥

## उरःप्रभृतिभ्यः कप् । (१५१/८८९)

उरः[5]प्रभृत्यन्तात् बहुव्रीहेः कप्प्रत्ययो भवति[6] । व्यूढम् उरः अस्य व्यूढोरस्कः । प्रियसर्पिष्कः । अवमुक्तोपानत्कः । पुमान् अनड्वान् पयः नौः लक्ष्मीः इति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि । तत्रेदं प्रयोजनम् – एकवचनान्तानामेव ग्रहणम् [7]इह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूत् [8]इति । तत्र[9] 'शेषाद् विभाषा' (५.४.१५४/८९१) इति विकल्प एव भवति [10]इति । [11]द्विपुमान्, द्विपुंस्कः । बहुपुमान्, बहुपुंस्कः[12] ।

उरस् । सर्पिस् । उपानह् । पुमान् । अनड्वान् । नौः । पयः । लक्ष्मीः । दधि । मधु । शालि । 'अर्थान् नञः' (ग.सू. १५९) अनर्थकः ॥

## इनः स्त्रियाम् । (१५२/८९०)

इन्नन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति[13] स्त्रियां [14]विषये । बहवो दण्डिनः अस्यां शालायां बहुदण्डिका शाला । बहुच्छत्रिका । बहुस्वामिका नगरी । बहुवाग्मिका सभा । स्त्रियाम् इति किम् ? बहुदण्डी राजा, बहुदण्डिकः । 'शेषाद्विभाषा' (५.४.१५४/८९१) इत्येतद् भवति ॥

## नद्यृतश्च । (१५३/८३३)

नद्यन्तात् बहुव्रीहेः ऋकारान्तात् च कप् प्रत्ययो भवति[15] । बह्व्यः कुमार्य अस्मिन् देशे बहुकुमारीकः देशः । बहुब्रह्मबन्धूकः । ऋतः खल्वपि – [16]बहुकर्तृकः । तकारः [17]मुखसुखार्थः ॥

## शेषाद् विभाषा । (१५४/८९१)

यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेषः, तस्माद्[18] विभाषा कप् प्रत्ययो भवति[19] । बह्व्यः खट्वाः अस्मिन् बहुखट्वकः । बहुमालकः । बहुवीणकः । बहुखट्वाकः । बहुमालाकः । बहुवीणाकः । [20]बहुखट्वः । बहुमालः । बहुवीणः । कथम् अनृक्कं साम, बह्वृक्कं सूक्तम् इति, यावता विहितोऽत्र सामान्येन समासान्तः ऋक्पूः (५.४.७४/९४०) इति । नैतदस्ति । विशेषे [21]स इष्यते, अनृचो माणवको ज्ञेयो बह्वृचश्चरणाख्यायाम् (म.भा. २.४४४) इति । शेषात् इति किम् ? प्रियपथः । प्रियधुरः ॥

---

1. शब्दौ निपात्येते क.ड.फ. 2. समासे इत्यधिकम् ड. 3. परस्य नास्ति फ, च क. 4. साधुः क.ड. 5. प्रभृतिकात् फ. 6. समासान्तः इत्यधिकम् ब.क.ड.फ. 7. यथा ड. 8. इति नास्ति क.फ. 9. हि इत्यधिकम् क.ड.फ. 10. इति नास्ति फ. 11. द्विपुमान् नास्ति फ. 12. इति इत्यधिकम् ह. 13. समासान्तः इत्यधिकम् ब.क.ड.ह. 14. अभिधेयायाम् ब.क.ड.फ. 15. समासान्तः इत्यधिकम् ब.ड. 16. बह्वकर्तृकम् फ. 17. सुलभोच्चारणार्थः ग.ह. 18. शेषात् इत्यधिकम् क.फ. 19. समासान्तः इत्यधिकम् फ. 20. बहुखट्वः नास्ति ड. 21. हि स उच्यते क.

## न सञ्ज्ञायाम् । (१५५/८९३)

सञ्ज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । विश्वे देवा [1]अस्य [2]विश्वदेवः । विश्वयशाः ॥

## ईयसश्च । (१५६/८९४)

ईयसन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति । सर्वा प्राप्तिः प्रतिषिध्यते । बहवः श्रेयांसः अस्य बहुश्रेयान् । 'शेषाद् विभाषा' (५.४.१५४/८९१) इत्यस्य प्रतिषेधः । बह्व्यः श्रेयस्यः अस्य बहुश्रेयसी । 'नद्यृतश्च' (५.४.१५३/८३३) इत्यस्य प्रतिषेधः । ह्रस्वत्वमपि न भवति, ईयसो बहुव्रीहौ पुंवत् इति वचनात् ॥

## वन्दिते भ्रातुः । (१५७/८९५)

वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद् बहुव्रीहेः कप् प्रत्ययो [3]न भवति । [4]वन्दितः स्तुतः पूजितः इत्युच्यते । शोभनो भ्राता अस्य सुभ्राता[5] । वन्दितः इति किम् ? मूर्खभ्रातृकः । दुष्टभ्रातृकः[6] ॥

## ऋतश्छन्दसि । (१५८/३५०८)

[7]ऋवर्णान्ताद् बहुव्रीहेः छन्दसि विषये कप् प्रत्ययो न भवति । हता माता अस्य हतमाता (अ. वे. २.३२.४) । हतपिता । 'हतस्वसा' (अ. वे. २.६७.३) । 'सुहोता' (ऋ. ७.६७.३)[8] ॥

## नाडीतन्त्र्योः स्वाङ्गे । (१५९/८९६)

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ[9] तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति । बह्व्यः नाड्यः [10]अस्य बहुनाडिः कायः । बहुतन्त्री ग्रीवा । [11]धमनीवचनस्तन्त्रीशब्दः । स्वाङ्गे इति किम् ? बहुनाडीकः स्तम्भः । [12]बहुतन्त्रीका वीणा[13] ॥

## निष्प्रवाणिश्च । (१६०/८९७)

निष्प्रवाणिः इति [14]नदीलक्षणस्य कपः प्रतिषेधो निपात्यते । प्रोयतेऽस्याम् इति प्रवाणी । [15]प्रवयन्ति तया वा इति प्रवाणी । करणसाधनोऽयं ल्युट् । तन्तुवायशलाका भण्यते । निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः । [16]निष्प्रवाणिः कम्बलः । अपनीतशलाकः [17]समाप्तवानः [18]प्रत्यग्रो [19]नवकः उच्यते ॥

इति [20]श्रीवामनविरचितायां [21]काशिकायां वृत्तौ

पञ्चमाध्यायस्य चतुर्थः पादः

---

1. अस्मिन् ड. 2. विश्वेदेवाः ह. 3. न नास्ति क. ह. 4. प्रशस्यमानः इत्यधिकम् ब. क. ड. फ. 5. भ्रातुः इति किम् ? सुमात्रिकः इत्यधिकम् ड. 6. स्थूलभ्रातृकः इत्यधिम् ग. 7. ऋदन्तात् क. फ. ह. 8. छन्दसि इति किम् ? सुहोत्रिकः इत्यधिकम् ड. 9. वर्तेते इत्यधिकम् ब. क. ड. फ. ह. 10. अस्मिन् काये क. 11. नाडीवचनः क. 12. बहुतन्त्रिका फ. 13. स्वाङ्गं परिभाषितं गृह्यते बहुव्रीहौ समासे इत्यधिकम् ड. 14. नदीलक्षणस्य नास्ति क. 15. प्रवयन्ति – भण्यते नास्ति ड. 16. उदाहरणमिदं नास्ति क. 17. समाप्तवाचीकः क, परिसमाप्तत्वात् नवकः उच्यते तत्राचिरादुपहृतः इत्यर्थ इत्यधिकम् ह. 18. प्रत्यग्रः नास्ति क. 19. नूतनः ड. 20. श्रीवामनविरचितायां नास्ति क. 21. काशिकायां नास्ति क,

# का शि का

## षष्ठोऽध्यायः

### प्रथमः पादः

**एकाचो द्वे प्रथमस्य। (१/२१७५)**

अधिकारो[1]ऽयम्। एकाचः इति च, द्वे इति च, प्रथमस्य इति [2]च त्रितयमधिकृतं वेदितव्यम्। इत उत्तरं यद्[3]वक्ष्यामः प्राक् संप्रसारण[4]विधानात् तत्र एकाचः प्रथमस्य द्वे भवतः इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'लिटि धातोरनभ्यासस्य' (६.१.८/२१७७) इति। तत्र धातोरवयवयस्यानभ्यासस्य प्रथमस्यैकाचो द्वे भवतः। जजागार। पपाच। इयाय। आर।

एकाच इति [5]बहुव्रीहिनिर्देशः। एकोऽच् यस्य सोऽयम् एकाच् इत्यवयवेन विग्रहः। तत्र समुदायः समासार्थः। अभ्यन्तरश्च समुदायेऽवयवो भवति इति साच्कस्यैव द्विर्वचनं भवति। एवं च पच् इत्यत्र येनैवाचा समुदायः एकाच्, तेनैव तदवयवोऽच्छब्दः पशब्दश्च। तत्र पृथगवयवैकाच् न द्विरुच्यते, किं तर्हि, समुदायैकाजेव। तथाहिसकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते। पपाच इत्यत्र प्रथमत्वं व्यपदेशिवद्भावात्। इयाय, आर इत्यत्र एकाच्त्वमपि व्यपदेशिभावादेव। द्विःप्रयोगश्च द्विर्वचनमिदम्। आवृत्तिसङ्ख्या हि द्वे इति विधीयते। तेन स एव शब्दो [6]द्विरुच्चार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते॥

**अजादेर्द्वितीयस्य। (२/२१७६)**

प्रथमद्विर्वचनापवादो[7]ऽयम्। अजादेर्द्वितीयस्य एकाचो द्विर्वचनमधिक्रियते। अच् आदिर्यस्य धातोः तदवयवस्य द्वितीयस्य एकाचो द्वे भवतः। अटिटिषति। अशिशिषति। अरिरिषति। अर्तेः 'स्मिपूङ्रञ्ज्वशां सनि' (७.२.७४/२६२६) इति [8]इट् क्रियते। तस्मिन् कृते गुणे च रपरत्वे च 'द्विर्वचनेऽचि' (१.२.५९/२२४३) इति स्थानिवद्भावः प्राप्नोति। तत्र[9] प्रतिविधानं [10]द्विर्वचननिमित्तेऽचि इति उच्यते। न चात्र द्विर्वचननिमित्तमिट्। किं तर्हि? कार्यी। न च कार्यी निमित्तत्वेनाश्रीयते। तथाहि – ङिङ्निमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयिता इत्यत्र न भवति, न हि कार्यिणः शीङो गुणं प्रति निमित्तभावः इति। अत्र केचिद् अजादेः इति कर्मधारयात् पञ्चमीमिच्छन्ति। अच् च[11]असौ आदिश्च इत्यजादिः, तस्मात् अजादेरुत्तरस्य एकाचो द्वे भवतः इति। तेषां द्वितीयस्य इति [12]विस्पष्टार्थं [13]द्रष्टाव्यम्॥

**न न्द्राः संयोगादयः। (३/२४४६)**

द्वितीयस्य इति वर्तते। द्वितीयस्य एकाचो[14]ऽवयवभूतानां [15]न्द्राणां तदन्तर्भावात् [16]प्राप्तं द्विर्वचनं प्रतिषिध्यते। नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते। उन्दिदिषति। अड्डिडिषति।

---

1. अयम् नास्ति फ. ह. 2. एतत् त्रयम् क. 3. व्याख्यास्यामः क. 4. °विधेः क. 5. बहुव्रीहिः क. 6. द्विरुच्यते क. 7. प्रयोगः क. 8. विधीयते फ, इटि कृते क. 9. एवम् इति प्रतिविधानात् फ. ह. 10. द्विर्वचने अचि फ. 11. असौ नास्ति फ. 12. स्पष्टार्थम् क. 13. द्रष्टव्यम् नास्ति फ. 14. अवयवानां ब. फ. ह. 15. नदराणाम् क. 16. द्विर्वचनं प्राप्नोति तत् प्रतिषिध्यते क.

अर्चिचिषति। न्द्राः इति किम्? ईचिक्षिषते। संयोगादयः इति किम्? प्राणिणिषति। 'अनितेः' (८.४.१९/२४७८) 'उभौ साभ्यासस्य' (८.४.२१/२६०६) इति णत्वम्। अजादेः[1] इत्येव, दिद्रासति।

केचिद् अजादेः [2]इत्यपि पञ्चम्यन्तं कर्मधारयमनुवर्तयन्ति। तस्य प्रयोजनम्, इन्दिद्रीयिषति [3]इति। अजादेरनन्तरत्वाभावाद् दकारो द्विरुच्यत एव, नकारो न द्विरुच्यते। इन्द्रमिच्छति इति क्यच्। तदन्तात् इन्द्रीयितुम् इच्छति इति सन्।

[६५०] बकारस्याप्ययं[4] प्रतिषेधो वक्तव्यः।

उब्जिजिषति। यदा बकारोपध उब्जिरु[5]पदिश्यते तदा अयं प्रतिषेधः। [6]दकारोपधोपदेशे [7]तु न वक्तव्यः। बत्वं तु दकारस्य विधातव्यम्।

[६५१] [8]यकारपरस्य [9]रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्।

अरार्यते। अर्तेः 'अटर्यर्तिशूर्णोतीनामुपसंख्यानम्' (७.४.८२/२६३० वा.) इति[10] यङ। [11]तत्र 'यङि च' (७.४.३०/२६३३) इति गुणः, [12]ततो द्विर्वचनम्।

[६५२] ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्। (म.भा. ३.८)

कस्य तृतीयस्य? केचिदाहुर्व्यञ्जनस्य इति। ईर्ष्यियिषति। अपरे पुनः तृतीयस्य एकाचः इति व्याचक्षते। ईर्ष्यिषिषति।

[६५३] कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्। (म.भा.३.८)

कण्डूयियिषति। असूयियिषति।

[६५४] वा नामधातूनां तृतीयस्यैकाच द्वे भवत इति वक्तव्यम्। (म.भा.३.८)

अश्वीयियिषति। अशिश्वीयिषति[13]। अपर आह –

[६५५] यथेष्टं नामधातुष्विति वक्तव्यम्। (म.भा.३.८)

पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुपुतित्रीयियिषति। [14]पुत्रीयिषिषति॥

---

1. द्वितीयस्यैव इत्यधिकम् क. 2. इत्यपि नास्ति फ. 3. इत्येव फ. ह. 4. अयं नास्ति फ. 5. उपगृह्यते फ. 6. दकारोपधे उपदेशे फ. 7. प्रतिषेधः फ.ह. 8. यकारात् परस्य फ. 9. रेफस्य नास्ति फ. 10. अनेन इत्यधिकम् फ. ह. 11. तत्र नास्ति फ. 12. तत्र ड. 13. इति इत्यधिकम् फ. 14. पुत्रीयिषिषति नास्ति ड. फ.

## पूर्वोऽभ्यासः । (४/२१७८)

द्वे इति प्रथमान्तं [1]यदनुवर्तते तदर्थादिह षष्ठ्यन्तं जायते । तत्र प्रत्यासत्तेरस्मिन् प्रकरणे ये द्वे विहिते तयोर्यः पूर्वोऽवयवः सोऽभ्याससञ्ज्ञो भवति । पपाच । पिपक्षति । पापच्यते । जुहोति । [2]अपीपचत् । अभ्यासप्रदेशास्तु 'अत्र लोपोऽभ्यासस्य' (७.४.५८/२६२०) इत्येवमादयः ॥

## उभे अभ्यस्तम् । (५/४२६)

द्वे इति [3]वर्तमाने उभेग्रहणं समुदायसञ्ज्ञाप्रतिपत्त्यर्थम् । ये द्वे विहिते ते उभे अपि समुदिते [4]अभ्यस्तसञ्ज्ञे भवतः । ददति । ददत् । दधतु[5] । उभेग्रहणं किम् ? नेनिजति इत्यत्र अभ्यस्तानामादिः इति [6]समुदाये उदात्तत्वं यथा स्यात्, प्रत्येकं पर्यायेण वा मा भूत् इति । अभ्यस्तप्रदेशाः[7] – 'अभ्यस्तानामादिः' (६. १. १८९/३६७३) इत्येवमादयः ॥

## जक्षित्यादयः षट् । (६/४२८)

अभ्यस्तम् इति वर्तते । जक्ष इत्ययं धातुः इत्यादयश्चान्ये षट् धातवः [8]अभ्यस्तसञ्ज्ञा भवन्ति । सेयं सप्तानां धातूनाम् अभ्यस्तसञ्ज्ञा [9]विधीयते । 'जक्ष भक्षहसनयोः' (धा.पा. १०७२) इत्यतः प्रभृति 'वेवीङ् वेतिना तुल्ये' (धा.पा. १०७८) इति यावत् । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति । दीध्यते, वेव्यते इत्यत्र 'अभ्यस्तानामादिः' इत्येष[10] स्वरः प्रयोजनम् । [11]दीध्यत् इति च शतरि व्यत्ययेन सम्पादिते 'नाभ्यस्ताच्छतुः' (७.१.७८/४२७) इति नुमः प्रतिषेधः[12] ॥

## तुजादीनां दीर्घोऽभ्यासस्य । (७/३६००)

तुजादीनाम् इति प्रकारे आदिशब्दः । [13]कश्च प्रकारः ? तुजेर्दीर्घोऽभ्यासस्य न विहितः, दृश्यते च । ये तथाभूताः ते तुजादयः, तेषामभ्यासस्य दीर्घः साधुर्भवति । 'तूतुजानः' (ऋ. १. ३. ६) । 'मामहानः' (तै.सं. ४.६.३.२) । 'अनड्वान् दाधार' (अ.वे. ४. ११. १) । 'व्रतं मीमाय' (अ.वे. ५. ११. ३) । दाधार । 'स तूताव' (ऋ. १.९४.२) दीर्घश्चैषां छन्दसि प्रत्ययविशेषे [14]एव दृश्यते, ततोऽन्यत्र न भवति । तुतोज शबलान् हरीन्[15] ॥

## लिटि धातोरनभ्यासस्य । (८/२१७७)

लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः । पपाच । पपाठ । प्रोर्णुनाव । वाच्य ऊर्णोर्णुवद्भावः[16] इति वचनाद् ऊर्णोतेः [17]इजादेः (३.३.३९/२३३७) इति आम् न भवति ।

---

1. पदम् फ.ह. 2. अपीठत् ब. 3. अनुवर्तमाने क. 4. अभ्यस्तसञ्ज्ञके क. 5. दधति अदधत् इत्यधिकम् क. 6. समुदायपरस्य फ, उदात्तत्वे समुदाये क. 7. अस्मिन् प्रकरणे इत्यधिकम् क.ग.फ. 8. अभ्यस्तसञ्ज्ञकाः क. 9. विधीयते नास्ति क. 10. एष नास्ति क. 11. दीध्यतः ह. 12. प्रयोजनम् इत्यधिकम् ह. 13. च नास्ति क. 14. च क. 15. इति इत्यधिकम् क. ड. 16. यङः प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थम् इत्यधिकम् फ. 17. इजादेश्च गुरुमतोऽनृच्छः ब.

लिटि इति किम्? कर्ता। हर्ता। धातोः इति किम्? 'ससूवांसो विशृण्विरे' (ऋ. ४.८.६) 'इम इन्द्राय सुन्विरे' (ऋ. ७. ३२. ४) अनभ्यासस्य इति किम्? 'कृष्णो नोनाव वृषभो यदीदम्' (ऋ. १. ७९. २) नोनूयतेर्नोनाव। 'समान्या मरुतः संमिमिक्षुः' (ऋ. १.१६५.१)। लिटि उसन्तः।

[६५६] द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्।

'यो जागार तमृचः कामयन्ते' (ऋ. ५.४४.१४)। 'दाति प्रियाणि' (ऋ. ४.८.३) इति॥

## सन्यङोः। (९/२३९५)

धातोरनभ्यासस्य इति वर्तते। सन्यङोः इति च षष्ठचन्तमेतत्। सनन्तस्य यङन्तस्य च अनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। [2]पिपक्षति। पिपतिषति। [3]अरिरिषति। [4]उन्दिदिषति। यङन्तस्य — पापच्यते। अटाटचते। यायज्यते। अरार्यते। प्रोर्णोनूयते। अनभ्यासस्य इत्येव' जुगुप्सिषते। लोलूयिषते॥

## श्लौ। (१०/२४९०)

श्लौ परतः अनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। [5]जुहोति। [6]बिभेति। [7]जिह्रेति॥

## चङि। (११/२३१५)

चङि परतो[8]ऽनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। [9]आशिशत्। [10]आर्दिदत्। पचादीनां ण्यन्तानां चङि[11]कृते णिलोपः, उपधाह्रस्वत्वं, द्विर्वचनम् [12]इत्येषां कार्याणां प्रवृत्तिक्रमः। तथा च सन्वल्लघुनि चङ्परे (७.४.९३/२३१६) इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावान्न प्रतिषिध्यते। यो ह्यनादिष्टादचः पूर्वः तस्य विधिं प्रति स्थानिवद्भावो भवति[13]। न चास्मिन् कार्याणां [14]क्रमेणानिष्टादचः पूर्वोऽभ्यासो भवति इति। आटिटत् इति [15]'द्विर्वचनेऽचि' (१.१.५९/२२४३) इति स्थानिवद्भावात् द्वितीयस्यैकाचः द्विर्वचनं भवति॥

## दाश्वान् साह्वान् मीढ्वांश्च। (१२/३६२९)

दाश्वान् साह्वान् मीढ्वान् इत्येते शब्दाः छन्दसि भाषायां च अविशेषेण निपात्यन्ते। दाश्वान् इति 'दाशृ दाने' (धा.पा. ८८३) इत्येतस्य धातोः क्वसौ अद्विर्वचनम् अनिट्त्वं च निपात्यते। '[16]दाश्वांसो दाशुषः [17]सुतम्'

---

1. सामान्या ब.क.फ. 2. यियक्षति फ. 3. अतितिषति ङ.फ. 4. उज्जिजिषति फ. 5. जिहीते फ. ह. 6. बिभेति नास्ति फ. 7. जिह्रेति नास्ति ह. 8. अनभ्यासस्य नास्ति क. 9. आशिशत् नास्ति फ, आशिशयत् क. 10. आर्चिचत् ब. 11. कृते नास्ति ग. 12. इति कार्याणां क.ह. 13. आटिटत् इत्यत्र पूर्वेऽभ्यासो न भवति इत्यधिकम् क. फ. ह. 14. क्रमेण नास्ति फ. 15. च इत्यधिकम् क. 16. दाश्वान् सोममिन्द्राय क. 17. सुतः ह.

(ऋ. १.३.५) [1]इति । साह्वान् इति 'षह मर्षणे' (धा. पा. ८५३) [2]इत्येतस्य [3]परस्मैपदम्, उपधादीर्घत्वम्, [4]अद्विर्वचनम् अनिट्त्वं च निपातनात् । साह्वान् बलाहकः । मीढ्वान् इति 'मिह सेचने' (धा. पा. ९९३) इत्येतस्य अद्विर्वचनम्, अनिट्त्वम्, [5]उपधादीर्घत्वं ढत्वं च [6]निपातनात् । 'मीढ्वस्तोकाय तनयाय [7]मृळ' (ऋ. २. ३३.१४) । एकवचनमतन्त्रम् ।

[६५७] कृञादीनां के द्वे भवत इति वक्तव्यम् । (म.भा. ३.१७)

[8]क्रियतेऽनेन इति चक्रम् । चिक्लिदम् । कृञः क्लिदेश्च 'घञर्थे कविधानम्' (वा. ३०६) इति कः प्रत्ययः ।

[६५८] चरिचलिपतिवदीनां [9]द्वित्वमच्याक् चाभ्यासस्य । (म.भा. ३.१७)

चरादीनां धातूनाम्[10]अपि प्रत्यये परतः द्वे भवतः । अभ्यासस्य आगागमो भवति । [11]आगागमविधान-सामर्थ्याच् च हलादिशेषो न भवति[12] । हलादिशेषे हि सत्यागमस्यादेशस्य च विशेषो नास्ति । चराचरः । चलाचल । पतापतः । [13]वदावदः ।

[६५९] वेति वक्तव्यम् ।

तेन चरः पुरुषः, चलो रथः, पतं [14]यानम्, वदो [15]मनुष्यः इत्येवमादि [16]सिद्धं भवति ।

[६६०] हन्तेर्घत्वं च । (म.भा. ३.१७)

हन्तेरचि प्रत्यये परतो द्वे भवतः, अभ्यासस्य च [17]हकारस्य च घत्वम्, आक् चागमो भवति । परस्य 'अभ्यासाच्च' (७.३.५५/२४३०) इति कुत्वम् । 'घनाघनः क्षोभणश्चर्षणीनाम्' (ऋ. १०.१०३.१) ।

[६६१] पाटेर्णिलुक् चोक् च [18]दीर्घश्चाभ्यासस्य । (म.भा. ३.१७)

पाटेरचि [19]परतो द्वे भवतो णिलुक् च भवति । अभ्यासस्य च ऊगागमो दीर्घश्च भवति । [20]पाटूपटः ॥

## ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । (१३/१००३)

पुत्र पति इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः संप्रसारणं भवति । यणः स्थाने इग् भवति इत्यर्थः । [21]कारीषगन्धीपुत्रः । कारीषगन्धीपति । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्य [22]इति बहुव्रीहिः, तत्र 'उपमानाच्च' (५.४.१३७/८७६) इति [23]गन्धस्येदन्तादेशः। करीषगन्धेः अपत्यम् इत्यण् (४.१.९२/१०८८), तदन्तात् स्त्रियाम् 'अणिञोरनार्षयोर्गुरूपत्तमयोः ष्यङ् गोत्रे' (४.१.७८/११९८) इति ष्यङ, ततश्चापि विहिते षष्ठीसमासः, 'सम्प्रसारणस्य' (६.३.१३९/१००४) इति दीर्घत्वम् । ष्यङः इति किम् ? इभ्यापुत्रः । क्षत्रियापुत्रः । पुत्रपत्योः इति किम् ? कारीषगन्ध्याकुलम् ।[24] कौमुदगन्ध्याकुलम् । तत्पुरुषे इति किम् ? कारीषगन्ध्या पतिरस्य ग्रामस्य कारीषगन्ध्यापतिः [25]अयं ग्रामः ।

---

1. ति नास्ति फ. 2. इत्यस्य फ. 3. परस्मैपदित्वं क. 4. अद्वित्वं फ. 5. च इत्यधिकम् फ. 6. निपात्यते फ. 7. मृडय मुद्रितः पाठः, मृड ड. 8. एतद्वाक्यं नास्ति फ. 9. द्वित्वं नास्ति क. 10. अपि नास्ति फ. 11. आगम° फ. 12. इति आदेशमेव विदध्यात् इत्यधिकम् फ. 13. पदापदः फ. 14. पटम् 15. श्वा ड. 16. सिद्धं नास्ति फ. 17. घत्वं फ. 18. दीर्घः नास्ति फ. 19. प्रत्यये इत्यधिकम् फ. 20. पाटपटः ब, पटूपटः क. 21. कारिषगन्ध्याः पुत्रः इत्यधिकम् फ. 22. ततः फ. 23. गन्धस्य नास्ति फ. 24. उदाहरणमिदं नास्ति फ. 25. अयं नास्ति फ.

ष्यङः इति स्त्रीप्रत्ययग्रहणं 'न स्त्रीप्रत्यये [1]चानुपसर्जने' (सी. दे. प. २६) इति [2]प्रत्ययग्रहणपरिभाषया 'यस्मात् स विहितः [3]तदादेः' (पु. दे. प. २४) इत्येष नियमो नास्ति, तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, [4]परमकारीषगन्धीपतिः [5]इत्यपि भवति। उपसर्जने तु [6]ष्यङि न भवति। अतिक्रान्ता कारीषगन्ध्याम् अतिकारीषगन्ध्या, तस्याः पुत्रः अतिकारीषगन्ध्यापुत्रः। अतिकारीषगन्ध्यापतिः। पुत्रपत्योः केवलयोः [7]उत्तरपदयोः इदं [8]सम्प्रसारणं, [9]तदादौ तदन्ते च न भवति, कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापरमपुत्रः इति। ष्यङन्ते च यद्यप्यन्ये यणः सन्ति, तथापि ष्यङः एव सम्प्रसारणं, 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या. प. १०६) इति। सम्प्रसारणम् इति चाधिक्रियते 'विभाषा परेः' (६.१.४४/३३४२) इति यावत्॥

## बन्धुनि बहुव्रीहौ। (१४/१००७)

ष्यङः संप्रसारणम् इति [10]अनुवर्तते। बन्धुशब्दे उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणं भवति। कारीषगन्ध्या बन्धुः अस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बहुव्रीहौ इति किम्? कारीषगन्ध्यायाः बन्धुः कारीषगन्ध्याबन्धुः। अत्रापि पूर्ववदेव। परमकारीषगन्धीबन्धुः इत्यत्र भवति। अतिकारीषगन्ध्याबन्धुः इति [11]च न भवति, तथा कारीषगन्ध्याबन्धुधनः, कारीषगन्ध्यापरमबन्धुः इति। बन्धुनि इति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुंलिङ्गाभिधेयस्तु [12]अयं बन्धुशब्दः।

[६६२] मातच् मातृकमातृषु।

ष्यङः सम्प्रसारणं [13]भवति विभाषया बहुव्रीहावेव। कारीषगन्ध्या माता अस्य [14]इत्येवं बहुव्रीहौ [15]कृते एतस्मादेव उपसङ्ख्यानात् [16]पक्षे मातृशब्दस्य मातजादेशः[17]। तत्र चित्करणसामर्थ्याद् [18]बहुव्रीहिस्वरम् (६.२.१/३७३५) अन्तोदात्तत्वं (६.१.१६३/३७१०) बाधते। मातृमातृकशब्दयोश्च भेदेनोपादानात् 'नद्यृतश्च' (५.४.१५३/८३३) इति कबपि विकल्प्यते। [19]कारीषगन्धीमातः, कारीषगन्ध्यामातः, कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः, कारीषगन्धीमाता, कारीषगन्ध्यामाता॥

## वचिस्वपियजादीनां किति। (१५/२४०९)

सम्प्रसारणम् इति वर्तते। ष्यङः इति निवृत्तम्। वचि – 'वच परिभाषणे' (धा. पा. १०६४), 'ब्रुवो वचिः' (२.४.५३/२४५३) इति च। स्वपि – 'ञिष्वप शये' (धा. पा. १०६९)। यजादयः – 'यज देवपूजासंगतिकरणदानेषु' (धा. पा. १००३) इत्यतः प्रभृति आगणान्ताः (धा. पा. १०११)। तेषां वचिस्वपियजादीनां[20] किति प्रत्यये [21]परतः सम्प्रसारणं भवति।

---

1. अनुपसर्जनिना क. 2. प्रत्ययग्रहणेन क. 3. तदादिनियमो क. 4. परमकारीषन्ध्याः पतिः क. 5. इति सिद्धं भवति क. 6. ष्यङ् फ. 7. उत्तरपदयोः नास्ति ह. 8. सम्प्रसारणं नास्ति क. फ. 9. तेन क. फ. 10. वर्तते ग. 11. च नास्ति क, च न नास्ति ह. 12. अयं नास्ति ह. 13. भवति नास्ति ग.क.ह. 14. एवं नास्ति क. 15. कृते नास्ति ह. 16. पक्षे नास्ति ग. 17. भवति इत्यधिकम् क. ह. 18. बहुव्रीहिस्वरं बाधित्वा अन्तोदात्तत्वं भवति ह. 19. कारीषगन्धीमातः – कारीषगन्ध्यामाता नास्ति ह. 20. धातूनां इत्यधिकम् ब. क. 21. परे क.

वचि—उक्तः। उक्तवान्। स्वपि—सुप्तः। सुप्तवान्। यज—इष्टः। इष्टवान्। [1]वप—उप्तः। उप्तवान्। वह—ऊढः। ऊढवान्। वस—उषितः। उषितवान्। वेञ्—उतः। उतवान्। व्येञ्—संवीतः। संवीतवान्। ह्वेञ्—आहूतः। आहूतवान्। वद-उदितः। उदितवान्। टुओश्वि[2]—शूनः। शूनवान्। धातोः स्वरूपग्रहणे तत्प्रयये[3]कार्यं विज्ञायते। तेनेह न भवति, वाच्यति, वाचिकः [4]इति ॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। (१६/२४१२)

'ग्रह उपादाने' (धा.पा. १५३४), 'ज्या वयोहानौ' (धा.पा. १५००), 'वेञो वयिः' (२.४.४१/२४११), 'व्यध ताडने' (धा.पा. ११८२), 'वश कान्तौ' (धा.पा. १०८१), 'व्यच् व्याजीकरणे' (धा.पा. १२९४), 'ओव्रश्चू छेदने' (धा.पा. १२९३), 'प्रच्छ ज्ञीप्सायाम्' (धा.पा. १४१४), '[5]भ्रस्ज पाके' (धा. पा. १२८५) इत्येतेषां धातूनां ङिति [6]प्रत्यये परतः चकारात् किति च संप्रसारणं भवति। [7]ग्रह—गृहीतः। गृहीतवान्। [8]ङिति—गृह्णाति जरीगृह्यते। [9]ज्या—जीनः। जीनवान्। 'ल्वादिभ्यः' (८.२.४४/३०१८) इति निष्ठानत्वम्। ङिति—जिनाति। [10]जेजीयते। 'हलः' (६.४.२/२५५९) इति [11]सम्प्रसारणदीर्घे कृते प्वादीनां (७.३.८०/२५५८) [12]इति ह्रस्वः [13]क्रियते।

वयि—[14]लिटि परतः वेञो वयिः (२.४.४१/२४११) आदेशः, तस्य ङिदभावात् किदेवोदाह्रियते। ऊयतुः। ऊयुः। यद्येवं वयिग्रहणमनर्थकम्, यजादिषु वेञ्[15]पठ्यते? नैवं शक्यम्। लिटि तस्य 'वेञः' (६.१.४०/२४१५) इति प्रतिषेधो वक्ष्यते, तत्र यथैव स्थानिवद्भावाद् [16]वयेर्विधिः एवं प्रतिषेधोऽपि प्राप्नोति? नैष दोषः। 'लिटि वयो यः' (६.१.३८/२४१३) इति यकारस्य संप्रसारणप्रतिषेधाद् वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहणमनुमास्यते? सत्यमेतत्। एष [17]एवार्थः साक्षात् निर्देशेन वयेः [18]स्पष्टीक्रियते।

व्यध—विद्धः। विद्धवान्। ङिति—विध्यति। वेविध्यते। वश—उशितः। उशितवान्। ङिति—उष्टः। उशन्ति।

व्यच—विचितः। विचितवान्। ङिति—विचति। वेविच्यते। 'व्यचेः कुटादित्वमनसि' (वा. १८) प्रतिपादितम्, तेन सर्वत्र अञ्णिति प्रत्यये सम्प्रसारणं भवति, उद्विचिता, [19]उद्विचितुम्, उद्विचितव्यम् इति। व्रश्चेः—वृक्णः। वृक्णवान्। [20]अथ कथमत्र कुत्वं,[21] व्रश्चभ्रस्ज (८. २. ३६/२९४) इति हि षत्वेन भवितव्यम्?
[६६३] निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः।

---

1. वपि फ. 2. गतिवृद्ध्योः इत्यधिकम् ह. 3. कार्यविज्ञानात् सम्प्रसारणं न भवति ह. 4. इत्यत्र ब.फ.ह. 5. भ्रस्जः पाके ह. 6. प्रत्यये नास्ति क. 7. ग्रहि ह. 8. ङिति नास्ति फ. 9. ज्या नास्ति फ. 10. जेजीयते नास्ति फ. 11. सम्प्रसारणस्य दीर्घत्वे ब.क.ड.फ.ह. 12. ह्रस्वः इत्यधिकम् क. 13. क्रियते नास्ति फ. 14. ग्रहेरलिटि इति दीर्घः इत्यधिकम् क. 15. इति इत्यधिकम् क. 16. वयेर्विधौ ग्रहणं एवं विप्रतिषेधेऽपि ह. 17. एवार्थनिर्देशः क. 18. विस्पष्टीक्रियते ह. 19. उद्विचितुम् नास्ति फ. 20. अथ नास्ति ह. 21. इति इत्यधिकम् ड.

तत्र [1]षत्वं प्रति नत्वस्य सिद्धत्वाद् झलादिर्निष्ठा न भवति। कुत्वे तु कर्तव्ये तदसिद्धमेव इति प्रवर्तते कुत्वम्। ङिति – वृश्चति। वरीवृश्च्यते। प्रच्छ – पृष्टः। पृष्टवान्। ङिति – पृच्छति। परीपृच्छ्यते। प्रश्नः। नङि तु 'प्रश्ने चासन्नकाले' (३.२.११७/२७७७) इति [2]निपातनादसंप्रसारणम्। भ्रस्ज – भृष्टः। भृष्टवान्। ङिति – भृज्जति। बरीभृज्यते। सकारस्य 'झलां जश् झशि' (८.४.५३/५२) इति [3]जश्त्वेन दकारः 'स्तोः श्चुना श्चुः' (८.४.४०/१२१) इति [4]श्चुत्वेन जकारः॥

## लिट्यभ्यासस्योभयेषाम्। (१७/२४०८)

उभयेषां वच्यादीनां [5]ग्रह्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति। वचि – उवाच। उवचिथ। स्वपि – सुष्वाप। सुष्वपिथ। [6]यज इयाज। इयजिथ। डुवप् – उवाप। उवपिथ। ग्रह्यादीनाम् – [7]तत्र ग्रहेरविशेषः। [8]जग्राह। जग्रहिथ। ज्या – जिज्यौ। जिज्यिथ। वयि – उवाय। उवयिथ। व्यध – विव्याध। विव्यधिथ। वश – उवाश। उवशिथ। [9]व्यच – विव्याच। विव्यचिथ। वृश्चतेः सत्यसति वा योगे नास्ति विशेषः। योगारम्भे [10]तु सति यदि[11] सम्प्रसारणमकृत्वा हलादिशेषेण (७.४.६०/२१७९) रेफो निवर्त्यते, तदा वकारस्य सम्प्रसारणं प्राप्नोति। अथ रेफस्य सम्प्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानी– [12]मुरदत्वस्य स्थानिवद्भावात् 'न सम्प्रसारणे सम्प्रसारणम्' (६.१.३७/३६३) इति प्रतिषेधो भवति इत्यस्ति विशेषः। वव्रश्च। वव्रश्चिथ।

पृच्छतिभृज्जत्योरविशेषः। अकिदर्थं [13]चेदमभ्यासस्य सम्प्रसारणं विधीयते। किति [14]हि परत्वाद् [15]धातोः सम्प्रसारणे कृते [16]पुनः प्रसङ्ग[17]विज्ञानाद् द्विर्वचनम्, ऊचतुः, ऊचुः इति।

अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषाम् इति वचनं हलादिः [18]शेषम् (७.४.६०/२१७९) अपि बाधित्वा सम्प्रसारणमेव यथा स्यात् इति। विव्याध[19]॥

## स्वापेश्चङि। (१८/२५८४)

स्वापेः इति स्वपेर्ण्यन्तस्य ग्रहणम्। तस्य चङि परतः संप्रसारणम् भवति। [20]असूषुपत्, असूषुपताम्, असूषुपन्। द्विर्वचनात् पूर्वम्[21]अत्र संप्रसारणम्, तत्र [22]कृते लघूपधगुणः, [23]तस्य णौ चङ्युपधायाः (७.४.१/२३१४) [24]ह्रस्वत्वम्, ततो द्विर्वचनम्, 'दीर्घो लघोः' (७.४.९४/२३१८) इति [25]दीर्घत्वम्। चङि इति किम्? स्वाप्यते। स्वापितः। किति [26]इति निवृत्तम्। ङिति इति केवलमिहानुवर्तते [27]इत्येतद् दुर्विज्ञानम्॥

---

1. षत्वे कर्तव्ये क. 2. निपातनात् संप्रसारणम् न भवति क. 3. जश्त्वेन नास्ति फ, जश्त्वे क. 4. श्चुत्वं फ. ह. 5. ग्रहादीनाम् ड. ह. 6. यजि ह. 7. तत्र नास्ति ह. 8. जग्राह नास्ति ह. 9. व्यचि ह. 10. तु नास्ति फ. 11. पक्षान्तरे इत्यधिकम् क. 12. उरत्वमस्य ड, चर्त्वस्य क. 13. चेत् नास्ति फ. 14. तु फ. 15. धातोः नास्ति क. 16. न इत्यधिकम् क. 17. ग्रहण इत्यधिकम् ग. ह. 18. शेषम् नास्ति फ. 19. विव्यध इत्यधिकम् क. ड, विव्यधिथ इत्यधिकम् ग. 20. असूष्वपत् असूष्वपताम्, असूष्वपन् क. 21. अत्र नास्ति क. 22. क्रियते फ. ह, अधिकृते क. 23. तत्र फ, ततः क. 24. ह्रस्वः फ. ह. 25. दीर्घः क. 26. इति नास्ति ब. 27. इति चङि वचनम् ड, दुर्विज्ञेयम् ग.

## स्वपिस्यमिव्येञां यङि । (१९/२६४५)

'ञिष्वप शये' (धा. पा. १०६९), 'स्यमु (धा. पा. ८२७), स्वन[1] (धा. पा. ८२८), ध्वन (धा. पा. ८२९) शब्दे, 'व्येञ् संवरणे' (धा. पा. १००८) इत्येतेषां [2]धातूनां यङि परतः सम्प्रसारणं भवति। सोषुप्यते । सेसिम्यते । वेवीयते । यङि इति किम् ? [4]स्वप्नक् (३. २. १७२/३१५२) ।।

## न वशः । (२०/२६४६)

यङि इति वर्तते । वशेर्धातोर्यङि परतः संप्रसारणं न भवति । वावश्यते, वावश्येते, वावश्यन्ते । यङि इति किम् ? [5]उष्टः । उशन्ति ।।

## चायः की । (२१/२६४७)

यङि इति वर्तते । 'चायृ पूजानिशामनयोः' (धा. पा. ८८१) [6]इत्येतस्य धातोः यङि परतः की इत्ययमादेशो भवति । चेकीयते, चेकीयेते, चेकीयन्ते । दीर्घोच्चारणं यङ्लुगर्थम् । चेकीतः ।।

## स्फायः स्फी निष्ठायाम् । (२२/३०४४)

'स्फायी ओप्यायी वृद्धौ' (धा. पा. ४८७, ४८८) इत्यस्य धातोः निष्ठायां [7]परतः स्फी इत्ययमादेशो भवति । स्फीतः । स्फीतवान् । निष्ठायाम् इति किम् ? स्फातिः । [8]स्फातीभवति इत्येतदपि क्तिन्नन्तस्यैव रूपं, न निष्ठान्तस्य । निष्ठायाम् इत्येतदधिक्रियते 'लिङ्यङोश्च' (६. १. २९/२३२७) इति प्रागेतस्मात् सूत्रात् ।।

## स्त्यः प्रपूर्वस्य । (२३/३०३३)

निष्ठायाम् इति वर्तते, संप्रसारणम् इति च । स्फी इत्येतन्न स्वर्यते । 'स्त्यै ष्टयै शब्दसंघातयोः' (धा. पा. ९११, ९१२) । द्वयोरप्येतयोः धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणम् । स्त्या इत्यस्य प्रपूर्वस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । प्रस्तीतः । प्रस्तीतवान् । सम्प्रसारणे कृते यण्वत्त्वं विहतम् इति निष्ठानत्वं न भवति । 'प्रस्त्योऽन्यतरस्याम्' (८. २. ५४/ ३०३४) इति [9]तु पक्षे मकारः त्रियते । प्रस्तीमः प्रस्तीमवान् । प्रपूर्वस्य इति किम् ? [10]संस्त्यानः । संस्त्यानवान् । प्रस्त्यः इत्येव सिद्धे पूर्वग्रहणमिहापि यथा स्यात्, प्रसंस्तीतः, प्रसंस्तीतवान् । तत् कथं प्रपूर्वस्य इति षष्ठयर्थे बहुव्रीहिः ? [11]प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य [12]स प्रपूर्वः तदवयवस्य स्त्यः इति व्यधिकरणे षष्ठ्यौ । तत्र प्रसंस्तीतः इत्यत्रापि [13]प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति ।।

---

1. स्तये इत्यधिकम् ड. 2. धातूनाम् नास्ति ग. 3. सोसुप्यते क. ह. 4. सुषक् क. 5. उशितः उशितवान् फ. ह. 6. इत्यस्य क. फ. ह. 7. परतः नास्ति फ. 8. कथम् इत्यधिकम् ब. 9. तु नास्ति फ. 10. संस्त्यावः फ. 11. प्रशब्दः ह. 12. सोऽपि फ. 13. प्रपूर्वस्य क.

## द्रवमूर्तिस्पर्शयोः श्यः । (२४/३०२०)

द्रवमूर्तौ द्रवकाठिन्ये, [1]स्पर्शे वर्तमानस्य 'श्यैङ गतौ' (धा.पा. ९६४) इत्यस्य धातोर्निष्ठायां [2]परतः सम्प्रसारणं भवति । शीनं घृतम् । शीना वसा । शीनं मेदः । द्रवावस्थायाः काठिन्यं गतमित्यर्थः । 'श्योऽस्पर्शे' (८.२.४७/३०२१) इति निष्ठानत्वम् । स्पर्शे–शीतं वर्तते । शीतो वायुः । शीतमुदकम् । गुणमात्रे[3] तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या । द्रवमूर्तिस्पर्शयोः इति किम् ? संश्यानो वृश्चिकः[4] ।।

## प्रतेश्च । (२५/३०२२)

श्यः इति वर्तते । प्रतेरुत्तरस्य [5]श्यायतेर्निष्ठायां [6]परतः सम्प्रसारणं भवति । प्रतिशीनः । प्रतिशीनवान् । द्रवमूर्तिस्पर्शाभ्यामन्यत्रापि यथा स्यात् इति सूत्रारम्भः ।।

## विभाषाऽभ्यवपूर्वस्य । (२६/३०२३)

श्यः इति वर्तते । अभि अव इत्येवंपूर्वस्य श्यायतेर्निष्ठायां[7] विभाषा सम्प्रसारणं भवति । अभिशीनम् अभिश्यानम् । अवशीनम्, अवश्यानम् । द्रवमूर्तिस्पर्शविवक्षायामपि विकल्पो भवति । अभिशीनं घृतम्, अभिश्यानं घृतम् । अवशीनं [8]मेदः, अवश्यानं मेदः । अभिशीतो वायुः, अभिश्यानः[9] । अवशीतमुदकम्, अवश्यानमुदकम् । सेयमुभयत्रविभाषा द्रष्टव्या । पूर्वग्रहणस्य च प्रयोजनम्, समभिश्यानं, समवश्यानम् इत्यत्र मा भूत् इति केचिद् [10]व्याचक्षते, न किलायमभ्यवपूर्वः समुदायः इति । योऽत्राभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्मान् न भवति? तस्मात्[11] अत्र भवितव्यमेव । यदि तु नेष्यते ततो यत्नान्तरमास्थेयमस्माद् विभाषा[12]विज्ञानात् । व्यवस्थेयम् । पूर्वग्रहणस्य चान्यत् प्रयोजनं [13]वक्तव्यम् ।।

## शृतं पाके । (२७/३०६७)

विभाषा इत्यनुवर्तते । 'श्रा पाके' (धा.पा.८११) इत्येतस्य धातोः ण्यन्तस्य [14]अण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा । शृतं क्षीरम् । शृतं हविः । व्यवस्थितविभाषा चेयम्, तेन क्षीरहविषोर्नित्यं शृभावो भवति, अन्यत्र [15]न भवति श्राणा यवागूः श्रपिता यवागूः इति । [16]यदापि बाह्ये प्रयोजके द्वितीयो णिच् [17]उत्पद्यते तदापि नेष्यते, श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेन इति । श्रातिरयमकर्मकः कर्मकर्तृविषयस्य [18]पचेरर्थे वर्तते, [19]स ण्यन्तः अपि प्राकृतं पच्यर्थमाहुः । [20]तदत्र द्वयोरपि शृतमिति इष्यते । शृतं क्षीरं स्वयमेव । शृतं क्षीरं देवदत्तेन[21] । पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव ।।

---

1. स्पर्शविषये क. 2. परतः नास्ति फ. 3. गुणिनि च इत्यधिकम् फ, गुणवाचिशब्दात् क. ड. 4. शीतेन संकुचितः इत्यर्थः इत्यधिकम् ग. 5. श्या इत्यस्य धातोः क.फ.ह. 6. परतः नास्ति ग.फ. 7. परतः इत्यधिकम् 8. मेदः नास्ति क.फ. 9. वायुः इत्यधिकम् ह. 10. आहुः ह. 11. अत्र नास्ति फ. 12. विज्ञानात् नास्ति फ. 13. द्रष्टव्यम् फ. 14. अण्यन्तस्य च नास्ति फ. 15. नैवम् फ, न तु ग.क. 16. यदा तु क.ड.फ.ह. 17. उत्पाद्यते ह. 18. पचतेरर्थे क. 19. अण्यन्तः ह. 20. तत्र फ. 21. इति इत्यधिकम् फ.

## प्यायः पी । (२८/३०७२)

विभाषा इत्येव । [1]'ओप्यायी वृद्धौ' (धा.पा. ४८८) इत्यस्य धातोः निष्ठायां विभाषा पी इत्ययमादेशो भवति । पीनं मुखम् । पीनौ बाहू । [2]पीनमुरः । इयमपि व्यवस्थितविभाषैव । तेनानुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु नैव भवति । आप्यान[3]श्चन्द्रमाः[4] । आङ्पूर्वस्यान्धूधसोः भवत्येव, आपीनोऽन्धुः, आपीनमूधः इति ।।

## लिड्यङोश्च । (२९/२३२७)

विभाषा इति निवृत्तम् । 'प्यायः पी' (६.१.२८/३०७२) इत्येतत् चशब्देन अनुकृष्यते । लिटि यङि च परतः प्यायः पी इत्ययमादेशो भवति । [5]आपिप्ये, आपिप्याते, आपिप्यिरे । परत्वात् पीभावे कृते पुनः प्रसङ्ग-विज्ञानात् द्विर्वचनम्, एरनेकाचः (६.४.८२/२७२) इति यणादेशः । यङि – आपेपीयते, आपेपीयेते, आपेपीयन्ते ।।

## विभाषा श्वेः । (३०/२४२०)

लिड्यङोः [6]इति वर्तते, सम्प्रसारणम् इति च । लिटि यङि च श्वयतेर्धातोः विभाषा सम्प्रसारणं भवति । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः । यङि – शोशूयते, शेश्वीयते । [7]तदत्र यङि सम्प्रसारणमप्राप्तं [8]विभाषा विधीयते । लिटि तु किति यजादित्वात् नित्यं प्राप्तं, [9]तत्र सर्वत्र विकल्पो भवति इत्येषा उभयत्रविभाषा । यदा च धातोर्न भवति तदा 'लिटचभ्यासस्योभयेषाम्' (६.१.१७/२४०८) इत्यभ्यासस्यापि न भवति ।।

## णौ च संश्चङोः । (३१/२५७९)

'विभाषा श्वेः' (६.१.३०/२४२०) इति [10]वर्तते । सन्परे चङ्परे च णौ परतः श्वयतेर्धातोः विभाषा संप्रसारणं भवति । शुशावयिषति । चङि – [11]अशूशवत्, अशिश्वयत् । 'सम्प्रसारणं सम्प्रसारणाश्रयं च[12] बलीयो भवति' (सी.दे.प. ५९) इति वचनादन्तरङ्गमपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते । कृते तु संप्रसारणे वृद्धिरावादेशश्च । ततः 'ओः पुयण्ज्यपरे' (७.४.८०/२५७७) इत्ये[13]तद्वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्य, इति स्थानिवद्भावात् शुशब्दो [14]द्विरुच्यते ।।

## ह्वः संप्रसारणम् । (३२/२५८६)

'णौ च संश्चङोः' (६.१.३१/२५७९) इति वर्तते । [15]सन्परे चङ्परे च णौ परतो ह्वः[16] संप्रसारणं भवति । जुहावयिषति, जुहावयिषतः, जुहावयिषन्ति । अजूहवत्, अजूहवताम्, अजूहवन् । संप्रसारणस्य बलीयस्त्वात् 'शाच्छासाह्वाव्यावेपां युक्' (७.३.३७/२५८५) इति प्रागेव [17]युक् न भवति । सम्प्रसारणम् इति वर्तमाने पुनः सम्प्रसारणम् [18]इत्युक्तं विभाषा इत्यस्य निवृत्त्यर्थम् । ह्वः सम्प्रसारणम् अभ्यस्तस्य इत्येकयोगेन[19] सिद्धे पृथग्योग-करणमनभ्यस्तनिमित्तप्रत्ययव्यवधाने सम्प्रसारणाभावज्ञापनार्थम् । [20]ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन् जिह्वायकीयिषति ।।

---

1. प्यायी क.फ, स्फायी इत्यधिकम् फ. 2. पीनं मुखम् इत्यधिकम् क. 3. सूर्यः क. 4. इति इत्यधिकम् क.फ. 5. लिटि इत्यधिकम् ङ. 6. संप्रसारणेऽपि च क. 7. अत्र फ, तत्र क. 8. पक्षे फ.ह. 9. तत्सर्वमिह विकल्पेन क. 10. अनुवर्तते ग.फ.ह. 11. अशूशुवत् फ.ह, अशिश्वियत् इत्यधिकम् फ.ह. 12. कर्म इत्यधिकम् ब.ङ.ग.फ. 13. एतत् नास्ति फ. 14. द्विरुच्चार्यते क. 15. सनि परे क. 16. च इत्यधिकम् फ. 17. युग्-ग्रहणं ब.क.फ. 18. इति नास्ति क.फ. 19. एव इत्यधिकम् क.ह. 20. ह्वायकं गच्छति क.

## अभ्यस्तस्य च । (३३/२४१७)

ह्वः इति वर्तते, तदभ्यस्तस्य इत्यनेन [1]व्यधिकरणम् । अभ्यस्तस्य यो ह्वयतिः । कश्चाभ्यस्तस्य ह्वयतिः ? [2]कारणम् । तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणं भवति । जुहाव । [3]जुहूयते । जुहूषति ॥

## बहुलं छन्दसि । (३४/३५१०)

ह्वः इति वर्तते । छन्दसि विषये ह्वयतेर्धातोर्बहुलं संप्रसारणं भवति । 'इन्द्राग्नी हुवे' (ऋ. ५.४६.३) । देवीं सरस्वतीं हुवे । [4]ह्वेञो लटि आत्मनेपदोत्तमैकवचने बहुलं छन्दसि इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च । न च भवति । ह्वयामि मरुतः शिवान् । 'ह्वयामि [5](विश्वान्) देवाँ (ऋ. ७.३४.८) ॥

## चायः की । (३५/३५११)

'बहुलं छन्दसि' (६.१.३४/३५१०) इति वर्तते । चायतेर्धातोः छन्दसि विषये बहुलं की इत्ययमादेशो भवति । '[6]वियन्ता न्य१न्यं चिक्युर्न निचिक्युरन्यम्' (ऋ. १.१६४.३८) । लिटि उसि रूपम् । न [7]भवति । '[8]अग्नेर्ज्योतिर्निचाय्यः' (वा.सं. ११.१)[9] ॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः । (३६/३५१२)

छन्दसि इति वर्तते । [10]अपस्पृधेथाम् इति 'स्पर्ध सङ्घर्षे' (धा. पा. ३) इत्यस्य लङि आथामि द्विर्वचनं रेफस्य संप्रसारणम् अकारलोपश्च निपातनात् । 'इन्द्रश्च विष्णो यदपस्पृधेथाम्' (ऋ. ६.६९.८) । अपास्पर्धेथाम् इति भाषायाम् । अपर आह – स्पर्धः अपपूर्वस्य लङि आथामि सम्प्रसारणमकारलोपश्च निपातनात् । 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५/३५४६) इत्यडागमाभावः । अत्र प्रत्युदाहरणम् अपास्पर्धेथाम् इति भाषायाम् ।

आनृचुः, आनृहुः इति । 'अर्च पूजायाम्' (धा.पा. २०४), 'अर्ह पूजायाम्' (धा.पा. ७४०) इत्यनयोर्धात्वोर्लिटचुसि [11]सम्प्रसारणम् अकारलोपश्च [12] निपातनात् । ततो द्विर्वचनम्, उरदत्वम्, 'अत आदेः' (७.४.७०/२२४८) इति दीर्घत्वम् । 'तस्मान् नुड् द्विहलः' (७.४.७१/२२८८) इति नुडागमः । [13]'य उग्रा अर्कमानृचुः' (ऋ. १.१९.४) । 'न वसून्यानृहुः' (अ. वे. २.३५.१) । आनर्चुः, आनर्हुः इति भाषायाम् ।

---

1. व्यधिकरणेन विशिष्यते ड. 2. यत् तस्य इत्यधिकम् क. ह. 3. चोहूयते जोहूयति क. 4. ह्वयते: फ. 5. विश्वे क, विश्वान् इति विश्वेदेवान् क. ह. विश्वान् ऋग्वेदपाठे नास्ति 6. निचिकीवान् निचिक्युरन्यत् फ. 7. च इत्यधिकम् ड. 8. अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् क.ड. 9. दीर्घोच्चारणं किमर्थम् । चिकीताम् इत्यधिकम् ह. 10. अपस्पृधेथाम् आनृचुः आनृहुः चिच्युषे तित्याज श्रातः श्रितम् आशीः अशीर्ताः इति शब्दाः निपात्यन्ते छन्दसि विषये इत्यधिकम् ब.क.ड.फ.ह. 11. च इत्यधिकम् ग. 12. निपात्यते फ. 13. यञ्ग्रा इति मुद्रितः पाठः

चिच्युषे । 'च्युङ गतौ' (धा. पा. ९५६) इत्यस्य धातोः लिटि सेशब्दे अभ्यासस्य सम्प्रसारणम् [1]अनिट् च [2]निपातनात् । 'चिच्युषे' (ऋ. ४.३०.२२) । चुच्युविषे इति भाषायाम् ।

तित्याज[3] । 'त्यज हानौ' (धा.पा. ९८७) इत्यस्य धातोः लिटि अभ्यासस्य सम्प्रसारणं निपात्यते । 'तित्याज' (ऋ. १०.७१.६) । तत्याज इति भाषायाम् ।

श्राताः इति । 'श्रीञ् पाके' (धा.पा. १४७६) इत्येतस्य धातोः निष्ठायां श्राभावः । 'श्रातास्त इन्द्रसोमाः' (मै. १.९.१) ।

श्रितम् इति तस्यैव [4]श्रीणातेः ह्रस्वत्वम् । 'सोमो गौरी अधिश्रितः' (ऋ. ९.१२.३) । श्रिता नो गृहाः । अनयोः [5]श्राभावश्रिभावयोर्विषयविभागमिच्छति,[6] सोमेषु बहुषु श्राभाव एव, अन्यत्र श्रिभावः इति । सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते । 'यदि श्रातो जुहोतन' (ऋ. १०.१७९.१) । तस्य श्राताः इति बहुवचनस्याविवक्षितत्वाद् उपसंग्रहो [7]द्रष्टव्यः ।

आशीः, आशीर्तः इति । [8]तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, [9]निष्ठायाश्च नत्वाभावो निपातनात् । [10]तामाशीरा दुहन्ति । आशीर्त ऊर्जम् । 'क्षीरैर्मध्यत आशीर्तः' (ऋ. ८.२.९) ॥

## न सम्प्रसारणे सम्प्रसारणम् । (३७/३६३)

सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न भवति । व्यध–विद्धः । [11]व्यच – विचितः । व्येञ् – संवीतः ।

[12]एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात् [13]प्रथमं परस्य यणः क्रियते, पूर्वस्य च [14]प्रसक्तं प्रतिषिध्यते । सम्प्रसारणम् इति वर्तमाने पुनः सम्प्रसारणग्रहणं विदेशस्थस्यापि सम्प्रसारणस्य प्रतिषेधो यथा स्यात् इति । 'श्वयुवमघोनामतद्धिते' (६.४.१३३/३६२)–यूनः । यूना । [15]सम्प्रसारणग्रहणसामर्थ्यात् एव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद् भवति । [16]सति वा [17]स्थानिवत्त्वे व्यवधानमे[18]तावदाश्रयिष्यते ।

[६६४] ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि[19] । (म. भा. ३.३३)

ऋचि परतः त्रेः सम्प्रसारणं भवति उत्तरपदादिलोपश्च छन्दसि विषये । तिस्र ऋचः यस्मिन् तत् तृचं सूक्तम् । तृचं साम (म. भा. ३. ३३) । 'ऋक्पूरब्धूःपथामानक्षे' (५.४.७४/९४०) इति [20]समासान्तः । छन्दसि इति किम् ? त्र्यृचं कर्म ।

[६६५] रयेर्मतौ बहुलम् । (म. भा. ३.३३)

रयिशब्दस्य छन्दसि [21]विषये मतौ परतो बहुलं सम्प्रसारणं भवति । [22]आ रेवानेतु नो विशः । [23]न च भवति । रयिमान् पुष्टिवर्धनः (वा. सं. ३.४०) ॥

---

1. अनिट्त्वं क. ड. 2. निपात्यते ड. 3. इति इत्यधिकम् 4. श्रीणातेः नास्ति फ. 5. च इत्यधिकम् फ. 6. केचित् इत्यधिकम् फ. 7. वेदितव्यः क. 8. तस्यैव नास्ति फ. 9. निष्ठायां च फ. 10. तमाशिरं दुहे आशीर्त ऊर्जम् ड. 11. व्यचेः ह. 12. एकयोगनिर्दिष्टमपि फ. 13. पूर्वं ग.क.फ. 14. प्रसक्तं नास्ति फ. 15. पुनः पुनः इत्यधिकम् क, पुनः इत्यधिकम् ह. 16. सति वा नास्ति क. 17. स्थानिवद्भावे फ. 18. एतावता क. 19. विषये इत्यधिकम् ग. 20. अकारः इत्यधिकम् क. 21. विषये नास्ति फ. 22. आरेवां च ते विशः क. 23. छन्दसि इति किम् ? इत्यधिकम् फ.

## लिटि वयो यः । (३८/२४१३)

न सम्प्रसारणम् इति अनुवर्तते । लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति । [1]उवाय, ऊयतुः, ऊयुः । लिड्ग्रहणमुत्तरार्थम् ॥

## वश्चास्यान्यतरस्यां किति । (३९/२४१४)

[2]अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवति अन्यतरस्याम् । ऊवतुः, ऊवुः । ऊयतुः, ऊयुः[3] । किति इति किम् ? उवाय । उवयिथ ॥

## वेञः । (४०/२४१६)

लिटि इत्यनुवर्तते । 'वेञ् तन्तुसन्ताने' (धा. पा. १००७) इत्यस्य धातोः लिटि परतः सम्प्रसारणं न भवति । ववौ, ववतुः, ववुः । किति यजादित्वात् धातोः प्राप्तम् अकित्यपि 'लिटचभ्यासस्योभयेषाम्' (६. १. १७/२४०८) इत्यभ्यासस्य, अतः उभयं प्रतिषिध्यते ॥

## ल्यपि च । (४१/३३३९)

वेञः इत्यनुवर्तते । ल्यपि च परतो वेञः सम्प्रसारणं न भवति । प्रवाय । उपवाय । [4]पृथग्योग-करणमुत्तरार्थम् ॥

## ज्यश्च । (४२/३३४०)

ल्यपि [5]इत्येव । 'ज्या वयोहानौ' (धा. पा. १५००) इत्यस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति । प्रज्याय । उपज्याय ॥

## व्यश्च । (४३/३३४१)

ल्यपि इत्येव । 'व्येञ् संवरणे' (धा. पा. १००८) इत्येतस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति । प्रव्याय । उपव्याय । योगविभागः उत्तरार्थः ॥

## विभाषा परेः । (४४/३३४२)

ल्यपि च व्यश्च इति अनुवर्तते । परेरुत्तरस्य व्येञ् इत्येतस्य धातोः ल्यपि परतः विभाषा सम्प्रसारणं न भवति । परिवीय यूपम्, [6]परिव्याय । सम्प्रसारणे कृते परपूर्वत्वे च ह्रस्वस्य (६. १. ७१/२८५८) इति तुक प्राप्नोति, स 'हलः' (६. ४. २/२५६९) इति दीर्घत्वेन परत्वाद् बाध्यते ॥

---

1. उवाय नास्ति क. फ. 2. लिटि इति वर्तते इत्यधिकम् ड. 3. इति इत्यधिकम् फ. 4. वाक्यमिदं नास्ति क. फ. ह. 5. इत्यनुवर्तते ह, इति वर्तते क. 6. परिविव्याय यूपम् क.

## आदेच उपदेशेऽशिति । (४५/२३७०)

धातोः (६.१.८/२१७७) इति वर्तते । एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति । ग्लै – ग्लाता । ग्लातुम् । ग्लातव्यम् । [1]शो – निशाता । निशातुम् । निशातव्यम् । एचः [2]इति किम् ? कर्ता । हर्ता । उपदेशे इति किम् ? चेता । स्तोता । अशिति इति किम् ? ग्लायति । म्लायति । कथं जग्ले, [3]मम्ले ? नैवं विज्ञायते, शकार इद् यस्य सो[4]ऽयं शित् इति, [5]किं तर्हि, श एव इत् शित् । तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' (व्या.प. १२७) इति शिदादौ प्रत्यये प्रतिषेधः । एश् शकारान्तो भवति । अशिति इति प्रसज्यप्रतिषेधोऽयम्, तेन एतदात्त्वम् अनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवति इति, [6]सुग्लः, सुम्लः इति 'आतश्चोपसर्गे' (३.१.१३६/२८९८) इति कप्रत्ययः, सुग्लानः, सुम्लानः इति 'आतो युच्' (३.३.१२८/३३०९) इत्येवमादि सिद्धं भवति [7]इति । आकाराधिकारस्त्वयं 'नित्यं स्मयतेः' (६.१.५७/२५९६) इति यावत् ॥

## न व्यो लिटि । (४६/२४१६)

व्येञ् इत्येतस्य धातोः लिटि परत [8]आकारादेशो न भवति । संविव्याय । संविव्ययिथ । 'लिट्यभ्यासस्योभयेषाम्' (६.१.१७/२४०८) इति अभ्यासस्य सम्प्रसारणम्[9] । णलि 'अचो ञ्णिति' (७.२.११५/२५४) इति वृद्धिः ॥

## स्फुरतिस्फुलत्योर्घञि । (४७/३१८५)

आदेचः (६.१.४५/२३७०) इति वर्तते । 'स्फुर स्फुल चलने' (धा.पा. १३९०, १३९१) इत्येतयोर्धात्वोः एचः स्थाने घञि परतः आकारादेशो भवति । विस्फारः । विस्फालः । विष्फारः । विष्फालः । 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' (८.३.७६/२५३७) इति [10]वा षत्वम् ॥

## क्रीङ्जीनां णौ । (४८/२६००)

'डुक्रीञ् द्रव्यविनिमये' (धा.पा. १४७४), 'इङ अध्ययने' (धा. पा. १०४७) 'जि जये' (धा. पा. ९४७) इत्येतेषां धातूनां एचः स्थाने णौ परतः आकारादेशो भवति । क्रापयति । अध्यापयति । जापयति ॥

---

1. म्लै–म्लाता म्लातुम् म्लातव्यम् इत्यधिकम् फ, गै–गाता गातुम् गातव्यम् इत्यधिकम् क. 2. इति नास्ति फ. 3. मम्ले नास्ति ग. 4. अयं नास्ति ग. 5. कथं ग. 6. तेन इत्यधिकम् ङ. 7. इति नास्ति 8. आत् आदेशः फ. 9. भवति इत्यधिकम् क.ह. 10. वा नास्ति फ.

## सिध्यतेरपारलौकिके । (४९/२६०२)

णौ [1]इत्यनुवर्तते । 'षिधु हिंसासंराध्योः (धा. पा. ११९३) इत्यस्य धातोः अपारलौकिकेऽर्थे वर्तमानस्य एचः स्थाने णौ परतः आकारादेशो भवति । अन्नं साधयति । ग्रामं साधयति । अपारलौकिके इति किम्? तपस्तापसं सेधयति । स्वान्येवैनं कर्माणि सेधयन्ति । अत्र हि सिध्यतिः पारलौकिके[2] ज्ञानविशेषे वर्तते । तापसः सिध्यति ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते । स च ज्ञानविशेषः उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षण-मुपसंहरन् परलोकप्रयोजनो भवति । इह कस्मान् न भवति, अन्नं [3]साधयति ब्राह्मणेभ्यो दास्यामि इति ? [4]सिध्यते-रत्रार्थो निष्पत्तिः । तस्याः प्रयोजनमन्नम् । तस्य[5] यद् दानं तत् पारलौकिकम्, न पुनः [6]सिद्धिरेव इति न आत्वं पर्युदस्यते । साक्षात् परलोकप्रयोजने च [7]सिध्यर्थे कृतावकाशं वचनम् एवं [8]विषयं नावगाहते । सिध्यतेः इति श्यना निर्देशः, 'षिध गत्याम्' (धा. पा. ४७) इत्यस्य भौवादिकस्य [9]निवृत्त्यर्थः ॥

## मीनातिमिनोतिदीङां ल्यपि च । (५०/२६०८)

'आदेच उपदेशे' (६. १. ४५/२३७०) [10]इति वर्तते । 'मीञ् हिंसायाम्' (धा. पा. १४७७), 'डुमिञ् प्रक्षेपणे' (धा. पा. १२५१), 'दीङ क्षये' (धा.पा. ११३५) इत्येतेषां धातूनां ल्यपि विषये, चकाराद् [11]एचश्च विषये उपदेशे एव प्राक् प्रत्ययोत्पत्तेः अलोऽन्त्यस्य (१. १. ५२/४२) स्थाने आकारादेशो भवति । प्रमाता । [12]प्रमातव्यम् । प्रमातुम् । प्रमाय । निमाता । निमातव्यम् । निमातुम् । निमाय । उपदाता । उपदातव्यम् । उपदातुम् । उपदाय । उपदेशे एव आत्वविधानाद् इवर्णान्तलक्षणः प्रत्ययो न भवति । [13]आकारलक्षणश्च [14]भवति, उपदायो वर्तते । ईषदुपदानम् इति घञ्युचौ भवतः ॥

## विभाषा लीयतेः । (५१/२६०९)

ल्यपि (६. १. ४१/३३३९) इति वर्तते, आदेच उपदेशे (६. १. ४५/२३७०) इति च । 'लीङ श्लेषणे' (धा. पा. ११४०) इति दिवादिः । 'ली श्लेषणे' (धा.पा. १५०२) इति क्र्यादिः । तयोः उभयोः [15]अपि यका निर्देशः स्मर्यते । लीयतेर्धातोः ल्यपि च एचश्च विषये उपदेशे एव अलोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति । विलाता । विलातुम् । विलातव्यम् । विलाय । विलेता । विलेतुम् । [16]विलेतव्यम् । विलीय ।

[६६६] निमिमीलियां खलचोः प्रतिषेधो वक्तव्यः । (म. भा. ३. ३८)

ईषत् प्रमयः । प्रमयो वर्तते । ईषन्निमयः । निमयो वर्तते । ईषद् विलयः । विलयो वर्तते । अत्र तु लियो व्यवस्थितविभाषाविज्ञानात् सिद्धम् । एवं च प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्त्वं भवति, कस्त्वा-[17]मुल्लापयते, श्येनो वर्तिकामुल्लापयते ॥

---

1. इत्येव क. 2. अर्थे इत्यधिकम् क. ड. ह. 3. साध्यते फ. 4. सिधेः क. ड. 5. च इत्यधिकम् क. 6. सिद्धेरेव क. 7. सिध्यतेरर्थे क. 8. विधं क. 9. निवृत्त्यर्थम् फ. 10. इत्यनुवर्तते क. 11. एचश्च नास्ति फ. 12. प्रमातव्यं नास्ति फ. 13. आकारान्तलक्षणः ग. 14. तु क. 15. अयं क. ह. 16. विलेतव्यम् नास्ति ड. 17. उपलापयति क. ग.

## खिदेश्छन्दसि । (५२/३५१३)

विभाषा इति वर्तते । 'खिद दैन्ये' (धा.पा. ११७१) इत्यस्य धातोः एचः स्थाने छन्दसि [1]विषये विभाषा आकारः आदेशो भवति । चित्तं [2]चिखाद । चित्तं चिखेद । छन्दसि इति किम् ? [3]चित्तं खेदयति ।।

## अपगुरो णमुलि । (५३/३३७७)

'गुरी [4]उद्यमने' (धा.पा. १३९७) इत्यस्य धातोः अपपूर्वस्य णमुलि परतः एचः स्थाने विभाषा आकारः आदेशो भवति । अपगारमपगारम् । अपगोरमपगोरम् । 'आभीक्ष्ण्ये णमुल् च' (३.४.२२/३३४३) इति णमुल् । अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्ते इत्यत्र 'द्वितीयायां च' (३.४.५६/३३७४) इति णमुल् ।।

## चिस्फुरोर्णौ । (५४/२५६०)

चिञ् (धा.पा. १२५२) स्फुर (धा.पा. १३९०) इत्येतयोः धात्वोः णौ परतः एचः स्थाने विभाषा आकारादेशो भवति । चापयति, चाययति । स्फारयति, स्फोरयति ।।

## प्रजने वीयतेः । (५५/२६०३)

[5]णौ इति वर्तते । 'वी गतिप्रजनकान्त्यसनखादनेषु' (धा.पा. १०४९) इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतः विभाषा आकारादेशो भवति । पुरोवातो गाः प्रवापयति, पुरोवातो गाः प्रवाययति । गर्भं ग्राहयति इत्यर्थः । प्रजनो हि जन्मन उपक्रमो [6]गर्भग्रहणम् ।।

## बिभेतेर्हेतुभये । (५६/२५९३)

णौ इति वर्तते, विभाषा इति च । हेतुरिह पारिभाषिकः स्वतन्त्रस्य[7] प्रयोजकः, ततो यद् भयम्, स यस्य भयस्य साक्षाद् हेतुः,[8] तद्भयम् हेतुभयम् । तत्र वर्तमानस्य 'ञिभी भये' (धा. पा. १०८४) इत्यस्य धातोः णौ परतः विभाषा आकारादेशो भवति । मुण्डो भापयते, मुण्डो भीषयते । जटिलो भापयते, जटिलो भीषयते । 'भीस्म्योर्हेतुभये' (१.३.३८/२५९४) इत्यात्मनेपदम् । 'भियो हेतुभये षुक्' (७.३.४०/२५९५) । स च आत्त्वपक्षे न भवति । लिभियोः ईकारप्रश्लेषनिर्देशाद् ईकारान्तस्य भियः षुक् विधीयते । हेतुभये इति किम् ? कुञ्चिकयैनं भाययति[9] (म.भा. ३.३९) । अत्र हि कुञ्चिकातो भयं [10]करणात्, न हेतोर्देवदत्तात्[11] ।।

## नित्यं स्मयतेः । (५७/२५९६)

णौ इति वर्तते, हेतुभये इति च । नित्यग्रहणाद् विभाषा [12]इति निवृत्तम् । 'ष्मिङ ईषद्धसने' (धा.पा. ९४९) इत्यस्य धातोः हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति । मुण्डो विस्मापयते । जटिलो विस्मापयते[13] । भये इति किम् ? कुञ्चिकया एनं विस्माययति । भयशब्देन [14]हेत्वर्थसामान्याद् इह [15]स्मयतेरर्थोऽभिधीयते । न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति ।।

---

1. विषये नास्ति फ. 2. चखाद क.ड.ह. 3. चित्तं नास्ति क.ह.फ. 4. उद्यामने ग.फ. 5. वाक्यमिदं नास्ति क. 6. प्रथमं इत्यधिकम् क.ड. 7. कर्तुः इत्यधिकम् क. 8. भवति इत्यधिकम् फ. 9. अहिनैनं भाययति इत्यधिकम् ह. 10. कारणात् फ.ह. 11. इति इत्यधिकम् क. 12. इति नास्ति फ. 13. करणात् न संभवति इत्यधिकम् क. 14. धात्वर्थं इत्यधिकम् ड.फ.ह. 15. स्मयत्यर्थः ह.

## सृजिदृशोर्झल्यमकिति । (५८/२४०७)

'सृज विसर्गे' (धा. पा. १४१५), 'दृशिर् प्रेक्षणे' (धा. पा. ९८९) [1]इत्येतयोः धात्वोः झलादावकिति प्रत्यये परतः अम् आगमो भवति । स्रष्टा । स्रष्टुम् । स्रष्टव्यम् । द्रष्टा । द्रष्टुम् । द्रष्टव्यम् । लघूपधगुणापवादोऽयम् अमागमः । अस्राक्षीत् । अद्राक्षीत्[2] । सिचि वृद्धिः (७.२.३/२२६७) अमि कृते भवति, पूर्वं तु बाध्यते । झलि इति किम् ? सर्जनम् । दर्शनम् । अकिति इति किम् ? सृष्टः । दृष्टः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति, रज्जुसृड्भ्याम्, देवदृग्भ्याम् इति ॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । (५९/२४०२)

उपदेशे इति वर्तते, झल्यमकिति इति च । उपदेशेऽनुदात्तस्य [3]धातोः ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याम् अमागमो भवति । त्रप्ता, तर्पिता, तर्प्ता । द्रप्ता, [4]दर्पिता, दर्प्ता । 'तृप प्रीणने' (धा. पा. ११९६), 'दृप [5]हर्षमोचनयोः' (धा. पा. ११९७), इत्येतौ रधादी धातू, तयोः इडागमः 'रधादिभ्यश्च' (७.२.४५/२५१५) इति विकल्प्यते । अनुदात्तोपदेशः पुनरमर्थ एव । अनुदात्तस्य इति किम् ? वर्ढा, वर्ढुम्, वर्ढव्यम् । 'वृहू उद्यमने' (धा. पा. १३४८) इत्ययमुदात्तोपदेशः ऊदित्वाच्चास्येड् विकल्प्यते । ऋदुपधस्य इति किम् ? भेत्ता । छेत्ता । झलि इत्येव, तर्पणम् । दर्पणम् । अकिति [6]इत्येव, तृप्तः । दृप्तः ॥

## शीर्षंश्छन्दसि । (६०/३५१४)

शीर्षन् इति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य । सोऽपि हि छन्दसि प्रयुज्यत एव । शीर्ष्णा हि तत्र सोमं क्रीतं [7]हरन्ति । यत्ते शीर्ष्णो दौर्भाग्यम् । छन्दसि इति किम् ? [8]शिरः ॥

## ये च तद्धिते । (६१/१६६७)

शीर्षन् इति वर्तते । आदेशोऽयमिष्यते । स कथम् ? तद्धिते इति [9]हि परं निमित्तमुपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति । यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति । शीर्षण्यो हि मुख्यो भवति । शीर्षण्यः स्वरः । शिरसि भवः इति 'शरीरावयवाच्च' (४.३.५५/१४३०) इति यत्, 'ये चाभावकर्मणोः' (६.४.१३८/११५४) इति प्रकृतिभावः । तद्धिते इति किम् ? शिरः इच्छति शिरस्यति ।

[६६७] वा केशेषु । (म. भा. ३.४१)

शिरसः शीर्षन्नादेशो वक्तव्यः (म. भा. ३. ४१) । शीर्षण्याः केशाः, शिरस्याः केशाः ॥

---

1. इत्यनयोः फ. 2. इति इत्यधिकम् क. 3. धातोः नास्ति फ. 4. दर्पिता नास्ति फ. 5. हर्षण° ग. 6. एव नास्ति क. 7. वहन्ति क. 8. शिरसा भारं वहन्ति ह. 9. हि नास्ति क.

## अचि शीर्षः । (६२/१६६७)

अजादौ तद्धिते[1] शिरसः [2]शीर्षशब्दः आदेशो भवति । हस्तिशिरसः अपत्यं [3]हास्तिशीर्षिः । 'बाह्वादिभ्यश्च' (४.१.९६/१०९६) इति इञ् । स्थूलशिरसः इदं स्थौलशीर्षम् । शीर्षन्भावे हि 'अन्' (६.४.१६७/११५५) इति प्रकृतिभावः स्यात् । हास्तिशीर्षिशब्दात् स्त्रियामिञोऽणिञोरनार्षयोः (४. १. ७८/११९८) ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात् शीर्षन्नादेशः प्राप्नोति । तत्र [4]प्रकृतिभावे सति हास्तिशीर्षण्या इत्यनिष्टं रूपं स्यात् । इष्यते [5]तु हास्तिशीर्ष्या इति । तत् कथम् ? कर्तव्योऽत्र यत्नः । अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र यस्येति लोपस्य स्थानिवद्भावाद् व्यवधानम् ॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । (६३/२२८)

पाद दन्त नासिका मास हृदय निशा असृज् [6]यूष दोष यकृत् शकृत् उदक आसन इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येते आदेशाः यथासङ्ख्यं भवन्ति ।

पद् – [7]निपदश्चतुरो जहि । [8]पदा वर्तय गोदुहम् । 'पादः पत्' (६.४.१३०/४१४) । दत् – 'या दतो [9]धावते तस्यं श्यावदन्' (तै. सं. २. ५. १. ७) । नस् – 'सूकरस्त्वा खनन्नसा' (अ. वे. २.२७.२) । 'मास् – [10]मासि (तै. सं. २.५. ६. ६) त्वा पश्यामि चक्षुषा । हृद् – 'हृदा [11]पूतं मनसा जातवेदो' (अ. वे. ४.३९) । निश् – अमावास्यायां निशि (खि. २. १. ८) यजेत् । असन् – असिक्तोऽस्ना (मै. सं. ३. १५. ८)ऽवरोहति । यूषन् – 'या पात्राणि यूष्ण आसेचनानि' (ऋ. १. १६२. १३) । दोषन् – यत्ते दोष्णो (मै. सं ३. १०. ३) दौर्भाग्यम् । यकन् – [12]यक्नोऽवद्यति । शकन् – [13]शक्नो (अ. वे. १२. ४. ४)ऽवद्यति । उदन् – '[14]उद्नो दिव्यस्य नो देहि' (तै.सं. २. ४. ८. २) । आसन् – आसनि (ऋ. १. ७५. १) किं लभे मधूनि । शस्प्रभृतिषु इति किम् ? पादौ ते [15]प्रतिपीडचौ । नासिके ते कृशे । [16]केचिदत्र छन्दसि इत्यनुवर्तयन्ति । अपरे पुनरविशेषेणेच्छन्ति । तथा हि भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते ।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥

इत्येवमादयः । अन्यतरस्याम् इत्येतदनुवर्तयन्ति । [17]तेन पादादयोऽपि [18]प्रयुज्यन्ते । शस्प्रभृतिषु इति प्रकारार्थे प्रभृतिशब्द इति '[19]शला दोषणी' (काठ. सं. १६. २१) इत्यत्रापि दोषन्नादेशो भवति ।

[६६८] पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् । (म. भा. ३. ४१)

मांस पृतना सानु इत्येतेषां स्थाने यथासङ्ख्यम् मांस् पृत् स्नु इत्येते आदेशाः भवन्ति । 'मांस्पचन्या उखायाः' (ऋ. १. १६२. १३) । मांसपचन्या इति प्राप्ते । 'पृत्सु मर्त्यम्' (ऋ. १. २७. ७) । पृतनासु मर्त्यम् इति प्राप्ते । 'न ते दिवो न पृथिव्या अधिस्नुषु' (वा.सं. १७.१४) । अधिसानुषु इति प्राप्ते ।

---

1. परतः इत्यधिकम् ङ. फ. 2. शब्दः नास्ति ग. फ. 3. हास्तिशीर्षः क. 4. प्रकृतिवद्भावे क. 5. तु नास्ति क. 6. यूषन् दोषन् फ. 7. द्विपदः क. ग. फ. ह. 8. पदे रति यशोधनं क. 9. धावति इति मुद्रितः पाठः. 10. मासि त्वं पश्यसि क. 11. पूतेन मनसा जातवेदसम् मुद्रितः पाठः. 12. यक्नाराध्यति क. 13. शक्नेऽवविविक्षति क. 14. उद्नो दिव्यस्य नावा ते मुद्रितः पाठः. 15. संप्रतिपीडचौ ग. 16. केचित्तु क. 17. तेन नास्ति फ. 18. हि इत्यधिकम् क. 19. शिलादोषणी क.

[६६९] नस् नासिकाया यत्तस्क्षुद्रेषु । (म. भा. ३.४२)

नासिकाया नस्भावो वक्तव्यः यत् तस् क्षुद्र इत्येतेषु परतः । [1]नस्यम् । 'नस्तः' (काठ सं. १२.१२) । नःक्षु : ।

[६७०] यति वर्णनगरयोर्नेति वक्तव्यम् । (म. भा. ३.४२)

नासिक्यो वर्णः । नासिक्यं नगरम् (म. भा. ३.४२) ॥

## धात्वादेः षः सः । (६४/२२६४)

[2]धातोरादेः [3]षकारस्य स्थाने सकारादेशो भवति । षह – सहते । षिच – सिञ्चति । धातुग्रहणं किम् ? षोडश । षोडन् । [4]षण्डः । षडिकः । आदेः इति किम् ? कषति । [5]लषति । कृषति ।

'आदेश प्रत्यययोः' (८.३.५९/२१२) इत्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः । के पुनस्ते ? ये तथा पठ्यन्ते । अथवा लक्षणं क्रियते, अज्दन्त्यपराः [6]सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च[7], सृपिसृजिस्तृस्त्यासेक्सृवर्जम् ।

[६७१] सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः । (म. भा. ३.४२)

षोडीयति । षण्डीयति । ष्ठीवति । ष्वष्कते । ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारश्चेष्यते । तेन तेष्ठीव्यते, टेष्ठीव्यते इति चाभ्यासरूपं द्विधा भवति ॥

## णो नः । (६५/२२८६)

धातोरादेः [8]इत्यनुवर्तते । धातोरादेर्णकारस्य नकार आदेशो भवति । णीञ् – नयति । णम – नमति । णह – नह्यति । धात्वादेः इत्येव, अणति । सुब्धातोरयमपि नेष्यते, णकारमिच्छति णकारीयति । 'उपसर्गादसमासेऽपि णोपदेशस्य' (८.४.१४/२२८७) [9]इत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो धातवः केचिदुपदिश्यन्ते । के पुनस्ते ? ये तथा पठ्यन्ते । अथवा लक्षणं क्रियते, [10]सर्वे णादयो [11]णोपदेशाः, [12]नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृवर्जम्[13] ॥

## लोपो व्योर्वलि । (६६/८७३)

धातोः इति प्रकृतं यत् तद् धात्वादेः इति पुनर्धातुग्रहणान् निवृत्तम् । तेन धातोरधातोश्च वकारयकारयोः वलि परतो लोपो भवति । [14]दिव् – दिदिवान्, दिदिवांसौ, दिदिवांसः । ऊयी – ऊतम् । क्नूयी – क्नूतम् । 'गोधाया ढ्रक्' (४.१.१२९/११३५) गौधेरः । पचेरन् । [15]यजेरन् । [16]वकारस्य–'जीवेरदानुक्' (द.उ. १.१६३), जीरदानुः । स्रिवेः – आस्रेमाणम् । 'उणादयो बहुलम्' (३.३.१/३१६९) इति बहुलवचनाच् 'च्छ्वोः शूडनुनासिके च' (६.४.१९/२५६१) इति ऊठ् न भवति । वलि इति किम् ? ऊय्यते । क्नूय्यते । पूर्वं लोपग्रहणं किम् ? वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात् । कण्डूयतेः क्विप्-कण्डूः । लोलूयतेः[17] – लोलूः । व्रश्चादीनामुपदेशसामर्थ्यात् वलि लोपो न भवति । वृश्चति । वव्रश्च इत्यत्रापि हि सम्प्रसारणहलादिःशेषयोर्बहिरङ्गत्वात् प्राप्नोति ॥

---

1. नस्यानि (काठ. सं. 38.3) 2. धात्वादेः फ. 3. वर्तमानस्य इत्यधिकम् क. 4. षण्डः नास्ति फ. 5. मिषति क. फ. ह. 6. सर्वे इत्यधिकम् फ. ह. 7. मकारवकारयोरनज्दन्त्यत्वात् न भवतीति अप्राप्ते विधानम् इत्यधिकम् ह. ड. 8. इति वर्तते फ. 9. इति णत्वव्यवस्थार्थं फ. 10. अज्दन्त्यपराः सर्वे फ. 11. नोपदेशाः क. 12. नृति क. 13. इति इत्यधिकम् फ. 14. दिव् नास्ति फ. 15. यजेरन् नास्ति फ. 16. वकारस्य नास्ति क. 17. क्विप् इत्यधिकम् क. ह.

## वेरपृक्तस्य । (६७/३७८)

लोपः इति वर्तते । वेः इति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते । वेरपृक्तस्य लोपो भवति । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (३.२.८७/२९९८) । ब्रह्महा । [1]भ्रूणहा । 'स्पृशोऽनुदके क्विन्' (३.२.५८/४३२) । घृतस्पृक् । [2]तैलस्पृक् । 'भजो ण्विः' (३.२.६२/२९७६) । अर्धभाक् । पादभाक् । [3]तुरीयभाक् । अपृक्तस्य इति किम् ? वृदृभ्यां क्विन्' (उ. ५०२) दर्विः । 'कॄगॄशॄदॄजागृभ्यः क्वि' । जागृविः ॥

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । (६८/२५२)

लोप इति वर्तते । तदिह लौकिकेनार्थवत् [4]कर्मसाधनं द्रष्टव्यम् । लुप्यते इति लोपः । हलन्ताद्, ङ्यन्ताद् आबन्ताच् च दीर्घात् [5]परं सु ति सि इत्येदपृक्तं हल् लुप्यते । हलन्तात् सुलोपः – राजा । तक्षा । उखास्रत् । पर्णध्वत् । ङ्यन्तात् – कुमारी । [6]गौरी । शार्ङ्गरवी । आबन्तात् – खट्वा । बहुराजा । कारीषगन्ध्या ।

हलन्तादेव तिलोपः [7]सिलोपश्च । तत्र तिलोपस्तावत् – अबिभर् भवान् । भृञो लङि तिपि श्लौ 'भृञा-मित् (७.४.७६/२४९६) इत्यभ्यासस्य इत्वम् । अजागर् भवान् । सिलोपः-अभिनोऽत्र । अच्छिनोऽत्र (म.भा. ३.४३) । दस्य रेफः ।

हल्ङ्याब्भ्यः इति किम् ? ग्रामणीः । [8]सेनानीः । दीर्घात् इति किम् ? निष्कौशाम्बिः । अतिखट्वः । सुतिसि इति किम् ? अभैत्सीत् । तिपा सहचरितस्य सिशब्दस्य ग्रहणात् सिचो ग्रहणं [9]नास्ति । [10]अपृक्तम् इति किम् ? भिनत्ति । छिनत्ति । हलि इति किम् ? बिभेद । चिच्छेद ।

अथ किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते, संयोगान्तलोपेनैव [11]सिद्धम् ? न सिध्यति । राजा, तक्षा इत्यत्र संयोगान्तलोपस्यासिद्धत्वान् नलोपो न स्यात् । उखास्रत्, पर्णध्वत् इत्यत्र अपदान्तत्वाद् दत्वं च न स्यात् । अभिनोऽत्र इत्यत्र 'अतो रोरप्लुतादप्लुते' (६.१.११३/१६३) इत्युत्वं न स्यात् । अबिभर् भवान् इत्यत्र तु 'रात् सस्य' (८.३.२४/२८०) इति नियमाल् लोप एव न स्यात् ।

संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु ते नैव लोपः स्याद् धलस्तस्माद् विधीयते ॥

## एङ् ह्रस्वात् सम्बुद्धेः । (६९/१९३)

लोपः इति वर्तते, हल् इति च । अपृक्तम् इति नाधिक्रियते, [12]तथा च पूर्वसूत्रे [13]पुनरपृक्तग्रहणं [14]कृतम् । एङन्तात् प्रातिपदिकात् ह्रस्वान्ताच्च परो हल् लुप्यते स चेत् सम्बुद्धेर्भवति । एङन्तात् – हे अग्ने । हे वायो । ह्रस्वान्तात् – हे देवदत्त । हे नदि । हे वधु । हे कुण्ड । कुण्डशब्दात् 'अतोऽम्' (७.१.२४/३०९) इति अम् । 'अमि पूर्वः' (६.१.१०७/१९४) इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः । हे कतरत् इत्यत्र डिदयम् अद्डादेशः (७.१.२५/३१५), तत्र टिलोपे सति ह्रस्वाभावान् नास्ति [15]सम्बुद्धिलोपः । एङ्ग्रहणं क्रियते सम्बुद्धिगुणबलीयस्त्वात् ॥

---

1. वृत्रहा क. ड. फ. 2. तैलस्पृक् नास्ति फ, दधिस्पृक्, जलस्पृक् ह. 3. तुरीयभाक् नास्ति क. फ. 4. कर्मणि साधनं फ. 5. उत्तरं फ. 6. शाङ्कली क, किशोरी ह, शार्ङ्गरवी नास्ति फ. 7. सलोपः ह. 8. सेनानीः नास्ति फ. 9. न भवति फ. 10. अपृक्तः क. 11. सिध्यति फ. 12. तथा च – भवति नास्ति फ. 13. हि इत्यधिकम् ब. 14. क्रियते क. 15. सम्बुद्धेः लोपः ब.क.फ.

## शेः छन्दसि बहुलम्। (७०/३६१६)

शि इत्येतस्य बहुलं छन्दसि [1]विषये लोपो भवति। या क्षेत्रा। 'या वना' (अ. वे. १४.२.७)। 'यानि क्षेत्राणि' (अ. वे. १४.२.७)। यानि वनानि ॥

## ह्रस्वस्य पिति कृति तुक्। (७१/२८५८)

पिति कृति परतो [2]ह्रस्वान्तस्य धातोः तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य। ह्रस्वस्य इति किम्? [3]आलूय। ग्रामणीः। पिति इति किम्? [4]कृतम्। हृतम्। कृति इति किम्? पटुतरः। पटुतमः। [5]ग्रामणि ब्राह्मणकुलम् इत्यत्र ह्रस्वस्य बहिरङ्गस्य असिद्धत्वात् तुग् न भवति ॥

## संहितायाम्। (७२/१४५)

अधिकारोऽयम् 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८/३६५०) इति यावत्। प्रागेतस्मात् सूत्राद् इत उत्तरं यद्वक्ष्यामः संहितायाम् इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'इको यणचि' (६.१.७७/४७)[6], दध्यत्र। मध्वत्र। संहितायाम् इति किम्? दधि अत्र। मधु अत्र ॥

## छे च। (७३/१४६)

ह्रस्वस्य तुक् इति वर्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति। इच्छति। यच्छति[7]। ह्रस्व एवा[8]त्रागमी, न [9]तु तदन्तः। तेन [10]चिच्छदतुः, चिच्छिदुः इत्यत्र तुक् अभ्यासस्य ग्रहणेन न गृह्यते इति [11]हलादिःशेषेण न निवर्त्यते, नावयवावयवः समुदायावयवो भवति इति ॥

## आङ्माङोश्च। (७४/१४७)

तुक् इति अनुवर्तते, छे इति च। आङो ङित [12]ईषदादिषु [13]चतुर्ष्वर्थेषु वर्तमानस्य, माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। 'पदान्ताद् वा' (६.१.७६/१४९) इति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे – ईषच्छाया आच्छाया। क्रियायोगे – आच्छादयति। मर्यादाभिविध्योः – आ च्छायायाः आच्छायम्। माङः खल्वपि – मा च्छैत्सीत्। मा च्छिदत्। ङिद्विशिष्टग्रहणं किम्? आछाया, आच्छाया। प्रमाछन्दः, प्रमाच्छन्दः ॥

---

1. विषये नास्ति फ. 2. ह्रस्वस्य ड. 3. विलूय ह. 4. कृतवान्, हृतवान् ह. 5. ग्रामणि ब्राह्मणम् क. 6. इति इत्यधिकम् फ. 7. यच्छन्ति इत्यधिकम् क. ह. 8. अत्र नास्ति क. 9. त्वदन्तः फ. ड. 10. चिच्छेद इत्यधिकम् फ. 11. हलादिशेषेण क. फ. 12. ईषदाद्यर्थेषु क. फ. 13. संहितायां विषये इत्यधिकम् फ.

## दीर्घात् । (७५/१४८)

छे तुक् इति वर्तते । दीर्घात् परो यः छकारः तस्मिन्[1] पूर्वस्य तस्यैव दीर्घस्य तुगागमो भवति । ह्रीच्छति । [2]म्लेच्छति । [3]अपचाच्छायते । विचाच्छायते ॥

## पदान्ताद्वा । (७६/१४९)

दीर्घात् छे तुक् इति वर्तते । पदान्ताद् दीर्घात् परो यः छकारः तस्मिन् [4]पूर्वस्य तस्यैव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति । कुटीच्छाया, कुटीछाया । कुवलीच्छाया, कुवलीछाया ।

[६७२] विश्वजनादीनां छन्दसि वा तुगागमो भवतीति वक्तव्यम् । (म. भा. ३. ५१)

विश्वजनच्छत्रम्, विश्वजनछत्रम् । 'न च्छायां करवोऽपरम्' (अ. वे. १३. ३. ५६) । न छायां करवोऽ-परम् ॥

## इको यणचि । (७७/४७)

अचि परतः इको यणादेशो भवति[5] । [6]दध्यत्र । मध्वत्र । [7]कर्त्रर्थम् । लाकृतिः[8] ।

[६७३] इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्यः ।

भो३इ इन्द्रम् । भो३यिन्द्रम् । अचि इति चायमधिकारः 'संप्रसारणाच्च' (६. १. १०८/३३०) इति यावत् ॥

## एचोऽयवायावः । (७८/६१)

एचः स्थाने अचि परतः अय् अव् आय् आव् इत्येते आदेशाः यथासङ्ख्यम् भवन्ति । चयनम् । लवनम् । चायकः । लावकः । कयेते । ययेते । [9]वायावरुणद्धि ॥

## वान्तो यि प्रत्यये । (७९/६३)

योऽयमेचः स्थाने वान्तादेशः ओकारस्य अव्, औकारस्य आव्, स यकारादौ प्रत्यये परतो भवति । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कार्पासः । नाव्यो ह्रदः । वान्तः इति किम् ? रायमिच्छति [10]रैयति । यि इति किम् ? गोभ्याम् । नौभ्याम् । प्रत्यये इति किम् ? गोयानम् । नौयानम् ।

---

1. परतः इत्यधिकम् ड, परभूते इत्यधिकम् क. 2. म्लीच्छति ड. 3. उदाहरणमिदं नास्ति फ. 4. परभूते इत्यधिकम् क, परतः इत्यधिकम् ड. 5. संहितायाम् इत्यधिकम् फ. 6. शम्यत्र वध्वाकृतिः फ. 7. कर्त्रश्वः फ. 8. इकः इति किम् ? वागत्र इत्यधिकम् फ. ह. 9. कावबरुणद्धि क. ड. फ. ह. 10. रैय्यति ह.

[६७४] गोर्यूतौ छन्दसि । (म.भा. ३.५४)

गोशब्दस्य यूतौ परतः छन्दसि विषये [1]वान्तादेशो वक्तव्यः । '[2]आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्' (ऋ. ३.६२.१६) । छन्दसि इति किम्? गोयूतिः ।

[६७५] अध्वपरिमाणे च । (म. भा. ३. ५४)

गोर्यूतौ परतो [3]वान्तादेशो वक्तव्यः । गव्यूतिमात्रमध्वानं गतः ॥

## धातोस्तन्निमित्तस्यैव । (८०/६४)

एचः इति वर्तते, वान्तो यि प्रत्यये इति च । धातोर्य एच् तन्निमित्तो यकारादिप्रत्ययनिमित्तः, तस्य यकारादौ प्रत्यये परतो [4]वान्तादेशो भवति । लव्यम् । पव्यम् । अवश्यलाव्यम् । अवश्यपाव्यम् । धातोः इति किम्? प्रातिपदिकस्य नियमो मा भूत् । तत्र को दोषः? बाभ्रव्यः इत्यत्रैव स्यात्, इह [5]न स्यात् गव्यम्, नाव्यम् इति । तन्निमित्तस्य इति किम्? [6]अतन्निमित्तस्य मा भूत् । उपोयते । औयत । लौयमानिः । पौयमानिः । 'अत इञ्' (४.१.९५/१०९५) । एवकारकरणं किम्? धात्ववधारणं यथा स्यात्, तन्निमित्तावधारणं मा भूत् इति तन्निमित्तस्य हि धातोश्चाधातोश्च भवति । बाभ्रव्यः । [7]अवश्यलाव्यम् । लव्यम् ॥

## क्षय्यजय्यौ शक्यार्थे । (८१/६५)

क्षि जि इत्येतयोर्धात्वोः यति प्रत्यये परतः शक्यार्थे गम्यमाने एकारस्य अयादेशो निपात्यते । शक्यः क्षेतुम् क्षय्यः[8] । शक्यो जेतुम् जय्यः । शक्यार्थे इति किम्? क्षेयं पापम् । जेयो वृषलः ॥

## क्रय्यस्तदर्थे । (८२/६६)

क्रीणातेः धातोः तदर्थे क्रयार्थं यत् तस्मिन्नभिधेये यति प्रत्यये परतः अयादेशो निपात्यते । [9]क्रय्यो गौः । क्रय्यः कम्बलः । क्रयार्थं यः प्रसारितः स उच्यते । [10]तदर्थे इति किम्? क्रेयं नो धान्यं, [11]न चास्ति क्रय्यम् ॥

## भय्यप्रवय्ये च च्छन्दसि । (८३/३६१७)

बिभेतेर्धातोः प्रपूर्वस्य च वी इत्येतस्य यति प्रत्यये परतः छन्दसि विषये अयादेशः निपात्यते । 'भय्यं किलासीत्' (काठ. सं. १३.४) । वत्सतरी प्रवय्या । भय्येति 'कृत्यल्युटो बहुलम्' (३.३.११३/२८४१) इत्यपादाने यत् प्रत्ययः । बिभेत्यस्माद् इति भय्यम् । प्रवय्या इति स्त्रियामेव [12]निपातनम् । अन्यत्र प्रवेयम् इत्येव भवति । छन्दसि इति किम्? भेयम् । प्रवेयम् ।

[६७६] ह्रदय्या आप उपसङ्ख्यानम्[13] । (म.भा. ३.५५)

ह्रदय्या आपः (म.भा. ३.५५) । ह्रदे भवा, 'भवे छन्दसि' (४.४.११०/३४५६) इति यत् प्रत्ययः ॥

---

1. आदेशः क. 2. युवां यौ इत्यधिकम् क. 3. वादेशः क. 4. वादेशः क. 5. तु इत्यधिकम् क. फ. 6. अन्यनिमित्तस्य फ. 7. अवश्यलाव्यः लव्यः क. 8. व्याधिः इत्यधिकम् ग. 9. क्रय्या फ. ह, क्रय्या नौः ग. 10. क्रय्य इति किम् फ. 11. न चेहास्ति ह. फ. 12. निपातनात् फ. 13. कर्तव्यम् इत्यधिकम् फ.

## एकः पूर्वपरयोः । (८४/६८)

अधिकारोऽयम् । 'ख्यत्यात् परस्य' (६.१.११२/२५५) इति प्रागेतस्मात् सूत्रात् इत उत्तरं यद् वक्ष्यामस्तत्र पूर्वस्य परस्य[1] द्वयोरपि स्थाने एकादेशो भवति [2]इत्येतद् वेदितव्यम् । वक्ष्यति 'आद् गुणः' (६.१.८७/६९) इति । तत्र अचि पूर्वस्य अवर्णात् च परस्य[3] स्थाने एको गुणो भवति । खट्वेन्द्रः । मालेन्द्रः[4] । पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्, एकस्यैव हि स्यात्, नोभे सप्तमीपञ्चम्यौ युगपत्[5] प्रकल्पिके भवतः इति । एकग्रहणं पृथगादेशनिवृत्त्यर्थं, स्थानिभेदाद्धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम् ॥

## अन्तादिवच्च । (८५/७५)

एकः इति वर्तते, पूर्वपरयोः इति च । 'एकः पूर्वपरयोः' (६.१.८४/६८) इति योऽयमेकादेशो विधीयते स पूर्वस्य अन्तवद् भवति, परस्यादिवद् भवति । यथा तस्यान्तः आदिर्वा तदन्तर्भूतः तद्ग्रहणेन गृह्यते, तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यते इत्येषोऽतिदेशार्थः । ब्रह्मबन्धूः इत्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङ् इति अप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर्यः एकादेशः स प्रातिपदिकस्यान्तवद्भवति, यथा शक्यते[6] कर्तुं 'ङ्याप् प्रातिपदिकात्' (४.१.१/१८२) इति स्वादिविधिः । वृक्षौ इत्यत्र [7]सुबौकारः असुबकारः, तयोः सुबसुपोरेकादेशः सुपः आदिवद् भवति, यथा शक्यते वक्तुं सुबन्तं पदम् (१.४.१४/२९) इति ।

वर्णाश्रयविधौ अयमन्तादिवद्भावो नेष्यते । [8]तथा हि खट्वाभिः इत्यत्रान्तवद्भावाभावात् 'अतो भिस ऐस्' (७.१.९/२०६) इति [9]न भवति । ह्वयतेः जुहाव इति सम्प्रसारणपूर्वत्वस्य आदिवद्भावाभावात् 'आत औ णलः' (७.१.३४/२३७१) इति[10] न भवति । अस्यै अश्वः, अस्या अश्वः इति 'वृद्धिरेचि' (६.१.८८/७२) इति वृद्धिः, 'एङः पदान्तादति' (६.१.१०९/८६) इत्यत्र विधौ आदिवन्न भवति । [11]पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते । तत्रावयवयोरानुमानिकं स्थानित्वम् इति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तम् इत्यन्तादिवद्भावो विधीयते ॥

## षत्वतुकोरसिद्धः । (८६/३३३३)

षत्वे तुकि च कर्तव्ये एकादेशो[12]ऽसिद्धो भवति, सिद्धकार्यं न करोति इत्यर्थः । [13]असिद्धवचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च (म. भा. ३.६५) । [14]कोऽसिचत् इत्यत्र [15]'एङः पदान्तादति' (६.१.१०९/८६) इति एकादेशस्य परं प्रत्यादिवद्भावात् अपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति । कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै [16]इत्येकादेशस्यासिद्धत्वात् इणः (८.३.३९/१५३) इति षत्वं न भवति । तुग्विधौ – अधीत्य, प्रेत्य इत्यत्रैकादेशस्यासिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्' (६.१.७१/२८५८) इति तुग् भवति ।

[६७७] सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः । (म. भा. ३.६६)

---

1. च इत्यधिकम् ड. 2. इत्येवं तद् वेदितव्यम् फ. 3. अचः इत्यधिकम् ड. 4. उपेन्द्रः इत्यधिकम् ब. 5. षष्ठी इत्यधिकम् ब. 6. विधिः इत्यधिकम् क. 7. सुबन्तौकारः ह. 8. यथा हि फ. 9. एत्वं इत्यधिकम् फ. 10. औत्वं इत्यधिकम् फ. ह. 11. पूर्वसमुदायस्य ड. 12. सो इत्यधिकम् क. 13. षत्वलुकोः इत्यधिकम् ब. फ. ह. 14. सिञ्चत् ह, क्व असिञ्चत् इति क. 15. एङः नास्ति फ. 16. इत्यत्र ग. ह.

सम्प्रसारणे – ब्रह्महूषु । परिवीषु । सम्प्रसारणपूर्वत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति । ङौ – वृक्षे च्छत्रम्, वृक्षे छत्रम् । इटि – अपचे च्छत्रम्, अपचे छत्रम् (म. भा. ३.६६) । आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणो (६.१.७१/२५५८) नित्योऽत्र तुक् प्राप्नोति, दीर्घात् (६.१.७५/१४८), 'पदान्ताद् वा' (६.१.७६/१४९) [1]इति तुग्विकल्प इष्यते ॥

## आद्गुणः । (८७/६९)

अचि इत्यनुवर्तते । [2]अवर्णात् परो योऽच्, अचि च पूर्वो योऽवर्णः तयोः पूर्वपरयोः [3]अवर्णाचोः स्थाने एको गुण आदेशो भवति । [4]तवेदम् । खट्वेन्द्रः । मालेन्द्रः । तवेहते । खट्वेहते । तवोदकम् । खट्वोदकम् । तवर्श्यः । खट्वर्श्यः । तवल्कारः । खट्वल्कारः । लृकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते ॥

## वृद्धिरेचि । (८८/७२)

आत् इति वर्तते । [5]अवर्णात् परो य एच्, [6]एचि च पूर्वो यः अवर्णः, [7]तयोः पूर्वपरयोः अवर्णैचोः [8]स्थाने वृद्धिरेकादेशो भवति । आद्गुणस्यापवादः । ब्रह्मैडका । खट्वैडका । ब्रह्मैतिकायनः । खट्वैतिकायनः । ब्रह्मौदनः । खट्वौदनः । ब्रह्मौपगवः । खट्वौपगवः ॥

## एत्येधत्यूठ्सु । (८९/७३)

वृद्धिरेचि इति वर्तते, [9]आत् इति च । तदेतत् एज्ग्रहणम् एतेरेव विशेषणं, न पुनरेधतेः, अव्यभिचारात्, ऊठश्चासम्भवात् । 'इण् गतौ' (धा. पा. १०४६) इत्येतस्मिन् धातौ एचि, 'एध वृद्धौ' (धा. पा. २) इत्येतस्मिन् ऊठि च पूर्वं [10]यदवर्णं ततश्च परो [11]योऽच्, तयोः पूर्वपरयोः [12]अवर्णाचोः स्थाने वृद्धिरेकादेशो भवति । उपैति । उपैषि । उपैमि । उपैधते । प्रैधते । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । ऊठि आद्गुणापवादो वृद्धिर्विधीयते । एत्येधत्योः [13]तु एङि पररूपापवादः । 'ओमाङोश्च' (६.१.९५/८०) इत्येतत्तु[14] पररूपं न बाध्यते, 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' (व्या. प. ४९) [15]इति, 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते' (व्या. प. ९) इति वा । तेनेह न भवति, उप आ इतः [16]उपेतः इति । एचि इत्येव, उप इतः उपेतः ।

[६७८] अक्षादूहिन्यां वृद्धिर्वक्तव्या । (म. भा. ३.६९)

अक्षौहिणी ।

[६७९] स्वादीरे[17]रिण्योर्वृद्धिर्वक्तव्या । (म. भा. ३.६९)

स्वैरम् । स्वैरिणी ।

[६८०] प्रादूढोढ्येषैष्येषु वृद्धिर्वक्तव्या । (म. भा. ३.६९)

प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः ।

---

1. इति नास्ति ह. 2. अवर्णान्तात् फ. ह, अवर्णान्तपरः क. 3. वर्णयोः ब. 4. तवेन्द्रः क. 5. अवर्णान्तात् फ, अवर्णपरो ह. 6. तस्मिन् एचि परतः ग. 7. तयोः नास्ति ह. 8. परतः इत्यधिकम् फ. आत् इति च नास्ति फ.10. योऽवर्णः ग. 11. यः एच् क. फ. ह. 12. अवर्णाचोः नास्ति क. ग. 13. तु नास्ति फ. 14 .तु नास्ति क. फ. 15. इति नास्ति फ. 16. उपेतः नास्ति फ. 17. °रिणोः क, महाभाष्ये

[६८१] ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या। (म. भा. ३. ६९)

सुखेन ऋतः सुखार्तः। [1]दुःखेन ऋतः दुःखार्तः। ऋतः इति किम्? सुखेन इतः सुखेतः। तृतीया इति किम्? परमर्तः। समासे इति किम्? सुखेनर्तः।

[६८२] प्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या। (म. भा. ३. ६९)

प्र – प्रार्णम्। वत्सतर – वत्सतरार्णम्। कम्बल – कम्बलार्णम्। वसन – वसनार्णम्।

[६८३] ऋणदशाभ्यां वृद्धि[2]र्वक्तव्या। (म. भा. ३. ६९)

ऋणार्णम्। दशार्णम्॥

## आटश्च। (९०/२६०)

एचि इति निवृत्तम्। अचि [3]इत्यनुवर्तते। आटः परो यो अच्, अचि च पूर्वो य आट्, तयोः पूर्वपरयोः आडचोः स्थाने वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औब्जीत्। [4]चकारोऽधिकविधानार्थः, उसि (६. १. ९६/२२१४) 'ओमाङोश्च' (६. १. ९५/८०) इति पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ ऊढा ओढा, तामैच्छत् औढीयत्॥

## उपसर्गादृति धातौ। (९१/७४)

आत् इत्येव। अवर्णान्तादुपसर्गात् ऋकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति। उपसर्गात् इति किम्? खट्वर्च्छति। [5]मालर्च्छति। प्रगता ऋच्छका अस्माद् देशात् प्रर्च्छको देशः। '[6]यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसञ्ज्ञकाः' (जै. प. ९९) इति। ऋति इति किम्? उप इतः उपेतः। तपरकरणं किम्? उप ऋकारीयति उपर्कारीयति। 'वा सुप्यापिशलेः' (६. १. ९२/७७) इति[7] विकल्पः स्यात्। उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं [8]शाकलनिवृत्त्यर्थम्। 'ऋत्यकः' (६. १. १२८/९२) इति हि [9]शाकल्यस्य[10] प्रकृतिभावः प्राप्नोति॥

## वा सुप्यापिशलेः। (९२/७७)

आत् इत्येव, उपसर्गात् [11]ऋति धातौ इति च। सुबन्तावयवे धातौ ऋकारादौ परतः [12]अवर्णान्तात् उपसर्गात् पूर्वपरयोः[13] आपिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति, उपार्षभीयति। उपल्कारीयति, उपाल्कारीयति। [14]ऋकारलृकारयोः [15]सावर्ण्यविधिः इति ऋति इति लृकारोऽपि गृह्यते। आपिशलिग्रहणं पूजार्थम्, वा इति ह्युच्यते एव॥

---

1. उदाहरणमिदं नास्ति फ. 2. वक्तव्या नास्ति फ. 3. इति वर्तते क. 4. चशब्दः क. 5. उदाहरणमिदं नास्ति फ. 6. वाक्यमिदं नास्ति ब. फ. 7. हि इत्यधिकम् ब. 8. शाकल्यविकल्पनिवृत्त्यर्थम् फ. 9. शाकलस्य ड. 10. मते इत्यधिकम् ब. 11. ऋति नास्ति फ. 12. अवर्णात् फ. 13. पश्चात् गृहीतः इत्यधिकम् क. 14. वाक्यमिदं नास्ति ग. 15. सवर्णसञ्ज्ञा क.

## ओतोऽम्शसोः। (९३/२८७)

ओतः अमि शसि च परतः पूर्वपरयोः आकारः [1]आदेशो भवति। गां पश्य। गाः पश्य। द्यां पश्य। द्याः पश्य। द्योशब्दोऽपि ओकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णित् इष्यते, तेन नाप्राप्तायां वृद्धौ अयमाकारो विधीयमानस्तां बाधते। अम् इति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपि इति चाधिकारात्। तेन अचिनवम्, असुनवम् इत्यत्र [2]न भवति॥

## एङि पररूपम्। (९४/७८)

आत् इत्येव, उपसर्गाद् [3]धातौ इति च[4]। अवर्णान्तात् उपसर्गात् एङादौ धातौ पूर्वपरयोः[5] पररूपम् एकादेशो भवति। 'वृद्धिरेचि' (६.१.८८/७२) इत्यस्यापवादः। उपेलयति। प्रेलयति। उपोषति। प्रोषति। [6]केचित् 'वा सुप्यापिशलेः' (६.१.९२/७७) इत्यनुवर्तयन्ति, तच्च वाक्यभेदेन सुब्धातौ विकल्पं करोति। उपेडकीयति, उपैडकीयति। उपोदनीयति, उपौदनीयति।

[६८४] शकन्ध्वादिषु पररूपं [7]वाच्यम्। (म.भा. ३.७५)

शक अन्धुः शकन्धुः। कुल अटा कुलटा।

[६८५] सीमन्तः केशेषु। (म. भा. ३.७५)

सीम्नोऽन्तः सीमन्तः। अन्यत्र सीमान्तः।

[६८६] एवे चानियोगे पररूपं वक्तव्यम्। (म.भा. ३.७५)

इह एव इहेव। अद्य एव अद्येव। अनियोगे इति किम्? इहैव भव, मा अन्यत्र गाः (म.भा. ३.७५)।

[६८७] ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्। (म.भा. ३.७६)

स्थूल ओतुः स्थूलौतुः, स्थूलोतुः। बिम्बौष्ठी, बिम्बोष्ठी। समासे इति किम्? तिष्ठ देवदत्तौष्ठं पश्य।

[६८८] एमन्नादिषु छन्दसि पररूपं वक्तव्यम्। (म.भा. ३.७६)

अपां त्वा एमन् 'अपां त्वेमन्' (मै. सं. २.७.१८.१)। अपां त्वा ओद्मन् 'अपां त्वोद्मन्' (मै. सं. २.७.१८.१)॥

---

1. एकादेशः ब. क. ड. फ. 2. न नास्ति ग. 3. धातोः ग.क. 4. वर्तते इत्यधिकम् फ. 5. स्थाने इत्यधिकम् क. 6. अपरे क.फ.ह. 7. वक्तव्यम् ग.

## ओमाङोश्च । (९५/८०)

आत् इत्येव । अवर्णान्तात् ओमि आङि च परतः पूर्वपरयोः [1]स्थाने पररूपमेकादेशो भवति । का ओम् इत्यवोचत्, कोमित्यवोचत् । योमित्यवोचत् । आङि [2]खल्वपि – आ ऊढा ओढा । अद्य ओढा अद्योढा । कदा ओढा कदोढा । तदा ओढा तदोढा । 'वृद्धिरेचि' (६. १. ८८/७२) इत्यस्यापवादः । इह तु आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यात् इति अकः सवर्णे दीर्घत्वं (६. १. १०१/८५) [3]बाधते ॥

## उस्यपदान्तात् । (९६/२२१४)

आत् इत्येव । अवर्णात् अपदान्तात् उसि[4] पूर्वपरयोः आद्गुणापवादः पररूपमेकादेशो भवति । भिन्द्या उस् भिन्द्युः । [5]छिन्द्या उस् छिन्द्युः । अदा उस् अदुः । [6]अया उस् अयुः । अपदान्तात् इति किम् ? का उस्रा कोस्रा (म. भा. ३. ७६) । का उषिता कोषिता । आत् इत्येव, [7]चक्रुः । अबिभयुः ॥

## अतो गुणे । (९७/१९१)

अपदान्तात् इति वर्तते । अकारात् अपदान्तात् [8]गुणे परतः पूर्वपरयोः [9]स्थाने पररूपमेकादेशो भवति । पचन्ति । यजन्ति । अकः सवर्णे दीर्घस्य (६. १. १०१/८५) अपवादः । पचे, यजे इत्यत्र 'वृद्धिरेचि' (६. १. ८८/७२) इति वृद्धिः प्राप्नोति । अतः इति किम् ? यान्ति । वान्ति । गुणे इति किम् ? अपचे । अयजे । अपदान्तात् इत्येव, [10]दण्डाग्रम् । यूपाग्रम् ॥

## अव्यक्तानुकरणस्यात इतौ । (९८/८१)

अव्यक्तम् अपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णमेव केनचित् सादृश्येन तदव्यक्तमनुकरोति, तस्य यो अत्-शब्दः तस्मात् इतौ[11] पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । पटत् इति पटिति । घटत् इति घटिति । [12]झटत् इति झटिति । छमित् इति छमिति । अव्यक्तानुकरणस्य इति किम् ? जगत् इति जगदिति । अतः इति किम् ? मरट् इति मरडिति । इतौ इति किम् ? पटत् अत्र पटदत्र ।

[६८९] अनेकाच इति वक्तव्यम् । (म. भा. ३. ७७)

इह मा भूत्, श्रत् इति श्रदिति । कथम् घटदिति गम्भीरमम्बुदैर्नदितम् इति ? दकारान्तमेनदनुकरणं द्रष्टव्यम् ॥

---

1. स्थाने नास्ति क. फ. 2. खल्वपि नास्ति फ. 3. बाध्यते ब. ड. ह. 4. परतः इत्यधिकम् ब. क. फ. ह. 5. उदाहरणमिदं नास्ति फ. 6. अया उस् नास्ति फ, अपा उस् अपुः इत्यधिकम् ब. क. ह. 7. जहुरुः ब. 8. गुणसंज्ञके वर्णे ग. फ. ह. 9. स्थाने नास्ति फ. 10. दर्भाग्रम् ग. 11. परतः इत्यधिकम् क. 12. झटत् इति नास्ति क.

## नाम्रेडितस्यान्त्यस्य तु वा। (९९/८२)

अव्यक्तानुकरणस्य आम्रेडितस्य यो अत्शब्दः इतौ[1] तस्य पररूपं न भवति, तस्य योऽन्त्यस्तकारस्तस्य वा भवति। पटत्पटदिति, पटत्पटेति करोति। 'नित्यवीप्सयोः' (८.१.४/२१४०) इति द्विर्वचनम्। यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्, पटत्पटिति करोति ।।

## नित्यमाम्रेडिते डाचि। (१००/२१२८)

अव्यक्तानुकरणस्य, [2]अतः, अन्त्यस्य इति चानुवर्तते। डाच्परं यदाम्रेडितं तस्मिन् पूर्वस्य अव्यक्तानुकरणस्य अच्छब्दस्य योऽन्त्यः तकारः तस्य पूर्वस्य परस्य [3]चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति। पटपटा करोति। दमदमा करोति[4]। पटदित्यस्मात् अव्यक्तानुकरणात् इति डाचि विहिते डाचि बहुलम् (वा. ६९१) इति द्विर्वचनम्, [5]तच्च टिलोपात् पूर्वमेवेष्यते ।।

## अकः सवर्णे दीर्घः। (१०१/८५)

अकः सवर्णे अचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्[6]। दधीन्द्रः। [7]मधूदके। होतॄश्यः। अकः इति किम्? अग्नये। सवर्णे इति किम्? [8]दध्यत्र। अचि इत्येव, कुमारी शेते। 'नाज्झलौ' (१.१.१०/१३) इत्यत्र यत् अच् इति प्रत्याहारग्रहणं तत्रग्रहणकशास्त्रस्य अनभिनिर्वृत्तत्वात् सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोरप्रतिषिद्धम्।

[६९०] सवर्णदीर्घत्वे ऋति ऋ वावचनम्। (म. भा. ३.७७)

ऋति सवर्णे परभूते [9]तत्र ऋ वा भवति इति वक्तव्यम्। होतृ ऋकारः होतृकारः। यदा न ऋ तदा दीर्घ एव होतॄकारः।

[६९१] लृति लृ वा वक्तव्यम्। (म. भा. ३.७७)

लृति सवर्णे परतो लृ वा भवति इति वक्तव्यम्। होतृ लृकारः होत्लृकारः। होतॄकारः। ऋकार-लृकारयोः [10]सवर्णसञ्ज्ञाविधिरुक्तः। दीर्घपक्षे तु समुदायान्तरतमस्य लृवर्णस्य [11]दीर्घस्याभावात् ऋकारः[12] क्रियते[13] ।।

## प्रथमयोः पूर्वसवर्णः। (१०२/१६४)

अकः [14]इति दीर्घः इति वर्तते। प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्याद् द्वितीयाऽपि प्रथमा इति [15]उक्ता। तस्यां प्रथमायां द्वितीयायां च विभक्तौ अचि [16]अकः पूर्वपरयोः [17]स्थाने पूर्वसवर्णदीर्घः एकादेशो भवति। अग्नी। वायू। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्। 'अतो गुणे' (६.१.९७/१९१) इति [18]यदकारे पररूपं तत् अकः सवर्णे दीर्घत्वमेव (६.१.१०१/८५) बाधते, न तु पूर्वसवर्णदीर्घत्वम्, 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' (व्या. प. ९) इति। अचि इत्येव, वृक्षः। प्लक्षः। अकः इत्येव, नावौ। पूर्वसवर्णग्रहणं किम्? अग्नी इत्यत्र [19]पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम्? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थम् ।।

---

1. परतः तस्मात् परो यः इतिशब्दः तयोः पररूपं न भवति क. 2. अतः नास्ति ग. 3. चादेः ह. 4. मदमदा करोति इत्यधिकम् ड. 5. वक्तव्यम् इति इत्यधिकम् ह. 6. क्षुराग्रम् खड्गाग्रम् इत्यधिकम् क. फ. 7. मधूष्ट्रम् क, मधूष्ट्रः ड. 8. मध्वत्र क. फ. 9. तत्र नास्ति फ. 10. सवर्णविधिः ड. 11. दीर्घाभावात् क. 12. एव इत्यधिकम् ब. 13. होतॄकारः इत्यधिकम् क. 14. इति नास्ति ग. 15. उक्तम् ग 16. अचः क. फ. ग. ह. 17. स्थाने नास्ति ग. 18. अकारे ह. 19. पक्षे नास्ति क.

## तस्माच्छसो नः पुंसि । (१०३/१९६)

तस्मात् पूर्वसवर्णदीर्घात् उत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति । [1]वृक्षान् । अग्नीन् । वायून् । कर्तॄन् । हर्तॄन् । षण्डकान् । षण्ढकान् । स्थूरान् । अररकान् पश्य । सर्व एते पुंलिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति । इह तु चञ्चेव चञ्चा[2], लुम्मनुष्ये (५. ३.५८/२७५३) इनि कनो लुपि कृते 'लुपि युक्तवद् व्यक्तिवचने' (१. २. ५/१२९४) इति [3]पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति, चञ्चाः पश्य, [4]वध्रिकाः पश्य इति । तस्मात् इति किम् ? एतांश्चरतो गाः पश्य । शसः इति किम् ? वृक्षाः । प्लक्षाः । पुंसि इति किम् ? धेनूः । बह्वीः[5] । कुमारीः ॥

## नादिचि । (१०४/१६५)

[6]अवर्णात् इचि[7] पूर्वसवर्णदीर्घो न भवति । वृक्षौ । प्लक्षौ । खट्वे । कुण्डे । आत् इति किम् ? अग्नी[8] । इचि इति किम् ? [9]वृक्षाः ॥

## दीर्घाज्जसि च । (१०५/२३०)

दीर्घात् जसि इचि च परतः पूर्वसवर्णदीर्घः न भवति । कुमार्यौ । कुमार्यः । ब्रह्मबन्ध्वौ । ब्रह्मबन्ध्वः ॥

## वा छन्दसि । (१०६/३५१५)

दीर्घात् छन्दसि विषये जसि च इचि[10] च परतो वा पूर्वसवर्णदीर्घो न भवति । 'मारुतीश्चतस्रः' (काठ सं. ११. १०) पिण्डीः । मारुत्यश्चतस्रः पिण्ड्यः । 'वाराही' (मै. सं. ४. ४. ५) । उपानही । वाराह्यौ । उपानह्यौ ॥

## अमि पूर्वः । (१०७/१९४)

अकः [11]इत्येव । अमि परतोऽकः पूर्रपरयोः [12]स्थाने पूर्वरूपमेकादेशो भवति । वृक्षम् । प्लक्षम् । अग्निम् । वायुम् । पूर्वग्रहणम् किम् ? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो [13]मा भूत् इति, कुमारीम् इत्यत्र हि [14]त्रिमात्रः स्यात् । 'वा छन्दसि' (६. १. १०६/३५१५) इत्येव, शमीं च (काठ. ३६. ६), शम्यं च । गौरीं च, गौर्यं च (ऋ. १०. १२६. ८) ॥

---

1. प्लक्षान् क. फ. 2. तृणमयः पुरुषः इत्यधिकम् ह, वधिकेव वधिका इत्यधिकम् क. 3. पुंसि इति ह. 4. वध्रकाः ड. 5. बुद्धीः कृतीः इत्त्यधिकम् क, वधूः इत्यधिकम् फ. 6. अवर्णान्तात् फ. ह. 7. परतः इत्यधिकम् क. फ. 8. वायू इत्यधिकम् क. ड. ग. 9. प्लक्षाः ग. 10. परतः इत्यधिकम् फ. 11. इति वर्तते ड. 12. स्थाने नास्ति फ. 13. दीर्घः इत्यधिकम् ब. 14. त्रिमात्रिकः क.

## सम्प्रसारणाच्च । (१०८/३३०)

पूर्वः [1]इत्येव । सम्प्रसारणात् अचि [2]परतः पूर्वपरयोः [3]स्थाने पूर्वरूपमेकादेशो भवति । यजि – इष्टम् । वपि – उप्तम् । ग्रहि – गृहीतम् । सम्प्रसारण[4]विधानसामर्थ्यात् विगृहीतस्य श्रवणे प्राप्ते [5]पूर्वत्वं विधीयते । 'वा छन्दसि' (६.१.१०६/३५१५) इत्येव, [6]'मित्रो नो अत्र वरुणो यज्यमानः' (अ.वे. १८.१.३९) । परपूर्वत्वविधाने सत्यर्थवत् सम्प्रसारणविधानम् इति [7]इष्ट इत्येवमादिषु पूर्वत्वाभावे यणादेशो भवत्येव । अन्तरङ्गे चाचि कृतार्थं वचनम् इति बाह्ये पश्चात् सन्निपतिते पूर्वत्वं न भवति । शकह्वौ । [8]शकह्वर्थम् ॥

## एङः पदान्तादति । (१०९/८६)

एङ् यः पदान्तः तस्मादति परतः पूर्वपरयोः [9]स्थाने पूर्वरूपमेकादेशो भवति । अग्नेऽत्र । वायोऽत्र । अयवादेशयोरयमपवादः । एङः इति किम्? दध्यत्र । [10]मध्वत्र । पदान्तात् इति किम्? [11]चयनम् । लवनम् । अति इति किम्? वायो इति । [12]भानो इति । वायविति । [13]भानविति । तपरकरणम् इति किम्? वायवायाहि ॥

## ङसिङसोश्च । (११०/२४६)

एङः [14]इति वर्तते, [15]अति इति च । एङः उत्तरयोः ङसिङसोः अति परतः पूर्वपरयोः [16]स्थाने पूर्वरूपमेकादेशो भवति । अग्नेरागच्छति । वायोरागच्छति । अग्नेः स्वम् । वायोः स्वम् । अपदान्तार्थः आरम्भः ॥

## ऋत उत् । (१११/२७९)

[17]ङसिङसोः इत्येव । [18]ऋकारान्तादुत्तरयोः ङसिङसोः अति [19]परतः पूर्वपरयोः उकार[20] एकादेशो भवति । होतुरागच्छति । होतुः स्वम् । द्वयोः षष्ठीनिर्दिष्टयोः [21]स्थाने यः[22] स लभते[23]ऽन्यतरव्यपदेशम् इति 'उरण् रपरः' (१.१.५१/७०) इति रपरत्वम् [24]अत्र कृत्वा 'रात् सस्य' (८.२.२४/२८०) इति [25]सलोपः कर्तव्यः ॥

## ख्यत्यात् परस्य । (११२/२७७)

ङसिङसोः इति वर्तते, उत् इति च । ख्यत्यात् इति खिशब्दखीशब्दयोः तिशब्दतीशब्दयोश्च कृतयणादेशयोरि[26]दं ग्रहणं, ताभ्यां [27]परस्य ङसिङसोः [28]अत उकारादेशो भवति । सख्युरागच्छति । सख्युः स्वम् । पत्युरागच्छति । पत्युः स्वम् । खीशब्दस्योदाहरणम् – सह खेन वर्तते इति सखः, तमिच्छति इति [29]क्यच् सखीयति ।

---

1. एव नास्ति फ, इत्यनुवर्तते क. 2. परतः नास्ति क. 3. पूर्व एकादेशो ड. 4. °वचन° ड. 5. पूर्वरूपत्वं क.ह. 6. मित्रावरुणौ इज्यमानौ क.ड.फ, यज्यमानौ ह. 7. इष्टः नास्ति फ. 8. शकह्वत्वमिति क. 9. स्थाने नास्ति क. 10. मध्वत्र नास्ति ग.फ. 11. नयनम् क.ड.ग.फ, पवनम् ब. 12–13. नास्ति फ. 14. इत्येव फ. 15. अति इति च नास्ति ग. 16. स्थाने नास्ति क. 17. वाक्यमिदं नास्ति फ. 18. ऋतः फ. 19. परतः नास्ति क.ड. 20. इति इत्यधिकम् फ. 21. स्थाने नास्ति फ. 22. आदेशः इत्यधिकम् ग.फ.ह, सम्पद्यते इत्यधिकम् क, लभ्यते इत्यधिकम् फ. 23. अन्यतरस्य व्यपदेशम् फ. 24. तत्र कृते फ. 25. सकारलोपः फ. 26. इदं नास्ति ग.फ. 27. परतः क, परयोः ग. 28. अकारस्य फ. 29. क्यच् नास्ति फ.

सखयतेः क्विप् सखीः, [1]तस्य ङसिङसोः सख्युः इति[2]। तीशब्दस्यापि[3] – लूनमिच्छति लूनीयति,[4] लूनीयतेः क्विपि लुप्ते, लून्युरागच्छति। लून्युः स्वम्[5]। निष्ठानत्वं (८.२.४४/३०१८) 'पूर्वत्रासिद्धम्' (८.२.१/१२) इत्यसिद्धम्। विकृतनिर्देशादेव इह न भवति, अतिसखेरागच्छति, सेनापतेरागच्छति [6]इति। सखिशब्दस्य केवलस्य घिसञ्ज्ञा प्रतिषिध्यते (१.४.७/२४३), न तदन्तस्य ॥

## अतो रोरप्लुतादप्लुते। (११३/१७३)

अति,[7] उत् इति वर्तते। अकारादप्लुतादुत्तरस्य रो रेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति। वृक्षोऽत्र। प्लक्षोऽत्र। 'भोभगोअधोअपूर्वस्य योऽशि' (८.३.१७/१६७) [8]इत्यस्मिन् प्राप्ते उत्वं विधीयते। [9]रुत्वमपि आश्रयात् 'पूर्वत्रासिद्धम्' (८.२.१/१२) इति [10]असिद्धं न भवति। अतः इति किम्? अग्निरत्र। तपरकरणं किम्? वृक्षा अत्र। [11]सानुबन्धग्रहणं किम्? स्वरत्र। प्रातरत्र[12]। अति इत्येव, वृक्ष इह। तस्यापि तपरत्वादत्र न भवति। वृक्ष आश्रितः। अप्लुतात् इति किम्? सुस्रोता३ अत्र न्वसि। अप्लुते इति किम्? तिष्ठतु पय अ३श्विन्। अत्र प्लुतस्यासिद्धत्वात् उत्वं प्राप्नोति इति अप्लुताद-प्लुते इति उच्यते ॥

## हशि च। (११४/१६६)

हशि [13]च परतः अत उत्तरस्य रोरुकारादेशो भवति। [14]पुरुषो याति। पुरुषो हसति। पुरुषो ददाति ॥

## प्रकृत्याऽन्तःपादमव्यपरे। (११५/३६१८)

[15]एङोऽति (६.१.१०९/८६) इत्येव। एङः इति यत् पञ्चम्यन्तमनुवर्तते, तदर्थादिह प्रथमान्तं [16]भवति। प्रकृतिः [17]इति स्वभावः कारणं वाऽभिधीयते। अन्तर् इति अव्ययमधिकरणभूतं मध्यमाचष्टे। [18]पादशब्देन [19]च ऋक्पादस्यैव ग्रहण[20]मिष्यते, न तु श्लोकपादस्य। [21]अवकारयकारपरे अति परतः एङ् प्रकृत्या भवति। स्व-भावेनावतिष्ठते कारणात्मना वा भवति, न विकारमापद्यते। तौ चेन्निमित्तकार्यिणौ अन्तःपादमृक्पादमध्ये भवतः। 'ते अग्ने अश्वमायुञ्जन्' (वा. सं. ९.७)। 'ते अस्मिञ्जवमादधुः' (वा. सं. ९.७)। 'उपप्रयन्तो अध्वरम्' (ऋ. १.७४.१)। 'शिरो अपश्यम्' (ऋ. १.१६३.६) 'सुजाते अश्वसूनृते' (ऋ. ५.७९.१)। 'अध्वर्यो अद्रिभिः सुतम्' (ऋ. ९.५१.१)। अन्तःपादम् इति किम्[22]? 'कया मती कुत एतास एतेऽर्चन्ति' (ऋ. १.१६५.१)। अव्यपरे इति किम्? 'तेऽवदन्' (ऋ. १०.१०९.१)। तेजोऽयस्मयम्' (वा. सं. १२.६३)। एङः इति [23]किम्? 'अन्वग्निरुषसामग्रमख्यत्' (अ. वे. ७.८२.४)।

केचिदिदं सूत्रं नान्तःपादम[24]व्यपरे इति पठन्ति, ते संहितायामिह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

---

1. तत्र फ. 2. भवति इत्यधिकम् फ. 3. उदाहरणम् इत्यधिकम् फ. 4. ततः क्विप् इत्यधिकम् फ. 5. इति इत्यधिकम् फ. 6. इति नास्ति फ. 7 इति इत्यधिकम् फ. 8. इत्येतस्मिन् क. 9. रुत्वविधानात् क. ह, आश्रयभूतत्वात् फ. 10. असिद्धत्वं फ. 11. उकारानुबन्धग्रहणं ग. 12. सुभोजनम् इत्यधिकम् क. 13. च नास्ति ग. फ. 14. हस्ती ह. 15. वाक्यमिदं नास्ति ग. फ. 16. आस्ते क. 17. इति नास्ति ग. ह. 18. पदशब्देन क. 19. अपि फ. 20. विद्यते ग. 21. अवकारपरे अयकारपरे क. फ. ह. 22. कार्यम् इत्यधिकम् क. ह. 23. किमर्थम् क. फ. 24. अव्यपरे नास्ति फ.

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च । (११६/३६१९)

[1]अव्यात् अवद्यात् अवक्रमुः अव्रत अयम् अवन्तु अवस्यु इत्येतेषु वकारयकारपरेऽप्यति परतः अन्तःपादम् एङ् प्रकृत्या भवति । 'अग्निः प्रथमो वसुभिर्नो अव्यात्' (तै.सं. २.१.११.२) । 'मित्रमहो अवद्यात्' (ऋ. ४.४.१५) । 'मा शिवासो [2]अवक्रमुः' (ऋ. ७.३२.२७) । ते नो अव्रताः । [3]शतधारो अयं मणिः । 'ते नो अवन्तु पितरः' (ऋ. १०.१५.१) । '[4]कुशिकासो अवस्यवः' (ऋ. ३.४२.९) ॥

## यजुष्युरः । (११७/३६२०)

उरःशब्दः एङन्तः यजुषि विषये [5]अति प्रकृत्या भवति । 'उरो अन्तरिक्षम्' (वा. सं. ४.७) । अपरे 'यजुष्युरो' इति सूत्रं पठन्ति, उकारान्तमुरुशब्दं सम्बुद्ध्यन्तमधीयते, ते इदमुदाहरन्ति उरो अन्तरिक्षं [6]सजूः इति । यजुषि पादानामभावात् अनन्तःपादार्थं [7]वचनम् ॥

## आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे । (११८/३६२१)

[8]यजुषि इत्येव । आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते [9]शब्दाः अम्बे अम्बाले इत्येतौ च यावम्बिके शब्दात् [10]पूर्वौ यजुषि पठितौ ते अति [11]परतः प्रकृत्या भवन्ति । 'आपो अस्मान् मातरः [12]शुन्धयन्तु' (वा. सं. ४.२) । 'जुषाणो अप्तुराज्यस्य' (वा.सं. ५.३५) । 'वृष्णो अंशुभ्यां [13]गभस्तिपूतः' (वा.सं. ७.१) । 'वर्षिष्ठे अधि नाके' (तै.सं. १.१.८.१) । 'अम्बे अम्बाल्यम्बिके' (तै.सं. ७.४.१९.१) यजुषीदमीदृशमेव पठ्यते । अस्मादेव निपातनात् 'अम्बार्थनद्योर्ह्रस्वः' (७.३.१०७/२६७) इति ह्रस्वत्वं न भवति ॥

## अङ्ग इत्यादौ च । (११९/३६२२)

अङ्गशब्दे य एङ्[14] तदादौ चाकारे यः [15]पूर्वः स यजुषि विषये अति प्रकृत्या भवति । ऐन्द्रः प्राणो अङ्गे अङ्गे [16]अदीध्यत्[17] । 'ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्' (वा. सं. ६.२०) । ऐन्द्रः प्राणो अङ्गे अङ्गे अरोचिषम् ॥

## अनुदात्ते च कुधपरे । (१२०/३६२३)

[18]यजुषि इत्येव । अनुदात्ते च अति[19] कवर्गधकारपरे परतो[20] यजुषि विषये एङ् प्रकृत्या भवति । 'अयं सो अग्निः' (वा.सं. ५.३७)। अयं सो अध्वरः । अनुदात्ते इति किम् ? अधोग्रे[21] । अग्रशब्द आद्युदात्तो निपात्यते । कुधपरे इति किम् ? 'सोऽयमग्निः [22]सहस्रियः' (वा. सं. १५.५२) ॥

---

1. अव्यादादिषु फ. 2. अवचक्रमुः क, ससृवांसो अवक्रमुः ह. 3. शतधानोऽयं मालः क. 4. कुशकामः क. 5. अति नास्ति फ. 6. यजूः क, उरोरन्तरिक्षात् वा.सं. 7. आरम्भः फ. 8. वाक्यमिदं नास्ति फ. 9. शब्दाः नास्ति फ. 10. पूर्वेण ब. 11. परतः नास्ति फ. 12. शुन्धन्तु फ. 13. गभस्तिभिः मुद्रित पाठः । 14. शब्दः इत्यधिकम् फ. 15. एङ्पूर्वः फ. 16. अदीव्यत् क. ह. 17. अरोचि वा इत्यधिकम् क. 18. वाक्यमिदं नास्ति ग. 19. परतः इत्यधिकम् फ. 20. च इत्यधिकम् ब.क. 21. ऋद्धेन्द्रोऽग्रे इत्यधिकम् फ. 22. सहस्रियः नास्ति क. ग.

## अवपथासि च। (१२१/३५२४)

यजुषि [1]इत्येव। अनुदात्ते इति [2]चशब्देनानुकृष्यते। अवपथाःशब्देऽनुदात्ते अकारादौ [3]परतो यजुषि विषये एङ् प्रकृत्या भवति। 'त्री रुद्रेभ्यो अवपथाः' (काठ. सं. ३०. ६. ३२)। [4]वपेर्लङि थासि 'तिङङतिङः' (८. १. २८/३९३५) इति निघातेनानुदात्तत्वम्। अनुदात्ते इत्येव, यद्रुद्रेभ्योऽवपथाः। निपातैर्यद्यदिह हन्त (८. १. ३०/३९३७) [5]इति निघातः प्रतिषिध्यते॥

## सर्वत्र विभाषा गोः। (१२२/८७)

सर्वत्र छन्दसि भाषायां च अति परतो गोः एङ् प्रकृत्या भवति विभाषा। [6]गोऽग्रम्, गो अग्रम्। [7]छन्दसि– '[8]अपशवो वा अन्ये गोअश्वेभ्यः पशवो [9]गोअश्वान्' (तै. सं. ५. २. ९. ४)॥

## अवङ् स्फोटायनस्य। (१२३/८८)

अति इति निवृत्तम्। अचि इत्येतत् [10]त्वनुवर्तत एव। अचि परतः गोः[11] स्फोटायनस्याचार्यस्य मतेन अवङ आदेशो भवति। गवाग्रम्, गोऽग्रम्। [12]गवाजिनम्, गोऽजिनम्। गवौदनम्, [13]गवोदनम्। गवोष्ट्रम्, गवुष्ट्रम्। आद्युदात्तश्चाय[14]मादेशो निपात्यते, स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वर[15]विधाने भवति। गावः अग्रमस्य गवाग्रः इति। अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते। स्फोटायनग्रहणं पूजार्थं, विभाषा इत्येव हि वर्तते। व्यवस्थितविभाषा इयं, तेन गवाक्षः इत्यत्र नित्यमवङ भवति॥

## इन्द्रे च नित्यम्। (१२४/८९)

[16]इन्द्रशब्दस्थे अचि परतो गोर्नित्यमवङ आदेशो भवति। गवेन्द्रः[17]। [18]गवेन्द्रयज्ञस्वरः॥

## प्लुतप्रगृह्या अचि। (१२५/९०)

प्लुताश्च प्रगृह्याश्च अचि [19]प्रकृत्या भवन्ति। देवदत्त३[20]अत्र न्वसि। यज्ञदत्त३इदमानय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः[21] – अग्नी इति। वायू इति। खट्वे इति। माले इति। अचि इत्यनुवर्तमाने पुनरज्ग्रहणमादेशनिमित्तस्य अचः [22]परिग्रहार्थम्। [23]तेनेह न भवति, जानु [24]उ अस्य रुजति जान्वस्य रुजति (म. भा. ३. ८८)। प्रगृह्यादुकारात् परस्य[25] अकारस्य सवर्णदीर्घत्वं प्रत्यनिमित्तत्वादत्र प्रकृतिभावो न भवति। नित्यग्रहणमिहानुवर्तते। प्लुतप्रगृह्याणां [25]नित्यमयमेव प्रकृतिभावो यथा स्याद्, 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (६. १. १२७/९१ ) इत्येतन् मा भूत् इति॥

---

1. इत्येव नास्ति क. ग. फ. 2. चकारेण फ. 3. परतः नास्ति फ. 4. वपेर्लङि–प्रतिषिध्यते नास्ति ग. 5. इत्यादिना क. 6. गोऽश्वम् गोअश्वम् फ. 7. छन्दसि नास्ति फ, छन्दसि विषये क. 8. वापशवो वध्यात् ये गोऽश्वेभ्यः पशवो गोश्वाः क. 9. अश्वान् ह, अश्वाः इति मुद्रितः पाठः. 10. पुनरनुवर्तते फ. ह. 11. शब्दस्य इत्यधिकम् फ. 12. गवाजिनम् नास्ति फ. 13. गवोदनम् नास्ति फ. 14 अयम् नास्ति फ. 15. बाधको क. 16. इन्द्रस्थे ब. 17. चरुः इत्यधिकम् ड. 18. गवेन्द्रो यज्ञः चरुश्च इति क. फ, यज्ञचरुः ब. 19. परतः इत्यधिकम् क. फ. 20. अत्रासि फ. 21. चेत् इत्यधिकम् फ. 22. परिग्रहो यथा स्यात्, इह न भवति क. 23. तेन नास्ति क. 24. उ नास्ति फ. 25. अकारस्य नास्ति फ. 26. नित्यं यथा स्यात् क.

## आङोऽनुनासिकश्छन्दसि । (१२६/३५९७)

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति । 'अभ्र आँ अपः' (ऋ.५.४८.१) । 'गभीर आँ उग्रपुत्रे जिघांसतः' (ऋ.८.६७.११) । केचिद् 'आङोऽनुनासिकश्छन्दसि बहुलम्' इत्यधीयते । तेनेह न भवति, इन्द्रो बाहुभ्यामातरत् । आ अतरत् ॥

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । (१२७/९१)

इकोऽसवर्णे अचि परतः शाकल्यस्याचार्यस्य मतेन [1]प्रकृत्या भवन्ति, ह्रस्वश्च तस्य इकः स्थाने भवति । दधि अत्र, दध्यत्र । [2]मधु अत्र, मध्वत्र । कुमारि अत्र, कुमार्यत्र । किशोरि अत्र, किशोर्यत्र । इकः इति किम्? [3]खट्वेन्द्रः । असवर्णे इति किम्? कुमारीन्द्रः । शाकल्यस्य ग्रहणं पूजार्थम् । आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः ।

[६९२] सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः । (म.भा. ३.८९)

[4]सिति – 'अयं ते योनिर्ऋत्वियः' (ऋ. ३.२९.१०) । नित्यसमासे – व्याकरणम् । कुमार्यर्थम् ।

[६९३] ईषा अक्षादिषु छन्दसि प्रकृति[5]भावमात्रं वक्तव्यम् । (म.भा. ३.९०)

'ईषा अक्षो हिरण्ययः' (ऋ. ८.५.२९) । 'का ईमरे पिशङ्गिला' (वा.सं. २३.५५) । पथा अगमन् ॥

## ऋत्यकः । (१२८/९२)

[7]शाकल्यस्य ह्रस्वश्च इत्येतदनुवर्तते । ऋकारे[8] परतः शाकल्यस्याचार्यस्य मतेन अकः [9]प्रकृत्या भवन्ति ह्रस्वश्च तस्याकः स्थाने भवति । खट्व ऋश्यः । [10]माल ऋश्यः । [11]कुमारि ऋश्यः । होतृ ऋश्यः । ऋति इति किम्? [12]खट्वेन्द्रः । अकः इति किम्? वृक्षावृश्यः । सवर्णार्थमनिगर्थं च वचनम् ॥

## अप्लुतवदुपस्थिते । (१२९/९८)

उपस्थितं नाम अनार्षः [13]इतिकरणः, समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते । तस्मिन् परतः प्लुतः अप्लुतवद् भवति । प्लुतकार्यं प्रकृतिभावं न करोति । सुश्लोक३ इति सुश्लोकेति । [14]सुमङ्गल३ इति सुमङ्गलेति । वत्करणं किम्? अप्लुत इति उच्यमाने प्लुत एव[15] प्रतिषिध्यते । तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्, [16]अग्नी३ इति, वायू३ इति ॥

---

1. प्रकृतिभावो फ. 2. उदाहरणमिदं नास्ति फ. 3. मालेन्द्रः फ. 4. सिति नास्ति ग. 5. भाव नास्ति क. 6. ईमिरे म. भा. पाठः 7. वाक्यमिदं नास्ति फ. 8. च इत्यधिकम् ह. 9. प्रकृतिभावः ब. 10. उदाहरणमिदं नास्ति क. 11. उदाहरणमिदं नास्ति ग. फ. 12. मालेन्द्रः फ. 13. इतिकारः फ. 14. सुमङ्गल्या इति फ. 15. निषिध्यते क. 16. अग्नीन् इति । वायून् इति ह.

## ई३ चाक्रवर्मणस्य । (१३०/९९)

[1]ई३कारः प्लुतोऽचि परतः चाक्रवर्मणस्याचार्यस्य मतेन अप्लुतवद् भवति । अस्तु हीत्यब्रूताम्, अस्तु ही३ इत्यब्रूताम् । चिनु हीदम् । चिनु ही३ इदम् । चाक्रवर्मणग्रहणं विकल्पार्थम्, [2]तदुपस्थिते निवृत्त्यर्थम् अनुपस्थिते प्राप्त्यर्थम् इत्युभयत्रविभाषा[3]इयम् । ईकारादन्यत्राप्ययमप्लुतवद्भाव इष्यते । [4]वशा३ इयम्, वशेयम् ॥

## दिव उत् । (१३१/३३७)

'एङः पदान्तादति' (.६१.१०९/८६) इत्यतः पदग्रहणमनुवर्तते । दिवः इति प्रातिपदिकं गृह्यते, न धातुः, [5]सानुबन्धकत्वात् । दिवः [6]पदस्य उकारादेशो भवति । [7]दिवि कामो यस्य द्युकामः । द्युमान्[8] । विमलद्यु दिनम् । द्युभ्याम् । [9]द्युभिः । [10]निरनुबन्धकग्रहणादिह न भवति, अक्षद्यूभ्याम्, [11]अक्षद्यूभिः इति । तपरकरणम् ऊठो निवृत्त्यर्थम्, द्युभ्याम्, द्युभिः इति । अत्र हि परत्वात् ऊठ् प्राप्नोति । पदस्य इति [12]किम् ? दिवौ । दिवः ॥

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । (१३२/१७६)

एतत्तदौ यावककारौ नञ्समासे न वर्तेते तयोर्यः सुशब्दः, कश्च तयोः सुशब्दः ? यः तदर्थेन [13]सम्बद्धः, तस्य [14]संहितायां विषये हलि परतो लोपो भवति । एष ददाति । स ददाति । एष भुङ्क्ते । स भुङ्क्ते । एतत्तदोः इति किम् ? यो ददाति । यो भुङ्क्ते । सुग्रहणं किम् ? एतौ गावौ चरतः । अकोः इति किम् ? एषको ददाति । सको ददाति । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' (व्या. प. २१) इति [15]रूपभेदेऽपि साकचकावेतत्तदावेव भवतः । अनञ्समासे इति किम् ? अनेषो ददाति । असो ददाति । उत्तरपदार्थप्रधानत्वान्नञ्-[16]समासस्य एतत्तदोरेवात्र सम्बद्धः सुशब्दः । हलि इति किम् ? एषोऽत्र । सोऽत्र ॥

## स्यश्छन्दसि बहुलम् । (१३३/३५२६)

स्य इत्येतस्य छन्दसि[17]हलि परतः बहुलं सोर्लोपो भवति । [18]'उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि' (ऋ. ४.४०.४) । 'एष स्य ते [19]पवत इन्द्र सोमः' (ऋ. ९.९७.४६) । न [20]च भवति, यत्र स्यो[21] निपतेत् ॥

---

1. ईकारः ड, इकारः क. 2. तदुपस्थितनिवृत्त्यर्थम् फ. 3. इयम् नास्ति ग. फ. 4. वसा इयम् वसेयम् ड, वत्सा इयम् वत्स्येयम् इत्यधिकम् क. 5. सानुबन्धकत्वात् नास्ति फ. 6. पदस्य नास्ति ग. 7. वाक्यमिदं नास्ति क. ग. फ. 8. मणिः इत्यधिकम् क. 9. द्युभिः नास्ति फ. 10. निरसम्बद्धकग्रहणात् ग. 11. अक्षद्युभिः फ. 12. एव क. ग. फ. 13. सम्बध्यते फ. 14. संहितायाम् विषये नास्ति ग. 15. स्वरूपभेदे फ. ह. 16. तत्पुरुषस्य क. 17. विषये इत्यधिकम् ग. 18. एष मुद्रितः पाठः 19. मधुमां मुद्रितः पाठः 20. च नास्ति ग. 21. निपत्यते ह, निवर्तते ग.

## सोऽचि लोपे चेत् पादपूरणम्। (१३४/१७७)

सः [1]इत्येतस्य अचि परतः सुलोपो भवति, लोपे सति चेत् [2]पादः पूर्यते । [3]'सेदु राजा क्षयति चर्षणीनाम्' (ऋ. १.३२.१५)। 'सौषधीरनुरुध्यसे' (ऋ. ८.४३.९)। लोपे चेत् पादपूरणम् इति किम्? स इव व्याघ्रो [4]भवेत्। अचि इति विस्पष्टार्थम्[5]। पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति, तेनेदं [6]सिद्धं भवति।

सैष दाशरथी रामः सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी सैष भीमो महाबलः॥

## सुट् कात् पूर्वः। (१३५/२५५३)

अधिकारोऽयम्[7] 'पारस्करप्रभृतीनां च सञ्ज्ञायाम्' (६.१.१७५/१०७१) इति यावत्। इत उत्तरं यद् वक्ष्यामस्तत्र सुट् इति, कात् पूर्वः इति चैतदधिकृतं वेदितव्यम्। वक्ष्यति – 'सम्पर्युपेभ्यः करोतौ भूषणे' (६.१.१३७/२५५०)। संस्कर्ता। संस्कर्तुम्। [8]संस्कर्तव्यम्। कात् पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्। तथा हि संस्क्रृषीष्ट, संस्क्रियते इति संयोगादिलक्षणौ इड्गुणौ (७.२.४३/२५२६) (७.४.२९/२३८०)) न भवतः। 'तिङङतिङः' (८.१.१८/३९३५) इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात्? 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (व्या.प. ३७) इति वचना[9]न्नास्ति व्यवधानम्। संचस्करतुः, संचस्करुः इति गुणः कथम्? 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' (व्या. प. २१) इति। संयोगोपधग्रहणं [10]च 'ऋतश्च संयोगादेर्गुणः' (७.४.१०/२३७९) इत्यत्र कर्तव्यम्। टित्करणं सुट्स्तुस्वञ्जाम् (८.३.६५/२२७०) इत्यत्र विशेषणार्थम्॥

## अडभ्यासव्यवायेऽपि। (१३६/२५३९)

अड्व्यवाये, [11]अभ्यासव्यवाये अपि सुट् कात् पूर्वः भवति। समस्करोत्। समस्कार्षीत्। सञ्चस्कार। [12]परिचस्कार।

किमर्थं [13]पुनरिदमुच्यते, पूर्वं धातुरुपसर्गेण युज्यते [14]इति तत्र धातूपसर्गयोः कार्यमन्तरङ्गम् इति पूर्वं [15]सुट् क्रियते पश्चाद् अडभ्यासौ? अभक्तश्च सुट् इत्युक्तम्, ततः सकारादुत्तरावडभ्यासौ अनिष्टे देशे स्याताम्। एतस्मिंस्तु सत्यत एव वचनात् कृतयोरडभ्यासयोः तद्व्यवाये अपि सुट् कात् पूर्वः क्रियते इति सिद्धमिष्टं [16]भवति॥

## सम्पर्युपेभ्यः करोतौ भूषणे। (१३७/२५५०)

सम् परि उप इत्येतेभ्यः भूषणार्थे करोतौ परतः सुट् कात् पूर्वो भवति। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। [17]अत्र संपुंकानां सत्वम् (८.३.३४/१३८ वा.) इति समो मकारस्य सकारः, पूर्वस्य [18]चाकारस्यानुनासिकः। परिष्कर्ता। परिष्कर्तुम्। परिष्कर्तव्यम्। सुट्स्तुस्वञ्जाम् इति षत्वम्। उपस्कर्ता। उपस्कर्तुम्। उपस्कर्तव्यम्। भूषणे इति किम्? उपकरोति। सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते, संस्कृतमन्नम् [19]इति॥

---

1. इत्यस्य फ. 2. पादपूरणम् ग. फ. 3. सेन्दु मुद्रितः पाठः। 4. भवति ग. फ. 5. भवति इत्यधिकम् ग.फ. 6. सर्वमपि इत्यधिकम् ग. 7. इति इत्यधिकम् फ. 8. संस्कर्तव्यम् नास्ति ब.क. 9. नास्ति व्यवधानम् नास्ति ब.फ. 10. तु फ. 11. अचि इत्यधिकम् ब.क.ड.फ. 12. संचस्करिथ इत्यधिकम्. परिचस्कार नास्ति फ. 13. पुनर् नास्ति फ. 14. इति नास्ति फ. ह. 15. सुटि कृते ह. 16. भवति नास्ति ह. 17. अत्र नास्ति फ. 18. च नास्ति फ. 19. इति नास्ति क.फ.

## समवाये च । (१३८/२५५१)

समवायः समुदायः, [1]तस्मिंश्चार्थे करोतौ [2]सम्पर्युपेभ्यः कात् पूर्वः सुडागमो भवति । तत्र नः संस्कृतम् । तत्र नः परिष्कृतम् । तत्र न उपस्कृतम् । समुदितम् इत्यर्थः ॥

## उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु । (१३९/२५५२)

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः । विकृतमेव वैकृतम् । प्रज्ञादित्वादण् (५.४.३८/२१०६) । गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः । एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परतः उपात् सुट् कात् पूर्वः भवति । प्रतियत्ने तावत् – एधो दकस्योपस्कुरुते । काण्डगुणस्योपस्कुरुते । वैकृते – उपस्कृतं भुङ्क्ते । उपस्कृतं गच्छति । वाक्याध्याहारे – उपस्कृतं जल्पति । उपस्कृतमधीते । एतेषु इति किम् ? उपकरोति ॥

## किरतौ लवने । (१४०/२५३९)

[3]उपात् इत्येव । उपादुत्तरस्मिन् किरतौ [4]धातौ [5]लवनविषये सुट् कात् पूर्वः भवति । उपस्कारं मद्रका लुनन्ति । उपस्कारं काश्मीरका लुनन्ति । [6]विक्षिप्य लुनन्ति इत्यर्थः । णमुलत्र वक्तव्यः । लवने इति किम् ? उपकिरति देवदत्तः ॥

## हिंसायां प्रतेश्च । (१४१/२५४०)

किरतौ इत्येव । उपात् प्रतेश्च उत्तरस्मिन् किरतौ[7] सुट् कात् पूर्वः भवति हिंसायां विषये । उपस्कीर्णं [8]हं ते वृषल भूयात् । प्रतिस्कीर्णं हं ते वृषल भूयात् । तथा ते वृषल विक्षेपो भूयात् यथा हिंसामनुबध्नाति इत्यर्थः । [9]हिंसायाम् इति किम् ? प्रतिकीर्णम् ॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने । (१४२/२६८८)

[10]किरतौ इत्येव । [11]अपात् उत्तरस्मिन् किरतौ[12] चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात् पूर्वः भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी (म.भा. ३.९४) । आलिख्य विक्षिपति इत्यर्थः । चतुष्पाच्छकुनिषु इति किम् ? अपकिरति देवदत्तः ।

[६९४] हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् । (म. भा. ३.९४)

---

1. एतस्मिन्नर्थे ग. फ. 2. समादिभ्यः फ, परतः इत्यधिकम् ह. 3. वाक्यमिदं नास्ति फ. 4. धातौ नास्ति फ. ह. 5. लवने फ. 6. लवनविषये विक्षेपं कुर्वन्ति इत्यर्थः ड. 7. विषये इत्यधिकम् ड. फ. ह. 8. हं नास्ति फ. 9. हिंसायाम् – प्रतिकीर्णम् नास्ति फ. 10. वाक्यमिदं नास्ति फ. 11. हिंसादौ विषये इत्यधिकम् फ. 12. च इत्यधिकम् फ.

इह मा भूत्, अपकिरति श्वा ओदनपिण्डमाशितः ।

[६९५] [1]हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसंख्यानम् ॥

## कुस्तुम्बुरूणि जातिः । (१४३/१०५८)

कुस्तुम्बुरूणि इति [2]सुट् निपात्यते जातिश्चेद् [3]भवति । कुस्तुम्बुरुर्नामौषधिजातिः धान्यकम् । तत्फलान्यपि कुस्तुम्बुरूणि । सूत्रनिर्देशे नपुंसकमविवक्षितम्[4] । जातिः इति किम् ? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि । [5]तुम्बुरुशब्देन तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा ॥

## अपरस्पराः क्रियासातत्ये । (१४४/१०५९)

अपरास्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने । अपरस्पराः सार्थाः गच्छन्ति । सन्ततम[6]विच्छेदेन गच्छन्ति इत्यर्थः । क्रियासातत्ये इति किम् ? अपरपराः सार्थाः गच्छन्ति । अपरे च परे च सकृदेव गच्छन्ति इत्यर्थः । नात्र [7]गमनस्य सातत्यप्रबन्धो विवक्षितः । किमिदं सातत्यम् इति ? सततस्य भावः सातत्यम् । कथं सततम्[8] ? समस्तते विकल्पेन मकारलोपो विधीयते ।

लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।
समो वा हिततततयोर्मांसस्य पचियुड्घञोः ॥

## गोष्पदं सेवितासेवितप्रमाणेषु । (१४५/१०६०)

गोष्पदम् इति सुट् निपात्यते, तस्य च षत्वं सेविते असेविते प्रमाणे च विषये । गोष्पदो देशः । गावः [9]पद्यन्ते यस्मिन् देशे स गोभिः सेवितो देशो गोष्पदः इत्युच्यते । असेविते – अगोष्पदान्यरण्यानि । असेविते गोष्पदशब्दो न सम्भवति इत्यगोष्पदशब्दार्थं निपातनम् । यद्येवं नार्थ [10]एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति ? सत्यमेतत्, यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्यादगोष्पदम् इति, यत्र त्वत्यन्तासम्भव एव तत्र न स्यात्, अगोष्पदान्यरण्यानि इति । असेवितग्रहणात् तत्रापि भवति । [11]यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते । प्रमाणे – गोष्पदमात्रं क्षेत्रम् । गोष्पदपूरं वृष्टो देवः । नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किं तर्हि, क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम् । सेवितासेवितप्रमाणेषु इति किम् ? गोः पदम् गोपदम् ॥

---

1. वाक्यमिदं नास्ति फ. 2. सुडागमः फ. 3. अभिधेया क. 4. भवति इत्यधिकम् 5. तिन्दुकफलानि इत्यर्थः क. 6. अविच्छेदेन नास्ति फ. 7. क्रियासम्बन्धः इत्यधिकम् फ. 8. इति इत्यधिकम् फ. 9. सम्पद्यन्ते फ. 10. अनेन फ. 11. यानि हि नास्ति फ.

## आस्पदं प्रतिष्ठायाम्। (१४६/१०६१)

आत्मयापनाय स्थानं प्रतिष्ठा, तस्यामास्पदम् इति सुट् निपात्यते। आस्पदमनेन लब्धम्[1]। प्रतिष्ठायाम् इति किम्? आ पदात् आपदम्॥

## आश्चर्यमनित्ये। (१४७/१०६२)

अनित्यतया विषयभूतया अद्भुतत्वमिह [2]उपलक्ष्यते, तस्मिन्नाश्चर्यं [3]निपात्यते। 'चरेराङि चागुरौ' (वा. २१५) इति यत्प्रत्यये कृते निपातनात् सुट्। [4]आश्चर्यं यदि स भुञ्जीत। आश्चर्यं यदि सोऽधीयीत। चित्रमद्भुतम् इत्यर्थः। अनित्ये इति किम्? [5]आचर्यं कर्म शोभनम्॥

## वर्चस्केऽवस्करः। (१४८/१०६३)

कुत्सितं वर्चः वर्चस्कम् अन्नमलम्, तस्मिन्न[6]भिधेयेऽवस्करः इति निपात्यते। अवपूर्वस्य किरतेः कर्मणि 'ऋदोरप्' (३. ३. ५७/३२३२) इत्यप्, निपातनाप् सुट्। अवकीर्यते इत्यवस्करोऽन्नमलम्, तत्सम्बन्धात् देशोऽपि तथोच्यते। वर्चस्के इति किम्? अवकरः॥

## अपस्करो रथाङ्गम्। (१४९/१०६४)

अपस्करः इति निपात्यते रथाङ्गं चेद्[7] भवति। अपपूर्वात् किरतेः 'ऋदोरप्' (३. ३. ५७/३२३२) इत्यप्, निपातनात् सुट्। अपस्करो रथावयवः। रथाङ्गम् इति किम्? [8]अपकरः॥

## विष्किरः शकुनिर्विकिरो वा। (१५०/१०६५)

विष्किरः इति किरतेः विपूर्वस्य 'इगुपधज्ञाप्रीकिरः कः' (३. १. १३५/२८९७) इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद् भवति। विकिरशब्दाभिधेयो वा शकुनिर्भवति।

सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते।

विष्किरो वा [9]शकुनौ इति वा[10]ग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत्[11]॥

## ह्रस्वाच् चन्द्रोत्तरपदे मन्त्रे। (१५१/३६२७)

चन्द्रशब्दे उत्तरपदे ह्रस्वात् [12]परः सुडागमो भवति [13]मन्त्रविषये। सुश्चन्द्रः (तं. सं. ४. ४. ४. ६) [14]युष्मान्। ह्रस्वात् इति किम्? 'सूर्याचन्द्रमसाविव' (ऋ. ५.५१.१५)। मन्त्रे इति किम्? सुचन्द्रा पौर्णमासी। उत्तरपदं समास एव भवति इति प्रसिद्धम्, तत इह न भवति, शुक्रमसि, [15]चन्द्रमसि॥

---

1. प्रतिष्ठा अनेन लब्धा इत्यर्थः इत्यधिकम् ब. ड. ग. फ. 2. वक्ष्यते ह. 3. इति इत्यधिकम् क. ह. 4. वाक्यमिदं नास्ति फ. 5. आचर्यं शोभनम् कर्म क. 6. अभिधेये नास्ति फ. 7. तत् इत्यधिकम् फ. 8. अवकरः ह. 9. शकुनिः ब. क. ड. फ. 10. ग्रहणादेव नास्ति फ. 11. इति इत्यधिकम् ग. फ. 12. परः नास्ति ब. ह. 13. मन्त्रे फ. 14. देवान् फ, युष्माकं देवता इत्यधिकम् ह. 15. हरिश्चन्द्रो विद्युति ब. फ.

## प्रतिष्कशश्च कशेः । (१५२/१०६६)

'कश गतिशासनयोः' (धा.पा. १०२५) इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते [1]सुट् निपात्यते, तस्यैव षत्वम् । [2]ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः । [3]वार्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कशः [4]इत्यभिधीयते । कशेः [5]इति किम्? [6]प्रतिगतः कशां [7]प्रतिकशोऽश्वः । अत्र यद्यपि कशेरेव [8]कशाशब्दः, तथापि [9]कशेरिति धातोरुपादानं [10]तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम् । तेन धात्वन्तरोपसर्गान्न भवति ॥

## प्रस्कण्वहरिश्चन्द्रावृषी । (१५३/१०६७)

प्रस्कण्व हरिश्चन्द्र [11]इति सुट् निपात्यते ऋषी चेदभिधेयौ भवतः । प्रस्कण्व ऋषिः । हरिश्चन्द्र ऋषिः । हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषी इति किम् ? प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः । (१५४/१०६८)

मस्कर मस्करिन् इत्येतौ यथासङ्ख्यं वेणौ परिव्राजके च निपात्येते । मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणौ अभिधेये सुट् निपात्यते, परिव्राजके त्विनिः [12]अपि । मस्करः वेणुः । मस्करी परिव्राजकः । वेणुपरिव्राजकयोः इति किम् ? मकरो ग्राहः । मकरी समुद्रः ।

केचित् पुनरत्र माङि उपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति, माङश्च ह्रस्वत्वम् सुट् च । मा क्रियते येन प्रतिषिध्यते स मस्करो वेणुः । वेणुग्रहणं च प्रदर्शनार्थम् अन्यत्रापि भवति, मस्करो दण्डः इति । परिव्राजके अपि माङि उपपदे करोतेस्ताच्छील्ये इनिर्निपात्यते, माङो ह्रस्वत्वं सुट् च तथैव । माकरणशीलो मस्करी कर्मापवादित्वात् परिव्राजक उच्यते । स [13]ह्येवमाह – मा कुरुत कर्माणि शान्तिर्वः श्रेयसी इति ॥

## कास्तीराजस्तुन्दे नगरे । (१५५/१०६९)

कास्तीर अजस्तुन्द इत्येतौ [14]शब्दौ निपात्येते नगरेऽभिधेये । ईषत्तीरमस्य, अजस्येव तुन्दमस्य इति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यमेतयोः । कास्तीरं नाम नगरम् । अजस्तुन्दं नाम नगरम् । नगरे इति किम्? कातीरम् । अजतुन्दम् ॥

## कारस्करो वृक्षः । (१५६/१०७०)

कारस्कर इति सुट् निपात्यते वृक्षश्चेद् [15]भवति । कारं करोति इति [16]दिवाविभानिशाप्रभाभास्करान्त (३.२.२१/२९३५) इति [16]टप्रत्ययः । कारस्करो वृक्षः । वृक्षः इति किम् ? कारकरः । केचिदिदं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्षः इति पठन्ति ॥

---

1. सुडागमः फ, विहिते सुडागमे ह. 2. ग्राममहम् फ. ह. 3. वार्ताहरः फ. 4. इत्युच्यते फ. 5. इति नास्ति क. 6. प्रगतः फ. 7. प्रकशः फ. 8. कशा फ.ह. 9. उपसर्गप्रसिद्ध्यर्थम् फ. 10. तदुपसर्गात् क.फ. 11. इत्येतौ ससुट्कौ निपात्येते ह. 12. इति फ.ह. 13. इत्याह फ.ह. 14. शब्दौ नास्ति क. 15. अभिधेयः इत्यधिकम् ह. 16. दिवाविभा नास्ति फ, विभा नास्ति ङ. 17. ठञ् प्रत्ययः फ.

## पारस्करप्रभृतीनि च सञ्ज्ञायाम् । (१५७/१०७१)

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते सञ्ज्ञायां विषये । पारस्करो देशः । कारस्करो वृक्षः । [1]रथस्पा नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (ग. सू. १६०) । तस्करश्चोरः । बृहस्पतिर्देवता । चोरदेवतयोः इति किम् ? तत्करः । बृहत्पतिः । [2]सञ्ज्ञाग्रहणादु–पाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम् । 'प्रात्तुम्पतौ गवि कर्तरि' (ग. सू. १६१) । तुम्पतौ धातौ प्रशब्दात् [3]परः सुट् भवति गवि कर्तरि । प्रस्तुम्पति गौः । गवि इति किम् ? प्रतुम्पति वनस्पतिः । पारस्कर-प्रभृतिराकृतिगणः । अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । प्रायश्चित्तम् । प्रायश्चित्तिः । यदुक्तं 'प्रायस्य चितिचित्तयोः सुडस्कारो वा' (म. भा. ३. ९६) इति तत्सङ्गृहीतं भवति ॥

## अनुदात्तं पदमेकवर्जम् । (१५८/३६५०)

परिभाषेयम् स्वरविधिविषया । यत्रान्यः स्वरः उदात्तः स्वरितो वा विधीयते, तत्रानुदात्तं [4]पदमेकं वर्जयित्वा भवति इत्येतदुपस्थितं द्रष्टव्यम् । अनुदात्ताचकम् अनुदात्तम् । कः पुनरेको वर्ज्यते ? यस्यासौ [5]स्वरो विधीयते । [6]वक्ष्यति – [7]धातोः (६. १. १६२/३६७१) अन्तः उदात्तो भवति । गोपायति । धूपायति । धातोरन्त्यमचं वर्जयित्वा परिशिष्टमनुदात्तं भवति । धातुस्वरं श्नाश्वरो बाधते । [8]लुनाति । पुनाति । श्नाश्वरं तस्स्वरः । लुनीतः । पुनीतः । तस्स्वरमाम्स्वरः । लुनीतस्तराम् । पुनीतस्तराम् ।

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥ (म. भा. ३. ९७)

आगमस्य – 'चतुरनडुहोरामुदात्तः' (७. १. ९८/३३१) । चत्वारः । अनड्वाहः । आगमस्वरः प्रकृतिस्वरं बाधते । विकारस्य – अस्थनि, दधनि इत्यनङ्स्वरः (७.१.७५/३२२२) प्रकृतिस्वरं बाधते । प्रकृतेः– गोपायति । धूपायति । प्रकृतिस्वरः प्रत्ययस्वरं बाधते । प्रत्ययस्य – कर्तव्यम् । [9]हर्तव्यम् । प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः ।

परनित्यान्तरङ्गापवादैः स्वरैर्व्यवस्था सतिशिष्टेन च । यो हि यस्मिन् सति शिष्यते स तस्य बाधको भवति । तथा हि–गोपायति इत्यत्र धातुस्वरापवादः प्रत्ययस्वरः, तेनैव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते । [10]कार्ष्णोत्तरासङ्गपुत्रः इत्यत्र[11] च समासस्वरापवादो बहुव्रीहिस्वरः सतिशिष्टेन[12] समासान्तोदात्तत्वेन बाध्यते । विकरण-स्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वरं न बाधते । लुनीतः इति तस एव स्वरो भवति ।

[६९६] [13]विभक्तिस्वरान्नञ्स्वरो बलीयान् इति वक्तव्यम् । (म. भा. ३. १००)

अतिस्रः इत्यत्र 'तिसृभ्यो जसः' (६. १. १६६/३७१३) इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते ।

---

1. रथस्था फ, रथष्या ह. 2. सञ्ज्ञाग्रहण एव फ. 3. परः नास्ति फ. 4. पदमेकवर्जम् इत्येतत् फ.ह. 5. उदात्तः स्वरितो वा इत्यधिकम फ. 6. अत्र इत्यधिकम् ब. 7. धातोः इति ह. 8. लुनाति नास्ति ब. ड. फ. 9. हर्तव्यम् नास्ति ग. 10. कृष्णोत्तरासङ्गपुत्रः ड. 11. अपि फ. 12. एव इत्यधिकम् ब. ड. 13. विभक्ति– बाध्यते नास्ति ग.

[६९७] विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयान् इति वक्तव्यम् । (म. भा. ३. १००)

अचत्वारः, अननड्वाहः इति । यस्य विभक्तिर्निमित्तमामः, तस्य यदुदात्तत्वं तन्नञ्स्वरेण बाध्यते ।

पदग्रहणं किम् ? देवदत्त गामभ्याज शुक्लाम् इति वाक्ये हि प्रतिपदं स्वरः पृथग् भवति । परिमाणार्थं चेदं पदग्रहणं [1]पदाधिकारस्य निवृत्तिं करोति । तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेव [2]शिष्टस्यानुदात्तत्वं भवति । तथा च कुवल्या विकारः कौवलम् इत्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति । [3]तथा गर्भिणीशब्दश्चानुदात्तादिलक्षणस्य अञो बाधनार्थं भिक्षादिषु पठ्यते । कुवलगर्भशब्दौ आद्युदात्तौ ॥

## कर्षात्वतो घञोऽन्त उदात्तः । (१५९/३६८०)

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति । कर्षः । पाकः । त्यागः । रागः । दायः । धायः । 'ञ्नित्यादिर्नित्यम्' (६. १. १९७/३६८६) इत्यस्यापवादः । कर्षः इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः । तौदादिकस्य घञन्तस्य कर्षः इत्याद्युदात्तः एव भवति ॥

## उञ्छादीनां च । (१६०/३६८१)

उञ्छ इत्येवमादीनामन्त उदात्तो भवति । उञ्छः, म्लेच्छः, [4]जञ्जः, जल्पः एते घञन्ताः [5]इति ञित्स्वरः प्राप्तः । जपः, [6]व्यधः इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः । केचित्तु वधः इति पठन्ति । युगः । युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्ट[7]विषये च निपातनमिदमिष्यते । कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगः[8]; अन्यत्र हि योग एव भवति । 'गरो दूष्येऽबन्तः' (ग. सू. १६२) । गरशब्दोऽबन्तः, स दूष्य एवान्तोदात्तः[9] । गरो विषम् । अन्यत्राद्युदात्त एव[10] । 'वेदवेगवेष्टबन्धाः करणे' (ग. सू. १६३) । 'हलश्च' (३. ३. १२१/३ ००) इति घञन्ता एते करणेऽन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव । 'स्तुयुद्रुवश्छन्दसि' (ग.सू. १६४) । उपसमस्तार्थमेतत् । परिष्टुत् । संयुत् । परिद्रुत् । 'वर्तनिः स्तोत्रे' (ग.सू. १६५) । स्तोत्रं साम । तत्स्थो वर्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः[11] । 'श्वभ्रे दरः' (ग.सू. १६६) । श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तः[12], अन्यत्राबन्तत्वादाद्युदात्तः[13] । 'साम्बतापौ भावगर्हायाम्' (ग. सू. १६७) । अन्तोदात्तौ, अन्यत्राद्युदात्तौ । 'उत्तमशश्वत्तमौ सर्वत्र' (ग. सू. १६८) । केचित्तु भावगर्हायाम् इत्यत्रापि अनुवर्तयन्ति । 'भक्षमन्थभोगदेहाः' (ग. सू. १६९) एते घञन्ताः । भक्षिर्ण्यन्तोऽपि घञन्त एव, 'एरच्' (३. ३. ५६/३२३१) अण्यन्तानाम् इति वचनात् ॥

---

1. पदाधिकस्य क. 2. परिशिष्टस्य क. ड, अनुशिष्टस्य फ. ह. 3. तथा नास्ति फ. 4. जञ्जः नास्ति फ. 5. इति नास्ति फ. 6. वधः ड. फ. ह. 7. विषयत्वं च क. फ. 8. दृश्यते इत्यधिकम् फ. 9–10. भवति इत्यधिकम् फ. 11. एव इत्यधिकम् क. ह. 12. भवति इत्यधिकम् फ. 13. एव इत्यधिकम् फ. ह.

## अनुदात्तस्य च यत्रोदात्तलोपः । (१६१/३६६१)

उदात्तः इति वर्तते । यस्मिन्ननुदात्ते परतः उदात्तो लुप्यते तस्यानुदात्तस्या[1]दिरुदात्तो भवति । [2]कुमार ई कुमारी । कुमारशब्दोऽन्तोदात्तः, तस्य ङीप्यनुदात्ते उदात्तो लुप्यते । [3]अनुदात्तो ङीप् उदात्तः । 'भस्य टेर्लोपः' (७.१.८८/३६८) । पथः । पथा । पथे । पथिन्शब्दोऽन्तोदात्त । कुमुदनडवेतसेभ्यो ड्मतुप् (४.२.८७/१३०६) । कुमुद्वान् । नड्वान् । वेतस्वान् । कुमुदादयोऽन्तोदात्ताः । [4]ड्मतुबनुदात्तः । अनुदात्तस्य इति किम् ? प्रासङ्गं वहति प्रासङ्ग्यः । प्रासङ्गशब्दस्थाथादिस्वरेण (६.२.१४४/३८७८) अन्तोदात्तः । तस्य यति तित्स्वरितमिति स्वरिते उदात्तो लुप्यते ? नैतदस्ति, स्वरिते [5]हि विधीयमाने परिशिष्टमनुदात्तम्, तत् कुत उदात्तलोपः । तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम् । अन्तः इति हि प्रकृतत्वाद[6]न्तस्य स्यात्, मा हि धुक्षाताम्, मा हि धुक्षाथाम् । यत्र इति किम् ? भार्गवः, भार्गवौ, भृगवः । प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक् । उदात्तग्रहणं किम् ? बैदी । और्वी ॥

## धातोः । (१६२/३६७१)

अन्तः इत्येव । धातोरन्त उदात्तो भवति । पचति । पठति । ऊर्णोति । गोपायति । [7]याति ॥

## चितः । (१६३/३७१०)

चितो[8]ऽन्त उदात्तो भवति । 'भञ्जभासमिदो घुरच्' (३.२.१६१/३१४१) भङ्गुरम् । [9]भासुरम् । मेदुरम् । 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' (२.४.७०/११५२) । कुण्डिनाः । चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते । बहुपटुः । उच्चकैः ॥

## तद्धितस्य । (१६४/३७११)

[10]चितः इत्येव । चितस्तद्धितस्यान्त उदात्तो भवति । 'गोत्रे कुञ्जादिभ्यश्चफञ्' (४.१.९८/१०९९)– कौञ्जायनाः । मौञ्जायनाः । किमर्थमिदम् ? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति[11] ॥

## कितः । (१६५/३७१२)

[12]तद्धितस्य इत्येव । तद्धितस्य कितोऽन्त उदात्तो भवति । 'नडादिभ्यः फक्' (४. १. ९९/११०१)– नाडायनः । चारायणः । 'प्राग्वहतेष्ठक्' (४.४.१/१५४८) – आक्षिकः । शालाकिकः ॥

---

1. आदिः नास्ति फ.ह. 2. कुमार ई नास्ति फ.ह. 3. अनुदात्तौ सुप्पितौ ङीप् अनुदात्तः इत्यधिकम् क. 4. ड्मतुबनुदात्तः नास्ति क. 5. हि नास्ति फ. 6. अनन्त्यस्य न स्यात् ह 7. याति नास्ति फ. 8. अन्तोदात्तो क.फ. 9. भासुरम् नास्ति ग. 10. वाक्यमिदं नास्ति फ. 11. इति नास्ति फ. 12. वाक्यमिदं नास्ति फ.

## तिसृभ्यो जसः । (१६६/३७१३)

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति । तिस्रस्तिष्ठन्ति । '[1]उदात्तस्वरितयोर्यणः [2]स्वरितोऽनुदात्तस्य' (८.२.४/३६५७) इत्यस्यापवादः । शसि 'उदात्तयणो हल्पूर्वात्' (६.१.१७४/३७२०) इति सिद्धे[3]ऽन्यत्र बहुवचने 'षट्त्रिचतुर्भ्यो हलादिः' (६.१.१७९/३७२५) इति विधानात् जस् एव लभ्यते इति जस्ग्रहणमुपसमस्तार्थमेके इच्छन्ति अतितिस्रौ इत्यत्र[4] स्वरो मा भूत् इति ॥

## चतुरः शसि । (१६७/३६८२)

चतुरः शसि परतो[5]ऽन्त उदात्तो भवति । चतुरः [6]पश्य । चतस्रादेशे[7] [8]आद्युदात्तनिपातनाद् यणादेशस्य च पूर्वविधौ [9]स्थानिवत्त्वादयं स्वरो न भवति चतस्रः पश्य इति ॥

## सावेकाचस्तृतीयादिर्विभक्तिः । (१६८/३७१४)

सौ इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम् । तत्र [10]सौ य एकाच् तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता भवति । वाचा । वाग्भ्याम् । वाग्भिः । वाग्भ्यः । याता । याड्भ्याम् । याड्भिः । सौ इति किम् ? राज्ञा । राज्ञे । [11]एकाचः इति किम् ? [12]हरिणा । गिरिणा । [13]राजसु । तृतीयादिः इति किम् ? वाचौ । वाचः । विभक्तिः इति किम् ? वाक्तरा । वाक्तमा । सप्तमी[14]बहुवचनस्य ग्रहणादिह न भवति त्वया, त्वयि इति ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । (१६९/३७१५)

एकाचः इति वर्तते, तृतीयादिर्विभक्तिरिति च[15] । नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते । नित्यसमासादन्य[16]त्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात् [17]परा तृतीयादिर्विभक्तिरन्यतरस्याम् उदात्ता भवति । परमवाचा, परमवाचा । परमवाचे, परमवाचे । परमत्वचा, परमत्वचा । परमत्वचे, परमत्वचे । यदा विभक्तिरुदात्ता न भवति, तदा[18] समासान्तोदात्तत्वमेव । अन्तोदात्तात् इति किम्? [19]अवाचा । [20]सुवाचा । सुत्वचा । तत्पुरुषोऽयम् । [21]तत्र 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय' (६.२.२/३७३६) इति पूर्वपदप्रकृतिस्वरः । उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणमेतत् स्यात् । तत्र शुनः ऊर्क्, श्वोर्जा इत्यत्रैवायं विधिः स्यात् । अनित्यसमासे इति किम्? अग्निचिता । सोमसुता । 'उपपदमतिङ्'(२.२.१९/७८२) इत्ययं नित्याधिकारे समासो विधीयते । तत्र 'गतिकारकोपपदात् कृत्' (६.२.१३९/३८७३) इत्युत्तरपदप्रकृतिस्वरेण चित्शब्दः उदात्तः । यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः, अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेन इति । बहुव्रीहौ 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्युत्तरपदान्तोदात्तत्वं [22]भवति ॥

---

1. अचिर ऋतः इत्यधिकम् ब. 2. स्वरितान्तोदात्तस्य क.फ.ह. 3. अन्यत्राजादौ इत्यादौ तु ड. 4. अत्र नास्ति फ. 5. अन्तः नास्ति फ. 6. देहि ग. 7. कृते इत्यधिकम् ग.ह. 8. आद्युदात्तत्वनिपातनात् ग. 9. स्थानिवद्भावात् फ. ह. 10. सौ नास्ति फ. 11. वाक्यमिदं नास्ति फ. 12. किरिणा फ. ह. 13. राजसु नास्ति ड. 14. बहुवचनग्रहणादिह फ. 15. वर्तते इत्यधिकम् ब. 16. अन्यस्मिन् समासे ब. 17. परतः ब. 18. पक्षे इत्यधिकम् क. 19. अवाचा नास्ति फ. 20. सुवाचा नास्ति ह. 21. वाक्यमिदं नास्ति फ. 22. भवति नास्ति फ.

## अञ्चेश्छन्दस्यसर्वनामस्थानम्। (१७०/३७१६)

अञ्चेः परा असर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। 'इन्द्रो दधीचो अस्थभिः' (ऋ. १.८४.१३)। 'चौ' (६.१.२२२/३६५२) इति पूर्वपदान्तोदात्तत्वं प्राप्तम्। तृतीयादिः इति वर्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्, प्रतीचो बाहून् प्रतिभङ्ग्ध्येषाम् इति॥

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः। (१७१/३७१७)

ऊठ् इदम् पदादि अप् पुम् रै दिव् इत्येतेभ्यो[2]ऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊठ् – [3]प्रष्ठौहः। प्रष्ठौहा।

[६९८] ऊठ्युपधाग्रहणं कर्तव्यम्।

इह मा भूत्, अक्षद्युवा। अक्षद्युवे।

इदम् – आभ्याम्। एभिः। अन्तोदात्तात् इत्यधिकारादन्वादेशे न भवति, अथो आभ्यां निपुणमधीतम् इति। पदादयः 'पद्दन्नोमास°' (६.१.६३/२२८) इत्येवमादयो निश्पर्यन्ता इह गृह्यन्ते। 'नि पदश्चतुरो जहि' (खि. २.१६.१)। 'या दतो [4]धावते' (तै. सं. २.५.१.७)। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। 'ग्रीवायां बद्धो अपि कक्ष आसनि' (ऋ. ४.४०.४)। 'मत्स्यं न दीन उदनि क्षियन्तम्' (ऋ. १०.६८.८)। अप् – अपः पश्य। अद्भिः। अद्भ्यः। पुम् – पुंसः। पुम्भ्याम्। पुम्भ्यः। पुंसा। पुंसे। रै – रायः पश्य। [5]राभ्याम्। राभिः। दिव् – दिवः पश्य। दिवा। दिवे॥

## अष्टनो दीर्घात्। (१७२/३७१८)

अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। 'घृतादिपाठात् अष्टन्शब्दोऽन्तोदात्तः, तत्र 'झल्युपोत्तमम्' (६.१.१८०/३६८३) इत्यस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते। दीर्घात् इति किम्? अष्टसु[6] प्रक्रमेषु ब्राह्मणो[7]ऽग्नीनादधीत (म. भा. ३.१०७)। इदमेव दीर्घग्रहणमष्टन आत्त्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्सञ्ज्ञां ज्ञापयति। अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यते [7]इति किं दीर्घग्रहणेन॥

---

1. अपि नास्ति फ. 2. परा इत्यधिकम् फ. 3. दित्यौहः दित्यौहा फ. 4. धावति मुद्रितः पाठः 5. राया इत्यधिकम् ड. 6. सुकृतादिपाठात् ह. 7. अग्नीन् नास्ति फ. ह. 8. इति नास्ति फ.

## शतुरनुमो नद्यजादी । (१७३/३७१९)

अन्तोदात्तात् इति वर्तते । अनुम् यः शतृप्रत्ययस्तदन्तात् अन्तोदात्तात् परा नदी अजादिर्विभक्तिरसर्वनाम-[1]स्थानमुदात्ता भवति । तुदती । नुदती । [2]लुनती । पुनती । तुदता । नुदता । लुनता । पुनता । अनुमः । इति किम् ? तुदन्ती । नुदन्ती । अत्राप्युपदेशात् इति लसार्वधातुकादनुदात्तत्वे[3] (६. १. १८६/३७३०) एकादेशः, तस्य 'एकादेश उदात्तेनोदात्तः' (८. २. ५/३६५८) इत्युदात्तत्वम्, तस्य पूर्वत्रासिद्धत्वम् (८. २. १/१२) नेष्यते इति शत्रन्तमन्तोदात्तं भवति । नद्यजादी इति किम् ? तुदद्भ्याम् । नुदद्भ्याम् । तुदद्भिः । अन्तोदात्तात् इत्येव, ददती । दधतः । 'अभ्यस्तानामादिः' (६. १. १८९/३६७३) इत्याद्युदात्तावेतौ ।

[६९९] बृहन्महतोरुपसङ्ख्यानम् । (म. भा. ३. १०८)

बृहती । महती । बृहता । महता ॥

## उदात्तयणो हल्पूर्वात् । (१७४/३७२०)

[4]उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी अजादिर्या असर्वनामविभक्तिरुदात्ता भवति । कर्त्री । हर्त्री । प्रलवित्री । प्रसवित्री । कर्त्रा । हर्त्रा । प्रलवित्रा । प्रसवित्रा । तृजन्ता एतेऽन्तोदात्ताः । उदात्तग्रहणं किम् ? [5]कर्त्री । हर्त्री । [6]कर्त्रा । हर्त्रा । तृन्नन्तोऽयमाद्युदात्तः । हल्पूर्वात् इति किम् ? बहुतितवा ब्राह्मण्या ।

[७००] नकारग्रहणं कर्तव्यम् । (म. भा. ३. १०८)

वाक्पत्नी इयं कन्या ॥

## नोङ्धात्वोः । (१७५/३७२१)

ऊङो धातोश्च य उदात्तयण् हल्पूर्वः, तस्मात् परा तृतीयादिर्विभक्तिर्नोदात्ता भवति । ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वे । वीरबन्ध्वा । वीरबन्ध्वे । ऊङ् प्रत्ययस्वरेण उदात्तः । तेन सह य एकादेशः सोऽप्युदात्तः इति उदात्त-यण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८. २. ४/३६५७) इति विभक्तिः स्वर्यते । धातुयणः खल्वपि – सकूल्ल्वा । [7]सकूल्ल्वे । खलप्वे । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य 'ओः सुपि' (६. ४. ८३/२८१) यणादेशः[8] ॥

## ह्रस्वनुड्भ्यां मतुप् । (१७६/३७२२)

अन्तोदात्तात् इत्येव । ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति । अग्निमान् । वायुमान् । [9]कर्तृमान् । हर्तृमान् । नुटः खल्वपि – अक्षण्वता । शीर्षण्वता । अन्तोदात्तात् इत्येव, वसुमान् (तै. सं. १. ६. ६.२) । वसुशब्द आद्युदात्तः, तस्मान् मतुब् अनुदात्त एव भवति । अत्र च 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (व्या. प. ३७) इत्येषा परिभाषा नाश्रीयते[10]नुड्ग्रहणात्, तेन मरुत्वान् इत्यत्र न भवति ।

---

1. °स्थाने ग. 2. लुनती नास्ति फ. 3. कृते इत्यधिकम् क. ड. फ. ह. 4. उदात्तस्य स्थाने ब. क. ड. फ. 5. कर्त्री हर्त्री नास्ति क. 6. कर्त्रा हर्त्रा नास्ति फ. 7. उदाहरणमिदं नास्ति फ. 8. भवति इत्यधिकम् क. 9. उदाहरणमिदं नास्ति फ. 10. इति इत्यधिकम् फ.

[७०१] रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम् । (म. भा. ३. १०८)

आरेवान् ।

[७०२] त्रेश्च प्रतिषेधो वक्तव्यः । (म. भा. ३. १०८)

'त्रिवतीर्याज्यानुवाक्या भवति' (काठ.सं. ११. १) इति ॥

## नामन्यतरस्याम् । (१७७/३७२३)

ह्रस्वग्रहणमनुवर्तते, मतुब्ग्रहणं च । तेन मतुपा ह्रस्वो विशेष्यते । मतुपि यो ह्रस्वः, तदन्तादन्तोदात्ता-दन्यतरस्यां नाम् उदात्तो भवति । अग्नीनाम्, अग्नीनाम् । वायूनाम्, वायूनाम् । [1]कर्तॄणाम्, कर्तॄणाम् । मतुपा ह्रस्वविशेषणं किम् ? [2]भूतपूर्वेऽपि[3] ह्रस्वे यथा स्यात्[4] । अन्यथा हि साम्प्रतिक एव स्यात्, तिसृणाम्, चतसृणाम् (म.भा.३. १०९) [5]इति । सनुट्कस्य ग्रहणं किम् ? धेन्वाम् । शकट्याम् । 'उदात्तयणो हल्पूर्वात्' (६. १. १७४/३७२०) इत्ययमन्तोदात्तः । ह्रस्वात् इत्येव, कुमारीणाम् । अन्तोदातात् इत्येव, त्रपूणाम् । वसूनाम् ॥

## ङ्याश्छन्दसि बहुलम् । (१७८/३७२४)

ङ्यन्तात् छन्दसि विषये नामुदात्तो भवति बहुलम् । 'देवसेनानामभिभञ्जतीनाम्' (ऋ. १०.१०३.८) । '[6]बह्वीनां पिता' (ऋ. ६. ७५.५) । न च भवति, नदीनां पारे । '[7]जयन्तीनां मरुतः' (ऋ. १०.१०३. ८) ॥

## षट्त्रिचतुर्भ्यो हलादिः । (१७९/३७२५)

अन्तोदात्तात् इत्ये[8]तन्निवृत्तम् । षट्सञ्ज्ञकेभ्यः, त्रि चतुर् इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति । षड्भिः । षड्भ्यः । 'पञ्चानाम्' (तै. सं. १. ६. १.२) । षण्णाम् । 'सप्तानाम्' (ऋ. ८. २८. ५) । त्रि – 'त्रिभिः' (ऋ. १. ३४. ११) । त्रिभ्यः । 'त्रयाणाम्' (तै. सं. ३. ४. ३. ८) । चतुर् – '[9]चतुर्भ्यः' (तै. ७. २. ११. १) । 'चतुर्णाम्' (ऋ. ८. ७४. १३) । हलादिः इति किम् ? चतस्रः (ऋ. १. ६२. ६) पश्य ॥

## झल्युपोत्तमम् । (१८०/३६८३)

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिः तदन्ते पदे उपोत्तमं उदात्तं भवति । त्रिप्रभृतीनामन्त्यमुत्तमम्, तत्समीपे च यत् तदुपोत्तमम् । पञ्चभिः (तै. सं.५.२.७.५) तपस्तपति । सप्तभिः [10]पराञ् जयति । 'तिसृभिश्च वहसे त्रिंशता- (अ. वे. ७.४.१) । 'चतुर्भिः' (वा. सं. २३.१३) । झलि इति किम् ? 'पञ्चानाम्' (तै. सं. १.६.१.२) । 'सप्ता' नाम्' (ऋ. ८.२८.५) । उपोत्तमम इति किम् ? 'षड्भिः' (ऋ. २.१८.४) । 'षड्भ्यः' (तै. सं. ७. २.१३.१) ॥

---

1. हर्तॄणाम् हर्तॄणाम् फ, 2. भूतपूर्वस्य क. 3. ह्रस्वे नास्ति फ. 4. इति इत्यधिकम् फ. 5. इति नास्ति क. 6. उदाहरणमिदं नास्ति क. 7. जुषन्तीनाम् क. 8. एतत् नास्ति फ. 9. चतुर्भ्यः नास्ति फ. 10. पराजयति क.

## विभाषा भाषायाम्। (१८१/३६८४)

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति विभाषा भाषायां विषये। पञ्चभिः, पञ्चभिः। सप्तभिः, सप्तभिः। तिसृभिः, तिसृभिः। चतुर्भिः, चतुर्भिः॥

## न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः। (१८२/३७२६)

गो श्वन्, साववर्णः सौ प्रथमैकवचने यदवर्णान्तम्, राड् अङ् क्रुङ् कृद् इत्येतेभ्यो यदुक्तं तन् न भवति। गवा, गवे, गोभ्याम् इति। 'सावेकाचस्तृतीयादिर्विभक्तिः' (६.१.१६८/३७१४) इति [1]प्राप्तिः प्रतिषिध्यते। सुगुना, सुगवे, सुगुभ्याम्। 'अन्तोदात्तादुत्तरपदात्' (६.१.१६९/३७१५) इति प्राप्तिः[2]। श्वन्—शुना, शुने, श्वभ्याम्। परमशुना, परमशुने, परमश्वभ्याम्। पूर्ववत् प्राप्तिः। साववर्णः—सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम्। येभ्यः। तेभ्यः। केभ्यः। राट्—राजतिः क्विबन्तः। राजा। परमराजः[3]। अङ्—अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात्। 'नाञ्चेः पूजायाम्' (६.४.६०/४२४) इति प्रतिषिध्यते नलोपः। प्राञ्चा। प्राङ्भ्याम्। नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम्। प्राचा। प्राचे। प्राग्भ्याम्। क्रुङ् क्विन्नन्त एव—क्रुञ्चा। परमक्रुञ्चा। कृत्—करोति कृतिर्वा क्विबन्तः। कृता। परमकृता॥

## दिवो झल्। (१८३/३७२७)

दिवः परा झलादिर्विभक्तिः नोदात्ता भवति। द्युभ्याम्। द्युभिः। 'सावेकाचः' (६.१.१६८/३७१४) इति 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (६.१.१७१/३७१७) इति वा प्राप्तिः प्रतिषिध्यते। झलि इति किम्? दिवा[4]॥

## नृ चान्यतरस्याम्। (१८४/३७२८)

नृ इत्येतस्मात् परा झलादिर्विभक्तिः अन्यतरस्यां [5]नोदात्ता भवति। नृभ्याम्। 'नृभिः' (ऋ. १०.१४७.४)। 'नृभ्यः' (ऋ. १.४३.२)। 'नृषु' (ऋ. १.१८०.८) झल् इत्येव—न्रा। न्रे॥

## तित् स्वरितम्। (१८५/३७०९)

तित् स्वरितं भवति। सन्नन्ताद् यत्—चिकीर्ष्यम्। जिहीर्ष्यम्। 'ऋहलोर्ण्यत्' (३.१.१२४/२८७२)—कार्यम्। हार्यम्। प्रत्ययाद्युदात्तस्यापवादः॥

---

1. स्वरः ह. 2. प्रतिषिध्यते इत्यधिकम् फ. 3. परमराजे इत्यधिकम् ड. 4. दिवे इत्यधिकम् क. ह. 5. अन्तोदात्ता क. ह.

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः । (१८६/३७३०)

[1]तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकमनुदात्तं [2]च भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा । तासेस्तावत्-कर्ता, कर्तारौ, कर्तारः । प्रत्ययस्वरापवादोऽयम् । अनुदात्तेतः – आस – आस्ते । वस – वस्ते । ङित् – षूङ – सूते । शीङ – शेते । अदुपदेशात् – तुदतः । नुदतः । पचतः । पठतः । अनुबन्धस्या[3]नैकान्तिकत्वादकारान्तोपदेश एव शप् । पचमानः । यजमानः । यद्यत्र मुक् अकारमात्रस्य स्यात् तदा लसार्वधातुकमदुपदेशादनन्तरम् इति [4]सिद्धो निघातः । [5]अथाकारान्तस्याङ्गस्य, तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वात् असिद्धः इति सिद्धम् । चित्स्वरोऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते ।

तास्यादिभ्यः इति किम् ? चिनुतः । चिन्वन्ति । ङिदयं श्नुः पूर्वस्य कार्यं प्रति न [6]तु परस्य । उपदेश[7]ग्रहणं किम् ? इह च यथा स्यात्, पचावः, पचामः इति । इह च मा भूत्, हतो, हथः इति । लग्रहणं किम् ? कतीह[8]पचमानाः । सार्वधातुकम् इति किम् ? शिश्ये, शिश्याते, शिश्यिरे । अह्न्विङोः इति किम् ? ह्नुते । यदधीते ॥

## आदिः सिचोऽन्यतरस्याम् । (१८७/३७३१)

उदात्तः [9]इति वर्तते । सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति । मा हि कार्ष्टाम्, मा हि कार्ष्टाम् । एकोऽत्राद्युदात्तः, अपरोऽन्तोदात्तः । मा हि लाविष्टाम्, मा हि लाविष्टाम् । एकोऽत्र आद्युदात्तः, अपरो मध्योदात्तः । सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते ।

[७०३] सिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं [10]वक्तव्यम् । (म.भा. ३.११३)

मा हि कार्षम्, मा हि कार्षम् । अनिटः इति किम् ? मा हि लाविषम् । मध्योदात्त एवा[11]द्युदात्ता–भावपक्षे भवति ॥

## स्वपादिहिंसामच्यनिटि । (१८८/३६७२)

लसार्वधातुकग्रहणं यदनुवर्तते तदचि अनिटि इति सम्बन्धाद् इह सप्तम्यन्तम् उपजायते । स्वपादिरावृत्क–रणात् । स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति । स्वपन्ति, स्वपन्ति । श्वसन्ति, [12]श्वसन्ति । हिंसेः खल्वपि – हिंसन्ति, हिंसन्ति[13] । प्रत्ययस्वरेण पक्षे मध्योदात्तः । अचि इति किम् ? स्वप्यात् । हिंस्यात् । अनिटि इति किम् ? स्वपितः । श्वसितः । [14]ङित्यजादावयं विधिरिष्यते । इह न भवति, स्वपानि, हिनसानि ॥

---

1. तासेः नास्ति ग. 2. च नास्ति क. 3. अनेकान्तत्वात् क. 4. सिद्धम् क. 5. अथ–सिद्धम् नास्ति क. 6. तु नास्ति क. 7. इति इत्यधिकम् ह. 8. यजमानाः ह. 9. इत्येव ह. 10. उपसङ्ख्यानम् क.ह. 11. आद्युदात्तपक्षे ह. 12. अवन्ति, अतन्ति इत्यधिकम् क.ह. 13. हिंसन्तु ड. 14. ङिति – हिनसानि नास्ति क.फ.ह.

## अभ्यस्तानामादिः । (१८९/३६७३)

अभ्यस्तानामजादावनिटि लसार्वधातुके [1]परतः आदिरुदात्तो भवति । ददति । ददतु । दधति । दधतु । जक्षति । जक्षतु । जाग्रति । जाग्रतु । अचि इत्येव, दद्यात् । अनिटि इत्येव, जक्षितः । आदिः इति वर्तमाने पुनरादिग्रहणं नित्यार्थम् ॥

## अनुदात्ते च । (१९०/३६७४)

अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति । अनजाद्यर्थ आरम्भः । ददाति । जहाति । दधाति । जिहीते । 'मिमीते' (तै. सं. ६.१.९.६) । अनुदात्ते इति[2] [3]बहुव्रीहिनिर्देशो लोपयणादेशार्थः (म. भा. ३.११३) । मा हि स्म दधात् । दधात्यत्र ॥

## सर्वस्य सुपि । (१९१/३६८७)

सर्वशब्दस्य सुपि परतः आद्युदात्तो भवति । सर्वः, सर्वौ, सर्वे । सुपि इति किम् ? सर्वतरः । सर्वतमः । प्रत्ययलक्षणेऽप्ययं स्वर इष्यते सर्वस्तोमः (तै. सं. ५.४.१२.३) इति ।

[७०४] सर्वस्वरो[4]ऽनकच्कस्येति वक्तव्यम् । (म. भा. ३.११४)

सर्वकः । चित्स्वरेणान्तोदात्तो भवति ॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति । (१९२/३६७७)

भी ह्री भृ हु मद जन धन दरिद्रा जागृ इत्येतेषां अभ्यस्तानां लसार्वधातुके पिति[5] प्रत्ययात् पूर्वमुदात्तं भवति । बिभेति । जिह्रेति । 'बिभर्ति' (तै. आ. ३.११.४) । 'जुहोति' (तै. ब्रा. २.१.८.३) । 'ममत्तु नः परिज्मा' (तै. सं. २.१.११.१) । मदेः बहुलं छन्दसि इति विकरणस्य श्लुः । 'जजनदिन्द्रम्' (तै. आ. ३.२.१) । 'जन जनने' (धा. पा. ११०६) इत्यस्य पञ्चमे लकारे रूपम् । 'धन धान्ये' (धा. पा. ११०५) इत्यस्य पञ्चमे लकारे दधनत् (तै. ब्रा. २.८.३.५) । दरिद्राति । जागर्ति । भ्यादीनाम् इति किम् ? ददाति । पिति इति किम् ? दरिद्रति ॥

## लिति । (१९३/३६७३)

[6]लिति प्रत्ययात् पूर्वमुदात्तं भवति । [7]चिकीर्षकः । जिहीर्षकः । भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् ॥

---

1. परतः नास्ति क. 2. किम् इत्यधिकम् क. 3. बहुव्रीहि नास्ति फ. 4. अनच्कस्य ह, अनकस्य क. 5. परतः इत्यधिकम् ग. ह. 6. लकारेत् क. फ. 7. चिकीर्षकः नास्ति ह.

## आदिर्णमुल्यन्यतरस्याम्। (१९४/३६७७)

णमुलि [1]परतोऽन्यतरस्यामादिरुदात्तो भवति। लोलूयं लोलूयम्, लोलूयं लोलूयम्। पोपूयं पोपूयम्, पोपूयं पोपूयम्। आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः॥

## अचः कर्तृयकि। (१९५/३६७८)

उपदेशे इति वर्तते। अजन्ता ये [2]उपदेशे धातवः तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव, लूयते केदारः स्वयमेव। स्तीर्यते केदारः स्वयमेव, स्तीर्यते केदारः स्वयमेव। यदाद्युदात्तत्वं न भवति तदा लसार्वधातुकनिघाते [3]कृते [4]यक एव स्वरो भवति। जनादीनामुपदेशे एवात्वं द्रष्टव्यम्। तत्राप्यय स्वर इष्यते। जायते स्वयमेव। सायते स्वयमेव। खायते स्वयमेव। अचः इति किम्? भिद्यते स्वयमेव। कर्तृग्रहणं किम्? लूयते केदारो देवदत्तेन॥

## थलि च सेटीडन्तो वा। (१९६/३७२२)

सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर्वा अन्यतरस्याम्। लुलविथ, लुलविथ, लुलविथ। यदा नैते त्रयः स्वराः, तदा लिति (६. १. १९३/३६७६) प्रत्ययात् पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वरा पर्यायेण भवन्ति। सेटि इति किम्? ययाथ[5]। लिति प्रत्ययात् पूर्वमुदात्तम् इत्ययमेव स्वरो [6]भवति॥

## ञ्नित्यादिर्नित्यम्। (१९७/३६८६)

ञिति निति च नित्यमादिरुदात्तो [7]भवति। गर्गादिभ्यो यञ् (४.१. १०५/११०७)–गार्ग्यः। वात्स्यः। 'वासुदेवार्जुनाभ्यां [8]वुन्' (४. ३. ९८/१४७८)–वासुदेवकः। [9]अर्जुनकः। प्रत्ययस्वरापवादोऽयं योगः। प्रत्ययलक्षणमत्र नेष्यते, तेन गर्गाः, बिदाः, चञ्चाः इत्यत्र यञि कनि च लुप्ते न भवति॥

## आमन्त्रितस्य च। (१९८/३६५३)

आमन्त्रितस्यादिरुदात्तो भवति। देवदत्त, देवदत्तौ, देवदत्ताः। अत्र 'कारकाद्दत्तश्रुतयोरेवाशिषि' (६. २. १४८/३८८२) इति प्राप्ति[10]र्बाध्यते। लुमता[11]ऽपि लुप्ते प्रत्ययलक्षणमत्रेष्यते, सर्पिरागच्छ, सप्तागच्छ इति॥

---

1. परतः नास्ति ग. 2. उपदेशधातवः ह. 3. कृते नास्ति फ. 4. यकार एव क. ड. 5. ययिथ इत्यधिकम् ह. 6 भवति नास्ति फ. 7. भवति नास्ति फ. 8. वुञ् क. 9. उदाहरणमिदं नास्ति क. 10. प्रतिषिध्यते क. ग. 11. अपि नास्ति क. फ.

## पथिमथोः सर्वनामस्थाने । (१९९/३६८७)

पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः सर्वनामस्थाने [1]परतः आदिरुदात्तो भवति । पन्थाः, पन्थानौ, पन्थानः[2] । मन्थाः, मन्थानौ, मन्थानः । सर्वनामस्थाने इति किम् ? पथः पश्य । मथः पश्य । उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति । प्रत्ययलक्षणमत्रापि नेष्यते । पथिप्रियः इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः ॥

## अन्तश्च तवै युगपत् । (२००/३६८८)

तवैप्रत्ययान्तस्यान्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः । कर्तवै । हर्तवै । प्रत्ययाद्युदात्तत्वापवादः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । एकवर्जम् इति वचनाद् यौगपद्यं न स्यात् ॥

## क्षयो निवासे । (२०१/३६८९)

क्षयशब्दो निवासेऽभिधेये आद्युदात्तो भवति । [3]क्षियन्ति निवसन्ति अस्मिन् इति क्षयः । 'पुंसि सञ्ज्ञायां घः प्रायेण' (३ . ३ . ११८/३२९६) इति [4]घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः । [5]क्षये (ऋ. १० . ११८ . १) जागृहि प्रपश्यन् । निवासे इति किम् ? क्षयो वर्तते दस्यूनाम् । 'एरच्' (३.३.५६/३२३१) इत्ययमजन्तः ॥

## जयः करणम् । (२०२/३६९०)

जयशब्दः करणवाची आद्युदात्तो भवति । जयन्ति [6]तेन इति जयः । 'पुंसि सञ्ज्ञायां घः प्रायेण' (३.३. ११८/३२९६) इति घः, तस्य प्रत्ययस्वरः प्राप्तः । जयोऽश्वः । करणम् इति किम् ? जयो [7]वर्तते ब्राह्मणानाम् । अत्रापि 'एरच्' (३.३.५६/३२३१) [8]इत्ययमजन्तः ॥

## वृषादीनां च । (२०३/३६९१)

वृषः इत्येवमादीनामादिरुदात्तो भवति । वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । एते सर्वे [9]पचाद्यच्प्रत्ययान्ताः । गयः इत्यत्र गायतेर्निपातनाद् एत्वम् । नयः । तयः । अयः । वेदः । [10]अंशः । अशः । दवः । एतेऽपि तथैवाच्प्रत्ययान्ताः । सूदः । इगुपधात् (३ . १ . १३५/२८९७) इति कप्रत्ययान्तः । गुहा । भिदादिरङ्प्रत्ययान्तः (३.३.१०४/३२८१) । 'शमरणौ सञ्ज्ञायां सम्मतौ भावकर्मणोः' (ग.सू.१७०) । शमो भावे । रणः कर्मणि । अजन्तावेतौ निपातनाद् भावकर्मणोः भवतः । मन्त्रः पचाद्यजन्तः । शान्तिः इति क्तिजन्तः । कामः । यामः । घञन्तावेतौ । आरा । धारा । कारा । भिदादयः । वहः । गोचरादिषु घप्रत्ययान्तः । कल्पः । अजन्तः । पादः । घञन्तः । तत्र क्वचित् प्रत्ययस्वरः प्राप्तः, क्वचित् 'कर्षात्वतो घञोऽन्त उदात्तः' (६ . १ . १५९/३६८०) इति । [11]वृषादिराकृतिगणः । अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम् ॥

---

1. परतः नास्ति फ. 2. पन्थानम् इत्यधिकम् फ. 3. क्षयन्ते ह. 4. घप्रत्ययोऽयं तस्य क, घप्रत्ययान्तस्य नास्ति फ. 5. ते इत्यधिकम् ह. 6. अनेन क. फ. ह. 7. वर्तते नास्ति फ. 8. इति नास्ति फ. 9. पचादि नास्ति फ. 10. अंशः नास्ति ग. 11. वृष जन ज्वर गृह हय श्रम वेद सूद अंश गुहा इति वृषादिः ड.

## सञ्ज्ञायामुपमानम् । (२०४/३६९२)

उपमानशब्दः सञ्ज्ञायामाद्युदात्तो भवति । [1]चञ्चा । [2]वध्रिका । खरकुटी । दासी । उपमानशब्दा एते उपमेयस्य सञ्ज्ञाः । तत्र 'इवे प्रतिकृतौ' (५.३.९६/२०५१) इति [3]यः कन्, तस्य[4] 'लुम्मनुष्ये' (५.३.९८/२०५३) इति लुप् । यद्येवं किमर्थमिदमुच्यते प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम् ? एतदेव ज्ञापयति क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवति इति । तथा च पूर्वत्रोदाहृतम् । सञ्ज्ञायाम् इति किम् ? अग्निर्माणवकः । उपमानम् इति किम् ? देवदत्तः ॥

## निष्ठा च द्व्यजनात् । (२०५/३६९३)

निष्ठान्तं द्व्यच् सञ्ज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति । दत्तः । गुप्तः । बुद्धः । प्रत्ययस्वरापवादः[5] । निष्ठा इति किम् ? देवः । भीमः । द्व्यच् इति किम् ? चिन्तितः । रक्षितः । अनात् इति किम ? त्रातः । आप्तः । सञ्ज्ञायाम् इति किम् ? कृतम् । हृतम् ॥

## शुष्कधृष्टौ । (२०६/३६९४)

आदिः उदात्तः इति वर्तते । शुष्क धृष्ट इत्येतावाद्युदात्तौ भवतः । शुष्कः । धृष्टः । असञ्ज्ञार्थ[6] आरम्भः ॥

## आशितः कर्ता । (२०७/३६९५)

आशितशब्दः कर्तृवाची आद्युदात्तो भवति । आशितो देवदत्तः । अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः । [7]तत्र थाऽथघञ् (६.२.१४४/३८७८) इति प्राप्तः स्वरो बाध्यते । [8]कर्तरि इति किम ? आशितमन्नम् । आशितं [9]देवदत्तेन । पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे ॥

## रिक्ते विभाषा । (२०८/३६९६)

रिक्तशब्दे विभाषा [10]आदिरुदात्तो भवति । रिक्तः, रिक्तः । सञ्ज्ञायाम् (६.१.२०४/३६९२), 'निष्ठा च द्व्यजनात्' (६.१.२०५/३६९३) इत्यनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः ॥

## जुष्टार्पिते च च्छन्दसि । (२०९/३६९७)

जुष्ट अर्पित इति शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः । जुष्टः, जुष्टः । अर्पितः, अर्पितः । छन्दसि इति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावेतौ[11] ॥

---

1. चञ्चेव चञ्चा ह. 2. उदाहरणमिदं नास्ति ह. 3. यः नास्ति फ. ह. 4. प्रत्ययस्य इत्यधिकम् ह. 5. अयं इत्यधिकम् फ. 6. अयं इत्यधिकम् ह. 7. तत्र नास्ति फ. 8. कर्ता ब. क. ड. फ. ह, वाक्यमिदं नास्ति क. 9. अत्र इत्यधिकम् ह. 10. आद्युदात्तः फ. 11. एव इत्यधिकम् फ.

## नित्यं मन्त्रे । (२१०/३६९८)

जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः । जुष्टं[1] देवानाम् । अर्पितं पितॄणाम् । पूर्वेणात्र विकल्पः प्राप्तः । केचिदत्र जुष्ट इत्येतदेवानुवर्तयन्ति । अर्पितशब्दस्य विभाषा मन्त्रेऽपीच्छन्ति । अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते, '[1]तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः' (ऋ. १.१६४.४८) इति ॥

## युष्मदस्मदोर्ङसि । (२११/३६९९)

युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते, तयोर्ङसि परतः आदिः उदात्तो भवति । तव स्वम् । मम स्वम् ॥

## ङयि च । (२१२/३७००)

युष्मदस्मदोः इति वर्तते, आदिरुदात्तः इति च । ङे इत्येतस्मिंश्च परतो युष्मदस्मदोः आदिरुदात्तो भवति । 'तुभ्यम्' (तै. सं. १.३.१४.३) । मह्यम् । पृथग्योगकरणं यथासङ्ख्यशङ्कानिवृत्त्यर्थम् ॥

## यतोऽनावः । (२१३/३७०१)

'निष्ठा च द्व्यजनात्' (६.१.२०५/३६९३) इत्यतो द्व्यज्ग्रहणमनुवर्तते । यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति न चेन् नौशब्दात् परो भवति । 'अचो यत्' (३.१.९७/२८४२) – चेयम् । जेयम् । 'शरीरावयवाद् यत्' (५.१.६/६६६) – कण्ठ्यम् । ओष्ठ्यम् । 'तित्स्वरितम्' (६.१.१८५/३७२९) [2]इत्यस्यापवादः । अनावः इति किम् ? नाव्यम् । द्व्यचः इत्येव, चिकीर्ष्यम्[3] । ललाट्यम् ॥

## ईडवन्दवृशंसदुहां ण्यतः । (२१४/३७०२)

ईड वन्द वृ शंस दुह इत्येतेषां यो ण्यत् [4]तदन्तस्य आदिरुदात्तो भवति । ईड्यम् । वन्द्यम् । वार्यम् । शंस्यम् । दोह्या धेनुः । द्व्यनुबन्धकत्वात् ण्यतो यद्ग्रहणेन ग्रहणं नास्ति इति 'तित्स्वरितम्' (६.१.१८५/३७२९) इत्येतत् प्राप्तम् । वार्यम् इति 'वृङ सम्भक्तौ' (धा. पा. १५१०) इत्यस्यायं ण्यत् । क्यब्विधौ हि[5] वृञ एव ग्रहणमिष्यते ॥

## विभाषा वेण्विन्धानयोः । (२१५/३७०३)

वेणु इन्धान इत्येतयोः विभाषा आदिरुदात्तो भवति । वेणुः, वेणुः । इन्धानः, इन्धानः, इन्धानः । वेणुशब्दोऽयम् 'अजिवृरीभ्यो निच्च' (उ. ३२५) इति णुप्रत्ययान्तो नित्वान्नित्यमाद्युदात्तः [6]प्राप्तः । इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वादन्तोदात्तः । अथ शानजन्तस्तदा [7]लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । तदेवमिन्धाने[8] सर्वथा अप्राप्तमुदात्तत्वं पक्षे विधीयते । वेणुरिव वेणुः इत्युपमानं यदा सञ्ज्ञा भवति,[9] तदा 'सञ्ज्ञायामुपमानम्' (६.१.२०४/३६९२) इति [10]नित्यमाद्युदात्तत्वमिष्यते ॥

---

1. तस्मिन् नास्ति फ. 2. तस्यापवादः ह. 3. जिहीर्ष्यम् इत्यधिकम् क. 4. तस्य क. 5. वृङः एव ग्रहणमिष्यते न वृञः ह. फ, वृङः ड. 6. प्राप्तः नास्ति फ. 7. ल नास्ति ह. 8. शब्दे इत्यधिकम् फ. 9. इति इत्यधिकम् ह. 10. नित्यम् नास्ति फ.

## त्यागरागहासकुहश्वठक्रथानाम् । (२१६/३७०४)

त्याग राग हास कुह श्वठ क्रथ [1]इत्येतेषां विभाषा आदिरुदात्तो भवति । त्यागः, त्यागः । रागः, रागः । हासः, हासः । एते घञन्ताः, तेषां पक्षे 'कर्षात्वतो घञोऽन्त उदात्तः' (६. १. १५९/३६८०) इत्युदात्तत्वमेव भवति । कुहः, कुहः । श्वठः, श्वठः । क्रथः, क्रथः । एते पचाद्यजन्ताः ॥

## उपोत्तमं रिति । (२१७/३७३३)

रिदन्तस्य उपोत्तममुदात्तं भवति । त्रिप्रभृतीनामन्त्य[2]मुत्तमम् तस्य समीपे यत् तद् उपोत्तमम् । करणीयम् । हरणीयम् । पटुजातीयः । मृदुजातीयः । प्रत्ययस्वरापवादो[3]ऽयम् ॥

## चङ्यन्यतरस्याम् । (२१८/३६७९)

चङन्तेऽन्यतरस्याम् उपोत्तममुदात्तं भवति । मा हि चीकरताम्, मा हि चीकरताम् । 'न माङ्योगे' (६. ४. ७४/२२२८) इत्यटि प्रतिषिद्धे 'हि च' (८. १. ३४/३९४१) इति निघातेऽडुपदेशात् इति लसार्वधातुकानुदात्तत्वे (६. १. १८६/३७३०) कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति । उपोत्तमग्रहणाद् द्व्यचो न भवति, मा हि दधत् ॥

## मतोः पूर्वमात् सञ्ज्ञायां स्त्रियाम् । (२१९/३७०९)

मतोः पूर्वः आकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गं सञ्ज्ञा भवति । उदुम्बरावती । पुष्करावती । वीरणावती । शरावती । 'शरादीनां च' (६. ३. १२०/१०४२) इति दीर्घः । आत् इति किम् ? इक्षुमती । द्रुमवती । सञ्ज्ञायाम् इति किम् ? खट्वावती । स्त्रियाम् इति किम् ? शरावान् । [4]मतोः इति किम् ? गवादिनी ॥

## अन्तोऽवत्याः । (२२०/३७०६)

[5]सञ्ज्ञायाम् इत्येव । अवतीशब्दान्तस्य सञ्ज्ञायामन्त उदात्तो भवति । अजिरवती । खदिरवती । हंसवती । कारण्डवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् । अवत्याः इति[6] [7]किमुच्यते, न वत्या इत्येवमुच्येत ? नैवं शक्यम्. इहापि स्यात्, राजवती । स्वरविधौ नलोपस्यासिद्धत्वान्नायमवतीशब्दः । वत्वं पुनराश्रयात् सिद्धम् ॥

## ईवत्याः । (२२१/३७०७)

ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां सञ्ज्ञायां [8]विषये । अहीवती । कृषीवती । मुनीवती ॥

---

1. एतेषां नास्ति ब. 2. अक्षरं इत्यधिकम् ह. 3. अयं नास्ति फ. 4. मतोः नास्ति फ. 5. स्त्रियाम् इत्यधिकम् ड. फ. 6. निर्देशादिह न भवति इत्यधिकम् फ. 7. किमर्थम् फ. ह. 8. विषये नास्ति फ.

## चौ। (२२२/३६५२)

चौ इति अञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन् परतः पूर्वस्यान्त उदात्तो भवति। दधीचा। दधीचे। मधूचः पश्य। [1]मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादोऽयम्।

[७०५] चावतद्धित इति वक्तव्यम्। (म. भा. ३. ११८)

दाधीचः। माधूचः। प्रत्ययस्वर एवात्र भवति॥

## समासस्य। (२२३/३७३४)

समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्। 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (व्या. प. ३७) इति हलन्तेष्वप्यन्तोदात्तत्वं भवति। नानापद[2]स्वरस्यापवादः॥

इति[3] काशिकायां वृत्तौ षष्ठाध्यायस्य

प्रथमः पादः॥

----०----

1. उदाहरणमिदं नास्ति फ. 2. स्वरापवादः फ. 3. वामन इत्यधिकम् ब.

षष्ठाध्यायस्य
द्वितीयः पादः

## बहुव्रीहौ प्रकृत्या पूर्वपदम् । (१/३७३७)

पूर्वपदग्रहणं [1]अत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति, स्वभावेनावतिष्ठते, न विकारमनु[2]दात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८/३६५०) इति [3]सोऽनुदात्तः स्यात् इति समासान्तोदात्तत्वापवादोऽयमारभ्यते। कार्ष्णोत्तरासङ्गाः। कृष्णो मृगः तस्य विकारः कार्ष्णः, 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४/१५३२) इति अञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः। यूपवलजः। यूपशब्दः उणादिषु 'कुसुयुभ्यश्च' (उ. ३१३.३१४) इति पप्रत्ययान्तः। तत्र च दीर्घः इति निदिति च वर्तते, तेनाद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। स्नातकपुत्रः। स्नातकशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्वादाद्युदात्तः। मनुष्यनाथः। मनुष्यशब्दः 'तित् स्वरितम्' (६.१.१८५/३७९९) इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्ति इति समासान्तोदात्तत्वं [4]भवति। समभागः इति समशब्दो हि सर्वानुदात्तः॥

## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । (२/३७३८)

[5]तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तम् उपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत् पूर्वपदं तत् प्रकृतिस्वरं भवति। तुल्यार्थ – तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्। सदृक्श्वेतः। सदृशमहान्। एते 'कृत्यतुल्याख्या अजात्या' (२.१.६८/७४९) इति कर्मधारयाः। तत्र तुल्यशब्दः 'यतोऽनावः' (६.१.२१३/३७०१) इत्याद्युदात्तः। सदृक्शब्दः 'समानान्ययोश्च' (वा. २६१) इति क्विन्प्रत्ययान्तः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। सदृशशब्दोऽपि कञन्तो मध्योदात्तः। तुल्यार्थ।

तृतीया – [6]शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। शङ्कुपूर्वाल् लातेः 'घञर्थे कविधानम्' (वा. ३०६) इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः। किरिशब्दोऽपि किरतेः 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च' (उ. ५९२) इति [7]इकारप्रत्ययः किदौणादिकः, तेनासावन्तोदात्तः। [8]तृतीया।

सप्तमी – अक्षेषु शौण्डः अक्षशौण्डः। पानशौण्डः। 'अशेर्देवने' (उ. ६४०) इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेण आद्युदात्तः। सप्तमी।

---

1. अत्र नास्ति फ. 2. अनुदात्तत्वं नास्ति ब. 3. अनुदात्तत्वं फ. 4. एव इत्यधिकम् फ. 5. प्रकृत्या पूर्वपदमिति वर्तते इत्यधिकम् फ. ह. 6. शङ्कुलया खण्डः नास्ति फ. 7. इप्रत्ययान्तः फ. 8. तृतीया नास्ति फ.

उपमान – शस्त्रीश्यामा । कुमुदश्येनी । हंसगद्गदा । न्यग्रोधपरिमण्डला । दूर्वाकाण्डश्यामा । शरकाण्डगौरी । 'उपमानानि सामान्यवचनैः' (२.१.५५/७३४) इति समासः । शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः । कुमुदशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात् (वा. २३२) कप्रत्ययान्तः, 'नब्विषयस्यानिसन्तस्य' (फि. सू. २६) इति [1]वा आद्युदात्तः । हंसशब्दो 'वृतॄवदिहनिकमिकशिभ्यः सः' (उ. ३४९) इति सप्रत्ययान्तः । न्यग्रोहति इति न्यग्रोधः, पचादित्वादच्प्रत्ययान्तः, तस्य 'न्यग्रोधस्य च केवलस्य' (७.३.५/१५४३) इति निपातनाद् हकारस्य धकारो मध्योदात्तत्वं च । दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ । उपमान ।

अव्यय – अब्राह्मणः । अवृषलः । कुब्राह्मणः । कुवृषलः । निष्कौशाम्बिः । निर्वाराणसिः । अतिखट्वः । अतिमालः । एतान्यव्ययान्याद्युदात्तानि ।

[७०६] अव्यये नञ्कुनिपातानामिति वक्तव्यम् । (म. भा. ३ . १२३)

इह मा भूत्, स्नात्वाकालकः इति । अव्यय ।

द्वितीया – मुहूर्तसुखम् । मुहूर्तरमणीयम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना । 'अत्यन्तसंयोगे च' (२.२.२९/६९१) इति द्वितीयासमासः । मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः । द्वितीया ।

कृत्य – भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः । पानीयहरणीयशब्दयोः 'उपोत्तमं रिति' (६.१.२१७/३७३३) इति ईकार उदात्तः ॥

## वर्णो वर्णेष्वनेते । (३/३७३७)

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति च वर्तते । [2]वर्णं वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति । कृष्णसारङ्गः । लोहितसारङ्गः । कृष्णकल्माषः । लोहितकल्माषः ।[3] 'कृषेर्वर्णे' (उ. २९१) इति कृष्णशब्दो नक्प्रत्ययान्तः अन्तोदात्तः । लोहितशब्दोऽपि 'रुहेरश्च लो वा' (उ. ३८१) इति इतन्प्रत्ययान्तः आद्युदात्तः । वर्णः इति किम् ? परमकृष्णः । वर्णेषु इति किम् ? कृष्णतिलाः । अनेते इति किम् ? कृष्णैतः । लोहितैतः ॥

---

1. वा नास्ति फ. 2. वर्णं ड, नास्ति क. 3. अत्र इत्यधिकम् ब.

## गाधलवणयोः प्रमाणे । (४/३७३८)

प्रमाणवाचिनि तत्पुरुषे समासे गाध लवण इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति । [1]शम्बगाधमुदकम् । अरित्रगाधमुदकम् । तत्प्रमाणम् इत्यर्थः । गोलवणम् । अश्वलवणम् । यावद् गवे दीयते तावदित्यर्थः । षष्ठीसमासा एते । तत्र 'शमेर्बन्' (उ. ५४३) इति बन्प्रत्ययान्तत्वाच्छम्बशब्द आद्युदात्तः । अरित्रशब्दः अर्तिलूधूसू (३. २. १८४/३१६५) इति इत्रप्रत्ययान्तो मध्योदात्तः । गोशब्दो डोप्रत्ययान्तः (उ. २३५) अन्तोदात्तः । अश्वशब्दो 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' (उ. १५७) इति क्वन्प्रत्ययान्तः आद्युदात्तः । प्रमाणम् इयत्ता–परिच्छेदमात्रमिह द्रष्टव्यं न पुनरायाम एव । स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमे[2]तेषाम् । प्रमाणे इति किम् ? परमगाधम् । परमलवणम् ॥

## दायाद्यं दायादे । (५/३७३९)

तत्पुरुषे समासे दायादशब्दे उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति । विद्यादायादः । धनदायादः । सञ्ज्ञायां समजनिषद (३. ३. ९९/३२७६) इति विद्याशब्दः [3]क्यप्प्रत्ययान्तः । उदात्तः इति च तत्र वर्तते, तेनाय–मन्तोदात्तः । 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ. २४८) इति बहुलवचनात् केवलादपि धाञः क्युः प्रत्ययः, तेन धनशब्दः प्रत्ययस्वरेण आद्युदात्तः । अथ विद्यादायादः इति केन षष्ठी ? स्वामीरीश्वराधिपतिदायाद (२. ३. ३९/६३९) इति । यद्येवं 'प्रतिपदविधाना च षष्ठी न समस्यते' (वा. ८९) इति समासप्रतिषेधः प्राप्नोति ? एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायि इति पुनरभ्यनुज्ञायते । दायाद्यम् इति किम् ? परमदायादः । [4]अत्र समासान्तोदात्तत्वमेव भवति ॥

## प्रतिबन्धि चिरकृच्छ्रयोः । (६/३७४०)

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनचिरम् । गमनकृच्छ्रम् । व्याहरणचिरम् । व्याहरणकृच्छ्रम् । गमनव्याहरणशब्दौ ल्युडन्तौ, तयोर्लित्स्वरः। गमनं च यच्चिरं च इति विशेषणसमासो[5]ऽयम्, मयूरव्यंसकादिर्वा[6] एष द्रष्टव्यः । गमनं हि कारणविकलतया [7]चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते । प्रतिबन्धि इति किम् ? मूत्रकृच्छ्रम् ॥

## पदेऽपदेशे । (७/३७४१)

अपदेशो व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्दे उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति । मूत्रपदेन [8]प्रस्थितः । उच्चारपदेन प्रस्थितः । मूत्रशब्दः 'सिविमुच्योष्टेरू च' (उ. ६१२) इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्तः आद्युदात्तः । उच्चारशब्दोऽपि घञन्तः 'थाथघञ्क्ता[9]जबित्रकाणाम्' (६. २. १४४/३८७८) इत्यन्तोदात्तः । विशेषणसमासोऽयं मयूरव्यंसकादिर्वा । अपदेशे इति किम् ? विष्णोः पदम् विष्णुपदम् ॥

---

1. उदकम् नास्ति ग. 2. एषाम् फ. 3. क्यबन्तः ह. 4. अत्र नास्ति क. 5. अयं नास्ति क. फ. ह. 6. वेति वक्तव्यम् फ. 7. चिरकालस्य ब. फ. ह. 8. प्रस्थितम् ह. 9. जबित्रकाणाम् नास्ति फ.

## निवाते वातत्राणे। (८/३७४२)

निवातशब्दे उत्तरपदे[1] वातत्राणवाचिनि तत्पुरुषे समासे[2] पूर्वपदं प्रकृतिस्वरं भवति। कुट्येव निवातम् कुटीनिवातम्। शमीनिवातम्। कुड्यनिवातम्। वातस्याभावो निवातम्, अर्थाभावः इत्यव्ययीभावः। निरुद्धो वातोऽस्मिन् इति वा निवातम् इति बहुव्रीहिः। [3]तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते। कुटीशमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ। कुड्यशब्दोऽपि कवतेर्यत् डक्किच्च इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तोऽन्तोदात्तः इत्यपरे। वातत्राणे इति किम्? राजनिवाते वसति। सुखं मातृनिवातम्। निवातशब्दोऽयं पार्श्ववाची रूढिशब्दस्तत्रोभयत्र षष्ठीसमासः॥

## शारदेऽनार्तवे। (९/३७४३)

ऋतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्दे उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। रज्जुशारदमुदकम्। दृषत्शारदाः सक्तवः। शारदशब्दोऽयं प्रत्यग्रवाची, तस्य नित्यसमासोऽस्वपदविग्रह इष्यते। सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते। रज्जुशब्दः 'सृजेरसुम् च' (उ. १५) इति उप्रत्ययान्तः [4]आदिलोपश्च। 'धान्ये नित्' इति च तत्र वर्तते, तेनाद्युदात्तः। दृषत्शब्दः 'दृणातेः षुक् ह्रस्वश्च' (उ. १३६) इति अदिप्रत्ययान्तोऽन्तोदात्तः। अनार्तवे इति किम्? परमशारदम्। उत्तमशारदम्। [5]शरदि ऋतुविशेषे भवं यत् तदिह शारदम्॥

## अध्वर्युकषाययोर्जातौ। (१०/३७४४)

अध्वर्यु कषाय इत्येतयोः[6] जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्याध्वर्युः। कठाध्वर्युः। कलापाध्वर्युः। एते समानाधिकरणसमासाः जातिवाचिनो [7]नियतविषयाः। तत्र प्राच्यशब्दः यत्प्रत्ययान्त आद्युदात्तः। कठशब्दः पचाद्यचि [8]व्युत्पादितः। ततः कठेन प्रोक्तम् इति 'वैशम्पायनान्तेवासिभ्यश्च' (४.३.१०४/१४८४) इति णिनिः, तस्य 'कठचरकाल्लुक्' (४.३.१०७/१४८७) इति लुक्। कलापिना प्रोक्तम् इति 'कलापिनोऽण्' (४.३.१०८/१४८८), तस्मिन् 'इनण्यनपत्ये' (६.४.१६४/१२४५) इति प्रकृतिभावे प्राप्ते 'नान्तस्य[9] टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम्' (वा. ४६९) इति टिलोपः। तदेवं [10]कलापशब्दोऽन्तोदात्तः। सर्पिर्मण्डकषायम्। उमापुष्पकषायम्। दौवारिककषायम्। [11]षष्ठीसमासव्युत्पादिता रूढिशब्दा एते। तत्र सर्पिर्मण्डशब्दः उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ। दौवारिकशब्दोऽपि द्वारि नियुक्तः इति ठकि सत्यन्तोदात्तः एव। जातौ इति किम्? परमाध्वर्युः। परमकषायः॥

## सदृशप्रतिरूपयोः सादृश्ये। (११/३७४५)

सदृश प्रतिरूप इत्येतयोः उत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। पितृसदृशः। मातृसदृशः[12]। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ। षष्ठीसमासार्थं [13]च [14]सदृशग्रहणम् इह तदलुकि

---

1. इति प्राप्ते इत्यधिकम् फ. 2. च इत्यधिकम् क. 3. तत्र नास्ति फ. 4. आदि नास्ति फ. 5. शरदि भवं शारदम् इत्यधिकम् ह. 6. उपपदयो इत्यधिकम् ब.ड.क.फ. 7. नियतविशेषाः क. 8. व्युत्पन्नः ह. 9. टेर्लोपे क. 10. कलापिशब्दो क. 11. षष्ठीसमासे एते रूढिताः ब. क. फ. ड. 12. पितृप्रतिरूपः, मातृप्रतिरूपः इत्यधिकम् ह. 13. च नास्ति फ. 14. सदृशपदग्रहणमेव ह.

षष्ठ्याः प्रयोजयति, दास्याः सदृशः, वृषल्याः सदृशः इति। अत्र दासीवृषलीशब्दयोरन्तोदात्तत्वाद् 'उदात्तयणो हल्पूर्वात्' (६.१.१७४/३७२०) इति विभक्तिरन्तोदात्ता। पितृप्रतिरूपः। मातृप्रतिरूपः। सादृश्ये इति किम्? परमसदृशः। उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता न सादृश्यम्॥

## द्विगौ प्रमाणे। (१२/३७४६)

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तशमः। गान्धारिसप्तशमः। सप्तशमाः प्रमाणमस्य इति मात्रचः उत्पन्नस्य 'प्रमाणे लः' (वा. ५५८) 'द्विगोर्नित्यम्' (वा. ५५९) इति लुक्। प्राच्यश्चासौ [1]सप्तशमश्च प्राच्यसप्तशमः। प्राच्यशब्दः आद्युदात्तः। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वा। द्विगौ इति किम्? व्रीहिप्रस्थः। प्रमाणे इति किम्? परमसप्तशमम्॥

## गन्तव्यपण्यं वाणिजे। (१३/३७४७)

वाणिजशब्दे उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति। मद्रवाणिजः। काश्मीरवाणिजः। गान्धारिवाणिजः। मद्रादिषु [2]गत्वा व्यवहरन्ति इत्यर्थः। सप्तमीसमासा एते। तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः। काश्मीरशब्दोऽपि पृषोदरादिषु मध्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते, तत्र कर्दमादीनां च इति पक्षे आद्युदात्तो भवति, [3]द्वितीयो वा। पण्ये – गोवाणिजः। अश्ववाणिजः। गोशब्दोऽन्तोदात्तः। अश्वशब्दः आद्युदात्तः। गन्तव्यपण्यम् इति किम्? परमवाणिजः। उत्तमवाणिजः॥

## मात्रोपज्ञोपक्रमच्छाये नपुंसके। (१४/३७४८)

मात्रा उपज्ञा उपक्रम छाया [4]एतेषूत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं [5]न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किंचन। मात्रशब्दो[6]ऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्तते[7]। तत्र भिक्षायास्तुल्यप्रमाणम् इति अस्वपदविग्रहः षष्ठीसमासः। तत्र भिक्षाशब्दः 'गुरोश्च हलः' (३.३.१०३/३२८०) इत्यप्रत्ययान्तोऽन्तोदात्तः। समुद्रशब्दोऽपि फिषि 'पाटलापालङ्काम्बासागरार्थानाम्' (फि.सू. २) इत्यन्तोदात्त एव।

उपज्ञा – पाणिनोपज्ञम् अकालकम् व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पणिनोऽपत्यम् इत्यणन्तः [8]पाणिनशब्दः प्रत्ययस्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः।

उपक्रम – आढ्योपक्रमम् [9]प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि [10]मानानि। एतेऽपि षष्ठीसमासा एव। तत्रैत्यैनं ध्यायन्ति इत्याढ्याः। 'घञर्थे कविधानम्' (वा. ३०६) इति कप्रत्ययः। आङ्पूर्वाद् ध्यायतेः पृषोदरादित्वाद्धस्य ढत्वम्। तदयमाढ्यशब्दः थाथादिस्वरेण (६.२.१४४/३८७८) अन्तोदात्तः। दर्शनीयशब्दो रित्वादुपोत्तमोदात्तः। सुकुमारशब्दः 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' (२.४.२१/८२४) इति।

1. सप्तसप्तमः क.फ. 2. प्राप्ताः क, मद्रान् गत्वा ह. 3. द्वितीयस्य वा क. 4. एतेषु उपपदेषु फ. 5. न नास्ति क.फ. 6. अयं नास्ति फ. 7. च इत्यधिकम् फ. 8. पाणिनिशब्दः फ. 9. प्रासादः नास्ति फ. 10. नामानि क.

छाया – इषुच्छायम् । धनुश्छायम् । इषुशब्दः 'ईषेः किच्च' (उ.१३) इत्युप्रत्ययान्तः, तत्र च 'धान्ये नित्' (उ.९) इति वर्तते, तेनाद्युदात्तः । धनुःशब्दोऽपि 'नब्विषयस्यानिसन्तस्य' (फि.सू. २६) इत्याद्युदात्त एव । इषूणां छाया इति षष्ठीसमासः । 'छाया बाहुल्ये' (२.४.२२/८२५) इति नपुंसकलिङ्गता । नपुंसके इति किम् ? [1]कुड्यच्छाया ॥

## सुखप्रिययोर्हिते । (१५/३७४९)

सुख प्रिय इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । गमनसुखम् । वचनसुखम् ।[2]व्याहरणसुखम् । प्रिय – गमनप्रियम् । वचनप्रियम् । [3]व्याहरणप्रियम् । समानाधिकरणसमासा एते । तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तेते । तद्धि हितं यदायत्यां प्रीतिं करोति । गमनादिषु ल्युडन्तेषु लित्स्वरः । हिते इति किम् ? परमसुखम् । परमप्रियम् ॥

## प्रीतौ च । (१६/३७५०)

प्रीतौ गम्यमानायां सुख प्रिय इत्येतयोः उत्तरपदयोः तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । ब्राह्मणसुखं पायसम् । छात्रप्रियोऽनध्यायः । कन्याप्रियो मृदङ्गः । सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशय-[4]प्रतिपत्त्यर्थम् । ब्राह्मणछात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । कन्याशब्दः स्वरितान्तः । प्रीतौ इति किम् ? राजसुखम् । राजप्रियम् ॥

## स्वं स्वामिनि । (१७/३७५१)

स्वामिशब्दे उत्तरपदे[5] तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति । गोस्वामी । अश्वस्वामी । धनस्वामी । अश्वधनगवां कथित एव स्वरः । स्वमिति किम् ? परमस्वामी ॥

## पत्यावैश्वर्ये । (१८/३७५२)

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे[6] पूर्वपदं प्रकृतिस्वरं भवति । गृहपतिः । सेनापतिः । नरपतिः । धान्यपतिः[7] । 'गेहे कः' (३.१.१४४/२९०६) इति प्रकृतिस्वरेणान्तोदात्तो गृहशब्दः । सह इनेन वर्तते इति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (६.२.१/३७३५) इति [8]सेनाशब्द आद्युदात्तः । 'णी नये' (धा.पा. १४९६) एतस्माद् 'ऋदोरप्' (३.३.५७/३२३२) इति अप्प्रत्ययान्त [9]आद्युदात्तो नरशब्दः । धान्यमन्तस्वरितम् । ऐश्वर्यम् इति किम् ? [10]ब्राह्मणो वृषलीपतिः । वृषल्या भर्ता इत्यर्थः ॥

---

1. कृष्णच्छायम् क. 2. व्याकरणसुखम् फ. 3. व्याकरणप्रियम् फ. ह. 4. प्रसिद्धयर्थम् ह. 5. ऐश्वर्यवाचिनि इत्यधिकम् क. 6. समासे इत्यधिकम् ह. 7. गोपतिः अजापतिः इत्यधिकम् ह. फ. 8. सेना फ. 9. आद्युदात्तः नास्ति क. 10. ब्राह्मणीपतिः क.

## न भूवाक्चिद्दिधिषु (१९/३७७३)

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू वाक् चित् दिधिषू इत्येतानि पूर्वपदानि[1] प्रकृतिस्वराणि न भवन्ति। पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते। भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः। षष्ठीसमासा एते समासस्वरेणान्तोदात्ता[2] भवन्ति ॥

## वा भुवनम्। (२०/३७७४)

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुष समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति। 'भुवनपतिः' (तै.ब्रा.३.७.६.१), भुवनपतिः। [3]पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्तः[4]। 'रञ्जेः क्युन्' (उ.२४६) इति वर्तमाने 'भुसूधूभ्राञ्जिभ्यश्छन्दसि' (उ.२४७) इति क्युन्प्रत्ययान्तो भुवनशब्दः आद्युदात्तो व्युत्पादितः। कथं भुवनपतिरादित्यः इति? 'उणादयो बहुलम्' (३.३.१/३१६९) इति बहुलवचनाद् भाषायामपि प्रयुज्यते ॥

## आशङ्काबाधनेदीयस्सु सम्भावने। (२१/३७७५)

[5]प्रकृत्या पूर्वपदम्, तत्पुरुषे इति वर्तते। आशङ्क आबाध नेदीयस् इत्येतेषु उत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। [6]अस्तित्वाध्यवसायः सम्भावनम्। गमनाशङ्कं वर्तते। गमनमाशङ्क्यते इति सम्भाव्यते। वचनाशङ्कम्। [7]व्याहरणाशङ्कम्। आबाध – गमनाबाधम्। वचनाबाधम्। व्याहरणाबाधम्। गमनं बाध्यते इति सम्भाव्यते। नेदीयस् – गमननेदीयः। व्याहरणनेदीयः। गमनमतिनिकटतरम् इति सम्भाव्यते। सम्भावने इति किम्? परमनेदीयः। पूर्वपदानि ल्युडन्तान्युक्तस्वराणि ॥

## पूर्वे भूतपूर्वे। (२२/३७७६)

पूर्वशब्दे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। आढ्यो भूतपूर्वः [8]आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते, तत्र विशेषणं विशेष्येण[9] (२.१.५७/७३६) इति समासः, मयूरव्यंसकादिर्वा[10] द्रष्टव्यः। दर्शनीयपूर्वः। सुकुमारपूर्वः। भूतपूर्वे इति किम्? परमपूर्वः। उत्तमपूर्वः। अत्र परमश्चासौ पूर्वश्च इति समासो, न तु परमो भूतपूर्वः इति। तथा [11]हि सति उदाहरणमेव भवति ॥

## सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये। (२३/३७७७)

सविध सनीड समर्याद सवेश सदेश इत्येतेषु उत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। मद्रसविधम्। गान्धारिसविधम्। काश्मीरसविधम्। मद्रसनीडम्। गान्धारिसनीडम्। काश्मीरसनीडम्। मद्रसमर्यादम्। गान्धारिसमर्यादम्। काश्मीरसमर्यादम्। मद्रसवेशम्। गान्धारिसवेशम्। काश्मीरसवेशम्। मद्रसदेशम्। गान्धारिसदेशम्। काश्मीरसदेशम्। पूर्वपदान्युक्तस्वराणि। सविधादीनां सह [12]विधया इत्येवमादिका व्युत्पत्तिरेव केवलम्। समीपवाचिनस्त्वेते समुदायाः। मद्राणां सविधम् [13]समीपम् इत्यर्थः। सामीप्ये इति किम्? [14]सह मर्यादया वर्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादम् देवदत्तसमर्यादम्। सविधादिषु इति किम्? देवदत्तसमया ॥

---

1. समासस्वरेण इत्यधिकम् ब. 2. च इत्यधिकम् क. 3. पूर्वपदात् ड, नास्ति ह. 4. भवति इत्यधिकम् ह. 5. प्रकृत्या पूर्वपदं नास्ति फ. 6. अस्तित्वनिश्चयः क. 7. व्याकरणशङ्कम् फ. 8. आढ्यपूर्वः नास्ति फ. 9. बहुलम् इत्यधिकम् ह. 10. वा नास्ति फ. 11. च ब. ड. फ. 12. विधीयते ग. 13. सामीप्यम् फ. 14. सह नास्ति फ.

## विस्पष्टादीनि गुणवचनेषु । (२४/३७७८)

विस्पष्टादीनि पूर्वपदानि गुणवचनेषु उत्तरपदेषु प्रकृतिस्वराणि भवन्ति । विस्पष्टकटुकम् । विचित्रकटुकम् । व्यक्तकटुकम् । विस्पष्टलवणम् । विचित्रलवणम् । व्यक्तलवणम् । विस्पष्टं कटुकम् इति विगृह्य सुप्सुपा इति समासः । विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणम्[1] । कटुकादिभिश्च शब्दैर्गुणवद् द्रव्यमभिधीयते इत्यसामानाधिकरण्य-मतो नास्ति कर्मधारयः । विस्पष्टशब्दो 'गतिरनन्तरः' (६.२.४९/३७८३) इत्याद्युदात्तः । विचित्रशब्दोऽपि अव्ययस्वरेण[2] । विचित्तशब्दमन्ये पठन्ति । सोऽपि बहुव्रीहिस्वरेणाद्युदात्त एव । व्यक्तशब्दः 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४/३६५७) [3]इत्यादिस्वरितः ।

ये चात्रापरे पठ्यन्ते तत्र सम्पन्नशब्दस्थाथादिस्वरेणान्तोदात्तः । पटुपण्डितशब्दौ प्रत्ययस्वरेण । कुशलशब्दः कृत्स्वरेणा[4]न्तोदात्तः । चपलशब्दश्चित्स्वरेणा[5]न्तोदात्तः, 'चुपेरच्चोपधायाः' (उ. ११६) इत्यत्र हि चिदिति वर्तते । निपुणशब्दस्थाथादिस्वरेणा[6]न्तोदात्तः, पुणेरिगुपधलक्षणः कप्रत्ययोऽयम् । विस्पष्टादीनीति किम् ? परमलवणम् । उत्तमलवणम् । गुणवचनेषु इति किम् ? [7]विस्पष्टब्राह्मणः ।

विस्पष्ट । विचित्र । व्यक्त । सम्पन्न । पटु । पण्डित । कुशल । चपल । निपुण । विस्पष्टादिः ॥

## श्रज्यावमकन्पापवत्सु भावे कर्मधारये । (२५/३७७९)

श्र ज्य अवम कन् इत्येतेषु [8]पापशब्दवति चोत्तरपदे कर्मधारये समासे [9]भाववाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनश्रेष्ठम् । गमनश्रेयः । ज्य–वचनज्येष्ठम् । वचनज्यायः । अवम–गमनावमम् । वचनावमम् । कन्–गमनकनिष्ठम् । गमनकनीयः । पापवत् – गमनपापिष्ठम् । गमनपापीयः । ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि । श्रज्यकना-मादेशानां ग्रहणम् इति सामर्थ्यात्तद्वदुत्तरपदं गृह्यते । आदिष्विति किम् ? गमनशोभनम् । भावे इति किम् ? गम्यतेऽनेन इति गमनं तत् श्रेयः, गमनश्रेयः । कर्मधारये इति किम् ? [10]गमनं श्रेयः गमनश्रेयः ॥

## कुमारश्च । (२६/३७६०)

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति । कुमारश्रमणा । कुमारकुलटा । [11]कुमारतापसी । कुमारशब्दोऽन्तोदात्तः । [12]अत्र केचित् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (व्या.प. ३) इति परिभाषया 'कुमारश्रमणादिभिः' (२.१.७०/७२५) इत्यत्रैव समासे स्वरमेतमिच्छन्ति । केचित् पुनरविशेषेण सर्वत्रैव कर्मधारये ॥

## आदिः प्रत्येनसि । (२७/३७६१)

कर्मधारये इति वर्तते । प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः । तस्मिन्नुत्तरपदे कर्मधारये[13] कुमारस्यादिरुदात्तो भवति । कुमारप्रत्येनाः । उदात्तः इत्येतदत्र सामर्थ्याद् वेदितव्यम् । [14]पूर्वपदप्रकृतिस्वर एव ह्ययमादेरुपदिश्यते ॥

---

1. न द्रव्यस्य इत्यधिकम् ब.क.ड.फ. 2. आद्युदात्तः इत्यधिकम् ह. 3. इत्यादिना फ. ह. 4–5–6. अन्तोदात्तः नास्ति फ. 7. विस्पष्टब्राह्मणः नास्ति क. 8. पापशब्दवति नास्ति फ. 9. भाववाचि नास्ति फ. ह, भावयति इति क. 10. गमनस्य ब.क.ड. 11. कुमारीतापसी ह. 12. तत्र फ. 13. समासे इत्यधिकम् क. फ. 14. पूर्वपदप्रत्ययः तस्य तद्राजस्य फ.

## पूगेष्वन्यतरस्याम् ।　(२८/३७६२)

पूगा गणाः, तद्वाचिनि उत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति । कुमारचातकाः, कुमारचातकाः, कुमारचातकाः । कुमारलोहध्वजाः, [1]कुमारलोहध्वजाः, कुमारलोहध्वजाः । कुमारबलाहकाः, कुमारबलाहकाः, कुमारबलाहकाः । कुमारजीमूताः, कुमारजीमूताः, कुमारजीमूताः ।

चातकादयः पूगशब्दाः, तेभ्यः 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' (५.३.११२/२०६६) इति ञ्यः प्रत्ययः, तस्य 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२.४.६२/११९३) इति लुक् । [2]अत्र यदा आद्युदात्तत्वं न भवति तदा 'कुमारश्च' (६.२.२६/३७६०) इति पूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति । ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति ॥

## इगन्तकालकपालभगालशरावेषु द्विगौ ।　(२९/३७६३)

इगन्ते उत्तरपदे, कालवाचिनि, कपाल भगाल शराव इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति । इगन्त – पञ्चारत्निः । दशारत्निः । [3]पञ्चारत्नयः प्रमाणमस्य, दशारत्नयः प्रमाणमस्य इति[4] तद्धितार्थे द्विगुः, 'प्रमाणे [5]लः' (वा.५५८) 'द्विगोर्नित्यम्' (वा.५५९) इति मात्रचो लोपः । इगन्त ।

काल – पञ्चमास्यः । दशमास्यः । पञ्च मासान् भृतो [6]भूतो भावी वा (५.१.८०/१७४४) इति तद्धितार्थे 'द्विगोर्यप्' (५.१.८२/१७४६) । पञ्चवर्षः । दशवर्षः । 'वर्षाल्लुक् च' (५.१.८८/१७५३) इति [7]ठञो लुक् । काल ।

कपाल – पञ्चकपालः । दशकपालः । कपाल । भगाल – पञ्चभगालः । दशभगालः । भगाल । शराव – पञ्चशरावः । दशशरावः । 'संस्कृतं भक्षाः' (४.२.१६/१२१७) [8]इति तद्धितार्थे एते समासाः 'द्विगोर्लुगनपत्ये' (४.१.८८/१०८०) इति कृताण्प्रत्ययलोपा द्रष्टव्याः । इगन्तादिषु इति किम् ? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः । दशाश्वः । द्विगौ इति किम् ? परमारत्निः । [9]परमशरावम् । पञ्चारत्न्यो दशारत्न्यः इति च यण्गुणयोः बहिरङ्गलक्षणयोरसिद्धत्वात् स्थानिवद्भावाद् वा द्विगुस्वर[10] इगन्तलक्षणः प्रवर्तते ॥

## बह्वन्यतरस्याम् ।　(३०/३७६४)

बहुशब्दः पूर्वपदमिगन्तादिषूत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । पूर्वेण [11]नित्यं प्राप्ते विकल्पः । बह्वरत्निः, बह्वरत्निः । [12]बहुमास्यः, बहुमास्यः । बहुकपालः, बहुकपालः । बहुभगालः, बहुभगालः । बहुशरावः, बहुशरावः । बहुशब्दोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशः तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४/३६५७) इत्येष स्वरो भवति ॥

## दिष्टिवितस्त्योश्च ।　(३१/३७६५)

दिष्टि वितस्ति इत्येतयोरुत्तरपदयोः द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति[13] । पञ्चदिष्टिः, पञ्चदिष्टिः । पञ्चवितस्तिः, पञ्चवितस्तिः । दिष्टिवितस्ती प्रमाणे, तेनात्र मात्रचो [14]लुक् ॥

---

1. कुमारलोहकाः ग. फ. 2. अत्र नास्ति क. फ. 3. पञ्च आरत्नयः क. 4. विगृह्य इत्यधिकम् फ. 5. लः नास्ति क. 6. भूतो नास्ति क. फ. ह. 7. ठको ड. 8. इत्यत्र ग. 9. परमशरावः ह. 10. इगन्तलक्षणं क. 11. नित्ये क. ह. 12. बहुमास्यः नास्ति फ. 13. इगन्तत्वात् नित्ये प्राप्ते विकल्प इष्यते इत्यधिकम् फ. 14. लोपः ब.

## सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् । (३२/३७६६)

सप्तम्यन्तं पूर्वपदं सिद्ध शुष्क पक्व बन्ध इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति [1]सा चेत् सप्तमी कालान्न भवति । सांकाश्यसिद्धः, सांकाश्यसिद्धः । काम्पिल्यसिद्धः, काम्पिल्यसिद्धः । सांकाश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तौ अन्तोदात्तौ । फिषि तु सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्' (फि. सू. ६५) अन्तः पूर्वं [2]वा इति पठचते, तत्र पक्षे मध्योदात्तावपि भवतः । शुष्क – ऊकशुष्कः । निधनशुष्कः । ऊकशब्दो [3]बहुलवचनादवतेः [4]कक्प्रत्ययान्तोऽन्तोदात्तः । निधनशब्दः निधाञः [5]क्यप्रत्यये मध्योदात्तः । पक्व – कुम्भीपक्वः । [6]कलसीपक्वः । भ्राष्ट्रपक्वः । कुम्भीकलसीशब्दौ ङीषन्ताव[7]न्तोदात्तौ । भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्तः आद्युदात्तः । बन्ध – चक्रबन्धः । [8]चारकबन्धः । चक्रशब्दोऽन्तोदात्तः । चारकशब्दो ण्वुलन्त आद्युदात्तः । अकालात् इति किम् ? पूर्वाह्णसिद्धः । अपराह्णसिद्धः । सप्तमीस्वरः कृत्स्वरेण बाधितः पुनरयं विधीयते ॥

## परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु । (३३/३७६७)

परि प्रति उप अप [9]इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि चोत्तरपदे प्रकृति[10]स्वरा भवन्ति । परित्रिगर्तं वृष्टो देवः । परिसौवीरम् । परिसार्वसेनि । प्रति – प्रतिपूर्वाह्णम् । प्रत्यपराह्णम् । [11]प्रतिपूर्वरात्रम् । प्रत्यपररात्रम् । उप – उपपूर्वाह्णम् । उपापराह्णम् । उपपूर्वरात्रम् । उपापररात्रम् । अप – अपत्रिगर्तं वृष्टो देवः । अपसौवीरम् । अपसार्वसेनि । 'निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जम्' (फि. सू. ८०) इति आद्युदात्तानि पूर्वपदानि । तत्पुरुषे बहुव्रीहौ च सिद्धत्वात् अव्ययीभावार्थोऽयमारम्भः । तत्र अपपरी वर्जने (१.४.८८/५९६) वर्तेते, इति तयोरेव वर्ज्यमानमुत्तरपदं, नेतरयोः । अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्ति इति न पृथगुदाह्रियते । वर्ज्यमानाहोरात्रावयवेषु इति किम् ? प्रत्यग्नि शलभाः पतन्ति । परिवनम् इत्यत्र 'वनं समासे' (६.२.१७८/३९१२) इत्येतद्भवति ॥

## राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु । (३४/३७६८)

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति । श्वाफल्कचैत्रकाः । चैत्रकरोधकाः । शिनिवासुदेवाः । श्वाफल्कशब्दः चैत्रकशब्दश्च 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४/१११७) इति अणन्तावन्तोदात्तौ । शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्तते । [12]राजन्य इति किम् ? द्वैप्यहैमायनाः । द्वीपे भवाः[13] इति 'द्वीपादनुसमुद्रं यञ्' (४.३.१०/१३८०) । [14]हैमेरपत्यं युवा[15] हैमायनः । अन्धकवृष्णय एते न तु राजन्याः । राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम् । एते च नाभिषिक्तवंश्याः । बहुवचनग्रहणं किम् ? सङ्कर्षणवासुदेवौ । द्वन्द्वे इति किम् ? वृष्णीनां कुमाराः वृष्णिकुमाराः । अन्धकवृष्णिषु इति किम् ? 'कुरुपञ्चालाः' (तै. ब्रा. १.८.४.२) ॥

---

1. वाक्यमिदं नास्ति फ. 2. वा नास्ति फ. 3. बहुलवचनात् नास्ति फ. 4. कप्रत्ययान्तः क, वुक् प्रत्ययान्तः ड. 5. क्विप् फ. 6. विलासीपक्वः फ. ग. ड. 7. अन्तोदात्तौ नास्ति ग. 8. चणकबन्धः फ. 9. इत्येतानि पूर्वपदप्रभृतीनि ग. 10. °स्वराणि ग. 11. प्रतिपूर्वरात्रः क. 12. राजन्यग्रहणम् क. ग. फ. 13. द्वैप्याः इत्यधिकम् ह. फ. 14. भैमेः क. ह. 15. भैमायनः क. ह.

## सङ्ख्या । (३८/३७६९)

[1]द्वन्द्वसमासे सङ्ख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति । 'एकादश'[2] (तै.सं. ४.७.११.१) । द्वादश । त्रयोदश, त्रयोदश । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ. ३३०) इति नित्त्वादाद्युदात्त एकशब्दः । त्रेस्त्रयस् आदेशोऽन्तोदात्तो निपात्यते ॥

## आचार्योपसर्जनश्चान्तेवासी । (३६/३७७०)

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वः, तत्र पूर्वपदं प्रकृतिस्वरं भवति । आपिशलपाणिनीयाः । [3]पाणिनीयरौढीयाः । रौढीयकाशकृत्स्नाः । अपिशलस्यापत्यमापिशलिराचार्यः, '[4]अत इञ्' (४.१.९५/१०९५) । तेन प्रोक्तम् (४.३.१०१/१४८१) आपिशलम्, 'इञश्च' (४.२.११२/१३३३) इत्यण् । तदधीयते येऽन्तेवासिनः तेऽप्यापिशलाः, 'प्रोक्ताल्लुक्' (४.२.६४/१२७४) इति तस्य [5]तद्धितस्याध्येतरि विहितस्य लुक् क्रियते । आपिशले[6]र्वा छात्राः आपिशलाः, इत्युभयथाप्याचार्योपसर्जनश्चान्तेवासी भवति । आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम्, सकलो द्वन्द्वः आचार्योपसर्जनो यथा विज्ञायेत । इह मा भूत्, पाणिनीयदेवदत्तौ ।

आचार्योपसर्जने इति किम् ? छान्दसवैयाकरणाः । अन्तेवासी इति किम् ? आपिशलपाणिनीये शास्त्रे ॥

## कार्तकौजपादयश्च । (३७/३७७१)

कार्तकौजपादयो [7]ये द्वन्द्वाः तेषु पूर्वपदं प्रकृतिस्वरं भवति । प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति । [8]विभक्त्यन्तानां पाठो वचन[9]विवक्षार्थः । चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः । कार्तकौजपौ । कृतस्यापत्यं, कुजपस्यापत्यम् इत्यणन्तावेतौ । सावर्णिमाण्डूकेयौ । सावर्णिरिजन्तः । अवन्त्यश्मकाः । अवन्तेरपत्यानि बहूनि, तन्निवासो जनपदोऽवन्तयः । तथा अश्मकाः । पैलश्यापर्णेयाः । युवद्वन्द्वोऽयम् । पीलायाः अपत्यं पैलः, तस्यापत्यं युवा (४.१.९२/१०८८) इति 'अणो द्व्यचः' (४.१.१५६/११८०) इति विहितस्य फिञः 'पैलादिभ्यश्च' (२.४.५९/१०८४) इति लुक् । श्यापर्णशब्दो बिदादिः, तस्यापत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः । बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयौ इत्यत्रापि भवति । कपिश्यापर्णेयाः । कपिरन्तोदात्तः, तस्यापत्यं बहुत्वे 'कपिबोधाङ्गिरसे' (४.१.१०७/१११९) इति [10]उत्पन्नस्य यञः 'यञञोश्च'

---

1. द्वन्द्वे क. 2. कुञ्चिकाः इत्यधिकम् ब. 3. उदाहरणमिदं नास्ति फ. 4. अत इञ् नास्ति फ. 5. तद्धितस्य नास्ति फ. 6. एव क. 7. ये नास्ति फ, कार्तकौञ्चपादयो क. 8. विभक्तिपाठो.9. विवक्षायाम् क. 10. उत्पन्नस्य नास्ति ब.

(२. ४. ६४/११०८) इति लुक्, तेनात्र बहुत्वमाश्रीयत एव । शैतिकाक्षपाञ्चालेयाः । शितिकाक्षो नाम ऋषिः, तस्यापत्यम् इति ऋष्यण्, तदपत्ये यूनि [1]य इञ् तस्य 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२. ४. ५८/१२७६) इति लुक् । पाञ्चालस्यापत्यं स्त्री पाञ्चाली, तदपत्यं युवा पाञ्चालेयः । अत्रापि बहुवचनमविवक्षितम् इति शैतिकाक्षपाञ्चालेयौ इत्यत्रापि भवति । कटुकवार्चलेयाः । कटुकस्य अपत्यम् इति 'अत इञ्' (४. १. ९५/१०९५), तस्य 'बह्वच इञः प्राच्यभरतेषु' (२. ४. ६६/११४८) इति बहुषु लुक् । वर्चलायाः अपत्यं वार्चलेयः । शाकलशुनकाः । शकलस्यापत्यं शाकल्यः, तस्य छात्राः शाकलाः । 'कण्वादिभ्यो गोत्रे' (४. २. १११/१३३२) इत्यण् । शुनकस्यापत्यम् इति बिदादिभ्योऽञ् (४. १. १०४/११०६), तस्य बहुषु लुक् । शाकलशणकाः इति केचित् पठन्ति । तेषां शणकशब्दादुत्पन्नस्य इञः 'बह्वच इञः प्राच्यभरतेषु' (२. ४. ६६/११४८) इति बहुषु लुक् । शुनकधात्रेयाः । [2]धात्र्या अपत्यं धात्रेयः । शणकबाभ्रवाः । बभ्रोरपत्यं बाभ्रवः । आर्चाभिमौद्गलाः । ऋचाभेन प्रोक्तमधीयते आर्चाभिनः[3] । वैशम्पायनान्तेवासित्वात् णिनिः । मुद्गलः[4] कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः । कुन्तिसुराष्ट्राः । कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयम् । [5]कुन्तिचिन्तिशब्दौ अन्तोदात्तौ । चिन्तिसुराष्ट्राः कुन्तिसुराष्ट्रवत् । तण्डवतण्डाः । पचाद्यच्प्रत्ययान्तौ अन्तोदात्तौ एतौ गर्गादिषु पठ्येते । तत्रापत्यबहुत्वे यञो लुक् क्रियते । [6]गर्गवत्साः । अत्रापि अपत्यबहुत्वे यञो लुक् । अविमत्तकामविद्धाः । अविमत्तशब्दो नञ्स्वरेणाद्युदात्तः । द्वयोरप्येतयोः अपत्येषु बहुषु इञः 'बह्वच इञः प्राच्य-भरतेषु' (२. ४. ६६/११४८) इति लुक् क्रियते । बाभ्रवशालङ्कायनाः । बभ्रोरपत्यं बाभ्रवः । [7]शलङ्कु शलङ्कं च इति शालङ्कायनः । बाभ्रवदानच्युताः । दानच्युतशब्दात् इञः बह्वचः (२ ४. ६६/११४८) इति लुक् । कठकालापाः । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वात् णिनिः, तस्य कठचरकाल्लुक् (४. ३. १०७/१४८७) । कलापिना प्रोक्तमधीयते [8]कालापाः । 'कलापिनोऽण्' (४. ३. १०८/१४८८) इत्यण् प्रत्ययः, तस्मिन् 'इनण्यनपत्ये' (६. ४. १६४/१२४५) इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पि (वा. ४६९) इत्यादिनोपसङ्ख्यानेन टिलोपः । कठकौथुमाः । कुथुमिना प्रोक्तमधीयते इति 'प्राग्दीव्यतोऽण्' (४. १. ८३/१०७३), तस्य पूर्ववत् टिलोपः । कौथुमलौकाक्षाः । लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः । लोकाक्षस्य वा अपत्यं लौकाक्षिः, तस्य छात्राः लौकाक्षाः । स्त्रीकुमारम् । स्त्रीशब्दोऽन्तोदात्तः । [9]मौदपैप्पलादाः । मुदस्यापत्यं मौदिः । तस्य छात्रा मौदाः । तथा पैप्पलादाः । मौदपैप्पलादाः इति द्विः पठ्यते, तस्य प्रयोजनं पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति । [10]वत्सजरत् । वत्सश्च जरच् च । वत्सशब्दोऽन्तोदात्तः । [11]सौश्रुतपार्थवाः । सुश्रुतस्य पृथोश्च छात्राः, 'प्राग्दीव्यतोऽण्' (४.१.८३/१०७३) । [12]जरामृत्यू । याज्यानुवाक्ये । यजेर्ण्यत्, 'यजयाचरुचप्रवचर्चश्च' (७. ३. ६६/२८८२) इति [13]कुत्वाभावः । 'तित्स्वरितम्' (६. १. १८५/३७२९) इत्यन्तस्वरितः । अनुवाक्या इति वचेरनुपूर्वात् ण्यत् । आचार्योपसर्जनान्तेवासिनाम् इह पाठः प्रपञ्चार्थः ॥

---

1. इञन्तस्य क. 2. धात्र्याः अपत्यं नास्ति फ. 3. भवति इत्यधिकम् ग. 4. वा इत्यधिकम् क. 5. वाक्यमिदं नास्ति फ. ह. 6. उदाहरणमिदं नास्ति फ. 7. नडादिषु इत्यधिकम् ह. 8. इति इत्यधिकम् ड. 9. मौदपैप्पलाः फ. 10. वत्सजरन्तः क, वत्सश्च जरन्तश्च इत्यधिकम् क, वत्सजरन्तम् ड. 11. सौश्रुतपार्थिवाः क. 12. जरामृत्यु ब. 13. कुत्वाभावात् क.

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु । (३८/३७७२)

प्रकृत्या पूर्वपदम् इति वर्तते, द्वन्द्वे इति निवृत्तम् । महान् इत्येतत्पूर्वपदं व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल रौरव प्रवृद्ध इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाजाबालः । महाभारः । महाभारतः । महाहैलिहिलः । महारौरवः । महाप्रवृद्धः । महच्छब्दोऽन्तोदात्तः, तस्य प्रतिपदोक्तो यः समासः 'सन्महत्परमोत्कृष्टाः पूज्यमानैः' (२.१.६१/७४०) इति [1]तत्रैष स्वरः । तेनैषां [2]षष्ठीसमासोऽन्तोदात्त एव भवति, महतो व्रीहिः महद्व्रीहिः इति । 'कर्मधारयेऽनिष्ठा' (६.२.४६/३७८०) इत्ययमपि श्रेण्यादिसमासे विधिः इति[3] प्रवृद्धशब्दः इह पठ्यते ॥

## क्षुल्लकश्च वैश्वदेवे । (३९/३७७३)

क्षुल्लक इत्येतत् पूर्वपदं [4]महांश्च वैश्वदेवे उत्तरपदे प्रकृतिस्वरं भवति । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् क्षुधं लाति इति क्षुल्लः । तस्माद् अज्ञातादिषु प्रागिवात् केऽन्तोदात्तः क्षुल्लकशब्दः ॥

## उष्ट्रः सादिवाम्योः । (४०/३७७४)

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति । उष्ट्रसादि । [5]उष्ट्रवामि । उष्ट्रशब्द उषेः ष्ट्रन् (उ.४.१६२) प्रत्ययान्तः आद्युदात्तः । कर्मधारयोऽयं षष्ठीसमासो वा ॥

## गौः सादसादिसारथिषु । (४१/३७७५)

गोशब्दः पूर्वपदं साद सादि सारथि इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति । गोः सादः गोसादः । गां सादयति इति वा गोसादः । गोः सादिः गोसादिः । गोसारथिः ॥

---

1. तत्रैव ड. 2. षष्ठीसमासे क. 3. प्रतिप्रोक्तत्वात् इत्यधिकम् क. 4. चकारात् महान् च ह.
5. उष्ट्रवामि नास्ति ह.

## कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूपण्यकम्बलो दासीभाराणां च। (४२/३७७६)

कुरुगार्हपत रिक्तगुरु असूतजरती अश्लीलदृढरूपा पारेवडवा तैतिलकद्रू पण्यकम्बल [1]इत्येते समासाः, तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं कुरुगार्हपतम्। 'कृग्रोरुच्च' (उ. २४) इति कुरुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः।

[७०७] कुरुवृज्योर्गार्हपत इति वक्तव्यम्। (म. भा. ३.१२६)

वृजीनां गार्हपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः।

रिक्तो गुरुः [2]रिक्तगुरुः, रिक्तगुरुः। 'रिक्ते विभाषा' (६.१.२०८/३६९६) इति पूर्वपदमाद्युदात्तमन्तोदात्तं वा। असूता जरती असूतजरती। अश्लीला दृढरूपा [3]अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीः यस्यास्ति तत् श्लीलम्। सिध्मादेराकृतिगणत्वाल्लच्। कपिलकादित्वाच् च लत्वम्। अश्लीलदृढरूपा इति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहिता उच्यते। पारे वडवा इव पारेवडवा। [4]निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादित्वादन्तोदात्तः। [5]तैतिलानां कद्रूः तैतिलकद्रूः। तितिलिनोऽपत्यं छात्रो वा तैतिलः इत्यणन्तः। पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः।

[७०८] पण्यकम्बलः सञ्ज्ञायामिति वक्तव्यम्।

अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे द्वितीया कृत्या इत्येष [6]विहितः स्वरितः।

दास्या भारः दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। [7]अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशब्दः आद्युदात्तः। शृस्वृस्निहित्रप्यसिवसि (उ. १०) इत्यत्र[8] 'धान्ये नित्' (उ. ९) इति वर्तते[9]। ओषधिः। ओषो धीयतेऽस्याम् इति 'कर्मण्यधिकरणे च' (३.३.९३/३२७१) इति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमाः। 'चन्द्रे मो डित्' (उ. ६७७) इति असिप्रत्ययान्तोऽयम्। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादन्तोदात्तः। [10]यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, न च विहितं, स सर्वो दासीभारादिषु द्रष्टव्यः॥

## चतुर्थी तदर्थे। (४३/३७७७)

चतुर्थ्यन्तं पूर्वपदं तदर्थे उत्तरपदे तदभिधेयार्थं यत् तद्वाचिन्युत्तरपदे [11]प्रकृतिस्वरं भवति। तत् इति चतुर्थ्यन्तस्यार्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम्। यूपशब्द आद्युदात्तः। 'कुसुयुभ्यश्च' (उ. ३१४) इत्यत्र नित् इति वर्तते। कुण्डलशब्दोऽपि 'वृषादिभ्यश्चित्' (उ. ११२) इति [12]कलप्रत्ययान्तोऽन्तोदात्तः।

---

1. इत्येतेषां समासानाम् ह. 2. उदाहरणमिदं नास्ति फ. 3. अश्लीला दृढरूपा श्रीः यस्या इति इत्यधिकम् क. 4. निपातनादेव इत्यर्थो ड. 5. तैतिलादीनां क. ब. फ. 6. स्वरो विहितः क. 7. वाक्यमिदं नास्ति फ. 8. क्विः इत्यधिकम् ब. 9. देवनीतिः देवशब्दोऽन्तोदात्तः इत्यधिकम् क. 10. यद् विहितलक्षणपूर्वपदं तत्सर्वं दासीभारादिषु द्रष्टव्यम् ह. 11. परतः इत्यधिकम् ह. 12. कलप्रत्ययान्तः नास्ति फ.

रथदारु । वल्लीहिरण्यम् । रथशब्द आद्युदात्तः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ. १६७) इत्यादिना क्थन्प्रत्ययः । वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः । तदर्थे इति किम् ? कुबेरबलिः । प्रकृतिविकारभावे स्वरोऽयमिष्यते ॥

## अर्थे । (४४/३७७८)

चतुर्थी इति वर्तते । अर्थशब्दे उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति । [1]मात्रे इदं मात्रर्थम् । पित्रर्थम् । देवतार्थम् । अतिथ्यर्थम् । मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ । देवताशब्दो लित्स्वरेण मध्योदात्तः । अतिथिः इति अतेरिथिन् इति इथिन्प्रत्ययान्तः । तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यं इत्यतदर्थार्थोऽयमारम्भः । केचित् पुनराहुः ज्ञापकार्थमिदम् । एतदनेन ज्ञाप्यते, पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति । अश्वघासः, श्वश्रूसुरम् इत्यत्र सत्यपि तादर्थ्ये न भवति ॥

## क्ते च । (४५/३७७९)

क्तान्ते चोत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति । गोहितम् । अश्वहितम् । मनुष्यहितम् । गोरक्षितम् । अश्वरक्षितम् । वनं तापसरक्षितम् । अश्वशब्द आद्युदात्तः । मनुष्यशब्दोऽन्तस्वरितः । परिशिष्ट-[2]पूर्वपदमन्तोदात्तम् । गोभ्यो रक्षितम्[3] इति सम्प्रदाने चतुर्थी ॥

## कर्मधारयेऽनिष्ठा । (४६/३७८०)

[4]कर्मधारये समासे क्तान्ते उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति । श्रेणिकृताः । ऊककृताः । पूगकृताः । निधनकृताः । श्रेणिशब्द आद्युदात्तः । ऊकपूगशब्दावन्तोदात्तौ । निधनशब्दोऽयं मध्योदात्तः । कर्मधारये इति किम् ? श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा इति किम् ? कृताकृतम् ॥

## अहीने द्वितीया । (४७/३७८१)

अहीनवाचिनि समासे क्तान्ते उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति । कष्टश्रितः । त्रिशकल-पतितः । ग्रामगतः । [5]कष्टशब्दोऽन्तोदात्तः । त्रीणि शकलानि अस्य त्रिशकलः, [6]बहुव्रीहिस्वरेणाद्युदात्तः । ग्राम-शब्दो नित्स्वरेणाद्युदात्तः । अहीने इति किम् ? कान्तारातीतः । योजनातीतः ।

[७०९] द्वितीयाऽनुपसर्गे इति वक्तव्यम् । (म. भा. ३.१२६)

इह मा भूत्, सुखप्राप्तः । दुःखप्राप्तः । सुखापन्नः । दुःखापन्नः । अन्तः थाथेत्यस्या-पवादोऽयम् ॥

---

1. पित्रे इदं पित्रर्थम् ब. क. फ. 2. पूर्वं नास्ति ह. 3. गोरक्षितम् इत्यधिकम् क. फ. 4. क्ते इति वर्तते इत्यधिकम् ब. ग. 5. अनिष्ठान्तत्वात् इत्यधिकम् ह. 6. त्रिशकलशब्दः इत्यधिकम् ह.

## तृतीया कर्मणि । (४८/३७८२)

कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति । अहिहतः, अहिहतः । [1]वज्रहतः । महाराजहतः । नखनिर्भिन्ना । [2]दात्रलूना । 'आङि श्रिहनिभ्यां ह्रस्वश्च' (उ. ५८७) इति अहिरन्तोदात्तो व्युत्पादितः । केचिदाद्युदात्तमिच्छन्ति । [3]वज्रो रक्प्रत्ययान्तः । महाराजष्टच्प्रत्ययान्तः । नास्य खमस्तीति बहुव्रीहौ नकुलनखेति नखशब्दो निपातितः । तेन[4] 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्यन्तोदात्तः । दात्रशब्दो दाम्नीशस (३.२.१८२/३१६२) इति ष्ट्रन्प्रत्ययान्तः । कर्मणि इति किम् ? रथेन यातः [5]रथयातः । गत्यर्थत्वात् कर्तरि क्तः ॥

## गतिरनन्तरः । (४९/३७८३)

[6]क्ते कर्मणि इति वर्तते । कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति । प्रकृतः । प्रहृतः । अनन्तरः इति किम् ? [7]अभ्युद्धृतः । समुद्धृतः । [8]समुदाहृतः । व्यवहितस्य गतेरयं स्वरो न भवति । अनन्तरे पुनरिष्यते । कारकपूर्वस्य तु सति [9]शिष्टत्वात् थाथादिस्वर एव भवति दूरादागतः इति । अनन्तरग्रहणसामर्थ्यादेव कृद्ग्रहणे [10]गतिकारकपूर्वस्यापि (व्या.प. १२६) इत्येतन्नाश्रीयते । कर्मणि इत्येव, प्रकृतः कटं देवदत्तः । थाथादिस्वरापवादो योगः ॥

## तादौ च निति कृत्यतौ । (५०/३७८४)

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः [11]प्रकृतिस्वरो भवति । [12]प्रकर्ता । प्रकर्तुम् । प्रकृतिः । प्रकर्ता इति तृन्नन्तः । कृत्स्वरबाधनार्थं वचनम् । तादौ इति किम् ? प्रजल्पाकः । निति इति किम् ? प्रकर्ता । तृजन्तः । कृद्ग्रहणमुपदेशे तादार्थ्यम् । इहापि यथा स्यात्, प्रलपिता । प्रलपितुम् । अतौ इति किम् ? [13]आगन्तुः ॥

## तवै चान्तश्च युगपत् । (५१/३७८५)

तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वरः इति एतदुभयं युगपद् भवति । 'अन्वेतवै' (तै.सं. १.४.४५.१) । [14]परिस्तरितवै । [15]परिपातवै । '[16]तस्मादग्निचिन्नाभिचरितवै' (तै. सं. ५.६.३.१) । उपसर्गा आद्युदात्ता अभिवर्जम् (फि. ८१) इत्यभिरन्तोदात्तः । कृत्स्वरापवादो योगः ॥

## अनिगन्तोऽञ्चतौ वप्रत्यये । (५२/३७८६)

अनिगन्तो गतिः [17]प्रकृतिस्वरो भवति अञ्चतौ वप्रत्यये परतः । प्राङ्, प्राञ्चौ, प्राञ्चः । प्राङ्, प्राञ्चौ,

---

1. रुद्रहतः क.ड.ह.फ. 2. दारुलूना ग.ह. 3. रुद्रो क. 4. एव इत्यधिकम् क. 5. इति इत्यधिकम् फ. 6. वाक्यमिदं नास्ति क.ग.फ.ह. 7. अत्युद्धृतः क. 8. समुदाहृतः नास्ति क. 9. शिष्टथाथादित्वात् ह. 10. गतिकारकपूर्वपदस्य कृते ग्रहणे क. 11. पूर्वपद इत्यधिकम् ह. 12. कर्ता कर्तुम् ग.ह. 13. आगन्तुम् ह. 14. परिस्तरीतवै क. 15. परिपातवै नास्ति ह. 16. तस्मात् पिता मुद्रितः पाठः 17. पूर्वपद इत्यधिकम् फ.

प्राञ्चः । 'स्वरितो वाऽनुदात्ते पदादौ' (८.२.६/३६५९) इत्ययमेकादेशः उदात्तः स्वरितो वा । पराङ्, पराञ्चौ, [1]पराञ्चः (तै.सं. ३.१.१०.३) । अनिगन्तः इति किम् ? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः । कृदुत्तरपदप्रकृतिस्वर इह भवति । [2]वप्रत्यये इति किम् ? उदञ्चनः । चोरनिगन्तोऽञ्चतौ वप्रत्ययः इत्येष स्वरो भवति विप्रतिषेधेन । पराचः । पराचा ॥

## न्यधी च । (५३/३७८७)

नि अधि इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः । न्यङ्, न्यञ्चौ, न्यञ्चः । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४/३६५७) इत्यञ्चतेरकारः स्वरितः । अध्यङ्, अध्यञ्चौ, अध्यञ्चः । अधीचः । अधीचा[3] ॥

## ईषदन्यतरस्याम् । (५४/३७८८)

ईषत् इत्येतत् पूर्वपदम् अन्यतरस्यां प्रकृतिस्वरं भवति । ईषत्कडारः, ईषत्कडारः । [4]ईषत्पिङ्गलः, ईषत्पिङ्गलः । ईषत् इत्ययमन्तोदात्तः । ईषद्भेदः इत्येवमादौ कृत्स्वर एव भवति ॥

## हिरण्यपरिमाणं धने । (५५/३७८९)

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्दे उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । द्विसुवर्णधनम्, द्विसुवर्णधनम् । द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णम्,तदेव धनमिति कर्मधारयः । बहुव्रीहावपि परत्वाद् विकल्प एव भवति । द्विसुवर्णधनः, द्विसुवर्णधनः । हिरण्यग्रहणम् किम् ? प्रस्थधनम् । [5]परिमाणग्रहणं किम् ? काञ्चनधनम् । धने इति किम् ? निष्कमाला ॥

## प्रथमोऽचिरोपसम्पत्तौ । (५६/३७९०)

प्रथमशब्दः पूर्वपदमचिरोपसम्पत्तौ गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । अचिरोपसम्पत्तिः [6]अचिरोपश्लेषः, अभिनवत्वम् । प्रथमवैयाकरणः, प्रथमवैयाकरणः । [7]अभिनववैयाकरणः, [8]सम्प्रति व्याकरणमध्येतुं प्रवृत्तः इत्यर्थः । प्रथमशब्दः 'प्रथेरमच्' (उ. ७५७) इति चित्त्वादन्तोदात्तः । अचिरोपसम्पत्तौ इति किम् ? प्रथमवैयाकरणः । वैयाकरणानामाद्यो मुख्यो वा यः स नित्योऽन्तोदात्तः एव[9] ॥

---

1. पराञ्चः नास्ति फ. 2. प्रत्यये इति ह. 3. अधिराद्युदात्तः इत्यधिकम् ह. 4. ईषत्पिङ्गलः नास्ति फ. 5. हिरण्यपरिमाणग्रहणं किम् ? काञ्चनधनः ह. 6 अचिरोपसंश्लेषः क.ड.ग.फ. 7. अभिनववैयाकरणः नास्ति फ. 8. स तु इत्यधिकम् फ, संप्रति–अन्तोदात्तः नास्ति क. 9. भवति इत्यधिकम् फ.

## कतरकतमौ कर्मधारये । (५७/३७९१)

कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । कतरकठः, कतरकठः । कतमकठः, कतमकठः[1] । कर्मधारयग्रहणमुत्तरार्थमिह तु प्रतिपदोक्तत्वादेव सिद्धम् ॥

## आर्यो ब्राह्मणकुमारयोः । (५८/३७९२)

आर्यशब्दः पूर्वपदं ब्राह्मणकुमारयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । आर्यब्राह्मणः, आर्यब्राह्मणः । आर्यकुमारः, आर्यकुमारः । आर्यशब्दः ण्यदन्तोऽन्तस्वरितः । आर्यः इति किम् ? [2]परमब्राह्मणः । परमकुमारः । [3]ब्राह्मणकुमारयोः इति किम् ? आर्यक्षत्रियः । कर्मधारये इत्येव, आर्यस्य ब्राह्मणः आर्यब्राह्मणः ॥

## राजा च । (५९/३७९३)

[4]राजा च पूर्वपदं ब्राह्मणकुमारयोः उत्तरपदयोः कर्मधारये समासे अन्यतरस्यां प्रकृतिस्वरं भवति । राजब्राह्मणः, राजब्राह्मणः । राजकुमारः, राजकुमारः । कर्मधारये इत्येव, राज्ञो ब्राह्मणः राजब्राह्मणः । राजकुमारः । पृथग्योगकरणम् उत्तरार्थम् ॥

## षष्ठी प्रत्येनसि । (६०/३७९४)

राजा इति वर्तते, अन्यतरस्याम् इति च । षष्ठ्यन्तो [5]राजशब्दः पूर्वपदं प्रत्येनसि उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । राज्ञः प्रत्येनाः राजप्रत्येनाः, राजप्रत्येनाः । षष्ठी इति किम् ? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः[6] ॥

## क्ते नित्यार्थे । (६१/३७९५)

क्तान्ते उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । नित्यप्रहसितः, नित्यप्रहसितः । सततप्रहसितः, सततप्रहसितः । कालाः (२. १. २८/६९०) इति द्वितीयासमासोऽयम् । नित्यशब्दः 'त्यब्नेर्ध्रुवे' (वा. ४३४) इति [7]त्यबन्तः आद्युदात्तः । सतत इति यदा भावे क्तः तदा थाथादिस्वरेणान्तोदात्तः[8] । नित्यार्थे इति किम् ? मुहूर्तप्रहसितः ॥

## ग्रामः शिल्पिनि । (६२/३७९६)

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । ग्रामनापितः, ग्रामनापितः । ग्रामकुलालः, ग्रामकुलालः । ग्रामशब्दः आद्युदात्तः । ग्रामः इति किम् ? परमनापितः । शिल्पिनि इति किम् ? [9]ग्रामरथ्या ॥

---

1. कतरकलापः कतमकलापः । कतरकतमौ शब्दौ अन्तोदात्तौ इत्यधिकम् ह. 2. परमब्राह्मणः नास्ति फ. 3. वाक्यमिदं नास्ति फ. 4. राजशब्दः ह, राजन्शब्दः ग. 5. राजन्शब्दः ब. क. 6. राजशब्दः उक्तस्वरः इत्यधिकम् ह. 7. त्यन्नन्तः फ, त्यबाद्युदात्तः ह. 8. यदा तु कर्मणि क्तः तदा गतिस्वरेण आद्युदात्तः । क्त इति किम् ? सततनापितः इत्यधिकम् ड. 9. ग्रामभार्या फ.

## राजा च प्रशंसायाम् । (६३/३७९७)

राजशब्दः पूर्वपदं शिल्पिवाचिनि उत्तरपदे प्रशंसायां [1]गम्यमानायाम् अन्यतरस्यां प्रकृतिस्वरं भवति । राजनापितः, राजनापितः । राजकुलालः, राजकुलालः । कर्मधारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा । षष्ठीसमासे च राजयोग्यतया तस्य । राजा इति किम् ? परमनापितः । प्रशंसायाम् इति किम् ? [2]राजनापितः । शिल्पिनि इत्येव, राजहस्ती ॥

## आदिरुदात्तः । (६४/३७९८)

आदिरुदात्तः इत्येतदधिकृतम्[3] । इत उत्तरं यद् वक्ष्यामः तत्र पूर्वपदस्य आदिरुदात्तो भवति इत्येवं[4] तद्वेदितव्यम् । वक्ष्यति–'सप्तमीहारिणौ धर्म्येऽहरणे' (६. २. ६५/३७९९) इति । [5]स्तूपेशाणः । मुकुटेकार्षापणम् । याज्ञिकाश्वः । वैयाकरणहस्ती । [6]दृषदिमाषकः । आदिरिति प्रागन्ताधिकारात् (६. २. १४३/३८७७) । उदात्तः इति 'प्रकृत्या भगालम्' (६. २. १३७/३८७१) इति यावत् ॥

## सप्तमीहारिणौ धर्म्येऽहरणे । (६५/३७९९)

सप्तम्यन्तं हारिवाचि [7]च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति । [8]हारि इति देयं यः [9]स्वीकरोति सोऽभिधीयते । धर्म्यम् इत्याचारनियतं देयमुच्यते । धर्मो हि अनुवृत्त आचारः, [10]तस्मादनपेतं तेन वा प्राप्यम् इति । स्तूपेशाणः । मुकुटेकार्षापणम् । हलेद्विपदिका । हलेत्रिपदिका । दृषदिमाषकः । सञ्ज्ञायाम् इति सप्तमीसमासः, कारनाम्नि च (६. ३. १०/९६८) इति विभक्तेरलुक् । हारिणि – याज्ञिकाश्वः । [12]वैयाकरणहस्ती । मातुलाश्वः । पितृव्यगवः । क्वचिदयमाचारो व्यवस्थितः, स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनामश्वादि इति ।

धर्म्ये इति किम् ? स्तम्बेरमः । [13]कर्मकरवर्धितकः । अहरणे इति किम् ? वाडवहरणम् । वडवायाः अयं वाडवः । तस्य बीजनिषेकादुत्तरकालं शरीरपुष्टयर्थं यद् दीयते हरणम् इति तदुच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन इत्येतदहरणे इत्यनेन ज्ञाप्यते, तेन वाडवहार्यम् इति हारिस्वरः [14]सिद्धो भवति ॥

## युक्ते च । (६६/३८००)

युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति । गोबल्लवः । अश्वबल्लवः । गोमणिन्दः । अश्वमणिन्दः । गोसङ्ख्यः । अश्वसङ्ख्यः । युक्तः इति समाहितः, कर्तव्ये तत्परो यः स उच्यते ॥

## विभाषा अध्यक्षे । (६७/३८०१)

अध्यक्षशब्दे उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति । गवाध्यक्षः, गवाध्यक्षः । अश्वाध्यक्षः, अश्वाध्यक्षः[15] ॥

---

1. अर्थे फ. ह. 2. राज्ञो नापितः इत्यधिकम् ह. 3. वेदितव्यम् इत्यधिकम् ग. क. 4. अधिकृतम् इत्यधिकम् फ. 5. सूर्येशाणः ड. 6. दृषदिमाषकः नास्ति फ. 7. च नास्ति फ. ह. 8. हरति इति हारि इत्यधिकम् ह. 9. स्वीकर्ता ह. 10. धर्म्यम् इत्यधिकम् फ. 11. शूर्पेशालः ड. 12. वैयाकरणहस्ती नास्ति फ. 13. वर्धितको नाम मूले स्थूलः अग्रे सूक्ष्मः ओदनपिण्डः कर्मकाराय दीयतेऽन्यथा कर्म न कुर्यात् इति धर्मः इत्यधिकम् फ. 14. ज्ञाप्यते क. ग. ह. 15. पूर्वेण नित्ये प्राप्ते वचनम् इत्यधिकम् फ.

## पापं च शिल्पिनि । (६८/३८०२)

पापशब्दः[1] शिल्पिवाचिनि उत्तरपदे [2]विभाषा आद्युदात्तो भवति[3] । पापनापितः, पापनापितः । पापकुलालः, पापकुलालः । 'पापाणके कुत्सितैः' (२.१.५४/७३३) इति पापशब्दस्य प्रतिपदोक्तः[4] समानाधिकरण[5]समासः इति [6]षष्ठीसमासे न भवति, पापस्य नापितः पापनापितः इति ॥

## गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे । (६९/३८०३)

गोत्रवाचिनि अन्तेवासिवाचिनि चोत्तरपदे [7]माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । जङ्घावात्स्यः । यो जङ्घादानं ददान्यहम् इति वात्स्यः सम्पद्यते स जङ्घावात्स्यः इति क्षिप्यते । भार्यासौश्रुतः । सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । वशाब्रह्मकृतेयः । ब्रह्मकृतशब्दः शुभ्रादिषु पठ्यते । गोत्र ।

अन्तेवासि – कुमारीदाक्षाः । कम्बलचारायणीयाः । घृतरौढीयाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते । अन्तेवासि ।

माणव – भिक्षामाणवः । भिक्षां लप्स्ये[8]ऽहमिति माणवो भवति[9] । माणव । ब्राह्मण – दासीब्राह्मणः । वृषलीब्राह्मणः । भयब्राह्मणः । यो भयेन ब्राह्मणः सम्पद्यते । अत्र यस्यान्यत् समासलक्षणं नास्ति,[10] सुप्सुपा इत्येव तत्र समासः कर्तव्यः । गोत्रादिषु इति किम् ? दासीश्रोत्रियः । क्षेपे इति किम् ? महाब्राह्मणः ॥

## अङ्गानि मैरेये । (७०/३८०४)

मैरेयशब्दे उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति । गुडमैरेयः । मधुमैरेयः । मद्यविशेषो मैरेयस्तस्य गुडविकारस्य गुडोऽङ्गं भवति, मधुविकारस्य तस्य मधु अङ्गम् । अङ्गानि इति किम् ? परममैरेयः । मैरेये इति किम् ? [11]पुष्पासवः । फलासवः ॥

## भक्ताख्यास्तदर्थेषु । (७१/३८०५)

भक्तमन्नम्, तदाख्यास्तद्वाचिनः शब्दाः, तदर्थेषूत्तरपदेषु आद्युदात्ता भवन्ति । [12]भिक्षाकंसः । श्राणाकंसः । भाजीकंसः । भिक्षादयो[13]ऽन्नवचनाः । भक्ताख्याः इति किम् ? समाशशालयः । समशनं समाशः इति क्रियामात्रमुच्यते, न द्रव्यम् । तदर्थेषु इति किम् ? [14]भिक्षाप्रियः । बहुव्रीहिरयम्, अत्र पूर्वपदमन्तोदात्तम् ॥

## गोबिडालसिंहसैन्धवेषूपमाने । (७२/३८०६)

गवादिषु उपमानवाचिषु उत्तरपदेषु पूर्वपदमाद्युदात्तं भवति । धान्यगवः । [15]भिक्षाबिडालः । तृणसिंहः ।

---

1. पूर्वपदम् इत्यधिकम् फ. 2. परतः इत्यधिकम् ह. 3. चकारो विभाषानुकर्षणार्थः इत्यधिकम् ह. 4. समासः इत्यधिकम् ह. 5. समासः नास्ति ह. 6. षष्ठीसमासो फ. 7. माणव ब्राह्मण इत्यनयोः फ. 8. अहं नास्ति फ. 9. श्राद्धमाणवः ब्राह्मणः इत्यधिकम् ह. 10. तस्य इत्यधिकम् फ. 11. पुष्पासवः नास्ति फ. 12. उदाहरणमिदं नास्ति फ. 13. अन्नविशेषाः फ. 14. श्राणाप्रियः फ. 15. श्राणाविडालः ग.

काष्ठसिंहः । सक्तुसैन्धवः । पानसैन्धवः । धान्यं गौरिव इति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः (२.१.५६/७३५) इति समासः । उपमानार्थोऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः । गवाकृत्या [1]संनिवेशितं धान्यं धान्यगवशब्देनोच्यते । उपमाने इति किम् ? परमसिंहः ॥

## अके जीविकार्थे । (७३/३८०७)

अक[2]प्रत्ययान्ते उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । दन्तलेखकः । नखलेखकः । अवस्करशोधकः । रमणीयकारकः । दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते । 'नित्यं क्रीडाजीविकयोः' (२.२.१७/७११) इति समासः । अके इति किम् ? रमणीयकर्ता । जीविकार्थे इति किम्? इक्षुभक्षिकां मे धारयसि ॥

## प्राचां क्रीडायाम् । (७४/३८०८)

[3]प्राग्देशवर्तिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तं भवति । उद्दालकपुष्पभञ्जिका । वीरणपुष्पप्रचायिका । शालभञ्जिका । तालभञ्जिका । 'सञ्ज्ञायाम्' (३.३.१०९/३२८६) इति [4]ण्वुल् । 'नित्यं क्रीडाजीविकयोः' (२.२.१७/७११) इति षष्ठीसमासः । प्राचाम् इति किम् ? जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । क्रीडायाम् इति किम् ? तवपुष्पप्रचायिका । पर्याये ण्वुच्प्रत्ययो भवति ॥

## अणि नियुक्ते । (७५/३८०९)

अणन्ते उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । छत्रधारः । तूणीरधारः । [5]कमण्डलुग्राहः । भृङ्गारधारः । नियुक्तोऽधिकृतः, स च कस्मिंश्चित् कर्तव्ये तत्परो न भवति इति [6]नियुक्तः इत्यनेन सिध्यति । नियुक्तः इति किम् ? काण्डलावः । शरलावः ॥

## शिल्पिनि चाकृञः । (७६/३८१०)

शिल्पिवाचिनि समासे अणन्ते उत्तरपदे पूर्वपदमाद्युदात्तं भवति, स चेदण् कृञो न भवति । तन्तुवायः । तुन्नवायः । वालवायः । शिल्पिनि इति किम् ? काण्डलावः । शरलावः । अकृञः इति किम् ? कुम्भकारः । अयस्कारः ॥

---

1. अवस्थितम् ड.ह.ग. 2. प्रत्ययान्ते नास्ति फ. 3. प्राग्देशवर्तिनी क. 4. वुञ् क. 5. कमण्डलुग्राहः नास्ति फ. 6. नियुक्ते फ.

## सञ्ज्ञायां च । (७७/३८११)

सञ्ज्ञायां[1] विषये अणन्ते उत्तरपदे अकृञः पूर्वपदमाद्युदात्तं भवति । तन्तुवायो नाम [2]कीटः । वालवायो नाम पर्वतः । अकृञः इत्येव, रथकारो नाम [3]ब्राह्मणः ॥

## गोतन्तियवं पाले । (७८/३८१२)

गो तन्ति यव इत्येतानि [4]पूर्वपदानि पालशब्दे उत्तरपदे आद्युदात्तानि भवन्ति । गोपालः । तन्तिपालः[5] । यवपालः । अनियुक्तार्थ आरम्भः । गोतन्तियवम् इति किम् ? वत्सपालः । पाले इति किम् ? गोरक्षः ॥

## णिनि । (७९/३८१३)

[6]णिनन्ते उत्तारपदे पूर्वपदमाद्युदात्तं भवति । [7]पुष्पहारी । फलहारी । पर्णहारी ॥

## उपमानं शब्दार्थप्रकृतावेव । (८०/३८१४)

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतौ एव [8]णिनन्ते उत्तारपदे आद्युदात्तं भवति[9] । उपमानं नियम्यते । [10]उष्ट्रक्रोशी । ध्वाङ्क्षरावी । [11]खरनादी । उपमानग्रहणमस्य[12] पूर्वस्य च योगस्य विषयविभागार्थम् । शब्दार्थप्रकृतौ इति किम् ?[13] वृकवञ्ची । वृकप्रेक्षी । प्रकृतिग्रहणं किम् ? प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवति तत्रैव यथा स्याद्, इह मा भूद् गर्दभोच्चारी, कोकिलाभिव्याहारी इति । एवकारकरणमुपमाना-वधारणार्थम् । शब्दार्थप्रकृतौ त्वनुपमानमुपमानं च आद्युदात्तं भवति । सिंहविनर्दी । पुष्कलजल्पी ॥

## युक्तारोह्यादयश्च । (८१/३८१५)

युक्तारोह्यादयः[14] समासाः आद्युदात्ता भवन्ति । युक्तारोही । [15]आगतरोही । आगतयोधी । आगत-वञ्ची । आगतनर्दी । आगतप्रहारी । एते णिनन्ताः 'णिनि' (६.२.७९/३८१३) इत्यस्यैवोदाहरणार्थं पठ्यन्ते । पूर्वोत्तरपदनियमार्था इति केचित् । इह मा भूत्, वृक्षारोही, युक्ताध्यायी इति । आगतमत्स्या । क्षीरहोता । भगिनीभर्ता । याजकादित्वात् षष्ठीसमासावेतौ । ग्रामगोधुक् । अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः । शणपादः । समपादः । षष्ठीसमासा एते । एकशितिपात् । एकः शितिः पादोऽस्य इति त्रिपदो बहुव्रीहिः । तत्र एकशितिशब्दस्तद्धितार्थोत्तरपदः इति तत्पुरुषसञ्ज्ञः, तस्य निमित्तिस्वरबलीयस्त्वाद् अन्तो-

---

1. च इत्यधिकम् क. 2. कीटकः ह. 3. जातिः ह. 4. पूर्वपदानि नास्ति फ. 5. तन्तिः बन्धनरज्जुः इत्यधिकम् फ. 6. ण्यन्ते फ. 7. पुष्पहारी नास्ति क. फ. ग. 8. णिनि क, णिन्नन्ते ह. 9. पूर्वेण सिद्धे नित्यार्थवचनम् इत्यधिकम् ह. 10. उष्ट्र इव क्रोशति इति इनिः इत्यधिकम् ड. 11. खरनादी नास्ति ग. 12. च इत्यधिकम् क, पूर्वस्य च योगस्य नास्ति फ. 13. वृकवञ्ची – किम् नास्ति ह. 14. शब्दाः ह. 15. उदाहरणमिदं नास्ति फ.

दात्तत्वं प्राप्तमित्याद्युदात्तत्वं विधीयते। एवमपि नार्थ एतेन, 'इगन्त° द्विगौ' (६.२.२९/३७६३) इति सिद्धत्वात्? एवं तर्हि ज्ञापनार्थम्। एतज् ज्ञापयति शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवति इति। तेन द्विशितिपाद् इत्यत्र तिशब्द उदात्तो भवति। निमित्तिस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति। पात्रेसमितादयश्च (२.१.४८/७२५) युक्तारोह्यादयस्ततस्तेऽप्याद्युदात्ता भवन्ति॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे। (८२/३८१६)

दीर्घान्तं पूर्वपदम्, काश तुष भ्राष्ट्र वट इत्येतानि च जे[1] उत्तरपदे आद्युदात्तानि भवन्ति। कुटीजः। शमीजः। [2]काशजः। तुषजः। भ्राष्ट्रजः। वटजः॥

## अन्त्यात् पूर्वं बह्वचः। (८३/३८१७)

जे[3] उत्तरपदे बह्वचः पूर्वपदस्य अन्त्यात् पूर्वमुदात्तं भवति। उपसरजः। मन्दुरजः। आमलकीजः। वडवाजः। बह्वचः इति किम्? दग्धजानि तृणानि॥

## ग्रामेऽनिवसन्तः। (८४/३८१८)

[4]ग्रामशब्दे उत्तरपदे पूर्वपदमाद्युदात्तं भवति न चेद् [5]निवसद्वाचि भवति। मल्लग्रामः। वणिग्ग्रामः। ग्रामशब्दोऽत्र समूहवाची। देवग्रामः। [6]देवस्वामिकः इत्यर्थः। अनिवसन्तः इति किम्? दाक्षिग्रामः। माहकिग्रामः। दाक्ष्यादयो [7]निवसन्ति यस्मिन् ग्रामे स[8] तेषाम् इति व्यपदिश्यते॥

## घोषादिषु च। (८५/३८१९)

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। दाक्षिघोषः। दाक्षिकटः। दाक्षिपल्वलः। दाक्षिह्रदः। दाक्षिबदरी। [9]दाक्षिपिङ्गलः। [10]दाक्षिपिशङ्गः। [11]दाक्षिशालः। दाक्षिरक्षा। दाक्षिशिल्पी। [12]दाक्ष्यश्वत्थः। कुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिप्रेक्षा। दाक्षिकूटः। यान्यत्र निवासनामधेयानि तेषु [13]निवसद्वाचीनि अपि पूर्वपदानि आद्युदात्तानि भवन्ति। अनिवसन्तः इति नानुवर्तयन्ति केचित्। अपरे पुनरनुवर्तयन्ति॥

## छात्र्यादयः शालायाम्। (८६/३८२०)

शालायाम् उत्तरपदे छात्र्यादयः आद्युदात्ता भवन्ति। [14]छात्रिशाला। ऐलिशाला। भाण्डिशाला।

छात्रि। [15]ऐलि। भाण्डि। व्याडि। आपिशलि। आखण्डि। आपारि। गोमि।

यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदापि 'तत्पुरुषे शालायां नपुंसके' (६.२.१२३/३८५७) इत्येतस्मात् पूर्वविप्रतिषेधेन पूर्वपदमाद्युदात्तं भवति। छात्रिशालम्। ऐलिशालम्॥

---

1. शब्दे इत्यधिकम् ह. 2. काशजः नास्ति फ. 3. शब्दे इत्यधिकम् फ. 4. ग्रामे फ. 5. निवसति फ. ह. 6. देवस्वामिकृतः ह. 7. वसन्ति ड. 8. दाक्षिग्राम इत्युच्यते ब, दाक्षिग्राम इति व्यपदिश्यते ह. 9. दाक्षिपिङ्गलः नास्ति ग. 10. दाक्षिपिशङ्गः नास्ति ह. 11. दाक्षिमशकः फ, नास्ति क. 12. दाक्ष्यश्वः क. ह. 13. निवासवाची क. ह. 14. दाक्षिशाला फ. 15. ऐडिशाला फ.

## प्रस्थेऽवृद्धमकर्क्यादीनाम् । (८७/३८२१)

प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति । इन्द्रप्रस्थः । कुण्डप्रस्थः । ह्रदप्रस्थः । [1]सुवर्णप्रस्थः । अवृद्धम् इति किम् ? दाक्षिप्रस्थः । माहकिप्रस्थः । अकर्क्यादीनाम् इति किम् ? कर्कीप्रस्थः । मघीप्रस्थः ।

कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक । [2]कुरल । बदर । कर्क्यादिः ॥

## मालादीनां च । (८८/३८२२)

प्रस्थे इति वर्तते । प्रस्थे[3] उत्तरपदे मालादीनामादिरुदात्तो भवति । मालाप्रस्थः । शालाप्रस्थः ।

माला । शाला । [4]शोणा । द्राक्षा । क्षौमा । क्षामा । [5]काञ्ची । एक । काम । मालादिः ।

वृद्धार्थ आरम्भः । एकाशोणाशब्दयोः 'एङ् प्राचां [6]देशे' (१.१.७५/१३३८) इति वृद्धसञ्ज्ञा ॥

## अमहन्नवं नगरेऽनुदीचाम् । (८९/३८२३)

नगरशब्दे उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, [7]तच्चेद् उदीचां न भवति । सुह्मनगरम् । [8]पुण्ड्रनगरम् । अमहन्नवम् इति किम् ? महानगरम् । नवनगरम् । अनुदीचाम् इति किम् ? [9]नदीनगरम् । [10]कान्तीनगरम् ॥

## अर्मे चावर्णं द्व्यच् त्र्यच् । (९०/३८२४)

अर्मशब्दे उत्तरपदे द्व्यच् त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति । दत्तार्मम् । [11]गुप्तार्मम् । कुक्कुटार्मम् । वायसार्मम् । अवर्णम् इति किम् ? बृहदर्मम् । द्व्यच् त्र्यच् इति किम् ? कपिञ्जलार्मम् । अमहन्नवम् इत्येव, महार्मम् । नवार्मम् ॥

## न भूताधिकसञ्जीवमद्राश्मकज्जलम् । (९१/३८२५)

भूत अधिक सञ्जीव मद्र अश्मन् कज्जल इत्येतानि पूर्वपदानि अर्मशब्दे उत्तरपदे नाद्युदात्तानि भवन्ति । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् । मद्राश्मग्रहणं सङ्घातविगृहीतार्थम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् । समासान्तोदात्तत्वमेवात्र भवति ।

---

1. उदाहरणमिदं नास्ति ग. 2. कुवल ब, नास्ति क. 3. शब्दे इत्यधिकम् ग. ह. फ. 4. शोणा नास्ति क. 5. लाक्षा इत्यधिकम् क. 6. देशे नास्ति फ. 7. तत् नास्ति फ. 8. पिण्डनगरम् क. ड. ह, नास्ति ब. 9. नन्दीनगरम् फ, नन्दनगरम् क. 10. शार्ङ्गिनगरम् ग. 11. गुप्तार्मम् नास्ति ह.

[७१०] आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम् । (म. भा. ३.१३२)

'दिवोदासं वध्र्यश्वाय दाशुषे' (ऋ. ६.६१.१) ॥

## अन्तः । (९२/३८२६)

अन्तः इत्यधिकृतम्[1] । इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यान्तः उदात्तो भवति इत्येवं[2] वेदितव्यम् । वक्ष्यति – 'सर्वं गुणकार्त्स्न्ये' (६.२.९३/३८२७) । सर्वश्वेतः । सर्वकृष्णः[3] । [4]प्राक् 'उत्तरपदादिः' (६.२.१११/३८४५) इत्येतस्मादयमधिकारो वेदितव्यः ॥

## सर्वं गुणकार्त्स्न्ये । (९३/३८२७)

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्तमानमन्तोदात्तं भवति । सर्वश्वेतः । सर्वकृष्णः । सर्वमहान् । सर्वम् इति किम् ? परमश्वेतः । [5]आश्रयव्याप्त्या परमत्वं [6]श्वेतत्वस्य इति गुणकार्त्स्न्ये वर्तते । गुणग्रहणं किम् ? सर्वसौवर्णः । सर्वराजतः । कार्त्स्न्ये इति किम् ? सर्वेषां श्वेततरः सर्वश्वेतः । 'गुणात्तरेण समासस्तरलोपश्च वक्तव्यः' (वा. ८८) इत्येवमत्र समासस्तरलोपश्च ॥

## सञ्ज्ञायां गिरिनिकाययोः । (९४/३८२८)

सञ्ज्ञायां विषये गिरि निकाय इत्येतयोः [7]उत्तरपदयोः पूर्वपदमन्तोदात्तं भवति । अञ्जनागिरिः । भञ्जनागिरिः । निकाये – शापिण्डिनिकायः । [8]मौण्डिनिकायः । [9]चिखिल्लिनिकायः । सञ्ज्ञायाम् इति किम् ? परमगिरिः । ब्राह्मणनिकायः ॥

## कुमार्यां वयसि । (९५/३८२९)

[10]कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति । वृद्धकुमारी । जरत्कुमारी । कुमारीशब्दः पुंसा [11]सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयो[12]विशेषवचनैः समानाधिकरणो भवति । तच्च वयः इह गृह्यते, न [13]कुमारत्वमेव । वयसि इति किम् ? परमकुमारी ॥

## उदकेऽकेवले । (९६/३८३०)

अकेवलं मिश्रम् । तद्वाचिनि समासे उदकशब्दे उत्तरपदे पूर्वपदमन्तोदात्तं भवति । गुडमिश्रमुदकम् [14]गुडोदकम्, गुडोदकम् । [15]तिलोदकम्, तिलोदकम् । स्वरे कृते एकादेशः 'स्वरितो वानुदात्ते पदादौ' (८.२.६/३६५९) इति पक्षे स्वरितो [16]भवति । अकेवले इति किम् ? [17]शीतोदकम् । उष्णोदकम् ॥

---

1. वेदितव्यम् इत्यधिकम् फ. 2. तद् इत्यधिकम् क. ह. 3. सर्वमहान् इत्यधिकम् फ. 4. प्रागुत्तरपदात् इत्येव ह. 5. आश्रयव्यापारत्वं ह. 6. श्वेतत्वस्य नास्ति फ. 7. उपपदयोः फ. 8. गुडिनिकायः ब, गौडिनिकायः क. ड, नास्ति ग. 9. उदाहरणमिदं नास्ति ग, चिक्कलिनिकायः ब, चखल्लिनिकायः ह. 10. कुमारीशब्दे ह. 11. संप्रयोगमात्रं प्रवृत्तमुपादानं भवति क. ह. 12. विशेषवचने क. 13. कुमारीत्वम् ह. 14. गुडोदकम् नास्ति फ. 15. वपुलोदकम् ब. क. फ. 16. भवति नास्ति फ. 17. शीतोदकम् नास्ति ह.

## द्विगौ क्रतौ। (९७/३८३१)

द्विगौ उत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति। गर्गत्रिरात्रः। [1]चरकत्रिरात्रः। कुसुरविन्दसप्तरात्रः। गर्गाणां त्रिरात्रः गर्गत्रिरात्रः। द्विगौ इति किम्? अतिरात्रः। अचश्चित्वादन्तोदात्तः। क्रतौ इति [2]किम्? बिल्वसप्तरात्रः। बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रः बिल्वसप्तरात्रः॥

## सभायां नपुंसके। (९८/३८३२)

[3]सभाशब्दे उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं भवति। गोपालसभम्। पशुपालसभम्। स्त्रीसभम्। दासीसभम्। सभायाम् इति किम्? [4]ब्राह्मणसेनम्। नपुंसकम् इति किम्? राजसभा। ब्राह्मणसभा। [5]सभायां प्रतिपदोक्तं [6]नपुंसकलिङ्गं गृह्यते इति रमणीयसभम्, ब्राह्मणकुलम् इत्यत्र न भवति॥

## पुरे प्राचाम्। (९९/३८३३)

पुरशब्दे उत्तरपदे प्राचां देशे [7]पूर्वपदमन्तोदात्तं भवति। ललाटपुरम्। [8]काञ्चीपुरम्। [9]शिवदत्तपुरम्। कार्णिपुरम्। नार्मपुरम्। प्राचाम् इति किम्? शिवपुरम्॥

## अरिष्टगौडपूर्वे च। (१००/३८३४)

अरिष्ट गौड[10] इत्येवंपूर्वे समासे पुरशब्दे उत्तरपदे पूर्वपदमन्तोदात्तं भवति। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम्? इहापि यथा स्यात्। अरिष्टश्रितपुरम्। गौडभृत्यपुरम्[11]॥

## न हास्तिनफलकमार्देयाः। (१०१/३८३५)

हास्तिन फलक मार्देय [12]इत्येतानि पूर्वपदानि पुरशब्दे उत्तरपदे [13]नान्तोदात्तानि भवन्ति। [14]'पुरे प्राचाम्' (६.२.९९/३८३३) इति [15]प्राप्तिः प्रतिषिध्यते। हास्तिनपुरम्। [16]फलकपुरम्। मार्देयपुरम्। मृदोरपत्यं मार्देयः। 'शुभ्रादित्वात् ढक्' (४.१.१२३/११२६)॥

## कुसूलकूपकुम्भशालं बिले। (१०२/३८३६)

कुसूल कूप कुम्भ शाला इत्येतानि पूर्वपदानि बिलशब्दे उत्तरपदे अन्तोदात्तानि भवन्ति। कुसूलबिलम्। कूपबिलम्। [17]कुम्भबिलम्। शालाबिलम्। [18]कुसूलादिग्रहणं किम्? सर्पबिलम्। बिले इति किम्? कुसूलस्वामी॥

---

1. कुसुमित° ह, जनकत्रिरात्रः ब. क. 2. किम् नास्ति ह. 3. सभायां फ. 4. ब्राह्मसभम् ह. 5. सभायां नास्ति फ. 6. नपुंसकम् फ. ह. 7. पूर्वमन्तोदात्तम् फ. 8. काञ्चीपुरम् नास्ति फ. 9. शिवदपुरम् फ. 10. इत्येव इत्यधिकम् फ. 11. अप्रागर्थः आरम्भः इत्यधिकम् ह. 12. इत्येते शब्दाः पूर्वपदभूताः ह. 13. अन्तोदात्ताः ह. 14. वाक्यमिदं नास्ति फ. 15. प्राप्तः ह. 16. फलकपुरम् नास्ति फ. 17. कुम्भबिलम् नास्ति फ. 18. कुसूलात् इति किम् ह.

## दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु। (१०३/३८३७)

दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषु उत्तरपदेषु, चानराटशब्दे च। पूर्वेषुकामशमी, पूर्वेषुकामशमी। अपरेषुकामशमी, अपरेषुकामशमी। पूर्वकृष्णमृत्तिका। अपरकृष्णमृत्तिका। [1]जनपद – पूर्वपञ्चालाः। अपरपञ्चालाः। आख्यान – पूर्वाधिरामम्, पूर्वाधिरामम्। पूर्वयायातम्। अपरयायातम्। अधिराममधिकृत्य कृतो ग्रन्थः आधिरामम्। तथा यायातम्। चानराट – पूर्वचानराटम्। अपरचानराटम्। शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम्॥

## आचार्योपसर्जनश्चान्तेवासिनि। (१०४/३८३८)

आचार्योपसर्जनान्तेवासिवाचिनि उत्तरपदे दिक्शब्दा[2] अन्तोदात्ताः भवन्ति। पूर्वपाणिनीयाः। अपरपाणिनीयाः। पूर्वकाशकृत्स्नाः। [3]अपरकाशकृत्स्नाः। आचार्योपसर्जनः इति किम्? पूर्वशिष्याः। अन्तेवासिनि इति किम्? [4]पूर्वपाणिनीयं शास्त्रम्॥

## उत्तरपदवृद्धौ सर्वं च। (१०५/३८३९)

'उत्तरपदस्य' (७.३.१०/१३९६) इत्यधिकृत्य या विहिता वृद्धिः, [5]तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्च अन्तोदात्ता भवन्ति। सर्वपाञ्चालकः। [6]पूर्वपाञ्चालकः। उत्तरपाञ्चालकः। सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिना जनपदलक्षणो (४.२.१२५/१३४९) वुञ् प्रत्ययः। 'सुसर्वार्धाज्जनपदस्य' (७.३.१२/१३९८) 'दिशोऽमद्राणाम्' (७.३.१३/१३९९) इति [7]चोत्तरपदवृद्धिः। [8]अधिकारलक्षणादिह न भवति, सर्वमासः, सर्वकारकः इति॥

## बहुव्रीहौ विश्वं सञ्ज्ञायाम्। (१०६/३८४०)

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं सञ्ज्ञायां विषयेऽन्तोदात्तं भवति। विश्वदेवः। विश्वयशाः। विश्वमहान्। पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम्। बहुव्रीहौ इति किम्? विश्वे [9]च ते देवाः विश्वदेवाः। सञ्ज्ञायाम् इति किम्? विश्वे देवा अस्य विश्वदेवः। विश्वामित्रः, विश्वाजिनः इत्यत्र 'सञ्ज्ञायां मित्राजिनयोः' (६.२.१६५/३८९९) इत्येतद् भवति परत्वात्। बहुव्रीहौ इत्येतदधिक्रियते प्रागव्ययीभाव[10]सञ्ज्ञानात् (६.२.१२१/३८५५)॥

## उदराश्वेषुषु। (१०७/३८४१)

उदर अश्व इषु इत्येतेषु [11]उत्तरपदेषु बहुव्रीहौ समासे सञ्ज्ञायां विषये पूर्वपदमन्तोदात्तं भवति। वृकोदरः। दामोदरः। हर्यश्वः। यौवनाश्वः। [12]सुवर्णपुङ्खेषुः। महेषुः॥

---

1. जनपदादिषु ह. 2. च इत्यधिकम् ह. 3. उदाहरणमिदं नास्ति ब. 4. पाणिनीयाः ह. 5. तद्वत्सु उत्तरपदेषु फ. 6. पूर्वपाञ्चालकः नास्ति फ. 7. च वा फ. 8. उत्तरपदग्रहणात् फ. 9. च ते नास्ति क. 10. °संशब्दनात् क.फ. 11. उपपदेषु फ. 12. सुवर्णपुज्जेषुः ह, सुवर्णेषुः क.

## क्षेपे। (१०८/३८४२)

क्षेपे गम्यमाने उदरादिषूत्तरपदेषु बहुव्रीहौ समासे [1]सञ्ज्ञायां विषये पूर्वपदमन्तोदात्तं भवति। कुण्डोदरः। घटोदरः। [2]कटुकाश्वः। स्पन्दिताश्वः। अनिघातेषुः। चलाचलेषुः। अनुदरः, सूदरः इत्यत्र 'नञ्सुभ्याम्' (६. २. १७२/३९०६) इत्येतद् भवति विप्रतिषेधेन॥

## नदी बन्धुनि। (१०९/३८४३)

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं भवति। गार्गीबन्धुः। वात्सीबन्धुः। नदी इति किम्? ब्रह्मबन्धुः। ब्रह्मशब्द आद्युदात्तः। बन्धुनि इति किम्? [3]गार्गीप्रियः॥

## निष्ठोपसर्गपूर्वमन्यतरस्याम्। (११०/३८४४)

बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति। प्रधौतमुखः, प्रधौतमुखः प्रधौतमुखः। प्रक्षालितपादः, प्रक्षालितपादः। [4]यदि मुखशब्दः स्वाङ्गवाची तदा पक्षे 'मुखं स्वाङ्गम्' (६. २. १६७/३९०१) इत्येतद्भवति, न चेत् पूर्वपदप्रकृतिस्वरत्वेन 'गतिरनन्तरः' (६. २. ४९/३७८३) [5]इत्येतद् भवति। निष्ठा इति किम्? [6]प्रसेचकमुखः। उपसर्गपूर्वम् इति किम्? शुष्कमुखः॥

## उत्तरपदादिः। (१११/३८४५)

उत्तरपदादिः इत्येतदधिकृतम्[7]। यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्यादिरुदात्तो भवति इत्येवं तद्वेदितव्यम्। वक्ष्यति – 'कर्णो वर्णलक्षणात्' (६.२. ११२/३८४६)। शुक्लकर्णः। कृष्णकर्णः। उत्तरपदस्य इत्येतदापादपरिसमाप्तेः। [8]आदिः इति 'प्रकृत्या भगालम्' (६. २. १२७/३८७१) इति यावत्॥

## कर्णो वर्णलक्षणात्। (११२/३८४६)

बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति। शुक्लकर्णः। कृष्णकर्णः। [9]लक्षणात् – दात्राकर्णः। शङ्कुकर्णः। लक्षणस्य (६. ३. ११५/१०३६) इति दीर्घत्वम्। पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं [10]यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्णः इत्यत्र न भवति। कर्णः इति किम्? श्वेतपादः। कूटशृङ्गः। वर्णलक्षणात् इति किम्? शोभनकर्णः॥

## सञ्ज्ञौपम्ययोश्च। (११३/३८४७)

सञ्ज्ञायाम् औपम्ये च यो बहुव्रीहिर्वर्तते तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति। सञ्ज्ञायाम् – [11]कुञ्चिकर्णः। [12]मणिकर्णः। औपम्ये – गोकर्णः। [13]खरकर्णः॥

---

1. सञ्ज्ञायां विषये नास्ति क. 2. अश्वकाश्वः ह. क. ड. 3. देवप्रियः ह. 4. वाक्यमिदं नास्ति फ. 5. इत्याद्युदात्तः ह. 6. प्रसेवकमुखः ह. 7. वेदितव्यम् इत्यधिकम् फ. ह. 8. आद्याधिकारः ह. 9. लक्षणम् ह. 10. यत् नास्ति ह. 11. कञ्चिकर्णः ड. फ. 12. मणिकर्णः नास्ति फ. 13. अश्वकर्णः ह.

## कण्ठपृष्ठग्रीवाजङ्घं च। (११४/३८४८)

कण्ठ पृष्ठ ग्रीवा जङ्घा इत्येतानि उत्तरपदानि बहुव्रीहौ समासे सञ्ज्ञौपम्ययो[1]राद्युदात्तानि भवन्ति। [2]कण्ठः सञ्ज्ञायाम् – शितिकण्ठः (तै.सं. ४. ५. ११. १)। नीलकण्ठः। औपम्ये – खरकण्ठः। उष्ट्रकण्ठः। पृष्ठः [3]सञ्ज्ञायाम् – काण्डपृष्ठः। नाकपृष्ठः। औपम्ये – गोपृष्ठः। अजपृष्ठः। ग्रीवा [4]सञ्ज्ञायाम् – सुग्रीवः। नीलग्रीवः। दशग्रीवः। औपम्ये – गोग्रीवः। अश्वग्रीवः। जङ्घा सञ्ज्ञायाम् – नाडीजङ्घः। तालजङ्घः। औपम्ये – गोजङ्घः। अश्वजङ्घः। एणीजङ्घः॥

## शृङ्गमवस्थायां च। (११५/३८४९)

शृङ्गशब्दः उत्तरपदमवस्थायां सञ्ज्ञौपम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति। उद्गतशृङ्गः। द्व्यङ्गुलशृङ्गः। [5]अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषोऽवस्था। सञ्ज्ञायाम् – ऋष्यशृङ्गः। औपम्ये – गोशृङ्गः मेषशृङ्गः। अवस्थादिषु इति किम्? स्थूलशृङ्गः[6]॥

## नञो जरमरमित्रमृताः। (११६/३८५०)

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति। अजरः। अमरः। अमित्रः। अमृतः। नञः इति किम्? ब्राह्मणमित्रः[7]। जरादयः इति किम्? अशत्रुः, 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इति उत्तरपदान्तोदात्तत्वमेवात्र[8] भवति॥

## सोर्मनसी अलोमोषसी। (११७/३८५१)

[9]सोः उत्तरं मनन्तम् असन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा। सुकर्मा। सुधर्मा। सुप्रथिमा। असन्तम् – सुपयाः। सुयशाः। सुस्रोताः। सुस्रत्। [10]सुध्वत्। सोः इति किम्? कृतकर्मा। कृतयशाः। मनसी इति किम्? सुराजा। सुतक्षा। अलोमोषसी इति किम्? सुलोमा। सूषाः। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (व्या.प. १२९) इत्यनर्थकयोरपि मनसो[11]रिह ग्रहणम्। 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्यस्य अयमपवादः। कपि [12]तु परत्वात् 'कपि पूर्वम्' (६. २. १७३/३९०७) इत्येतद् भवति। सुकर्मकः। सुस्रोतस्कः॥

## क्रत्वादयश्च। (११८/३८५२)

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति। 'सुक्रतुः' (तै.सं. १.२.६.१)। 'सुदृशीकः' (तै. सं. ३.४.११.१)।

क्रतु। दृशीक। प्रतीक। [13]प्रतूर्ति। हव्य। भग। क्रत्वादिः॥

---

1. च इत्यधिकम् फ. 2. कण्ठे फ. 3–4. सञ्ज्ञायाम् नास्ति ह. 5. अत्र नास्ति फ. 6. सञ्ज्ञादिषु इति किम्? मेषशृङ्गः इत्यधिकम् फ. 7. अत्र पूर्वपदप्रकृतिस्वर एव इत्यधिकम् फ. 8. अत्र नास्ति फ. 9. सुशब्दात् परम् ह. 10. सुध्वत् नास्ति फ. 11. इह नास्ति फ.ह. 12. तु नाति ह. 13. प्रपूर्ति मुद्रितः पाठ.

## आद्युदात्तं द्व्यच् छन्दसि । (११९/३८५३)

यदाद्युदात्तं द्व्यच्[1] उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषय । 'स्वश्वास्त्वा सुरथा मर्जयेम' (तै. सं. १.२.१४.४) । नित्स्वरेण अश्वरथशब्दावाद्युदात्तौ । आद्युदात्तमिति किम् ? 'या सुबाहुः स्वङ्गुरिः' (ऋ. २.३२.७) । बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः । द्व्यच् इति किम् ? [2]सुगुरसत् । सुहिरण्यः[3] । 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्यस्यायमपवादः ॥

## वीरवीर्यौ च । (१२०/३८५४)

[4]वीर वीर्य इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि [5]विषये आद्युदात्तौ भवतः । 'सुवीरस्ते' (ऋ. ४.१७.४) । 'सुवीर्यस्य पतयः स्याम' (तै. सं. १.७.१३.४) । वीर्यमिति यत्प्रत्ययान्तं तत्र 'यतोऽनावः' (६.१.१२३/३७०१) इति आद्युदात्तत्वं न भवति इत्येतदेव वीर्यग्रहणं ज्ञापकम् । तत्र हि सति पूर्वेणैव सिद्धं स्यात् ॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे । (१२१/३८५५)

कूल तीर तूल मूल शाला अक्ष सम इत्येतानि उत्तरपदानि अव्ययीभावसमासे आद्युदात्तानि भवन्ति । [6]परिकूलम् । उपकूलम् । परितीरम् । उपतीरम् । परितूलम् । उपतूलम् । परिमूलम् । उपमूलम् । परिशालम् । उपशालम् । पर्यक्षम् । उपाक्षम् । सुषमम् । विषमम् । निषमम् । दुःषमम् । तिष्ठद्गु-प्रभृतिषु (२.१.१७/६७१) एते पठचन्ते । कूलादिग्रहणं किम् ? उपकुम्भम् । अव्ययीभावे इति किम् ? परम-कूलम् । उत्तमकूलम् । पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति । परिकूलम् । उपकूलम् ॥

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ । (१२२/३८५६)

कंस मन्थ शूर्प पाय्य काण्ड इत्येतानि उत्तरपदानि द्विगौ समासे आद्युदात्तानि भवन्ति । द्विकंसः । त्रिकंसः । द्विमन्थः । त्रिमन्थः । द्विशूर्पः । त्रिशूर्पः । द्विपाय्यः । त्रिपाय्यः । द्विकाण्डः । त्रिकाण्डः । द्विगौ इति किम् ? परमकंसः । [7]उत्तमकंसः ॥

## तत्पुरुषे शालायां नपुंसके । (१२३/३८५७)

शालाशब्दान्ते[8] तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति । ब्राह्मणशालम् । क्षत्रियशालम् । 'विभाषा सेनासुराच्छायाशालानिशानाम्' (२. ४. २५ / ८२८) इति नपुंसकलिङ्गता । तत्पुरुषे इति किम् ? दृढशालं ब्राह्मणकुलम् । शालायाम् [10]इति किम् ? ब्राह्मणसेनम् । नपुंसके इति किम् ? ब्राह्मण-शाला ॥

---

1. च इत्यधिकम् फ. 2. उदाहरणमिदं नास्ति ह. 3. स्वश्वः इत्यधिकम् क. ड. 4. छन्दसि इत्येव इत्यधिकम् ह. 5. विषये नास्ति फ. 6. परिकूलम् नास्ति फ. 7. उत्तमकंसः नास्ति फ. ह. 8. उपपदे इत्यधिकम् फ. 9. इति नास्ति

## कन्था च। (१२४/३८५८)

[1]तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्दः उत्तरपदमाद्युदात्तं भवति। सौशमिकन्थम्। आह्वरकन्थम्। [2]चप्पकन्थम्। 'सञ्ज्ञायां कन्थोशीनरेषु' (२.४.२०/८२३) इति नपुंसकलिङ्गता। षष्ठीसमासा एते। नपुंसके इत्येव, दाक्षिकन्था॥

## आदिश्चिहणादीनाम्। (१२५/३८५९)

[3]कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति। चिहणकन्थम्। मडरकन्थम्। मडुर इति केचित् पठन्ति। मडुरकन्थम्।

चिहण। मडर। मडुर। वैतुल। पटत्क। चैत्तालिकर्णः। वैतालिकर्णिः इत्यन्ये पठन्ति। [4]कुक्कुट। चिक्कण। चित्कण इत्यपरे पठन्ति।

आदिः इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम्॥

## चेलखेटकटुककाण्डं गर्हायाम्। (१२६/३८६०)

[5]चेल खेट कटुक काण्ड इत्येतानि उत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति। पुत्रचेलम्। भार्याचेलम्। उपानत्खेटम्। नगरखेटम्। दधिकटुकम्। उदश्वित्कटुकम्। भूतकाण्डम्। प्रजाकाण्डम्। चेलादिसादृश्येन पुत्रादीनां गर्हा। तत्र पुत्रः चेलमिव इति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिः (२ १.५६/७३५) इति समासः। गर्हायाम् इति किम्? परमचेलम्॥

## चीरमुपमानम्। (१२७/३८६१)

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति। वस्त्रं चीरमिव वस्त्रचीरम्। [6]पटचीरम। कम्बलचीरम्। उपमानम् इति [8]किम्? परमचीरम्॥

## पललसूपशाकं मिश्रे। (१२८/३८६२)

पलल सूप शाक इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति। गुडपललम्। घृतपललम्। घृतसूपः। मूलकसूपः। घृतशाकम्। मुद्गशाकम्। गुडेन मिश्रं पललम् गुडपललम्। 'भक्ष्येण [9]मिश्रीकरणम्' (२.१.३५/६९७) इति समासः। मिश्रे इति किम्? परमपललम्॥

---

1. कन्थान्ते इत्यधिकम् फ. ह. 2. नास्ति फ, चैत्रकन्थम् ड. 3. कन्थान्ततत्पुरुषे फ. 4. कुक्कुट नास्ति क. 5. चेलखेटादीनि क, कटुक नास्ति फ. 6. पटचीरम् नास्ति क. ड. फ. ह. 7. उदाहरणमिदं नास्ति ह. 8. किम् नास्ति फ. 9. मिश्रकरणम् फ.

## कूलसूदस्थलकर्षाः सञ्ज्ञायाम् । (१२९/३८६३)

कूल सूद स्थल कर्ष इत्येतानि उत्तरपदानि तत्पुरुषे समासे सञ्ज्ञायां विषये आद्युदात्तानि भवन्ति । दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । [1]भाजीसूदम् । [2]दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ग्रामनामधेयानि एतानि । स्थलग्रहणे लिङ्गविशिष्टत्वात् स्थलीशब्दोऽपि गृह्यते । जानपदकुण्ड (४.१.४२/५००) इत्यनेन ङीष् । सञ्ज्ञायाम् इति किम् ? परमकूलम् ॥

## अकर्मधारये राज्यम् । (१३०/३८६४)

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यम् इत्येतदुत्तरपदम् आद्युदात्तं भवति । ब्राह्मणराज्यम् । क्षत्रियराज्यम् । अकर्मधारये इति किम् ? परमराज्यम् । चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन (म.भा. ३.१३४) । कुचेलम् । कुराज्यम् ॥

## वर्ग्यादयश्च । (१३१/३८६५)

वर्ग्य इत्येवमादीनि उत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । [3]अर्जुनपक्ष्यः । अकर्मधारये इत्येव, परमवर्ग्यः । वर्ग्यादयः [4]प्रातिपदिकेषु न पठचन्ते । दिगादिषु (४.३.५४/१४२९) [5]तु वर्ग पूग गण पक्ष इत्येवमादयो ये पठिताः, ते एव यत्प्रत्ययान्ता वर्ग्यादयः इह [6]प्रतिपत्तव्या ॥

## पुत्रः पुम्भ्यः । (१३२/३८६६)

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे [7]आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । [8]माहिषकपुत्रः । पुत्रः इति किम् ? कौनटिमातुलः । पुम्भ्यः इति किम् ? गार्गीपुत्रः । वात्सीपुत्रः ॥

## नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः । (१३३/३८६७)

[9]आचार्यः उपाध्यायः । राजा ईश्वरः । ऋत्विजो याजकाः । संयुक्ताः स्त्रीसम्बन्धिनः श्यालादयः । ज्ञातयो मातृपितृसम्बन्धिनो बान्धवाः । [10]आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात् [11]स्वरूपस्य [12]पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । [13]नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । संयुक्तपुत्रः । [14]सम्बन्धिपुत्रः । श्यालपुत्रः । ज्ञातिपुत्रः । [15]भ्रातुष्पुत्रः । 'ऋतो विद्यायोनिसम्बधेभ्यः (६. ३. २३/९८१) । इति षष्ठ्या अलुक् । पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वमेव भवति ॥

---

1. उदाहरणमिदं नास्ति ह. 2. उदाहरणमिदं नास्ति फ. 3. अर्जुनपक्षः क. 4. प्रातिपदिकशब्देषु फ. 5. तु नास्ति फ. 6. पठचन्ते ह. 7. समासे इत्यधिकम् क.फ.ह. 8. माहिषपुत्रः नास्ति फ, माहिषिपुत्रः ड. 9. पूर्वेण प्रसक्तस्य प्रतिषेधोऽयम् इत्यधिकम् ह.फ, आचार्यः – बान्धवाः नास्ति ह. 10. आचार्यादिभ्यः क.फ.ह. 11. तस्य ह, स्वरूपस्य नास्ति फ. 12. तद्विशेषणानां फ. 13. नन्दपुत्रः नास्ति फ. 14. सम्बन्धि–पुत्रः नास्ति फ. 15. बान्धवपुत्रः ब.

## चूर्णादीन्यप्राणिषष्ठ्याः । (१३४/३८६८)

[1]उत्तरपदादिः इति वर्तते, तत्पुरुषे इति च । चूर्णादीनि उत्तरपदानि [2]अप्राणिवाचिनः षष्ठ्यन्तात् पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गचूर्णम् । मसूरचूर्णम् । अप्राणिषष्ठ्याः इति किम् ? मत्स्यचूर्णम् । [3]षष्ठ्याः इति किम् ? परमचूर्णम् ।

चूर्ण । [4]करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । [5]कुन्दम । दलप । चमसी । [6]चक्कन । चौल । चूर्णादिः ।

'चूर्णादीन्यप्राण्युपग्रहात्' इति सूत्रस्य पाठान्तरम् । तत्रोपग्रहः इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते ॥

## षट् च काण्डादीनि । (१३५/३८६९)

षट् पूर्वोक्तानि काण्डादीनि उत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि भवन्ति । काण्डं गहार्याम् (६.२.१२६/३८६०) इत्युक्तम्, अगर्हायामपि भवति । दर्भकाण्डम् । [7]शरकाण्डम् । 'चीरमुपमानम्' (६.२.१२७/३८६१) इत्युक्तम्, [8]अनुपमानमपि भवति । दर्भचीरम् । कुशचीरम् । 'पललसूपशाकं मिश्रे' (६. २. १२८/३८६२) इत्युक्तम्, अमिश्रेऽपि भवति । तिलपललम् । [9]मुद्गसूपः । मूलकशाकम् । 'कूलं सञ्ज्ञायाम्' (६.२.१२९/३८६३) इत्युक्तम्, असञ्ज्ञायामपि भवति । नदीकूलम् । समुद्रकूलम् । षट् इति किम् ?[10] राजसूदः[11] ॥

## कुण्डं वनम् । (१३६/३८७०)

कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तते । कुण्डम् इत्येतत् उत्तरपदं [12]वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति । दर्भकुण्डम् । शरकुण्डम् । वनम् इति किम् ? मृत्कुण्डम् ॥

## प्रकृत्या भगालम् । (१३७/३८७१)

[13]भगाल[14]वाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ताः । प्रकृत्या [15]इत्येतदधिकृतम् 'अन्तः' (६.२.१४३/३८७७) इति यावद् वेदितव्यम्[16] ॥

## शितेर्नित्याबह्वज्बहुव्रीहावभसत् । (१३८/३८७२)

शितेः उत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत् प्रकृतिस्वरं भवति । [17]शितिपादः । शित्यंसः । 'शित्योष्ठः' (तै. सं. ५. ६. १४. १) । पादशब्दो वृषादित्वाद् आद्युदात्तः । अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वात् । शितेः इति किम् ? दर्शनीयपादः । नित्यग्रहणं किम् ? 'शितिककुत्' (तै.सं. ५.६.१४.१) [18]ककुदस्यावस्थायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवति इति [19]तेन न नित्याबह्वच् । अबह्वच् इति किम् ? शितिललाटः । बहुव्रीहौ इति किम् ? शितेः पादः शितिपादः । अभसत् इति किम् ? 'शितिभसद्' (तै.सं. ५.६.१४.१) । शितिशब्द आद्युदात्तः । पूर्वपदप्रकृतिस्वरापवादो योगः ॥

---

1. वाक्यमिदं नास्ति फ. 2. अप्राणिषु फ. 3. वाक्यमिदं नास्ति फ. 4. कपि ह. 5. कुन्दकुम ड, कुन्दुम ह. 6. चन्दन फ, चक्वण ड, नास्ति क. 7. शरकाण्डम् नास्ति फ. 8. अनुपमानेऽपि ह. 9. मुद्ग–पलालम् फ. 10. राज्ञः सूदः इत्यधिकम् ह. 11. अप्राणिषष्ठ्या इति किम् ? देवदत्तकाण्डः इत्यधिकम् ब. काण्ड चीर पलल सूप शाक कूल इति काण्डादिः इत्यधिकम् ड. 12. वनवाचिनि ह. 13. उत्तरपदग्रहणं तत्पुरुष इति वर्तते । आदिरुदात्तः इति निवृत्तम् इत्यधिकम् ह. 14. भगालवाचिनि ह. 15. इत्यधिकारः ह. 16. प्रकृत्यङ्गाधिकारात् इत्यधिकम् ह. 17. शितिः पादौ यस्य इत्यधिकम् ह. 18. ककुदशब्दस्य फ. 19. तेन नास्ति फ.

## गतिकारकोपपदात् कृत्। (१३९/३८७३)

[1]तत्पुरुषे इति वर्तते, न बहुव्रीहौ इति। गतेः कारकात् उपपदात् च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। प्रकारकः। प्रकरणम्। प्रहारकः। प्रहरणम्। कारकात् – [2]इध्मप्रव्रश्चनः। पलाशशातनः। श्मश्रुकल्पनः। उपपदात् – ईषत्करः। दुष्करः। [3]सुकरः। सर्वत्रैवात्र [4]लित्स्वरः। गतिकारकोपपदात् इति किम्? देवदत्तस्य कारकः देवदत्तकारकः। देवदत्तस्य इति शेषलक्षणा षष्ठी। कृद्ग्रहणं विस्पष्टार्थम्। प्रपचतितराम्, प्रपचतितमाम् इत्यत्र तरबाद्यन्तेन समासे [5]कृते पश्चादाम्। तत्र सति शिष्टत्वाद् आम [6]एव स्वरो [7]भवति इत्येके। प्रपचतिदेश्याद्यर्थं तु कृद्ग्रहणं दृश्यत एव[8]॥

## उभे वनस्पत्यादिषु युगपत्। (१४०/३८७४)

प्रकृत्या इति[9] वर्तते। वनस्पत्यादिषु समासेषु उभे [10]पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। 'वनस्पतिः' (तै. सं २.६.२०.५)। वनपतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट्।

'बृहस्पतिः' (तै. सं. ६.४.१०.१)। बृहतां पतिः। 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (ग. सू. १६०) इति सुट् तकारलोपश्च। बृहद् इत्येतदन्तोदात्तं निपातयन्ति। तस्य केचिदाद्युदात्तत्वं वर्णयन्ति।

शचीपतिः। शचीशब्दः 'कृदिकारादक्तिनः' (ग. सू. ५०) इति ङीषन्तत्वादन्तोदात्तः। केचित्तु शार्ङ्गरवादिषु पठन्ति, तेषामाद्युदात्तः।

'तनूनपात्' (तै. सं. ४.१.८.१)। तनोतेरौणादिकः ऊप्रत्ययः, तेन तनूशब्दोऽन्तोदात्तः। न पाति न [11]पालयति वा नपात् क्विबन्तः। 'नभ्राण्नपाद्' (६.३.७५/७५९) इत्यादिना आद्युदात्तो निपातितः। तन्वा नपात् तनूनपात्।

'नराशंसः' (तै. सं. ४.१.८.१)। नरा अस्मिन् आसीनाः शंसन्ति, नरा [12]एवं शंसन्ति इति वा नराशंसः। 'नॄ नये' (धा. पा. ८१०)। [13]अबन्तो नरशब्दः आद्युदात्तः। शंसशब्दोऽपि[14] घञन्तः[16]। 'अन्येषामपि दृश्यते' (६.३.१६७/३५३९) इति दीर्घत्वम्।

'शुनःशेपः' (तै. सं. ५.२.१.३)। शुन इव शेपः अस्य इति बहुव्रीहिः। तत्र 'शेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायाम्' (६.३.२१/९७९ वा.) इति षष्ठ्या अलुक्। उभावाद्युदात्तौ।

'शण्डामर्कौ' (तै. सं. ६.४.१०.१)। शण्डमर्कशब्दौ घञन्तत्वादाद्युदात्तौ। तयोर्द्वन्द्वे 'अन्येषामपि दृश्यते' (६.३.१६७/३५३९) इति दीर्घत्वम्।

---

1. वाक्यमिदं नास्ति ब. 2. इध्मनां व्रश्चनः इत्यधिकम् फ. 3. सुकरः नास्ति फ. 4. लित् नास्ति फ. 5. कृते नास्ति फ. 6. एव नास्ति ह. 7. भवति नास्ति ह. फ. 8. ईषदसमाप्तौ कल्पप्देश्यदेशीयरः इत्यत्र तिङश्चेत्यनुवृत्तेः त्यधिकम् फ. 9. स्वर्यते ब, नास्ति ह. फ, किम् इत्यधिकम् क. 10. पूर्वपदोत्तरपदे तु फ. 11. पातयति ब. ड. फ. 12. एनं ड. 13. आबन्तः क. 14. अपि नास्ति क. 15. आद्युदात्तः इत्यधिकम् फ.

[1]तृष्णावरूत्री। [2]तृष्णाशब्द आद्युदात्तः। वरूत्रीशब्दो ग्रसितादिसूत्रे निपातितोऽन्तोदात्तः। तत्र द्वन्द्वे दीर्घत्वं पूर्ववत्।

'बम्बाविश्ववयसौ' (तै. सं. ६.६.८.४)। बम्बशब्दोऽन्तोदात्तः। विश्ववयःशब्दोऽपि 'बहुव्रीहौ विश्वं सञ्ज्ञायाम्' (६.२.१०६/३८४०) इति विश्वशब्दोऽन्तोदात्तः। तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत्।

मर्मृत्युः। मर् इति मृजो विच्प्रत्ययः। मृत्युशब्दोऽन्तोदात्तः।

द्वन्द्वानामदेवताद्वन्द्वार्थोऽनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः[3]॥

## देवताद्वन्द्वे च। (१४१/३८७५)

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे [4]पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। ऋज्रेन्द्राग्र (उणादि. १९६) इति इन्द्रशब्दः आद्युदात्तो [5]निपातितः। सोम इति मन्प्रत्ययान्तः। [6]वरुण [7]उनन्प्रत्ययान्तः, तेन आद्युदात्तः। बृहस्पतिशब्दे [8]वनस्पत्यादित्वात् द्वावुदात्तौ, तेन इन्द्राबृहस्पती इत्यत्र त्रय उदात्ता भवन्ति। देवताग्रहणं किम्? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम्? अग्निष्टोमः॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु। (१४२/३८७६)

उत्तरपदे[9]ऽनुदात्तादौ पृथिवी रुद्र पूष[10]मन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत् प्रकृतिस्वरे भवतः। 'इन्द्राग्नी' (तै. सं. २.२.२.१)। 'इन्द्रवायू' (तै. सं. ६.६.८.३)। अग्निवायुशब्दौ अन्तोदात्तौ। उत्तरपदग्रहणमनुदात्तादौ इत्युत्तरपदविशेषणं यथा स्यात्, द्वन्द्वविशेषणं मा भूत् इति। अनुदात्तादौ इति विधिप्रतिषेधयोः विषयविभागार्थम्। [11]अपृथिव्यादिषु इति किम्? 'द्यावापृथिव्यौ' (तै. सं. २.६.९.५)। [12]द्यावाशब्द आद्युदात्तो निपातितः। पृथिवीशब्दो [13]ङीष्प्रत्ययान्तत्वादन्तोदात्तः।

रुद्र–'[14]सोमारुद्रौ' (तै. सं. १.८.२२.५)। 'रोदेर्णिलुक् च' (उ. १८९) इति रुद्रशब्दो [15]रक्प्रत्ययान्तोऽन्तोदात्तः। पूषन् – इन्द्रापूषणौ। स्वन्नुक्षन्पूषन् (उ. १६५) [16]इति पूषान्तोदात्तो निपात्यते। मन्थिन्[18] – 'शुक्रामन्थिनौ' (तै. सं. ६.४.१०.२१) मन्थोऽस्यास्ति इति मन्थी। इन्नन्तत्वादन्तोदात्तः। पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव॥

## अन्तः। (१४३/३८७७)

[19]अन्तः [20]इत्यधिकारः[21]। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्य अन्तः उदात्तः भवति इत्येवं तद् वेदितव्यम्। वक्ष्यति 'थाथघञ्क्ताजबित्रकाणाम्' (६.२.१४४/३८७८) इति। सुनीथः। [22]अवभृथः॥

---

1. कृष्णावरूत्री ड. 2. कृष्णाशब्दः ड. 3. वनस्पतिः बृहस्पतिः शचीपतिः, तनूनपात्, नराशंसः, शुनःशेपः, शण्डामर्कौ, बम्बाविश्ववयसौ, मर्मृत्युः इति वनस्पत्यादिः इत्यधिकम् ड. 4. पूर्वपदोत्तरपदे फ. 5. निपातितः नास्ति फ. 6. वरुणशब्दः फ. 7. उनत् ब, उनत्प्रत्ययान्तौ तौ नित्यमुदात्तौ ह. 8. वनस्पत्यादिषु पठ्यते ह. 9. उत्तरपदानुदात्तादौ क. 10. मन्थि नास्ति फ. 11. अपृथिवीरुद्रमन्थिषु इति ह. 12. दिवो द्यावेत्याद्युदात्तौ निपात्येते ह. 13. ङीषन्तोऽन्तोदात्तः ह. 14. रुद्रसोमौ ह. 15. रक्प्रत्ययान्तत्वात् फ. 16. इति नास्ति फ. 18. शुक्रामन्थानं क. 19. उत्तरपदग्रहणमिहानुवर्तते इत्यधिकम् ह. 20. इत्ययम् ग. फ. 21. वेदितव्यः इत्यधिकम् फ, आपादपरिसमाप्तेः इत्यधिकम् ह. 22. अवभृथः नास्ति फ.

## थाथघञ्क्ताजबित्रकाणाम् । (१४४/३८७८)

थ अथ घञ् क्त अच् अप् इत्र क इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात् परेषामन्तः उदात्तो भवति । सुनीथः । 'अवभृथः' (तै.सं. १.७.५.३) । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ. १६७) इति 'अवे भृञः' (उ. १६८) इति च क्थन्प्रत्ययान्तावेतौ । [1]तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात् । अथ – 'आवसथः' (तै.ब्रा. १.१.१०.६) उपवसथः । 'उपसर्गे वसेः' (उ. ४०३) इति [2]अथन्प्रत्ययः । घञ् – प्रभेदः । काष्ठभेदः । रज्जुभेदः । क्त – दूरादागतः । आतपशुष्कः । विशुष्कः । अच् – प्रक्षयः । प्रजयः । 'क्षयो निवासे' (६.१.२०१/३६८९) 'जयः करणम्' (६.१.२०२/३६९०) इति चाद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः । अप् – प्रलवः । [3]'प्रसवः' (तै.सं. १.१.४.२)। इत्र – प्रलवित्रम् । [4]प्रसवित्रम् । क – गोवृषः । खरीवृषः । गां वर्षति, खरीं वर्षति इति मूलविभुजादित्वात् (वा. २३२) कप्रत्ययः । प्रवृषः । [5]प्रहृषः । इगुपध (३.१.१३५/२८९७) इति कप्रत्ययः । 'वृषादीनां च' (६.१.२०३/३६९१) इति वृषशब्दः आद्युदात्तः । गतिकारकोपपदात् इत्येव, [6]सुस्तुतं भवता । कर्मप्रवचनीये अव्ययस्वरः एव भवति ॥

## सूपमानात् क्तः । (१४५/३८७९)

सु इत्येतस्मादुपमानाच्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । 'सुकृतम्' (तै.सं. ४.७.२.२) । सुभुक्तम् । सुपीतम् । उपमानात् – [7]वृकावलुप्तम् । शशप्लुतम् । [8]सिंहविनर्दितम् । सुशब्दात् 'गतिरनन्तरः' (६.२.४९/३७८३) इति प्राप्ते उपमानादपि 'तृतीया कर्मणि' (६.२.४८/३७८२) इत्ययमपवादः । गतिकारकोपपदात् इत्येव, [9]सुस्तुतं भवता ॥

## सञ्ज्ञायामनाचितादीनाम् । (१४६/३८८०)

सञ्ज्ञायां विषये गतिकारकोपपदाद्[10] क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन् वर्जयित्वा । सम्भूतो रामायणः । [11]उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । सम्भूतः इति [12]प्राप्त्यर्थात् भवतेः कर्मणि क्तः । 'गतिरनन्तरः' (६.२.४९/३७८३) इत्यत्र [13]हि कर्मणि इत्यनुवर्तते, तद्बाधनार्थं चेदम् । [14]धनुष्खाता नदी । कुद्दालखातं नगरम् । हस्तिमृदिता भूमिः । 'तृतीया कर्मणि' (६.२.४८/३७८२) इति प्राप्तिरिह बाध्यते । अनाचितादीनाम् इति किम् ? आचितम् । पर्याचितम् । आस्थापितम् । परिगृहीतम् । निरुक्तम् । प्रतिपन्नम् । [15]प्राश्लिष्टम् । उपहतम् । उपस्थितम् । 'संहिताऽगवि' (ग. सू. १७१) । संहिताशब्दो यदा गोरन्यस्य सञ्ज्ञा तदा अन्तोदात्तो न भवति । यदा तु गोः सञ्ज्ञा तदा अन्तोदात्त एव ॥

## प्रवृद्धादीनां च । (१४७/३८८१)

[16]प्रवृद्धादीनां [17]च क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः आकर्षे अवहितः । अवहितो भोगेषु । खट्वारूढः । 'कविशस्तः' (तै.सं. २.५.९.२) ।

यानादीनामत्र गणे पाठः [18]प्रायोवृत्तिप्रदर्शनार्थः, [19]न विषयनियमार्थः । यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव । विषयनियमार्थ एवेत्येके । असञ्ज्ञार्थोऽयमारम्भः । आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः । तेन 'पुनरुत्स्यूतं वासो देयम्' (मै.सं. १.७.२), 'पुनर्निष्कृतो रथः' (तै.सं. १.५.२.४) इत्येवमादि सिद्धं भवति ॥

---

1. तत्र नास्ति फ. 2. अथप्रत्ययः क, अथन् प्रत्ययान्तः ह. 3. प्रसवः नास्ति ग. 4. प्रसवित्रम् नास्ति फ. 5. प्रहृषः नास्ति फ. 6. अतिस्तुतं भवता इत्यधिकम् क, सुकृतं भवता इत्यधिकम् ह. 7. वृकै इव अवलुप्तम् इत्यधिकम् ह. 8. हंसनर्दितम् ङ. 9. सुश्रुतं भवता क. 10. परे इत्यधिकम् फ. 11. उपहूतः ङ. 12. प्राप्त्यर्थत्वात् ह. 13. हि नास्ति फ. 14. अनुध्याता ह. 15. उपश्लिष्टम् फ. 16. क्त इत्येव इत्यधिकम् ह. 17. समासानां इत्यधिकम् ह. 18. प्रायप्रयोग° ङ.ग, प्रायप्रयोगः क. 19. न विषयनियमार्थः नास्ति फ.

## कारकाद् दत्तश्रुतयोरेवाशिषि । (१४८/३८८२)

सञ्ज्ञायाम् इति वर्तते, क्तः इति च । सञ्ज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोः दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति । देवा एनं देयासुः [1]देवदत्तः । विष्णुरेनं श्रूयात् विष्णुश्रुतः[2] । कारकात् इति किम् ? कारकान्नियमो मा भूत् । सम्भूतो रामायणः । दत्तश्रुतयोः इति किम् ? देवपालितः । एतस्मान्नियमादत्र 'सञ्ज्ञायामनाचितादीनाम्' (६.२.१४६/३८८०) इत्यन्तोदात्तत्वं न भवति । 'तृतीया कर्मणि' (६.२.४८/३७८२) इत्येवात्र भवति । एवकारकरणं किम् ? कारकावधारणं यथा स्यात्, दत्तश्रुतावधारणं मा भूत् । अकारकादपि[3] दत्तश्रुतयोरन्त उदात्तो भवति । संश्रुतः । विश्रुतः । आशिषि इति किम् ? अनाशिषि नियमो मा भूत् । देवैः खाता देवखाता । कारकाद् दत्तश्रुतयोराशिष्येव इत्येवमत्र नियम इष्यते । तेन आहूतो नदति देवदत्तः इत्यत्र न भवति । देवदत्त इति कस्यचिच्छङ्खस्य नाम । तत्र 'तृतीया कर्मणि' (६.२.४८/३७८२) इति पूर्वपदप्रकृतिस्वरत्वमेव भवति ।

## इत्थंभूतेन कृतमिति च । (१४९/३८८३)

[4]इमं प्रकारमापन्न इत्थम्भूतः । इत्थंभूतेन कृतमित्येतस्मिन्नर्थे यः समासो वर्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्तप्रलपितम् । [5]उन्मत्तप्रलपितम् । प्रमत्तगीतम् । विपन्नश्रुतम् ।

कृतम् इति क्रियासामान्ये करोतिर्वर्तते, नाभूतप्रादुर्भाव एव । तेन प्रलपिताद्यपि कृतं भवति । 'तृतीया कर्मणि' (६.२.४८/३७८२) इत्यस्यायमपवादः । भावे [6]तु यदा प्रलपितादयस्तदा थाथादिस्वरेणैव (६.२.१४४/३८७८) [7]सिद्धमन्तोदात्तत्वं भवति ॥

## अनो भावकर्मवचनः । (१५०/३८८४)

अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात् परमन्तोदात्तं भवति । ओदनभोजनं सुखम् । [8]पयःपानम् सुखम् । चन्दनप्रियङ्गुकालेपनं सुखम् । कर्मवचनः – राजभोजनाः शालयः । राजाच्छादनानि वासांसि । 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्' (३.३.११६/३२९१) इत्ययं योगः उभयथा वर्ण्यते । कर्मण्युपपदे भावे [9]ल्युड् भवति, कर्मण्यभिधेये [10]ल्युड् भवति इति । तत्र [11]पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि । अनः इति किम् ? हस्तहार्यमुदश्वित् । भावकर्मवचनः इति किम् ? दन्तधावनम्[12] । करणे ल्युट् । कारकात् इत्येव । [13]निदर्शनम् । अवलेखनम् । सर्वेषु प्रत्युदाहरणेषु [14]प्रकृतिस्वरो भवति ॥

---

1. यज्ञदत्तः ब. क. फ. 2. ब्रह्मश्रुतः इत्यधिकम् ड. 3. हि इत्यधिकम् फ. 4. एवं प्रकारम् क. 5. प्रकुपितप्रतिकृतम् क. 6. तु नास्ति फ. 7. सिद्धं नास्ति क. ह, सिद्धान्तोदात्तता फ. 8. एवं इत्यधिकम् ड. ह. 9. धातोः ल्युट्प्रत्ययो ब. क. ह. 10. ल्युट् प्रत्ययः फ. 11. पूर्वस्मिन् सूत्रार्थे नास्ति ग. 12. काष्ठम् इत्यधिकम् फ. 13. निदर्शनसेवनम् ह. 14. कृत्स्वरो ह.

## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । (१६१/३८८८)

मन्नन्तं क्तिन्नन्तं [1]व्याख्यान शयन स्थान इत्येतानि याजकादयः क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति ।

मन् – रथवर्त्म । शकटवर्त्म । क्तिन् – पाणिनिकृतिः । आपिशलिकृतिः । व्याख्यान – [2]ऋगयनव्याख्यानम् । छन्दोव्याख्यानम् । शयन – राजशयनम् । ब्राह्मणशयनम् । आसन – राजासनम् । [3]ब्राह्मणासनम् । स्थान – [4]गोस्थानम् । अश्वस्थानम् । याजकादिः – ब्राह्मणयाजकः । [5]क्षत्त्रिययाजकः । [6]ब्राह्मणपूजकः । क्षत्त्रियपूजकः । याजकादयो ये 'याजकादिभिश्च' (२.२.९/७०३) इति षष्ठीसमासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत – गोक्रीतः । [7]अश्वक्रीतः । कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु 'तृतीया कर्मणि' (६.२.४८/३७८२) इत्यस्यापवादः । व्याख्यानशयनासनस्थानानामभावकर्मार्थं [8]ग्रहणम् । कारकात् इत्येव, प्रकृतिः । प्रहृतिः ॥

## सप्तम्याः पुण्यम् । (१६२/३८८६)

सप्तम्यन्तात् परं पुण्यम् इत्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम् अध्ययनपुण्यम् । [9]वेदे पुण्यम् वेदपुण्यम् । सप्तमी (२.१.४०/७१७) इति योगविभागात् समासः । तत्पुरुषे तुल्यार्थ (६.२.२/३७३६) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तम् इत्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे (उ. ७०३) कृत्स्वरेणाद्युदात्तः (फि. सू. २६) पुण्यशब्दः स्यात् इति । सप्तम्याः इति किम् ? वेदेन पुण्यम् वेदपुण्यम् ॥

## ऊनार्थकलहं तृतीयायाः । (१६३/३८८७)

ऊनार्थान्युत्तरपदानि कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति । माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह–असिकलहः । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः । अत्र केचिद् अर्थे इति स्वरूपग्रहणमिच्छन्ति । धान्येनार्थो धान्यार्थः । ऊनशब्देनैव त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव [10]तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ॥

## मिश्रं चानुपसर्गमसन्धौ । (१६४/३८८८)

[11]तृतीया इति वर्तते । मिश्र इत्येतदुत्तरपदमनुपसर्गं [12]तृतीयान्तात् परमन्तोदात्तं भवति असन्धौ गम्यमाने । गुडमिश्राः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रम् इति किम् ? गुडधानाः । अनुपसर्गम् इति किम् । गुडसंमिश्राः । इहानुपसर्गग्रहणं ज्ञापकमन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य । तेन मिश्रश्लक्ष्णैः (२.१.३१/६९३) इति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति । असन्धौ इति किम् ? ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहितः ऐकार्थ्यमापन्नः । सन्धिः इति हि पणबन्धेन ऐकार्थ्यमुच्यते । केचित् पुनराहुः गृह्यमाणविशेषा प्रत्यासत्तिः

---

1. व्याख्यान नास्ति फ. 2. ऋगयनम् ब, उदग्हरणमिदं नास्ति क.ड. 3. ब्राह्मणशयनम् ग, उदाहरणमिदं नास्ति फ. 4. गोस्थानम् नास्ति फ. 5. क्षत्त्रिययाजकः नास्ति क. 6. उदाहरणमिदं नास्ति क.फ. 7. अश्वक्रीतः नास्ति फ. 8. वचनम् फ. 9. वेदे पुण्यम् नास्ति फ. 10. तृतीयासमासे ह. 11. तृतीयायाः ड. 12. तृतीयान्तात् नास्ति ग.

सन्धिः इति । अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्तिविभागो गृह्यते इति ब्राह्मणमिश्रो राजा इति प्रत्युदाह्रियते । उदाहरणेष्वविभागापत्तिरेव गुडमिश्राः इति ॥

## नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः । (१६५/३८८९)

[1]सम्पादि अर्ह हित अलम् [2]इत्येवमर्था ये तद्धिताः तदन्तानि उत्तरपदानि नञो गुणप्रतिषेधे वर्तमानात् पराणि अन्तोदात्तानि भवन्ति । सम्पादि-कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम् । अर्ह – छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः । हित – वत्सेभ्यो हितः वत्सीयः, न वत्सीयः अवत्सीयः । अलमर्थ – सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकः असान्तापिकः । नञः इति किम् ? गर्दभरथमर्हति, गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेधे इति किम् ? गार्दभरथिकादन्यः अगार्दभरथिकः । गुण इति [3]तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते । तत्प्रतिषेधो यत्रोच्यते समासे तत्रायं विधिः कर्णवेष्टकाभ्यां । सम्पादि मुखम् इति । सम्पाद्यर्हहितालमर्थाः इति किम् ? पाणिनीयमधीते पाणिनीयः, [4]न पाणिनीयः अपाणिनीयः । तद्धिताः इति किम् ? कन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा । 'अर्हे कृत्यतृचश्च' (३.३.१६९/२८२२) इति तृच् ॥

## ययतोश्चातदर्थे । (१६६/३८९०)

[5]य यत् इत्येतौ यौ तद्धितावतदर्थे वर्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति । [6]पाशानां समूहः पाश्या, न पाश्या अपाश्या । अतृण्या । यत्[7] – दन्तेषु भवं दन्त्यम्, [8]न दन्त्यम् अदन्त्यम् । अकर्ण्यम् । अतदर्थे इति किम् ? पादार्थमुदकं पाद्यम्, न पाद्यम् अपाद्यम् । तद्धिता इत्येव, [9]अदेयम् । गुणप्रतिषेधे इत्येव, दन्त्यादन्यद् अदन्त्यम् । निरनुबन्धकैकानुबन्धकयो[10]र्ययतोर्ग्रहणादिह न भवति, 'वामदेवाड्ड्यड्ड्यौ (४.२.५/१२१०) वामदेव्यम्, न वामदेव्यम् अवामदेव्यम् इति ॥

## अच्कावशक्तौ । (१६७/३८९१)

[11]अच् क इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति । अपचः [12]यः पक्तुं न शक्नोति[13] । अजयः । कः खल्वपि – अविक्षिपः । अविलिखः । अशक्तौ इति किम् ? अपचो दीक्षितः । अपचः [14]परिव्राजकः[16] ॥

## आक्रोशे च । (१६८/३८९२)

आक्रोशे च गम्यमाने नञः [16]उत्तरमच्कान्तम् अन्तोदात्तं भवति । अपचोऽयं जाल्मः अपठोऽयं जाल्मः । पक्तुं पठितुं [17]शक्तोऽप्येवमाक्रुश्यते । अविक्षिपः । अविलिखः ॥

---

1. अन्त उदात्त इति वर्तते ह. 2. एतदन्ताः ह. 3. तद्धितप्रवृत्तिनिमित्ताम् फ. 4. न पाणिनीयः नास्ति फ. 5. नञ इति वर्तते इत्यधिकम् फ. 6. पाशादिभ्यो यः इत्यधिकम् फ. 7. खल्वपि इत्यधिकम् ह. 8. शरीरावयवात् यच्च इत्यधिकम् ह. 9. अधेयम् ब. फ. ह. 10. ययतोः नास्ति फ. 11. नञः इति वर्तते इत्यधिकम् फ. 12. अयं ह. 13. अपठः इत्यधिकम् ब. फ. 14. परिव्राट् ब. 15. गुणप्रतिषेध इत्येव, अन्यो यः पचादपचः इत्यधिकम् ब. 16. उत्तरपदम् फ. 17. शक्तोऽपि सन् ह.

## सञ्ज्ञायाम् । (१५९/३८९३)

आक्रोशे गम्यमाने नञः परमुत्तरपदं सञ्ज्ञायां वर्तमानमन्तोदात्तं भवति । अदेवदत्तः । अयज्ञदत्तः । अविष्णुमित्रः ॥

## कृत्योकेष्णुच्चार्वादयश्च । (१६०/३८९४)

कृत्य उक इष्णुच् इत्येवमन्ताश्चार्वादयश्च नञः [1]उत्तरेऽन्तोदात्ताः भवन्ति । कृत्य – अकर्तव्यम् । अक–रणीयम् । उक – अनागामुकम् । अनपलाषुकम् । इष्णुच् – अनलङ्करिष्णुः । [2]अनिराकरिष्णुः । इष्णुज्–ग्रहणे 'कर्तरि भुवः खिष्णुच्' (३.२.५७/३९७४) इत्यस्य द्व्यनुबन्धकस्यापि[3] ग्रहणमिकारादेर्विधानसामर्थ्याद् भवति । अनाढ्यम्भविष्णुः । [4]असुभगम्भविष्णुः । चार्वादयः – अचारुः । असाधुः । अयौधिकः । अवदान्यः ।

चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम् । अननङ्गमेजयः । वदान्य । [5]अकस्मात् । अत्रापि द्वितीये नञ्समासेऽन्तोदात्तत्वम् । अनकस्मात् । 'वर्तमानवर्धमानत्वरमाणध्रि-यमाणरोचमानशोभमानाः सञ्ज्ञायाम्' (ग.सू. १७२) । एते वर्तमानादयः सञ्ज्ञायां द्रष्टव्याः । 'विकारसदृशे व्यस्तसमस्ते' (ग.सू. १७३) । अविकारः । असदृशः । अविकारसदृशः । गृहपति । गृहपतिक । 'राजा-ह्नोश्छन्दसि' (ग.सू. १७४) । अराजा । अनहः । भाषायां नञ्स्वर एव भवति ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु । (१६१/३८९५)

तृन्नन्त अन्न तीक्ष्ण शुचि [6]इत्येतेषु नञ उत्तरेषु विभाषा अन्तः उदात्तो भवति । तृन् – अकर्ता, अकर्ता । अन्न – अनन्नम्, अनन्नम् । तीक्ष्ण – अतीक्ष्णम्, अतीक्ष्णम् । शुचि – अशुचिः, अशुचिः । [7]पक्षेऽव्ययस्वर एव भवति ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने । (१६२/३८९६)

बहुव्रीहौ समासे इदम् एतद् तद् इत्येतेभ्यः उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्तमान-स्यान्तः उदात्तः भवति । इदं प्रथमं गमनं भोजनं वा यस्य स इदंप्रथमः । इदंद्वितीयः । इदंतृतीयः । एतत्प्रथमः । एतद्द्वितीयः । एतत्तृतीयः । तत्प्रथमः । तद्द्वितीयः । तत्तृतीयः । बहुव्रीहौ इति किम् । अनेन प्रथमः इदंप्रथमः[8] । तृतीया इति योगविभागात् समासः । इदमेतत्तद्भ्यः इति किम् ? यत्प्रथमः । प्रथमपूरणयोः इति किम् ? तानि बहून्यस्य तद्बहुः । क्रियागणने इति किम् ? अयं प्रथम एषां ते इदंप्रथमाः । द्रव्यगणनमेतत् । गणने इति किम् ? अयं प्रथम एषां ते इदंप्रथमाः । इदम्प्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् कपि पूर्वम् इदंप्रथमकाः[9] । बहुव्रीहौ इत्येतत् 'बनं समासे' (६.२.१७८/३९१२) (६.२.१७३/३९०७) अन्तोदात्तं भवति । इति प्रागेतस्मादधिकृतं वेदितव्यम् ॥

1. उत्तराः फ. 2. अनिराकरिष्णुः नास्ति फ. 3. अपि नास्ति फ. 4. असुभगंभरिष्णुः नास्ति फ. 5. अनुकरणात् क.ड.फ. 6. इत्यन्तेषु फ. 7. वाक्यमिदं नास्ति फ. 8. पाकः इत्यधिकम् ह, नास्ति क. 9. इदंद्वितीयकाः इत्यधिकम् ह.

## सङ्ख्यायाः स्तनः । (१६३/३८९७)

[1]सङ्ख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुःस्तना । सङ्ख्यायाः इति किम् ? [2]दर्शनीयस्तना । स्तनः इति किम् ? द्विशिराः[3] ॥

## विभाषा छन्दसि । (१६४/३८९८)

छन्दसि विषये बहुव्रीहौ समासे सङ्ख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । 'द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहायाष्टास्तनां करोति छन्दसां दोहाय' (तै. सं. ५.१.६.४) ॥

## सञ्ज्ञायां मित्राजिनयोः । (१६५/३८९९)

सञ्ज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोः उत्तरपदयोः अन्तः उदात्तो भवति । देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः । सञ्ज्ञायाम् इति किम् ? प्रियमित्रः । महाजिनः ।

[७११] ऋषिप्रतिषेधो मित्रे । (म. भा. ३.१३७)

'विश्वामित्र ऋषिः' (तै. सं. ४.३.२.२) ॥

## व्यवायिनोऽन्तरम् । (१६६/३९००)

व्यवायी[4] व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासे अन्तोदात्तं भवति । [5]वस्त्रान्तरः । पटान्तरः । कम्बलान्तरः । वस्त्रम[6]न्तरं व्यवधायकं यस्य स वस्त्रान्तरः । वस्त्रव्यवधायकः इत्यर्थः । व्यवायिनः [7]इति किम् ? आत्मान्तरः । आत्मा स्वभावोऽन्तरोऽन्यो यस्य असौ आत्मान्तरः ॥

## मुखं स्वाङ्गम् । (१६७/३९०१)

[8]मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः । स्वाङ्गमिति किम् ? [9]दीर्घमुखा शाला । स्वाङ्गमद्रवादिलक्षणमिह गृह्यते ॥

---

1. संख्याशब्दोत्तरपदे ह. 2. दर्शनीयस्तनी क. 3. त्रिशिराः इत्यधिकम् ब. क. ह. 4. इति व्यवधायकः पदार्थ उच्यते ह. 5. वस्त्रान्तरम् पटान्तरम् ह. 6. अन्तरं नास्ति फ. 7. इति नास्ति फ. 8. मुखशब्दः फ. 9. सुदीर्घमुखा क.

## नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः। (१६८/३९०२)

अव्यय दिक्शब्द गो महत् स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं [1]मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति। अव्यय – उच्चैर्मुखः। नीचैर्मुखः। दिक्शब्द – प्राङमुखः। प्रत्यङमुखः[2]। गो – गोमुखः। महत् – महामुखः। स्थूल – [3]स्थूलमुखः। मुष्टि – मुष्टिमुखः। पृथु – [4]पृथुमुखः। वत्स – वत्समुखः। पूर्वपद-प्रकृतिस्वरो यथायोगमेषु भवति। गोमुष्टिवत्सपूर्वस्यो[5]पमान[6]लक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते॥

## निष्ठोपमानादन्यतरस्याम्। (१६९/३९०३)

निष्ठान्तात् उपमानवाचिनश्च [7]मुखं स्वाङ्गम् उत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति। प्रक्षालितमुखः, प्रक्षालितमुखः, प्रक्षालितमुखः। यदैतदुत्तरपदान्तोदात्तत्वं न भवति तदा 'निष्ठोपसर्गपूर्वमन्यतरस्याम्' (६. २. ११०/३८४४) इति पक्षे पूर्वपदान्तोदात्तत्वं, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरः इति त्रीण्युदा-हरणानि भवन्ति। उपमानात् – सिंहमुखः, सिंहमुखः। व्याघ्रमुखः, व्याघ्रमुखः॥

## जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। (१७०/३९०४)

जातिवाचिनः आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति। सारङ्गजग्धः। पलाण्डुभक्षितः। सुरापीतः। [9]काल – मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः। सुखादिभ्यः – सुखजातः। दुःखजातः। तृप्रजातः। जात्यादिभ्यः इति किम्? पुत्रजातः। आहिताग्न्यादित्वात् परनिपातः। अनाच्छादनात् इति किम्? वस्त्रच्छन्नः। वसनच्छन्नः। अकृतमितप्रतिपन्नाः इति किम्? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। एतेषु बहुव्रीहिषु प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः। सुखादय-स्तृतीयेऽध्याये (३. १. १८/२६७४) पठ्यन्ते॥ निष्ठान्तस्य पूर्वनिपातो न भवत्येवास्मादेव ज्ञापकात्।

## वा जाते। (१७१/३९०५)

जातशब्दे उत्तरपदे वा अन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। [10]दन्तजातः, दन्तजातः। स्तनजातः, स्तनजातः। कालात् – मासजातः, मासजातः। संवत्सरजातः, संवत्सरजातः। सुखादिभ्यः – सुखजातः, सुखजातः। दुःखजातः, दुःखजातः॥

1. मुखशब्दः फ. 2. उदङ्मुखः इत्यधिकम् फ. 3. स्थूलमुखः नास्ति फ. 4. पृथुमुखः नास्ति फ. 5. उपमानः फ. 6. लक्षणे क, लक्षणेऽपि ह. 7. परं इत्यधिकम् फ. 8. शाङ्गर न्या. 9. कालात् क. 10. दन्तजातः नास्ति फ.

## नञ्सुभ्याम्। (१७२/३९०६)

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः। समासस्यैतदन्तोदात्तत्वमिष्यते। समासान्ताश्चावयवा भवन्ति इति अनृचः, बह्वृचः इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति॥

## कपि पूर्वम्। (१७३/३९०७)

नञ्सुभ्यां [1]कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः[2]। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः[3]। सुब्रह्मबन्धूकः॥

## ह्रस्वान्तेऽन्त्यात् पूर्वम्। (१७४/३९०८)

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः। [4]पूर्वमिति वर्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्, ह्रस्वान्तेऽन्त्यात् पूर्वमुदात्तं भवति, न कपि पूर्वम् इति। तेन अज्ञकः, सुज्ञकः इत्यत्र[5] कबन्तस्यैवान्तोदात्तत्वं भवति॥

## बहोर्नञ्वदुत्तरपदभूम्नि। (१७५/३९०९)

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्तते तस्मात् नञ इव स्वरो भवति। 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्युक्तम्, बहोरपि तथा भवति। बहुयवो देशः। बहुव्रीहिः। बहुतिलः। 'कपि पूर्वम्' (६.२.१७३/३९०७) इत्युक्तम्, बहोरपि तथा भवति। बहुकुमारीको देशः। बहुवृषलीकः। बहुब्रह्मबन्धूकः। 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' (६.२.१७४/३९०८) इत्युक्तम्, बहोरपि तथा भवति। बहुयवको देशः। बहुव्रीहिकः। बहुमाषकः। 'नञो जरमरमित्रमृताः' (६.२.११६/३८५०) इत्युक्तम्, बहोरपि तथा भवति। बहुजरः। बहुमरः। बहुमित्रः। बहुमृतः। उत्तरपदभूम्नि इति किम्? बहुषु मनः अस्य बहुमनाः [5]अयम्॥

## न गुणादयोऽवयवाः। (१७६/३९१०)

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ताः भवन्ति। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बहुच्छन्दो मानम्। बहुसूक्तः। बह्वध्यायः। गुणादिराकृतिगणो द्रष्टव्यः। अवयवाः इति किम्? बहुगुणो ब्राह्मणः। अध्ययनश्रुतसदाचारादयोऽत्र गुणाः[6]॥

---

1. उत्तरपदं इत्यधिकम् फ. 2. देशः इत्यधिकम् फ. 3. देशः इत्यधिकम् फ. 4. कपि पूर्वमिति प्राप्ते फ. 5. न भवति इत्यधिकम् फ. 6. अयम् नास्ति फ. 7. गुण अक्षर अध्याय सूक्त छन्दोमान आकृतिगणः इत्यधिकम् ड.

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु । (१७७/३९११)

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः । प्रोदरः । प्रललाटः । ध्रुवम् इत्येकरूपमुच्यते, ध्रुवमस्य शीतम् इति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः । उपसर्गात् इति किम् ? दर्शनीयललाटः । स्वाङ्गम् इति किम् ? प्रशाखो वृक्षः । ध्रुवम् इति किम् ? उद्बाहुः क्रोशति । अपर्शु इति किम् ? उत्पर्शुः । विपर्शुः ।।

## वनं समासे । (१७८/३९१२)

समासमात्रे वनम् इत्येतदुत्तरपदमुपसर्गात् परमन्तोदात्तं भवति । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । प्रनिरन्तः (८.४.५/१०५०) इति णत्वम् । समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव [1]हि स्यात् ।।

## अन्तः । (१७९/३९१३)

अन्तःशब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः । अनुपसर्गार्थ आरम्भः ।।

## अन्तश्च । (१८०/३९१४)

अन्तःशब्दश्च उत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः[2] । बहुव्रीहिरयम् प्रादिसमासो वा ।।

## न निविभ्याम् । (१८१/३९१५)

नि वि इत्येताभ्यामुत्तरोऽन्तःशब्दो नान्तोदात्तो भवति । [3]न्यन्तः । व्यन्तः (तै. ब्रा. २. १. ३. १) । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८.२.४/३७५७) इति स्वरितो पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः । तत्र भवति ।।

## परेरभितोभावि मण्डलम् । (१८२/३९१६)

परेरुत्तरमभितोभाविवचनं [4]मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितीरम् । परिमण्डलम् । बहुव्रीहिरयं प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावपक्षेऽपि हि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' (६. २. ३३/३७६७) इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते । अभितः इत्युभयतः । अभितो भावोऽस्यास्ति इति तदभितोभावि । यच्चैवंस्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते ।।

1. हि नास्ति क. फ. ड. 2. समन्तः इत्यधिकम् ब. 3. उदाहरणमिदं नास्ति फ. ह. 4. मण्डलवचनं फ.

## प्राद्स्वाङ्गं सञ्ज्ञायाम्। (१८३/३९१७)

प्रादुत्तरपदमस्वाङ्गवाचि सञ्ज्ञायां विषयेऽन्तोदात्तं भवति। [1]प्रकोष्ठम्। प्रगृहम्। प्रद्वारम्। अस्वाङ्गम् इति किम्? प्रहस्तम्। प्रपदम्। सञ्ज्ञायाम् इति किम्? प्रपीठम्[2]॥

## निरुदकादीनि च। (१८४/३९१८)

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति। निरुदकम्। निरुलपम्। निरुपलम् [3]इत्यन्ये पठन्ति। निर्मशकम्। निर्मक्षिकम्। एषां प्रादिसमासो बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। [4]निष्कालकः। निष्क्रान्तः [5]कालकात् इति कन्प्रत्ययान्तेन कालशब्देन प्रादिसमासः। निष्कालिकः इत्यन्ये पठन्ति। [6]निष्पेषः। दुस्तरीपः। '[7]अवितॄस्तॄतन्त्रिभ्य ईः (उ. ४४६), तरीः[8]। तां[9] पाति इति तरीपः। कुत्सितः तरीपः दुस्तरीपः। [10]निस्तरीपः इति केचित् पठन्ति। अपरे निस्तरीकः इति। ते[11] तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति। निरजिनम्। उदजिनम्। [12]उपाजिनम्। 'परेर्हस्तपादकेशकर्षाः' (ग.सू. १७५)। परिहस्तः। परिपादः। [13]परिकेशः। परिकर्षः। निरुदकादिराकृतिगणः॥

## अभेर्मुखम्। (१८५/३९१९)

अभेरुत्तरं मुखमन्तोदात्तं भवति। अभिमुखः। बहुव्रीहिरयम् प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। 'उपसर्गात् स्वाङ्गम्' (६. २. १७७/३९११) इति सिद्धे [14]वचनमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च। [15]अभिमुखा शाला॥

## अपाच्च। (१८६/३९२०)

अपाच्चोत्तरं मुखमन्तोदात्तं भवति। [16]अपमुखः। अपमुखम्। अव्ययीभावोऽप्यत्र प्रयोजयति। तत्रापि हि 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' (६. २. ३३/३७६७) इत्युक्तम्। योगविभागः उत्तरार्थः॥

## स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च। (१८७/३९२१)

स्फिग पूत वीणा अञ्जस् अध्वन् कुक्षि इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्चापादुत्तराण्यन्तोदात्तानि भवन्ति। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। [17]अपाध्वा। 'उपसर्गादध्वनः'

---

1. प्रकोष्ठः क.ड. 2. प्रशमो वृक्षः इत्यधिकम् ह. 3. इति केचित् ब. 4. निष्पालकः ब. 5. कालात् क. 6. निष्पेषम् फ. 7. वाक्यमिदं नास्ति ड. 8. इति इत्यधिकम् ड. 9 च इत्यधिकम् ड. 10. वाक्यमिदं नास्ति फ. 11. च इत्यधिकम् ड. 12. उपाजिनः ब, उपजिनम् क. 13. हरिकेशः ड. 14. पुनर्वचनम् फ. 15. अभिमुखी क. 16. उदाहरणमिदं नास्ति फ. 17. अपाध्वः ड.

(५.४.८५/९५३) इति यदा समासान्तो नास्ति तदा [1]अनेनान्तोदात्तत्वं भवति। तस्मिन् [2]हि सत्यच्-प्रत्ययस्य चित्त्वादेव सिद्धम्। अनित्यश्च समासान्तः इत्येतदेव ज्ञापकम्। अपकुक्षिः। अपसीरः। अपहलम्। अपलाङ्गलम्। अपनाम। सर्वत्र प्रादिसमासो, बहुव्रीहिः, अव्ययीभावो वा। स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थ-मध्रुवार्थमस्वाङ्गार्थं च॥

## अधेरुपरिस्थम्। (१८८/३९२२)

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति। अधिदन्तः। [3]अधिकर्णः। अधिकेशः। अध्यारूढो दन्तः इति प्रादिसमासः। [4]अध्यारूढो वा दन्तः इति समानाधिकरण उत्तरपदलोपी समासः। दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यते अधिदन्तः इति। उपरिस्थम् इति किम्? अधिकरणम्॥

## अनोरप्रधानकनीयसी। (१८९/३९२३)

अनोरुत्तरमप्रधानवाचि कनीयः चान्तोदात्तं भवति। अनुगतो ज्येष्ठम् अनुज्येष्ठः। [5]अनुमध्यमः। पूर्वपदप्रधानः प्रादिसमासोऽयम्। [6]अनुगतः कनीयान् अनुकनीयान्। उत्तरपदार्थप्रधानोऽयम्। [7]प्रधानार्थं च कनीयोग्रहणम्। अप्रधानकनीयसी इति किम्? अनुगतो ज्येष्ठः अनुज्येष्ठः॥

## पुरुषश्चान्वादिष्टः। (१९०/३९२४)

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषः अनुपुरुषः। अन्वादिष्ट अन्वाचितः कथितानुकथितो वा। अन्वादिष्टः इति किम्? अनुगतः पुरुषः अनुपुरुषः[8]॥

## अतेरकृत्पदे। (१९१/३९२५)

अतेः[9] परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति। अत्यङ्कुशो नागः। अतिकशोऽश्वः। पदशब्दः खल्वपि—अतिपदा [10]शक्वरी। अकृत्पदे इति किम्? अतिकारकः।

[७१२] अते[11]र्धातुलोप इति वक्तव्यम्। (म.भा.३.१३९)

इह माभूत्, शोभनो गार्ग्यः अतिगार्ग्यः। इह च यथा स्यात्, अतिक्रान्तः कारकात् अतिकारकः इति॥

## नेरनिधाने। (१९२/३९२६)

नेः परमु[12]त्तरपदमन्तोदात्तं भवति [13]अनिधाने। निधानम्[14]प्रकाशता। [15]निमूलम्। न्यक्षम्। अनिधाने इति किम्? नितृणम्। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। निशब्दोऽत्र निधानार्थं ब्रवीति। प्रादयो हि निवाग्वृषलः। निदण्डः। निहितवाक्, निहितदण्डः इत्यर्थः। वृत्तिविषये ससाधनां क्रियामाहुः॥

---

1. अनेन नास्ति ब. 2. हि नास्ति ह. 3. अस्य इत्यधिकम् फ. 4. अध्यारूढः नास्ति फ. 5. अनुमध्यः ह. 6. अनुगतः कनीयांसम् अनुकनीयान् क. 7. प्रधानं च फ. 8. अव्ययस्वरापवादोऽयम् इत्यधिकम् ह. 9. उत्तरं फ, उत्तरपदम् ह. 10. गायत्री ह. 11. धातुलोपो वक्तव्यः क. 12. उतरपदं नास्ति फ. 13. अनिधानेऽर्थे व्र. क. ङ. फ. ह. 14. अप्रकाशनम्। ततोऽन्यदनिधानं प्रकाशनम् इत्यर्थः ब, नास्ति ह. 15. निमूल्यम् ह.

## प्रतेरंश्वादयस्तत्पुरुषे । (१९३/३०२७)

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ताः भवन्ति । प्रतिगतः अंशुः प्रत्यंशुः । प्रतिजनः । प्रतिराजा । [1]राजशब्दः समासान्तस्यानित्यत्वाद् यदा टज् नास्ति तदा प्रयोजयति । तस्मिन् हि सति चित्त्वादेवान्तोदात्तत्वं सिद्धम् । तत्पुरुषे इति किम् ? प्रतिगताः अंशवः अस्य प्रत्यंशुः अयमुष्ट्रः ।

अंशु । जन । राजन् । उष्ट्र । खेटक । [2]अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्ध । पुर ॥

## उपाद्द्व्यजजिनमगौरादयः । (१९४/३०२८)

उपादुत्तरं द्व्यच् अजिनं चान्तोदात्तं भवति तत्पुरुषे समासे [3]गौरादीन् वर्जयित्वा । उपगतो देवम् उपदेवः । उपसोमः । उपेन्द्रः । उपहोडः । अजिन – उपाजिनम् । अगौरादयः इति किम् ? उपगौरः । [4]उपतैषः । तत्पुरुषे इत्येव, उपगतः सोमोऽस्य उपसोमः ।

गौर । तैष । नैष । तैट । लट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्य । पाद । गौरादिः ॥

## सोरवक्षेपणे । (१९५/३०२९)

सुशब्दात् परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने । अवक्षेपणं निन्दा । इह खलु इदानीं सुस्थण्डिले [5]सुस्फिगाभ्यां सुप्रत्यवसितः । सुशब्दोऽत्र पूजायामेव । वाक्यार्थस्तु अवक्षेपणमसूयया, तथाभिधानात् । सोः इति किम् ? कुब्राह्मणः । अवक्षेपणे इति किम् ? शोभनेषु तृणेषु सुतृणेषु ॥

## विभाषोत्पुच्छे । (१९६/३०३०)

उत्पुच्छशब्दे तत्पुरुषे [6]विभाषा अन्त उदात्तो भवति । उत्क्रान्तः पुच्छात् उत्पुच्छः, उत्पुच्छः । यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच् उत्पुच्छः, तदा थाथादिसूत्रेण (६.२.१४४/३८७८) नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् इति सेयमुभयत्र विभाषा भवति । तत्पुरुष इत्येव, उदस्तं पुच्छमस्य उत्पुच्छः ॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ । (१९७/३०३१)

द्वि त्रि इत्येताभ्यामुत्तरेषु पाद् दत् मूर्धन् इत्येतेषूत्तरपदेषु यो बहुव्रीहिः, तत्र विभाषा अन्तः उदात्तो भवति । द्वौ पादो अस्य द्विपात् (तै. सं. २.६.८.३), द्विपात् । त्रिपात्, त्रिपात् । द्विदन्, द्विदन् । त्रिदन्, त्रिदन् । द्विमूर्धा, द्विमूर्धा । त्रिमूर्धा, त्रिमूर्धा । पाद् इति कृताकारलोपः पादशब्दो गृह्यते । दत् इति कृतददादेशो दन्तशब्दः । मूर्धन् इति त्वकृतसमासान्तो नान्त एव मूर्धन्शब्दः । तस्य एतत्प्रयोजनम् असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम् अनित्यः समासान्तो भवति इति । यदाऽपि समासान्तः क्रियते तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः । त्रिमूर्धः । द्वित्रिभ्याम् इति किम् ? [7]कल्याणमूर्धा । पादादिषु [8]इति किम् ? द्विहस्तम् । बहुव्रीहौ इति किम् ? द्वयोर्मूर्धा द्विमूर्धा ॥

---

1. राजन्शब्दः फ. 2. अजिन फ.ह. 3. गौरान्तं फ. 4. उपनैशः ब, उपनैषः ड. फ. 5. सुक्रियाभ्याम् क. 6. समासे इत्यधिकम् फ.ह. 7. कल्याणमूर्धा नास्ति फ. 8. इति नास्ति फ.

## सक्थ चाक्रान्तात् । (१९८/३९३२)

सक्थम् इति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते[1] । सः अक्रान्तात् परो विभाषा अन्तोदात्तो भवति[2] । गौरसक्थः, गौरसक्थः । [3]श्लक्ष्णसक्थः, श्लक्ष्णसक्थः[4] । अक्रान्तात् इति किम् ? चक्रसक्थः । षचश्चित्वान् नित्यमन्तोदात्तत्वं भवति ॥

## परादिश्छन्दसि बहुलम् । (१९९/३९३३)

छन्दसि विषये [5]परादिः उदात्तो भवति बहुलम्[6] । परशब्देनात्र सक्थशब्द एव गृह्यते । अञ्जिसक्थमालभेत । 'त्वाष्ट्रौ लोमशसक्थौ' (तै.सं. ५.५.२३.१) । ऋजुबाहुः । वाक्पतिः । चित्पतिः ॥

परादिश्च परान्तश्च पूर्वान्तिश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं [7]स्मृतः ॥ (म.भा. ३.१४०)

परादिरुदाहृतः । परान्तश्च --

[७१३] अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसङ्ख्यानम् । (म.भा. ३.१४०)

'त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण' (ऋ. १.११८.२) । पूर्वान्तः --

[७१४] पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसङ्ख्यानम् ।

मरुद्वृद्धः । पूर्वादिः --

[७१५] पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम् ।

दिवोदासाय समगाय ते इत्येवमादि सर्वं सङ्गृहीतं भवति ॥

इति[7] काशिकायां वृत्तौ [8]षष्ठाध्यायस्य

द्वितीयः पादः[9] ॥

----(०)----

1. बहुव्रीहौ समासे इत्यधिकम् ब. 2. बहुव्रीहौ इत्यधिकम् फ. 3. कृष्णसक्थः ह. 4. पृश्निसक्थ-मालभेत इत्यधिकम् ड. 5. परस्यादिः फ. 6. बहुलग्रहणमन्यत्रापि यथा स्यात् इत्यधिकम् फ. 7. ततः मुद्रितः पाठः 8. श्रीवामन इत्यधिकम् ड. 9. षष्ठस्याध्यायस्य क. 10. पूर्णत्रयीश्वरो रक्षतु इत्यधिकम ह.

## षष्ठाध्यायस्य तृतीयः पादः

### अलुगुत्तरपदे। (१/९७८)

अलुक् इति च, उत्तरपदे इति च एतदधिकृतं वेदितव्यम्। यद् इत ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपदे इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'पञ्चम्याः स्तोकादिभ्यः' (६. ३. २/९५९)[1]। स्तोकान्मुक्तः। [2]अल्पान्मुक्तः (म. भा. ३. १४१)। उत्तरपदे इति किम् ? निष्क्रान्तः स्तोकात् निस्तोकः। अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निर्वृत्तिं करोति इत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा (व्या. प. ३) नाश्रयितव्या[3]। अलुगधिकारः प्रागानङः (६. ३. २५/९२१)। उत्तरपदाधिकारः प्रागङ्गाधिकारात् (६. ४. १/२००)॥

### पञ्चम्याः स्तोकादिभ्यः। (२/९७९)

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्याः उत्तरपदे अलुक् भवति। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। [4]अभ्याशादागतः। [5]दूरादागतः। [6]विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। समासे कृते प्रातिपदिकत्वान्नत् सुपो लुकि प्राप्ते प्रतिषेधः क्रियते। द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात् समास एव न भवति स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः [7]इति। तेनात्र न कदाचिदैकपद्यमैकस्वर्यं च भवति।

[७१६] ब्राह्मणाच्छंसिन उपसङ्ख्यानं कर्तव्यम्। (म. भा. ३. १४२)

[8]ब्राह्मणादादाय शंसति इति ब्राह्मणाच्छंसी [9]इति। ऋत्विग्विशेषस्य[10] रूढिरियम्। [11]तस्य व्युत्पत्तिरसता सता वावयवार्थेन क्रियते॥

### ओजःसहोऽम्भस्तमसस्तृतीयायाः। (३/९८०)

ओजस् सहस् अम्भस् तमस् इत्येतेभ्य उत्तरस्याः तृतीयायाः अलुक् भवति उत्तरपदे[12]। ओजसाकृतम्। सहसाकृतम्। [13]अम्भसाकृतम्। तमसाकृतम्।

[७१७] अञ्जस उपसङ्ख्यानम्। (म. भा. ३. १४२)

अञ्जसाकृतम्।

[७१८] पुंसानुजो जनुषान्ध इति [14]वक्तव्यम्। (म. भा. १४२)

पुंसानुजः। जनुषान्धः।

---

1. इति इत्यधिकम् फ. 2. उदाहरणमिदं नास्ति फः 3. भवति इत्यधिकम् फ. 4. कृच्छ्रादागतः फ. 5–6. नास्ति फ. 7. नास्ति फ. 8. ब्राह्मणानि शंसति इति फ. 9. नास्ति फ. 10. कस्यचिद् इत्यधिकम् ब. क. ड. 11. तस्मात् फ. 12. परतः इत्यधिकम् फ. 13. उदाहरणमिदं नास्ति फ. 14. उपसङ्ख्यानम् फ.

## मनसः सञ्ज्ञायाम्। (४/९६१)

मनसः उत्तरस्याः तृतीयायाः [1]सञ्ज्ञायामलुग् भवति। मनसादत्ता। [2]मनसागुप्ता। मनसासङ्गता। सञ्ज्ञायाम् इति किम्? मनोदत्ता[3]। [4]मनोगुप्ता॥

## आज्ञायिनि च। (५/९६२)

[5]आज्ञायिन्युत्तरपदे मनसः उत्तरस्य तृतीयायाः अलुग् भवति। मनसा आज्ञातुं शीलमस्य मनसाज्ञायी॥

## आत्मनश्च पूरणे। (६/९६३)

आत्मनः [6]उत्तरस्याः तृतीयायाः पूरणप्रत्ययान्ते उत्तरपदेऽलुग् भवति। आत्मनापञ्चमः। आत्मनाषष्ठः। 'तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानम्' (वा.२५) इति तृतीया। तृतीया इति योगविभागात् समासः। कथं जनार्दनस्त्वात्मचतुर्थ एव इति? बहुव्रीहिरयम् आत्मा चतुर्थोऽस्यासौ[7] आत्मचतुर्थः (म. भा. ३. १४३)॥

## वैयाकरणाख्यायां चतुर्थ्याः। (७/९६४)

वैयाकरणानामाख्या वैयाकरणाख्या। आख्या सञ्ज्ञा। यया सञ्ज्ञया वैयाकरणा एव व्यवहरन्ति तस्यामा[8]त्मनः उत्तरस्या[9]श्चतुर्थ्या अलुग्भवति[10]। आत्मनेपदम्। आत्मनेभाषा। [11]तादर्थ्ये चतुर्थी (वा.१२०)। चतुर्थी इति योगविभागात् समासः॥

## परस्य च। (८/९६५)

परस्य च[12] या चतुर्थी [13]तस्या वैयाकरणाख्यायाम् अलुग् भवति। परस्मैपदम्। परस्मैभाषा॥

## हलदन्तात् सप्तम्याः सञ्ज्ञायाम्। (९/९६६)

हलन्तादन्ताच्चोत्तरस्याः सप्तम्याः सञ्ज्ञायाम् [14]अलुग् भवति। युधिष्ठिरः। त्वचिसारः। गविष्ठिरः इत्यत्र तु 'गवियुधिभ्यां [15]स्थिरः' (८.३.९५/९६७) [16]इत्यत एव [17]वचनादलुक्। अदन्तात् – अरण्येतिलकाः। अरण्येमाषकाः। वनेकिंशुकाः। वनेहरिद्रकाः। [18]वनेबल्वजकाः। [19]पूर्वाह्णेस्फोटकाः। कूपे[20]पिशाचकाः। हलदन्ताद् इति किम्? नद्यां कुक्कुटिका नदीकुक्कुटिका। भूम्यां पाशः भूमिपाशः। सञ्ज्ञायाम् इति किम्? अक्षशौण्डः।

[७१९] हृद्द्युभ्यां ङेः[21]। (म.भा. ३. १४३)

हृद् दिव् इत्येतेभ्यामुत्तरस्य ङेरलुग् भवति। हृदिस्पृक्। दिविस्पृक् (म. भा. ३. १४३)॥

---

1. उत्तरपदे इत्यधिकम् फ. 2. उदाहरणमिदं नास्ति फ. 3. कन्या इत्यधिकम् ब. क. ड. फ. 4. उदाहरणमिदं नास्ति फ. 5. आज्ञायिनि चोत्तरपदे क. फ. ह 6. उत्तरस्याः नास्ति फ. 7. असौ नास्ति फ. 8. गम्यमानायाम् इत्यधिकम् ह. 9. च इत्यधिकम् फ. 10. उत्तरपदे परतः इत्यधिकम् ह. 11. वाक्यमिदं नास्ति फ. 12. उत्तरस्य इत्यधिकम् ब. 13. तस्यां क. 14. विषये इत्यधिकम् फ. 15. स्थिरः नास्ति फ. 16. इत्यस्य फ. 17. वचनात् नास्ति फ. 18. वनेबिल्वजाः फ, वनेबिल्वकाः ह. 19. उदाहरणमिदं नास्ति फ. 20. पिशाचिका क. 21. अलुग्वक्तव्यः इत्यधिकम् फ. क, उपसङ्ख्यानम् इत्यधिकम् ब.

## कारनाम्नि च प्राचां हलादौ। (१०/९६८)

प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्याः अलुग् भवति। सूपेशाणः। [1]दृषदिमाषकः। हलेद्विपदिका। हलेत्रिपदिका। कारशिषस्य सञ्ज्ञा एताः, तत्र पूर्वेणैव सिद्धे नियमार्थमिदम्[2]। एते च [3]त्रयो नियमविकल्पा अत्रेष्यन्ते, कारनाम्न्येव, प्राचामेव, हलादावेव इति। कारनाम्नि इति किम्? अभ्यर्हिते पशुः [4]अभ्यर्हितपशुः। [5]कारादन्यस्यैतद्देयस्य नाम। प्राचाम् इति किम्? यूथे पशुः यूथपशुः। हलादौ इति किम्? अविकटे उरणः अविकटोरणः (म. भा. ३. १४५)। हलदन्तादित्येव, [6]नद्यां दोहनी नदीदोहनी॥

## मध्याद् गुरौ। (११/९६९)

मध्यादुत्तरस्याः सप्तम्याः गुरावुत्तरपदेऽलुग् भवति। मध्येगुरुः।

[७२०] अन्ताच्चेति वक्तव्यम्। (म. भा. ३. १४५)

अन्तेगुरुः। सप्तमी इति योगविभागात् समासः॥

## अमूर्धमस्तकात् स्वाङ्गादकामे। (१२/९७०)

[7]मूर्धमस्तकवर्जितात् [8]स्वाङ्गादुत्तरस्याः सप्तम्याः अकामे उत्तरपदे[9]ऽलुग् भवति। कण्ठे कालोऽस्य कण्ठेकालः। उरसिलोमा। उदरेमणिः। अमूर्धमस्तकात् इति किम्? मूर्धशिखः। मस्तकशिखः। अकामे इति किम्? मुखे कामोऽस्य मुखकामः। स्वाङ्गात् इति किम्? अक्षशौण्डः। हलदन्तात् इत्येव, अङ्गुलित्राणः। जङ्घावलिः॥

## बन्धे च विभाषा। (१३/९७१)

बन्धः इति घञन्तो गृह्यते। तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः [10]सप्तम्याः विभाषा अलुग् भवति। हस्तेबन्धः, हस्तबन्धः। [11]चक्रेबन्धः, चक्रबन्धः। उभयत्रविभाषेयम्। स्वाङ्गाद्धि बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति, [12]तत्पुरुषे तु[13] स्वाङ्गादस्वाङ्गाच्च 'नेन्सिद्धबध्नातिषु च' (६. ३. १९/९७७) इति प्रतिषेधः प्राप्नोति। हलदन्तादित्येव, गुप्तिबन्धः[14]॥

## तत्पुरुषे कृति बहुलम्। (१४/९७२)

तत्पुरुषे समासे कृदन्ते उत्तरपदे[15] सप्तम्याः बहुलमलुग् भवति। स्तम्बेरमः। कर्णेजपः। न च भवति। कुरुचरः। मद्रचरः॥

---

1. मुकुटेकार्षापणः फ. 2. वचनम् इत्यधिकम् फ. ह. 3. त्रयो नास्ति फ. 4. नास्ति फ. 5. कारादन्यस्य तादर्थ्ये फ. 6. दध्नि दोहः दधिदोहः ह. 7. मस्तकशब्दवर्जितात् फ.ह. 8. स्वाङ्गवाचिनः परस्य फ. 9. परतः इत्यधिकम् ह. 10. सप्तम्याः नास्ति फ. 11. चारकेबन्धः फ. 12. वाक्यमिदं नास्ति फ. 13. तत्सिद्धेश्च नादिभुवेति इत्यधिकम् फ. 14. कारिकाबन्धः इत्यधिकम् ब. 15. परतः इत्यधिकम् फ.

## प्रावृट्शरत्कालदिवां जे। (१५/०७३)

प्रावृट् शरत् काल दिव् इत्येतेषां जे उत्तरपदे सप्तम्याः [1]अलुक् भवति। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यैवा[2]यं प्रपञ्चः॥

## विभाषा वर्षक्षरशर[3]वरात्। (१६/०७४)

वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्याः सप्तम्याः जे उत्तरपदे विभाषा अलुग् भवति। वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। [4]वरेजः, वरजः॥

## घकालतनेषु कालनाम्नः। (१७/०७५)

घसञ्ज्ञके प्रत्यये, कालशब्दे, तनप्रत्यये च परतः कालनाम्नः उत्तरस्याः सप्तम्या विभाषा अलुग् भवति। घ – पूर्वाह्णेतरे, पूर्वाह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे। काल – पूर्वाह्णेकाले, पूर्वाह्णकाले। तन – [5]पूर्वाह्णेतने, पूर्वाह्णतने। कालनाम्नः इति किम्? शुक्लतरे। शुक्लतमे। हलदन्तादित्येव, रात्रितरायाम्। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते [6]हृदयस्य हृल्लेख (६.३.५०/९८८) इति लेखग्रहणाल् लिङ्गात्। तेन घतनग्रहणे, तदन्तग्रहणं न भवति। काल इति न स्वरूपग्रहणम्[7]॥

## शयवासवासिष्वकालात्। (१८/०७६)

शय वास वासिन् इत्येतेषूत्तरपदेष्वकालवाचिनः उत्तरस्याः सप्तम्या विभाषा अलुक् भवति। खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी। अकालात् इति किम्? पूर्वाह्णशयः[8]। हलदन्तात् इत्येव, भूमिशयः।

[७२१] अपो [9]योनियन्मतुषु सप्तम्या अलुग् वक्तव्यः।

अप्सुयोनिः। अप्सव्यः। [10]अप्सुमन्तौ। अप्सु भवः इति दिगादित्वाद् (४.३.५४/१४२९) यत् प्रत्ययः। [11]सर्वत्र सप्तमी इति योगविभागात् समासः॥

## नेन्सिद्धबध्नातिषु च। (१९/०७७)

इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्याः अलुग् न भवति। [12]स्थण्डिलवर्ती। सिद्ध – साङ्काश्यसिद्धः। [13]काम्पिल्यसिद्धः। [14]बध्नाति – [15]चक्रबद्धः। [16]चारबद्धः। सप्तमी इति योगविभागात् समासः। चक्रबन्धः इति केचिदुदाहरन्ति, तत् [17]पचाद्यजन्तं द्रष्टव्यम्। घजन्ते हि 'बन्धे च विभाषा' (६.३.१३/९७१) इत्युक्तम्॥

---

1. बहुलं इत्यधिकम् फ. 2. प्रपञ्चार्थमिदम् ब.फ.ह. 3. परात् ह. 4. परेजः परजः ह. 5. नास्ति फ. 6. वाक्यमिदं नास्ति फ. 7. नामग्रहणात् इत्यधिकम् फ. 8. अपराह्णशयः इत्यधिकम् ब.ह. 9. °मतिषु क.ड.ह. 10. अप्सुमतिः क.ड.फ. 11. सर्वत्र नास्ति ब, सर्वत्र योगविभागात् ह. 12. स्थण्डिलशायी ह. 13. उदाहरणमिदं नास्ति फ. 14. बध्नातौ फ. 15. चक्रबन्धः क.ब.फ. 16. कारकबन्धः फ. 17. पचाद्यच्प्रत्ययान्तं ब.फ.

स्थे च भाषायाम्। (२०/९७८)

स्थे चोत्तरपदे भाषायां सप्तम्या अलुक् न भवति। समस्थः। विषमस्थः। कूटस्थः। [1]पर्वतस्थः। भाषायाम् इति किम्? 'कृणोम्यारेष्ठः' (वा.सं. २.१)। 'पूर्वपदात्' (८.३.१०६/३६४३) इति षत्वम्॥

षष्ठ्या आक्रोशे। (२१/९७९)

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग् भवति। [3]चौरस्यकुलम्। वृषलस्यकुलम्। आक्रोशे इति किम्? [4]ब्राह्मणकुलम्।

[७२२] षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो[5] युक्तिदण्डहरेषु यथासङ्ख्यमलुग् वक्तव्यः। (म. भा. ३.१४६)

वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः॥

[७२३] आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति [6]चालुग् वक्तव्यः। (म. भा. ३.१४६)

अमुष्यापत्यम् आमुष्यायणः। नडादित्वात् फक् (४.१.९९/११०१)। अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका। [7]मनोज्ञादित्वाद् वुञ् (५.१.१३३/१७९८)। तथा आमुष्यकुलिका इति।

[७२४] देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः। (म. भा. ३.१४७)

[8]देवानाम्प्रियः[9]॥

[७२५] शेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायां अलुग् वक्तव्यः। (म. भा. ३.१४७)।

शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः।

[७२६] [10]दिवश्च दासे षष्ठ्या अलुग् वक्तव्यः। (म. भा. ३.१४७)

दिवोदासाय गायति[11]॥

पुत्रेऽन्यतरस्याम्। (२२/९८०)

पुत्रशब्दे उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्याः अलुग् भवति। दास्याःपुत्रः, दासीपुत्रः। वृषल्याःपुत्रः वृषलीपुत्रः। आक्रोशे इत्येव, [12]ब्राह्मणीपुत्रः॥

---

1. नास्ति ह. 2. अवरेष्ठः ह. 3. दासस्यकुलम् ब. 4. ब्राह्मणपुत्रः क. 5. परतः इत्यधिकम् ब. 6. वक्तव्यम् फ. 7. वाक्यमिदं नास्ति ब. 8. नास्ति फ. 9. मूर्खः। अन्यत्र देवप्रियः इत्यधिकम् ड. 10. वाक्यमिदं नास्ति फ. 11. दिवोदासदिवस्पतिवाचस्पतिवास्तोष्पतयः सञ्ज्ञायां अलुग्वक्तव्यः इत्यधिकम् क. 12. ब्राह्मणपुत्रः ब. क. ह.

## ऋतो विद्यायोनिसम्बन्धेभ्यः । (२३/९८१)

ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो[1] योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग् भवति । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । ऋतः इति किम् ? आचार्यपुत्रः । मातुलपुत्रः । विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्[2] (म. भा. ३. १४७) । विद्यायोनिसम्बन्धवाचिनि एवोत्तरपदे यथा स्यात्, अन्यत्र मा भूत् । [3]होतृधनम् । पितृधनम् । होतृगृहम् । पितृगृहम् ॥

## विभाषा स्वसृपत्योः । (२४/९८२)

स्वसृ पति इत्येतयोः उत्तरपदयोः ऋकारान्तेभ्यः विद्यायोनिसम्बन्धवाचिभ्यः[4] विभाषाऽलुग् भवति । मातुःष्वसा, मातुःस्वसा, मातृष्वसा । पितुःष्वसा, पितुःस्वसा, पितृष्वसा । यदा लुक् तदा 'मातृपितृभ्यां स्वसा' (८. ३. ८४/९८४) इति नित्यं षत्वम् । यदा तु अलुक् तदा 'मातुः पितुर्भ्यामन्यतरस्याम्' (८. ३. ८५/९८३) इति विकल्पेन [5]षत्वम् । दुहितुःपतिः, दुहितृपतिः । ननान्दुःपतिः, ननान्दृपतिः ॥

## आनङ् ऋतो द्वन्द्वे । (२५/९२१)

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्य आनङ आदेशो भवति । होतापोतारौ । नेष्टोद्गातारौ । प्रशास्ताप्रतिहर्तारौ । योनि[6]सम्बन्धेभ्यः – मातापितरौ । याताननान्दरौ । नकारोच्चारणं रपरत्वनिवृत्त्यर्थम् । ऋतः इति किम् ? [7]पितृपितामहौ । पुत्रे इत्यत्रानुवर्तते, ऋतः इति च । तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यानङादेशो भवति । पितापुत्रौ । मातापुत्रौ ॥

## देवताद्वन्द्वे च । (२६/९२२)

[8]देवतावाचिनां यो द्वन्द्वः [9]तत्रोत्तरपदे पूर्वपदस्य आनङ आदेशो भवति । 'इन्द्रावरुणौ' (ऋ. ६. ६८. १) । 'इन्द्रासोमौ' (ऋ. ६. ७२. ३) । 'इन्द्राबृहस्पती' (ऋ. ४. ४९. १) । द्वन्द्वे इति वर्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्ध[10]साहचर्यार्थम् । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वम् इत्येतत् निपात्यते । तत्र ये लोके प्रसिद्धसाहचर्या वेदे च ये सहवापनिर्दिष्टास्तेषामिह ग्रहणं भवति । [11]तेन ब्रह्मप्रजापती, शिववैश्रवणौ इत्येवमादौ न भवति ।

[७२७] उभयत्र वायोः प्रतिषेधो वक्तव्यः । (म. भा. ३. १४८)

अग्निवायू । वाय्वग्नी ॥

## ईदग्नेः सोमवरुणयोः । (२७/९२३)

सोम वरुण इत्येतयोः[12] देवताद्वन्द्वे अग्नेः ईकारादेशो भवति । 'अग्नीषोमौ' (ऋ. १.९३.१) । अग्नीवरुणौ । 'अग्नेः स्तुत्स्तोमसोमाः' (८. ३. ८२/९२४) इति षत्वम् ॥

---

1. च इत्यधिकम् फ. 2. कर्तव्यम् इत्यधिकम् फ. ह. 3. होतृधनम् पितृधनम् नास्ति फ. 4. उत्तरस्याः षष्ठ्याः इत्यधिकम् ब.क.ड.फ.ह. 5. षत्वम् नास्ति क. ह. 6. °सम्बन्धवाचिभ्यः ब. फ. 7. पितृमातामहौ ड. 8. देवतानां क. 9. तत्र चोत्तरपदे फ. 10. °साहचर्यपरिग्रहार्थम् फ. 11. वाक्यमिदं नास्ति ब. 12. उत्तरयोः इत्यधिकम् फ.

## इद् वृद्धौ । (२८/९२५)

कृतवृद्धावुत्तरपदे देवताद्वन्द्वे अग्नेः इकारादेशो भवति । 'आग्निवारुणीमनड्वाहीमालभेत' (काठ. १३.६) । आग्निमारुतं कर्म क्रियते । अग्नीवरुणौ देवते अस्य, अग्नीमरुतौ देवते अस्य इति[1] तद्धितः । तत्र 'देवताद्वन्द्वे च' (७.३.२१/१२३९) इत्युभयपदवृद्धौ कृतायाम् आनङ्, ईत्वं च बाधितुमिकारः क्रियते । वृद्धौ इति किम् ? आग्नेन्द्रः । 'नेन्द्रस्य परस्य' (७.३.२४/१२४०) इत्युत्तरपदवृद्धिः प्रतिषिध्यते ।

[७२८] इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः । (म. भा. ३.१४९)

'आग्नावैष्णवं चरुं [2]निर्वपेत्' (मै. सं. १.५.१) ॥

## दिवो द्यावा । (२९/९२६)

दिव् इत्येतस्य द्यावा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । 'द्यावाक्षामा' (ऋ. ८. १८. १६) । 'द्यावाभूमी[3]' (ऋ. १०.६५.४) ॥

## दिवसश्च पृथिव्याम् । (३०/९२७)

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो [4]दिवस् इत्ययमादेशो भवति, [5]चकाराद् द्यावा च । 'दिवस्पृथिव्यौ' (ऋ. २.२.३) । [4]द्यावापृथिव्यौ । अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति । कथं 'द्यावा चिदस्मै पृथिवी [6]नमेते' (ऋ. २.१२.१३) इति ? कर्तव्योऽत्र यत्नः ॥

## उषासोषसः । (३१/९२८)

[7]उषसः उषासा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । [8]उषासासूर्यम् । [9]'उषासानक्ता' (ऋ. १.१२२.२) ॥

## मातरपितरावुदीचाम् । (३२/९२९)

मातरपितरौ इत्युदीचामाचार्याणां मतेना[10]रङादेशः मातृशब्दस्य निपात्यते । मातरपितरौ । उदीचाम् इति किम् ? मातापितरौ ॥

## पितरामातरा च च्छन्दसि । (३३/३७३८)

पितरामातरा इति छन्दसि[11] निपात्यते । 'आ मा गन्तां पितरामातरा च' (वा. सं. ९.१९) । पूर्वपदस्य अराङादेशो निपात्यते । [12]उत्तरपदे तु 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' (७.१.३९/३५६१) इति आकारादेशः । तत्र 'ऋतो ङिसर्वनामस्थानयोः' (७.३.११०/२७५) इति गुणः । छन्दसि इति किम् ? मातापितरौ ॥

---

1. च विगृह्य इत्यधिकम् फ. क. 2. निर्वपेत् नास्ति फ. 3. द्यौश्च पृथिवी च द्यावापृथिव्यौ इत्यधिकम् ब. 4. दिवस ह. क. 5. चकारात्–भवन्ति नास्ति फ. 6. सन्नमेते ह. 7. उषस् इत्यस्य ह. 8. उदाहरणमिदं नास्ति ड. क. 9. उषासानक्तम् क. 10. अनङ् ह. 11. विषये इत्यधिकम् फ. 12. उत्तरपदस्य फ.

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । (३४/८३१)

भाषितः पुमान् [1]येन समानायामाकृतावेकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः । [2]तदेतदेवं कथं भवति ? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः । ऊङोऽभावः अनूङ, [3]भाषितपुंस्कादनूङ यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ स्त्रीशब्दः । बहुव्रीहिरयम्, अलुग्[4] निपातनात् पञ्चम्याः। तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते । [5]दर्शनीयभार्यः । श्लक्ष्णचूडः । दीर्घजङ्घः ।

स्त्रिया इति किम् ? ग्रामणि [6]ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कात् इति किम् ? खट्वाभार्यः । समानायामा[7]कृतौ इति किम् ? द्रोणीभार्यः । कथं [8]गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्यः इति ? कर्तव्योऽत्र यत्नः । अनूङ इति किम् ? ब्रह्मबन्धूभार्यः । समानाधिकरणे इति किम् ? [9]कल्याणा माता कल्याणीमाता । स्त्रियाम् इति किम् ? कल्याणी प्रधानमेषाम् कल्याणीप्रधाना [10]इमे । [11]अपूरणी इति किम् ? कल्याणी पञ्चमी [12]यासां ताः कल्याणीपञ्चमा रात्रयः । कल्याणीदशमाः[13] । प्रधानपूरणी[14]ग्रहणं कर्तव्यम् । इह मा भूत्, कल्याणीपञ्चमीकः पक्षः इति । [15]'अप् पूरणीप्रमाण्योः' (५.४.११६/८३२) इत्यत्रापि प्रधानपूरणीग्रहणमेव इत्यप्प्रत्ययो न भवति । अप्रियादिषु इति किम् ? कल्याणीप्रियः ।

प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्ति । [16]सचिवा । अम्बा । कान्ता । क्षान्ता । [17]समा । चपला । [18]दुहिता । [19]वामा । प्रियादिः ।

दृढभक्तिः इत्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् [20]सिद्धम् इति समाधेयम् ॥

## तसिलादिष्वाकृत्वसुचः । (३७/८३६)

'पञ्चम्यास्तसिल्' (५.३.७/९५३) इत्यतःप्रभृति 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५.४.१७/२०८५) इति प्रागेतस्माद् ये प्रत्ययाः[21] तेषु भाषितपुंस्कादनूङ स्त्रियाः पुंवद् भवति । तस्याः शालायाः ततः । तस्याम् तत्र । यस्याः यतः । यस्याम् यत्र । तसिलादिषु परिगणनं कर्तव्यम् । त्रतसौ (५.३.१०/१९५७) (५.३.७/१९५३) । तरप्तमपौ (५.३.५७/२००५) (५.३.५५/२००१) । चरट्जातीयरौ (५.३.५३/१९९९) (५.३.६९/२०२४) । कल्पब्देश्यदेशीयरः (५.३.६७/२०२२) । रूपप्पाशपौ (५.३.६६/२०२१) (५.३.४७/१९९३) । [22]थम्थालौ (५.३.२४/१९७२) (५.३.२३/१९७१) । दार्हिलौ (५.३.१५,१६/१९६४, १९६५) । [23]तिल्तातिलौ (५.४.४१/३५०४) ।

[७२९] शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः । (म.भा. ३.१५५)

---

1. यस्मिन्नर्थे ब.क. 2. तदेतदेवं–सोऽपि भाषितपुंस्कः नास्ति फ. 3. स्त्रियां इत्यधिकम् फ. 4. च इत्यधिकम् ह. 5. शोभनभार्यः ड.फ.ह. 6. कुलं नास्ति फ, ब्राह्मणीकुलं ह. 7. प्रकृतौ ड. 8. गर्भिणीभार्य. फ, प्रसूतभार्यः नास्ति क. 9. कल्याणाः क. 10. ते ब. 11. अपूरण्या इति फ. 12. आसां ह. 13. रात्रयः इत्यधिकम् फ. 14. ग्रहणं नास्ति क. 15. वाक्यमिदं नास्ति फ. 16. सविधा क. 17. नास्ति फ. 18. हिता क. 19. वामना ब.ड.फ.क.ह. 20. प्रसिद्धम् फ. 21. विहिताः इत्यधिकम् फ. 22. थ्यन् ह. 23. तिथ्थ्यनौ ह.

बह्वीभ्यो देहि । अल्पाभ्यो देहि । बहुशो देहि । अल्पशो देहि ।

[७३०] त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । (म.भा. ३.१५५)

पट्व्याः भावः पटुत्वम्, पटुता । गुणवचनस्य इति किम् ? कठ्याः भावः कठीत्वम्, कठीता ।

[७३१] भस्याढे तद्धिते पुंवद्भावो वक्तव्यः । (म.भा. ३.१५५)

हस्तिनीनां समूहो हास्तिकम् । अढे इति किम् ? श्यैनेयः । रौहिणेयः । कथम् आग्नायी देवता अस्य आग्नेयः स्थालीपाकः इति ? कर्तव्योऽत्र यत्नः ।

[७३२] ठक्छसोश्च पुंवद्भावो वक्तव्यः । (म.भा. ३.१५५)

भवत्याः छात्राः भावत्काः । भवदीयाः ॥

## क्यङ्मानिनोश्च । (३६/८३७)

क्यङि परतो मानिनि च स्त्रिया भाषितपुंस्काद[1]नूङ पुंवत् भवति । एनी – एतायते । श्येनी–श्येतायते । मानिनि – दर्शनीयमानी अयमस्याः । दर्शनीयमानिनी इयमस्याः । [2]मानिनो ग्रहणमस्त्र्यर्थम् असमानाधिकरणार्थं च । इह तु दर्शनीयामात्मानं मन्यते [3]दर्शनीयमानिनी इति पूर्वेणैव सिद्धम् ॥

## न कोपधायाः । (३७/८३८)

[4]कोपधायाः स्त्रियाः पुंवद्भावो न भवति । [5]पाचिकाभार्यः[6] । कारिकाभार्यः । मद्रिकाभार्यः । वृजिकाभार्यः । मद्रिकाकल्पा । [4]वृजिकाकल्पा । मद्रिकायते । वृजिकायते । मद्रिकामानिनी । वृजिकामानिनी । वैलिपिकायाः धर्म्यं वैलेपिकम् (म.भा. ३.१५६) ।

[७३३] कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् । (म.भा. ३.१५६)

इह मा भूत्, पाकभार्यः, भेकभार्यः इति ॥

## सञ्ज्ञापूरण्योश्च । (३८/८३९)

सञ्ज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति । दत्ताभार्यः । गुप्ताभार्यः । दत्तापाशा । गुप्तापाशा । दत्तायते । गुप्तायते । दत्तामानिनी । गुप्तामानिनी । पूरण्याः – पञ्चमीभार्यः । दशमीभार्यः । पञ्चमीपाशा । दशमीपाशा । पञ्चमीयते । दशमीयते । पञ्चमीमानिनी । दशमीमानिनी ॥

---

1. अनूङः क. 2. मनिन्ग्रहणम् ह. 3. देवदत्ता यज्ञदत्तायाः इत्यधिकम् फ. 4. ककारोपधायाः ब. 5. पाचिकाभार्यस्य ब. 6. रसिकाभार्यः इत्यधिकम् ब.क. 7. वृजिकाकल्पा नास्ति ब. क.

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे। (३९/८४०)

न इति वर्तते। वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तः तद्धितः, स यदि [1]रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति। स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। माथुरीपाशा। स्रौघ्नीयते। माथुरीयते। [2]स्रौघ्नीमानिनी। माथुरीमानिनी। वृद्धिनिमित्तस्य इति किम्? मध्यमभार्यः। तद्धितस्य इति किम्? काण्डलावभार्यः। बहुव्रीहिपरिग्रहः किमर्थः? तावद्भार्यः। यावद्भार्यः। अरक्तविकारे इति किम्? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः। लोहस्य विकारो लौही, [3]लौही ईषा यस्य रथस्य स [4]लौहेषः। [5]खादिरेषः॥

## स्वाङ्गाच्चेतोऽमानिनि। (४०/८४१)

स्वाङ्गादुत्तरो य [6]ईकारः तदन्तायाः स्त्रियाः न पुंवद् भवति अमानिनि परतः। दीर्घकेशीभार्यः। [7]श्लक्ष्णकेशीभार्यः। दीर्घकेशीपाशा। श्लक्ष्णकेशीपाशा। दीर्घकेशीयते। श्लक्ष्णकेशीयते। स्वाङ्गात् इति किम्? पटुभार्यः। ईतः इति किम्? [8]अकेशभार्यः। अमानिनि इति किम्। दीर्घकेशमानिनी॥

## जातेश्च। (४१/८४२)

जातेश्च स्त्रियाः न पुंवद् भवति अमानिनि परतः। कठीभार्यः। बह्वृचीभार्यः। कठीपाशा। बह्वृचीपाशा। कठीयते। बह्वृचीयते। अमानिनि इत्येव, कठमानिनी। बह्वृचमानिनी। अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य नेष्यते। हस्तिनीनां समूहो [9]हास्तिकम्॥

## पुंवत्कर्मधारयजातीयदेशीयेषु। (४२/७४६)

कर्मधारये [10]समासे जातीय देशीय इत्येतयोश्च प्रत्यययोः[11] भाषितपुंस्कादनूङ स्त्रियाः [12]पुंवद् भवति। प्रतिषेधार्थोऽयमारम्भः। 'न कोपधायाः' (६.३.३७/८३८) इत्युक्तम्, तत्रापि भवति। पाचकवृन्दारिका। पाचकजातीया। पाचकदेशीया। 'सञ्ज्ञापूरण्योश्च' (६.३.३८/८३९) इत्युक्तम्, तत्रापि भवति। दत्तवृन्दारिका। दत्तजातीया। [13]दत्तदेशीया। [14]पूरण्याः–पञ्चमवृन्दारिका। पञ्चमजातीया। पञ्चमदेशीया। 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६.३.३९/८४०) इत्युक्तम्, तत्रापि भवति। [16]स्रौघ्नजातीया। स्रौघ्नदेशीया। 'स्वाङ्गाच्चेतोऽमानिनि' (६.३.४०/८४१) इत्युक्तम्, तत्रापि भवति। श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया। श्लक्ष्णमुखदेशीया। 'जातेश्च' (६.३.४१/८४२) इत्युक्तम्, तत्रापि भवति। कठवृन्दारिका। कठजातीया। कठदेशीया। भाषितपुंस्कात् इत्येव, खट्वावृन्दारिका। अनूङ इत्येव, ब्रह्मबन्धूवृन्दारिका।

---

1. रक्तार्थे फ. 2. नास्ति फ. 3. लौही नास्ति फ. 4. रथः इत्यधिकम् ब. 5. खादिरेषः नास्ति फ. 6. इकारः फ. 7. श्लक्ष्णकेशीभार्यः नास्ति ब.क. 8. अविद्यमानाः केशाः यस्याः सा अकेशा, अकेशा भार्या यस्य अकेशभार्यः ब. 9. हस्तिनीकम् क. 10. समासे नास्ति फ. 11. परतः इत्यधिकम् फ. ह. 12. पुंवद्भावः फ. ह. 13. नास्ति फ. 15. पूरण्याः नास्ति ह. 16. स्रौघ्नवृन्दरिका इत्यधिकम् ब. क.

[७३४] कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः। (म. भा. ३.१५७)

कुक्कुट्याः अण्डम् कुक्कुटाण्डम्। मृग्याः पदम् मृगपदम्। मृग्याः क्षीरम् मृगक्षीरम्। काक्याः शावः काकशावः। न वा अस्त्रीपूर्वपदस्य विवक्षितत्वात् (म. भा. ३.१५७)। स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जातिः सामान्येन विवक्षितः। पुंवद्भावात् ह्रस्वत्वं [1]खिद्घादिषु भवति विप्रतिषेधेन (म. भा. ३.१५८)।

खित् – कालिम्मन्या। हरिणिम्मन्या। घादि – पट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। क – पट्विका। मृद्विका। इह इडबिड्, दरद्, पृथु, उशिज् इत्येते जनपदशब्दाः क्षत्रियवाचिनः, तत्र तद्राजप्रत्ययस्य स्त्रियामतश्च (४.१.१७७/११९६) इति लुकि कृते [2]इडबिड्वृन्दारिका इति विगृह्य समासः क्रियते। ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते। ऐडबिडवृन्दारिका। औशिजवृन्दारिका[3]॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः। (४३/९८७)

[4]घ रूप कल्प चेलट् ब्रुव गोत्र मत हत इत्येतेषु परतो भाषितपुंस्कात् परो यो ङीप्रत्ययस्तदन्तस्यानेकाचो ह्रस्वो भवति। घ – ब्राह्मणितरा। ब्राह्मणितमा। रूप – ब्राह्मणिरूपा। कल्प – ब्राह्मणिकल्पा। चेलट् – ब्राह्मणिचेली। ब्रुव – ब्राह्मणिब्रुवा। गोत्र – ब्राह्मणिगोत्रा। मत – ब्राह्मणिमता। हत – ब्राह्मणिहता। घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि। ब्रुव इति ब्रवीति इति ब्रुवः पचाद्यचि, [5]वच्यादेशो गुणश्च निपातनान्न भवति। ङ्यः इति किम्? दत्तातरा। गुप्तातरा। अनेकाचः इति किम्? 'नद्याः शेषस्यान्यतरस्याम्' (६.३.४४/९८६) इति वक्ष्यति। भाषितपुंस्कादित्येव, आमलकीतरा। कुवलीतरा॥

## नद्याः शेषस्यान्यतरस्याम्। (४४/९८६)

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्याम्। कश्च शेषः? अङी [6]च या नदी ङ्यन्तं च यदेकाच्। ब्रह्मबन्धूतरा, ब्रह्मबन्धुतरा[7]। [8]वीरबन्धूतरा। वीरबन्धुतरा। [9]स्त्रितरा, स्त्रीतरा। स्त्रितमा, स्त्रीतमा।

[७३५] कृन्नद्याः प्रतिषेधो वक्तव्यः।

लक्ष्मीतरा। [10]तन्त्रीतरा॥

## उगितश्च। (४५/९८७)

उगितश्च परस्याः नद्याः घादिषु अन्यतरस्यां ह्रस्वो भवति। श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा[11]। विदुषितरा, विदुषीतरा, विद्वत्तरा। पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः। प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम्॥

---

1. खितघादिकेषु ड. ह. 2. इडबिट् चासौ वृन्दारिका च इत्यधिकम् ब. 3. दारदवृन्दारिका पार्थवृन्दारिका इत्यधिकम् ब. 4. घादिषु फ. 5. वच् आदेशः ब. 6. च नास्ति फ. 7. धीवरीबन्धूतरा धीवरीबन्धुतरा इत्यधिकम् क. 8. उदाहरणमिदं नास्ति फ. ह. 9. उदाहरणमिदं नास्ति क. 10. लक्ष्मीतमा फ. ह. 11. श्रेयसीतमा श्रेयसितमा श्रेयस्तमा इत्यधिकम् फ.

## आन्महतः समानाधिकरणजातीययोः । (४६/८०७)

[1]समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतो महतः आकारादेशो भवति । महादेवः । महाब्राह्मणः । [2]महाबाहुः । महाबलः । [3]जातीये – महाजातीयः । समानाधिकरणजातीययोः इति किम् ? महतः पुत्रः महत्पुत्रः । लक्षणोक्तत्वादेवात्र न भविष्यति इति चेद् बहुव्रीहावपि न स्याद् महाबाहुः इति । तदर्थं [4]समानाधिकरणग्रहणं वक्तव्यम् । अमहान् महान् [5]सम्पन्नो महद्भूतश्चन्द्रमाः इत्यत्र गौणत्वान् महदर्थस्य न भवत्यात्वम् ।

[७३६] महदात्वे घास[6]करविशिष्टेषूपसङ्ख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् । (म. भा. ३.१६१)

महत्याः घासः महाघासः । महत्याः [7]करः महा[8]करः । महत्याः विशिष्टः महाविशिष्टः ।

[७३७] अष्टनः कपाले हविष्युपसङ्ख्यानम्[9] । (म. भा. ३.१६१)

अष्टाकपालं [10]चरुं निर्वपेत् । हविषि इति किम् ? अष्टकपालं ब्राह्मणस्य ।

[७३८] गवि च युक्तेऽष्टन उपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.१६१)

अष्टागवेन शकटेन । युक्ते इति किम् ? अष्टगवं ब्राह्मणस्य । तपरकरणं विस्पष्टार्थम् ॥

## द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः । (४७/८०८)

द्वि अष्टन् इत्येतयोः आकारादेशो भवति सङ्ख्यायामु[11]त्तरपदे अबहुव्रीह्यशीत्योः । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । द्व्यष्टनः इति किम् ? [12]पञ्चदश । सङ्ख्यायाम् इति किम् ? द्वैमातुरः । आष्टमातुरः । अबहुव्रीह्यशीत्योः इति किम् ? द्वित्राः । [13]त्रिदशाः । द्व्यशीतिः ।

[७३९] प्राक् शतादिति वक्तव्यम् । (म. भा. ३.१६१)

[14]इह मा भूत्, द्विशतम् । [15]द्विसहस्रम् । अष्टशतम् । अष्टसहस्रम् ॥

## त्रेस्त्रयः । (४८/८०९)

त्रि इत्येतस्य त्रयस् इत्ययमादेशो भवति सङ्ख्यायामबहुव्रीह्यशीत्योः । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत । सङ्ख्यायाम् इत्येव, त्रैमातुरः । अबहुव्रीह्यशीत्योः इत्येव, त्रिदशाः । त्र्यशीतिः । प्राक्शतात् इत्येव, त्रिशतम् । त्रिसहस्रम् ॥

---

1. समानाधिकरणे–महत्पुत्रः नास्ति फ. 2. महासेनः ह. 3. जातीयः क. 4. समानाधिकरणं कर्तव्यम् क. ह. 5. भूतः फ. 6. °कार ड. ह. 7–8. कारः ड. ह. 9. कर्तव्यम् इत्यधिकम् ह. 10. चरुं नास्ति क, पुरोडाशं ह. 11. उत्तरपदे नास्ति फ. 12. पञ्चदशः क. 13. द्विदशाः क. ह. 14. इह नास्ति फ. 15. उदाहरणमिदं नास्ति फ.

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । (४९/८१०)

चत्वारिंशत्प्रभृतौ संख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां द्वि अष्टन् त्रि इत्येतेषां यदुक्तं तद्विभाषा भवति । द्विचत्वारिंशत्, द्वाचत्वारिंशत् । त्रिपञ्चाशत्, त्रयःपञ्चाशत् । अष्टपञ्चाशत्, अष्टापञ्चाशत् । प्राक्शतात् इत्येव, द्विशतम् । अष्टशतम् । [1]त्रिशतम् ॥

## हृदयस्य हृल्लेखयदण्लासेषु । (५०/९८८)

हृदयस्य हृत् इत्ययमादेशो भवति लेख यत् अण् लास इत्येतेषु परतः । हृदयं लिखति इति हृल्लेखः । यत् – हृदयस्य प्रियम् हृद्यम् । अण् – हृदयस्य इदं हार्दम् । लास – हृदयस्य लासः हृल्लासः । लेख इति [2]अणन्तस्य ग्रहणमिष्यते । घञि तु हृदयस्य लेखो हृदयलेखः[3] । एतदेव लेखग्रहणं ज्ञापकम्, उत्तरपदाधिकारे प्रत्ययग्रहणे [4]तदन्ताग्रहणस्य ॥

## वा शोकष्यञ्रोगेषु । (५१/९८९)

शोक ष्यञ् रोग इत्येतेषु परतः हृदयस्य वा [5]हृदादेशो भवति । हृच्छोकः, हृदयशोकः[6] । ष्यञ् – सौहार्द्यम्, सौहृदयम् । ब्राह्मणादित्वात् ष्यञ् (५. १. १२४/१७८८) । हृदादेशपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (७. ३. १९/११३३) [7]इत्युभयपदवृद्धिः । रोगे – हृद्रोगः, हृदयरोगः । हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरमस्ति, [8]तेनैव सिद्धे विकल्पविधानं [9]प्रपञ्चार्थम् ॥

## पादस्य पदाज्यातिगोपहतेषु । (५२/९९०)

[10]पादस्य पद इत्ययमादेशो भवति आजि आति ग उपहत इत्येतेषु उत्तरपदेषु । पादाभ्यामजति इति पदाजिः । पादाभ्यामतति इति पदातिः । 'अज्यतिभ्यां, पादे च' (उ. ५८०,५८१) [11]इत्यौणादिकः इण् प्रत्ययः । तत्र अजेर्वीभावो न भवति अत एव निपातनात् । पादाभ्यां गच्छति इति पदगः । पादेनोपहतः पदोपहतः । पादशब्दो वृषादित्वाद् आद्युदात्तः, तस्य स्थाने[12] पदादेशः [13]उपदेशे एव अन्तोदात्तो निपात्यते, तेन पदोपहतः इति 'तृतीया कर्मणि' (६. २. ४८/३७८२) इति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वं भवति । पदाजिः, पदातिः, पदग इत्येतेषु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम्[14] ॥

## पद्यत्यतदर्थे । (५३/९९१)

यत्प्रत्यये परतः पादस्य पद् इत्ययमादेशो भवत्यतदर्थे । पादौ विध्यन्ति पद्याः शर्कराः । पद्याः कण्टकाः । अतदर्थे इति किम् ? पादार्थमुदकं पाद्यम् ।

[७४०] पद्भाव इके चरतावुपसङ्ख्यानम् । (म. भा. ३. १६३)

पादाभ्यां चरति पदिकः । 'पर्पादिभ्यः ष्ठन्' (४. ४. १०/१५५८) इति [15]पादशब्दात् ष्ठन् प्रत्ययः । शरीरावयववचनस्य पादशब्दस्य ग्रहणमिह[16] इष्यते, तेन 'पणपादमाषशताद् यत्' (५. १. ३४/१६९९) इत्यत्र पदादेशो न भवति । द्विपाद्यम् । त्रिपाद्यम् ॥

---

1. नास्ति फ. 2. अणन्तग्रहणम् फ. 3. इत्येव भवति इत्यधिकम् ब. फ. 4. तदन्तविधिर्नास्ति इति ब. 5 हृत् इत्ययमदेशः क. 6. हृत्कलेशः हृदयक्लेशः इत्यधिकम् फ. 7. इति नास्ति फ. 8. तत एव ब. 9. इदं इत्यधिकम् ब. फ. ह. 10. पादशब्दस्य ड. ह. 11. इति नास्ति क. 12. अयमादेशः फ, अयं पदादेशः क. 13. उपदेशे नास्ति ब. 14. भवति इत्यधिकम् ब. 15. पादशब्दात् नास्ति फ. 16. इह नास्ति ह, इष्यते नास्ति क.

## हिमकाषिहतिषु च। (५४/९९२)

हिम काषिन् हति इत्येतेषु पादशब्दस्य पद् इत्ययमादेशो भवति। हिम – पद्धिमम्। काषिन् – अथ पत्काषिणो यान्ति। हति – पद्धतिः॥

## ऋचः शे। (५५/९९३)

ऋक्सम्बन्धिनः पादशब्दस्य शे परतः पद् इत्ययमादेशो भवति। पच्छो गायत्रीं शंसति। पादं पादं शंसति इति 'सङ्ख्यैकवचनाच्च वीप्सायाम्' (५.४.४३/२११०) इति शस् प्रत्ययः। ऋचः इति किम्? पादशः कार्षापणं ददाति [1]इति॥

## वा घोषमिश्रशब्देषु। (५६/९९४)

घोष मिश्र शब्द इत्येतेषु चोत्तरपदेषु पादस्य वा पद् इत्ययमादेशो भवति। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः, पादशब्दः।

[७४१] निष्के चेति वक्तव्यम्। (म.भा. ३.१६३)

पन्निष्कः, पादनिष्कः॥

## उदकस्योदः सञ्ज्ञायाम्। (५७/९९५)

उदकशब्दस्य सञ्ज्ञायां विषये उद इत्ययमादेशो भवति उत्तरपदे परतः। उदमेघो नाम यस्य औदमेघिः पुत्रः। उदवाहो नाम यस्य औदवाहिः पुत्रः। सञ्ज्ञायाम् इति किम्? उदकगिरिः।

[७४२] सञ्ज्ञायामुत्तरपदस्योदकशब्दस्योदादेशो भवतीति वक्तव्यम्। (म.भा. ३.१६३)

लोहितोदः। नीलोदः। क्षीरोदः॥

## पेषंवासवाहनधिषु च। (५८/९९६)

पेषं वास वाहन धि इत्येतेषु चोत्तरपदेषु उदकस्य उद इत्ययमादेशो भवति। उदपेषं पिनष्टि। 'स्नेहने पिषः' (३.४.३८/३३५९) इति णमुल्। वास – उदकस्य वासः उदवासः। वाहन – उदकस्य वाहनः उदवाहनः। उदकं धीयतेऽस्मिन् इति उदधिः॥

## एकहलादौ पूरयितव्येऽन्यतरस्याम्। (५९/९९७)

उदकस्योद इति वर्तते। एकः, असहायः तुल्यजातीयेनानन्तरेण हलादिना, हल् आदिर्यस्यो[2]त्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्याम् उदकस्य उद इत्ययमादेशो भवति। उदकुम्भः, उदककुम्भः। उदपात्रम्, उदकपात्रम्। एकहलादौ इति किम्? [3]उदकस्थालम्। पूरयितव्ये इति किम्? उदकपर्वतः॥

---

1. इति नास्ति फ. 2. उत्तरपदस्य नास्ति फ, उत्तरस्य क. 3. उदकस्थाली फ.ह.ड.

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च। (६०/९९८)

मन्थ ओदन सक्तु बिन्दु वज्र भार हार वीवध गाह इत्येतेषु उत्तरपदेषु [1]उदकस्य उद इत्ययमादेशो भवति अन्यतरस्याम्। [2]उदकेन मन्थः उदमन्थः, उदकमन्थः। ओदन–उदकेन ओदनः उदौदनः, उदकौदनः। सक्तु–[3]उदकेन सक्तुः उदसक्तुः, उदकसक्तुः। बिन्दु–[4]उदकस्य बिन्दुः उदबिन्दुः, उदकबिन्दुः। वज्र–उदकस्य वज्रः उदवज्रः, उदकवज्रः। भार–उदकं बिभर्ति इति उदभारः, उदकभारः। हार–उदकं हरति इति उदहारः, उदकहारः। वीवध–उदकस्य वीवधः उदवीवधः, उदकवीवधः। गाह–उदकं गाहते इति उदगाहः, उदकगाहः॥

## इको ह्रस्वोऽङ्यो गालवस्य। (६१/९९९)

इगन्तस्य अङ्यन्तस्य उत्तरपदे ह्रस्वः भवति गालवस्य आचार्यस्य मतेन अन्यतरस्याम्। ग्रामणिपुत्रः ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः। इकः इति किम्? खट्वापादः। मालापादः। अङ्यः इति किम्? गार्गीपुत्रः। वात्सीपुत्रः। गालवग्रहणं पूजार्थम्। अन्यतरस्याम् इति हि वर्तते। व्यवस्थितविभाषा चेयम्। तेनेह न भवति, कारीषगन्धीपुत्रः इति। इयङुवङ्भाविनामव्ययानां च न भवति। श्रीकुलम्। भ्रूकुलम्। काण्डीभूतम्। वृषलीभूतम्। भ्रूकुंसादीनां तु भवत्येव। भ्रुकुंसः। भ्रुकुटिः। अपर आह।

[७४३] भ्रूकुंसादीनामकारो भवतीति वक्तव्यम्। (म. भा. ३. १६४)

भ्रकुंसः। भ्रकुटिः॥

## एक तद्धिते च। (६२/१०००)

[5]एकशब्दस्य तद्धिते उत्तरपदे [6]ह्रस्वो भवति। एकस्या आगतम् एकरूप्यम्। एकमयम्। एकस्या भावः एकत्वम्। एकता। उत्तरपदे–एकस्याः क्षीरम् एकक्षीरम्। एकदुग्धम्। लिङ्गविशिष्टस्य ग्रहणमे[7]कशब्दह्रस्वत्वं प्रयोजयति। [8]अचा हि गृह्यमाणमत्र विशेष्यते, न पुनरच् गृह्यमाणेन इति॥

## ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्। (६३/१००१)

ङ्यन्तस्याबन्तस्य च सञ्ज्ञाछन्दसोः [9]बहुलं ह्रस्वो भवति। ङ्यन्तस्य सञ्ज्ञायाम्–रेवतिपुत्रः। रोहिणिपुत्रः। [10]भरणिपुत्रः। न च भवति। नान्दीकरः। नान्दीघोषः। [11]नान्दीविशालः। ङ्यन्तस्य छन्दसि–'[12]कुमारिदा प्रफर्विदा' (काठ. ३९.९)। न च भवति। फाल्गुनीपौर्णमासी। जगतीछन्दः। आबन्तस्य सञ्ज्ञायाम्–शिलवहम्। शिलप्रस्थम्। न च भवति। लोमकागृहम्। [13]लोमकाषण्डम्। आबन्तस्य छन्दसि–अजक्षीरेण जुहोति। '[14]ऊर्णम्रदाः पृथिवी दक्षिणावत' (अ. १८. ३. ४९)। न च भवति। 'ऊर्णासूत्रेण कवयो वयन्ति' (वा. सं. १९. ८०)॥

---

1. उदकशब्दस्य फ. 2. उदकेन मन्थः नास्ति फ. 3. उदकेन सक्तुः नास्ति फ. 4. उदकस्य बिन्दुः नास्ति फ. 5. ह्रस्व इति वर्तते इत्यधिकम् फ. ह. 6. च इत्यधिकम् ब. ड. ह. 7. एकशब्दः क, एकशब्दस्य ह. 8. अचापि ह. 9. च इत्यधिकम् फ. 10–11. उदाहरणमिदं नास्ति फ. 12. कुमारिदारा ब. क. 13. लोमकाखण्डः ह. 14. ऊर्णुप्रदा क, ऊर्णम्रदा ड.

## त्वे च । (६४/१००२)

त्वप्रत्यये परतो ङ्यापोः बहुलं ह्रस्वो भवति । तदजाया भावः अजत्वम्, अजात्वम् । तद्रोहिण्या भावः रोहिणित्वम्, [1]रोहिणीत्वम् (काठ. सं. ८. १) । सञ्ज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ॥

## इष्टकेषीकामालानां चिततूलभारिषु । (६५/१००६)

इष्टकेषीकामालानां चित तूल भारिन् इत्येतेषु उत्तरपदेषु यथासङ्ख्यं ह्रस्वो भवति । इष्टकचितम् । इषीकतूलम् । मालभारिणी कन्या । [2]इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं [3]भवति । पक्वेष्टकचितम् । मुञ्जेषीकतूलम् । उत्पलमालभारिणी [4]कन्या ॥

## खित्यनव्ययस्य । (६६/२९४३)

[5]खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वो भवति । कालिमन्या । हरिणिम्मन्या । मुमा ह्रस्वो न बाध्यते, अन्यथा हि ह्रस्वशासन[6]मनर्थकं स्यात् । अनव्ययस्य इति किम् ? दोषामन्यमहः । दिवामन्या रात्रिः । अनव्ययस्य इत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य ॥

## अरुर्द्विषदजन्तस्य मुम् । (६७/२९४२)

अरुस् द्विषत् इत्येतयोरजन्तानां च खिदन्त उत्तरपदे [7]मुमागमो भवति अनव्ययस्य । अरुन्तुदः । द्विषन्तपः । अजन्तानाम्—कालिम्मन्या । अरुर्द्विषदजन्तस्य इति किम् ? विद्वन्मन्यः । अनव्ययस्य इत्येव, दोषामन्यमहः । दिवामन्या रात्रिः । अन्तग्रहणं [8]किम् ? कृताजन्तकार्यप्रतिपत्त्यर्थम् । अतो ह्रस्वे कृते मुम् भवति ॥

## इच एकाचोऽम्प्रत्ययवच्च । (६८/२९९४)

इजन्तस्य एकाचः खिदन्ते उत्तरपदे अमागमो भवति, [9]अम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति । अम् इति हि द्विरावर्तते । गाम्मन्यः । स्त्रीम्मन्यः, स्त्रियम्मन्यः । श्रियम्मन्यः । भ्रुवम्मन्यः[10] । अम्प्रत्ययवच्च इत्यतिदेशात् आत्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति । इचः इति किम् ? त्वङ्मन्यः । [11]एकाचः इति किम ? [12]लेखाभ्रुम्मन्यः । अथेह कथं भवितव्यम्, श्रियमात्मानं ब्राह्मणकुलं मन्यते इत्युपक्रम्य श्रिमन्यम् इति भवितव्यम् इति भाष्ये व्यवस्थितम् ? तत्रेदं भाष्यकारस्य दर्शनम्, अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा प्रष्ठादयः स्त्रियाम् । तत्र 'स्वमोर्नपुंसकात्' (७.१.२३/३१९) इत्यमो लुग् भवति ॥

## वाचंयमपुरन्दरौ च । (६९/२९५७)

वाचंयम पुरन्दर इत्येतौ [13]निपात्येते । वाचंयम आस्ते । पुरं दारयति इति पुरन्दरः[14] ॥

---

1. उदाहरणमिदं नास्ति ह. 2. इष्टकादिभिः ब. 3. भवति नास्ति फ. 4. कन्या नास्ति फ. 5. ह्रस्व इति वर्तते इत्यधिकम् ह. 6. अनवकाशं ब. ह. 7. मुम् फ. 8. किम् नास्ति ह. 9. अम्प्रत्ययवच्च नास्ति ह. 10. वरंमन्यः इत्यधिकम् ड. ह. फ. 11. वाक्यमिदं नास्ति फ. 12. उदाहरणमिदं नास्ति फ. 13. शब्दौ इत्यधिकम् फ. 14. शक्रः इत्यधिकम् ब. ह, वाचि यमो व्रते, पूः सर्वयोर्दारिसहोः इति खच् प्रत्यय इत्यधिकम् फ. ह.

## कारे सत्यागदस्य । (७०/१००७)

कारशब्द उत्तरपदे सत्य अगद इत्येतयोर्मुमागमो भवति । सत्यं करोति, सत्यस्य वा कारः सत्यङ्कारः। एवम् – अगदङ्कारः ।

[७४४] [1]अस्तुसत्यागदस्य कार इति वक्तव्यम् ।(म. भा. ३.१६७)

अस्तुङ्कारः ।

[७४५] भक्षस्य छन्दसि कारे मुम् वक्तव्यः । (म. भा. ३. १६७)

भक्षं करोति, भक्षस्य वा कारः भक्षङ्कारः (मै.सं. ४.७.३) । छन्दसि इति किम् ? भक्षकारः ।

[७४६] धेनोर्भव्यायां मुम् वक्तव्यः । (म.भा.३. १६७)

'धेनुम्भव्या[2]' । (मै. सं. ४. ४. ८)

[७४७] लोकस्य पृणे मुम् वक्तव्यः । (म. भा. ३. १६७)

'लोकम्पृणः' (तै.सं. ५.७.५.६) ।

[७४८] इत्येऽनभ्याशस्य मुम् वक्तव्यः । (म.भा॰ ३. १६८)

अनभ्याशमित्यः ।

[७४९] भ्राष्ट्राग्न्योरिन्धे मुम् वक्तव्यः । (म. भा. ३. १६८)

भ्राष्ट्रमिन्धः । 'अग्निमिन्धः' (ऋ. १.१६२.५) ।

[७५०] गिलेऽगिलस्य मुम् वक्तव्यः । (म.भा. ३. १६८)

तिमिङ्गिलः । अगिलस्य इति किम् ? गिलगिलः ।

[७५१] गिलगिले चेति वक्तव्यम् । (म.भा. ३. १६८)

तिमिङ्गिलगिलः ।

[७५२] उष्णभद्रयोः करणे मुम् वक्तव्यः । (म. भा. ३. १६८)

उष्णङ्करणम् । भद्रङ्करणम् ।

[७५३] सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः । (म.भा. ३.१६८)

सूतपुत्री, सूतदुहिता । उग्रपुत्री. उग्रदुहिता । राजपुत्री, राजदुहिता । भोजपुत्री, भोजदुहिता । मेरुपुत्री, मेरुदुहिता । केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तेषां पुत्री इति भवति । अन्यत्रापि हि दृश्यते शैलपुत्री इति ॥

---

1. सत्यागदस्य नास्ति फ. 2. इति इत्यधिकम् फ.

## श्येनतिलस्य पाते ञे। (७१/१२६८)

श्येन तिल इत्येतयोः पातशब्दे उत्तरपदे ञप्रत्यये [1]परे मुमागमो भवति। श्येनपातोऽस्यां [2]क्रीडायाम् श्यैनम्पाता। तैलम्पाता। ञे इति किम्? श्येनपातः[3]॥

## रात्रेः कृति विभाषा। (७२/१००८)

रात्रेः कृदन्त उत्तरपदे विभाषा मुमागमो भवति। रात्रिञ्चरः, रात्रिचरः। रात्रिमटः, रात्र्यटः। अप्राप्तविभाषा इयम्। [4]खिति हि नित्यं मुम् भवति। [5]रात्रिम्मन्यः॥

## नलोपो नञः। (७३/८५७)

नञो नकारस्य लोपो भवति उत्तरपदे। अब्राह्मणः। अवृषलः। असुरापः। असोमपः।

[७५४] नञो नलोपेऽवक्षेपे तिङ्युपसङ्ख्यानं कर्तव्यम्। (म.भा. ३.१६९)

अपचसि त्वं जाल्म। अकरोषि त्वं जाल्म॥

## तस्मान्नुडचि। (७४/७५८)

तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादावुत्तरपदे। अनजः। अनश्वः[6]। तस्मात् इति किम्? नञ एव हि स्यात्। पूर्वान्ते हि 'ङमो ह्रस्वादचि ङमुण्नित्यम्' (८.३.३२/१३४) इति प्राप्नोति[7]॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या। (७५/७५९)

नभ्राट् नपात् नवेदाः नासत्याः [8]नमुचि नकुल नख नपुंसक नक्षत्र नक्र नाक इत्येतेषु नञ् [9]प्रकृत्या भवति। न भ्राजते इति नभ्राट्। भ्राजतेः क्विबन्तस्य नञ्समासः। न पाति इति नपात्। पातिः शत्रन्तः। न वेत्ति इति नवेदाः। वेत्तिरसुन्प्रत्ययान्तः। नासत्याः – सत्सु साधवः सत्याः, न सत्याः असत्याः, न असत्याः नासत्याः। न मुञ्चति इति नमुचिः। मुचेरौणादिकः कि[10]प्रत्ययः।

न अस्य कुलमस्ति नकुलः। नख – नास्य खमस्ति इति नखम्। नपुंसक – न स्त्री न पुमान् नपुंसकम्। स्त्रीपुंसयोः पुंसकभावो [11]निपात्यते। नक्षत्र – न [12]क्षरते क्षीयते इति वा नक्षत्रम्। क्षियः क्षरतेर्वा क्षत्रम् इति निपात्यते। नक्र – न क्रामति इति नक्रः। क्रमेर्डप्रत्ययो निपातनात्। नाक – नास्मिन् अकमस्ति नाकम्॥

---

1. परतो ब. 2. क्रियायां ह. 3. तिलपातः इत्यधिकम् ब. 4. खिविहिते क. 5. रात्रिम्मन्यमहः ब. 6. अनुष्ट्रः इत्यधिकम् ह.फ.ग. 7. अचीति किम्? अब्राह्मणः इत्यधिकम् ब. 8. नमूचि ब. 9. न विकारमापद्यते ब. 10. किन् प्रत्ययः ह. 11. निपातनात् ब.फ.ह. 12. क्षरति ब.क.ड.

## एकादिश्चैकस्य चादुक् । (७६/८११)

[1]एकादिश्च नञ् प्रकृत्या भवति, एकशब्दस्य च आदुक् आगमो भवति । एकेन न विंशतिः एकान्नविंशतिः । एकान्नत्रिंशत् । तृतीया इति योगविभागात् समासः । पूर्वान्तोऽयमादुक् क्रियते पदान्तलक्षणोऽत्रानुनासिको विकल्पेन यथा स्यात् इति ।।

## नगोऽप्राणिष्वन्यतरस्याम् । (७७/७६०)

[2]नञ् प्रकृत्या भवति अन्यतरस्याम् । नगा वृक्षाः, अगा वृक्षाः । नगाः पर्वताः, अगाः पर्वताः । न गच्छन्ति इति नगाः । गमेर्डप्रत्ययः (उ. २३५) । अप्राणिषु इति किम् ? अगो वृषलः शीतेन ।।

## सहस्य सः सञ्ज्ञायाम् । (७८/१०००)

[3]सहशब्दस्य स इत्ययमादेशो भवति सञ्ज्ञायां विषये । साश्वत्थम् । सपलाशम् । सशिंशपम् । सञ्ज्ञायाम् इति किम् ? सहयुध्वा । सहकृत्वा । सादेश उदात्तो निपात्यते । उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात् । स निपातनस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र [4]उपयुज्यते । अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव, सेष्टि, सपशुबन्धम् इति ।।

## ग्रन्थान्ताधिके च । (७९/१०१०)

ग्रन्थान्ते अधिके च वर्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति । सकलं ज्यौतिषमधीते । समुहूर्तम् । ससङ्ग्रहं व्याकरणम[5]धीयते । कलान्तं, मुहूर्तान्तं, सङ्ग्रहान्तम् इति अन्तवचने (२.१.६/६५२) इत्यव्ययीभावः समासः । तत्र अव्ययीभावे चाकाले (६.३.८१/६६०) इति कालवाचिन्युत्तरपदे समासो न [6]प्राप्नोति इत्ययमारम्भः । अधिके – सद्रोणा खारी । समाषः कार्षापणः । सकाकिणीको माषः ।।

## द्वितीये चानुपाख्ये । (८०/१०११)

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः[7] । उपाख्यायते प्रत्यक्षत उपलभ्यते यः स उपाख्यः । उपाख्यादन्यः अनुपाख्यः अनुमेयः । तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति । साग्निः कपोतः । सपिशाचा [8]वात्या । सराक्षसीका [9]शाला । अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानाः [10]अनुपाख्या भवन्ति ।।

## अव्ययीभावे चाकाले । (८१/६६०)

अव्ययीभावे च समासे अकालवाचिनि उत्तरपदे सहस्य स इत्ययमादेशो भवति । सचक्रं धेहि । सधुरं [11]प्राज । अकाले इति किम् ? [12]सहपूर्वाह्णम् ।।

---

1. प्रकृत्या इति वर्तते इत्यधिकम् फ.ह.ग. 2. नग इत्यप्राणिषु अन्यतरस्यां नञ् ब.क.ड.फ, नग इत्यत्र नञ् अप्राणिषु अन्यतरस्यां ह. 3. उत्तरपदे इति वर्तते इत्यधिकम् फ. ह, सह इत्येतस्य फ. 4. प्रयुज्यते ह. फ, युज्यते क. 5. अधीते ब.फ. 6. भवति ह. 7. इत्युच्यते इत्यधिकम् ब. 8. रात्रयः ब. 9. निशा फ, विद्युत् ह, सराक्षसिका ड. 10. तदुपाख्याः फ. 11. व्रज फ.ह. 12. सहापराह्णम् फ.

## वोपसर्जनस्य। (८२/८४९)

उपसर्जनसर्वावयवः समासः उपसर्जनम्। यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते। तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति। सपुत्रः, सहपुत्रः। [1]सच्छात्रः, सहच्छात्रः। उपसर्जनस्य इति किम्? सहयुध्वा। सहकृत्वा[2]। सहकृत्वप्रियः, प्रियसहकृत्वा इति इह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवति इति सभावो न भवति[3]॥

## प्रकृत्याशिष्यगोवत्सहलेषु। (८३/८५०)

प्रकृत्या सहशब्दो भवति आशिषि विषये अगोवत्सहलेषु। स्वस्ति देवत्ताय सहपुत्राय सहच्छात्राय सहामात्याय। अगोवत्सहलेषु इति किम्? स्वस्ति भवते सहगवे, सगवे। सहवत्साय, सवत्साय। सहहलाय, सहलाय। 'वोपसर्जनस्य' (६.३.८२/८४९) इति पक्षे भवत्येव सभावः॥

## समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु। (८४/१०१२)

स इति वर्तते। समानस्य स इत्ययमादेशो भवति छन्दसि विषये मूर्धन् प्रभृति उदकम् इत्येतानि उत्तरपदानि वर्जयित्वा। 'अनुभ्राता सगर्भ्यः' (वा.सं. ४.२०)। 'अनुसखा सयूथ्यः' (वा. सं. ४.२०)। 'यो नः सनुत्यः' (ऋ. २.३०.९)। समानो गर्भः सगर्भः, तत्र भवः सगर्भ्यः। 'सगर्भसयूथसनुताद् यत्' (४.४.११४/३४६०) इति यत्प्रत्ययः। अमूर्धप्रभृत्युदर्केषु इति किम्? समानमूर्धा। समानप्रभृतयः। समानोदर्काः। समानस्य इति योगविभाग इष्टप्रसिद्ध्यर्थः क्रियते। तेन सपक्षः, साधर्म्यम्, सजातीयः इत्येवमादयः सिद्धाः भवन्ति॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु। (८५/१०१३)

[4]ज्योतिस् जनपद रात्रि नाभि नामन् गोत्र रूप स्थान वर्ण वयस् वचन बन्धु इत्येतेषु उत्तरपदेषु समानस्य स इत्ययमादेशो भवति। सज्योतिः। सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः सवर्णः। सवयाः। सवचनः। सबन्धुः॥

## चरणे ब्रह्मचारिणि। (८६/१०१४)

चरणे [5]गम्यमाने ब्रह्मचारिणि उत्तरपदे समानस्य स इत्ययमादेशो भवति। समानो ब्रह्मचारी सब्रह्मचारी। ब्रह्म वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरति इति ब्रह्मचारी। समानः तस्यैव ब्रह्मणः समानत्वाद् [6]इत्ययमर्थो भवति। समाने ब्रह्मणि व्रतचारी सब्रह्मचारी इति॥

## तीर्थे ये। (८७/१०१५)

तीर्थशब्द उत्तरपदे [7]यत्प्रत्यये परतः समानस्य स इत्ययमादेशो भवति। सतीर्थ्यः। 'समानतीर्थे वासी' (४.४.१०७/१६२८) इति यत्प्रत्ययः॥

---

1. उदाहरणमिदं नास्ति फ. 2. इति इत्यधिकम् फ. 3. इति इत्यधिकम् क. 4. समानस्य स इति वर्तते इत्यधिकम् फ. ह. 5. गम्यमाने नास्ति फ. 6. इत्ययमस्यार्थो क. ह. 7. यत्प्रत्ययपरे फ. ब. ड.

## विभाषोदरे । (८८/१०१६)

उदरशब्दे उत्तरपदे [1]यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति । सोदर्यः, समानोदर्यः । 'समानोदरे शयित ओ चोदात्तः' (४.४.१०८/१६५९) इति [2]यत् ॥

## दृग्दृशवतुषु । (८९/१०१७)

दृक् दृश वतु इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति । सदृक् । सदृशः । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३.२.६०/४२९) इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' (वा. २६१) इति कञ्क्विनौ प्रत्ययौ [3]क्रियेते ।

[७५५] दृक्षे चेति वक्तव्यम् । (म.भा. ३.१७१)

सदृक्षः ।

[७५६] [4]दृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यः ।

वतुग्रहणमुत्तरार्थम् ॥

## इदं किमोरीश्की । (९०/१०१८)

इदं किम् इत्येतयोरीश् की इत्येतौ यथासङ्ख्यमादेशौ भवतो दृग्दृशवतुषु । ईदृक् । ईदृशः । इयान् । कीदृक् । कीदृशः । कियान् । 'किमिदंभ्यां वो घः' (५.२.४०/१८४१) इति वतुप् ।

[७५७] दृक्षे चेति वक्तव्यम् ।

ईदृक्षः । कीदृक्षः ॥

## आ सर्वनाम्नः । (९१/४३०)

सर्वनाम्नः आकारादेशो भवति दृग्दृशवतुषु[5] । तादृक् । तादृशः । तावान् । यादृक् । यादृशः । यावान् ।

[७५८] दृक्षे चेति वक्तव्यम् ।

तादृक्षः । [6]यादृक्षः ।

---

1. यत्प्रत्यये फ. 2. यत्प्रत्ययः ह. 3. विहितौ फ. ह. 4. वार्तिकमिदं नास्ति फ. 5. परतः इत्यधिकम् फ. 6. नास्ति फ.

## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये। (९२/४१८)

विष्वक् देव इत्येतयोः सर्वनाम्नश्च [1]टेः अद्रि इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। विष्वग् अञ्चति इति 'विष्वद्र्यङ्' (ऋ. ७. २५. १)। [2]देवद्र्यङ्। सर्वनाम्नः–'तद्र्यङ्' (तै. ५. ५. १. २)। '[3]यद्र्यङ्' (तै. ५. ५. १. १)। अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् (म. भा. ३. १७२)। तत्र यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८. २. ४/३६५७) इत्येष स्वरो भवति। विष्वग्देवयोः इति किम्? अश्वाची। अञ्चतौ इति किम्? विष्वग्युक्। वप्रत्यये इति किम्? विष्वगञ्चनम्। वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेन अयस्कृतम्, अयस्कारः इत्यत्र अतः कृकमिकंसकुम्भपात्र (८.३.४६/१६०) इति सत्वं भवति।

[७५९] छन्दसि स्त्रियां बहुलमिति वक्तव्यम्। (म.भा. ३. १७२)

'विश्वाची च घृताची च' (ऋ. ७.४३.३, ऋ. १.१६७.३) इत्यत्र न भवति। 'कद्रीची' (ऋ. १. १६४ १७) इत्यत्र तु भवत्येव॥

## समः समि। (९३/४२१)

सम् इत्येतस्य समि इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। सम्यक्, सम्यञ्चौ, सम्यञ्चः॥

## तिरसस्तिर्यलोपे। (९४/४२३)

[4]तिरस् इत्येतस्य तिरि इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदेऽलोपे, यदा अस्य लोपो न भवति। तिर्यक्, तिर्यञ्चौ, तिर्यञ्चः। अलोपे इति किम्? तिरश्चा। तिरश्चे। अचः इत्यकारलोपः॥

## सहस्य सध्रिः। (९५/४२२)

सह इत्येतस्य सध्रिः इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा॥

## सध मादस्थयोश्छन्दसि। (९६/३५२९)

छन्दसि विषये माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशो भवति। 'सधमादो द्युम्निनीरापः' (वा.सं. १०.७)। 'सधस्था' (तै. सं. ५.७.७.१)॥

---

1. टेः स्थाने ब.क.ह. 2. देवान् अञ्चति इति इत्यधिकम् ब. 3. उदाहरणमिदं नास्ति फ. 4. तिरस्–लोपः नास्ति फ.

## द्व्यन्तरुपसर्गेभ्योऽप ईत्। (९७/९४१)

द्वि अन्तर् इत्येताभ्यां उपसर्गाच्च उत्तरस्य अप् इत्येतस्य ईकारादेशो भवति। द्वीपम्। अन्तरीपम्। उपसर्गात् – नीपम्। वीपम्। समीपम्।

[७६०] समाप ईत्वे प्रतिषेधो वक्तव्यः। (म.भा. ३.१७३)

समापं नाम देवयजनम्। अपर आह –

[७६१] ईत्वमनवर्णादिःति वक्तव्यम्। (म.भा. ३.१७३)

इह मा भूत्, प्रापम्, परापम्। अप्शब्दं प्रति क्रियायोगाभावात् उपसर्गग्रहणं प्राद्युपलक्षणार्थम्॥

## ऊदनोर्देशे। (९८/९४२)

अनोरुत्तरस्य अपः ऊकारादेशो भवति देशाभिधाने। अनूपो देशः। देशे इति किम्? अन्वीपम्। दीर्घोच्चारणमवग्रहार्थम्, अनु ऊपः अनूपः इति॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु। (९९/१०२७)

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति आशिस् आशा आस्था आस्थित उत्सुक ऊति कारक राग छ इत्येतेषु परतः। अन्या आशीः अन्यदाशीः। अन्या आशा अन्यदाशा। अन्या आस्था अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः। अन्यः रागः अन्यद्रागः। अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो (४.२.१३८/१३६२) द्रष्टव्यः। अषष्ठचतृतीयास्थस्य इति किम्? अन्यस्य आशीः अन्याशीः। अन्येन आस्थितः अन्यास्थितः।

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥

अन्यस्य कारकम् अन्यत्कारकम्। अन्यस्य इदम् अन्यदीयम्। अस्य च द्विर्नञ्ग्रहणं लिङ्गम्॥

## अर्थे विभाषा। (१००/१०२६)

अर्थशब्दे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति। अन्यदर्थः, अन्यार्थः॥

## कोः कत् तत्पुरुषेऽचि। (१०१/१०२७)

कु इत्येतस्य कत् इत्ययमादेशो भवति तत्पुरुषे समासे अजादावुत्तरपदे। कदजः। कदश्वः। कदुष्ट्रः। कदन्नम्। तत्पुरुषे इति किम्? कूष्ट्रो राजा। अचि इति किम्? कुब्राह्मणः। कुपुरुषः।

[७६२] कद्भावे त्रावुपसङ्ख्यानम्। (म.भा. ३.१७३)

कुत्सितास्त्रयः कत्त्रयः॥

## रथवदयोश्च । (१०२/१०२८)

रथ वद इत्येतयोश्चोत्तरपदयोः कोः कत् इत्ययमादेशो भवति । कद्रथः । कद्वदः ॥

## तृणे च जातौ । (१०३/१०२९)

तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कत् इत्यादेशो भवति । कत्तृणा नाम जातिः । जातौ इति किम् ? कुत्सितानि तृणानि कुतृणानि ॥

## का पथ्यक्षयोः । (१०४/१०३०)

पथिन् अक्ष इत्येतयोरुत्तरपदयोः कोः का इत्ययमादेशो भवति । [1]कापथः । काक्षः ॥

## ईषदर्थे च । (१०५/१०३१)

ईषदर्थे वर्तमानस्य कोः का इत्ययमादेशो भवति । कामधुरम् । कालवणम् । अजादावपि परत्वात् कादेश एव भवति । काम्लम् । कोष्णम् ॥

## विभाषा पुरुषे । (१०६/१०३२)

पुरुषशब्दे उत्तरपदे विभाषा कोः का इत्ययमादेशो भवति । कापुरुषः, कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे तु [2]पूर्वविप्रतिषेधेन नित्यं का भवति । ईषत् पुरुषः कापुरुषः ॥

## कवञ्चोष्णे । (१०७/१०३३)

उष्णशब्दे उत्तरपदे कोः कवम् इत्ययमादेशो भवति, का च विभाषा । कवोष्णम्, कोष्णम्, कदुष्णम् ॥

## पथि च च्छन्दसि । (१०८/३५३०)

पथिशब्दे उत्तरपदे छन्दसि विषये कोः [3]कवम् का इत्येतावादेशौ भवतो विभाषा । कवपथः, कापथः, कुपथः ॥

---

1. कुत्सितः पन्थाः इत्यधिकम् फ. 2. पूर्वविप्रतिषेधे फ, पूर्वपूर्वविप्रतिषेधेन क. 3. कवङ इत्ययमादेशः, का च विभाषा क.ह.

## पृषोदरादीनि यथोपदिष्टम्। (१०९/१०३४)

[1]पृषोदरप्रकाराणि शब्दरूपाणि, [2]येषु लोपागमवर्णविकाराः [3]शास्त्रेण न विहिताः दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति। [4]यानि यानि यथोपदिष्टानि, शिष्टैरुच्चारितानि प्रयुक्तानि, [5]तानि तथैवानुगन्तव्यानि। पृषद् उदरं यस्य [6]पृषोदरम्। पृषद् उद्वानं यस्य [7]पृषोद्वानम्। अत्र तकारलोपो भवति। वारिवाहकः बलाहकः। पूर्वशब्दस्य बशब्द आदेशः, उत्तरपदादेश्च लत्वम्। जीवनस्य मूतः[8] जीमूतः। वनशब्दस्य लोपः। शवानां शयनम् श्मशानम्। [9]शवशब्दस्य श्मादेशः, शयनशब्दस्यापि शानशब्द आदेशः। ऊर्ध्वं खमस्य इति उलूखलम्। ऊर्ध्वखशब्दयोः उलू खल इत्येतावादेशौ भवतः। पिशिताशः पिशाचः। [10]पिशिताशशब्दयोर्यथायोगं [11]पिशाचशब्दौ आदेशौ। ब्रुवन्तोऽस्यां सीदन्ति इति [12]बृसी। सदेरधिकरणे डट् प्रत्ययः। ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति। [13]मह्यां रौति इति मयूरः। रौतेरचि टिलोपः। महीशब्दस्य मयूभावः। एवमन्येऽपि अश्वत्थकपित्थ[14]प्रभृतयो यथायोगमनुगन्तव्याः।

[७६३] दिक्शब्देभ्य उत्तरस्य तीरस्य तारभावो वा भवति। (म. भा. ३.१७४)

दक्षिणतीरम्, दक्षिणतारम्। उत्तरतीरम्, उत्तरतारम्।

[७६४] वाचो वादे डत्वं च लभावश्चोत्तरपदस्येञि प्रत्यये भवति। (म. भा. ३.१७४)

वाचं वदति इति वाग्वादः। तस्यापत्यं [15]वाड्वालिः।

[७६५] षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति। (म. भा. ३.१७४)

षड् दन्ता अस्य षोडन्। षट् च दश च षोडश।

[७६६] धासु वा षष उत्वं भवत्युत्तरपदादेश्च ष्टुत्वम्। (म. भा. ३.१७४)

[16]षोढा, षड्धा कुरु। बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य [17]प्रतिपत्त्यर्थः। इह मा भूत्, षट् दधाति धयति[18] वा षड्धा इति।

[७६७] [19]दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्। (म. भा. ३.१७५)

कृच्छ्रेण दाश्यते [20]नाश्यते दभ्यते च यः स दूडाशः। दूणाशः। [21]दूडभः। दम्भेः खल्वनुनासिकलोपो निपातनात्। दुष्टं ध्यायति इति दूढ्यः। दुःशब्दोपपदस्य ध्यायतेः 'आतश्चोपसर्गे' (३.१.१३६/२८९८) इति कप्रत्ययः।

---

1. पृषोदरादीनि फ. 2. तेषां ह. 3. शास्त्रेण अविहिताः ह. 4. यानि ब. फ. 5. तानि तानि फ. 6. पृषोदरः फ. क. ह. 7. पृषोद्वानः फ. क., पृषद् उत्थानं यस्य स पृषोत्थानः ह. 8. भाजनम् इत्यधिकम् ड. 9. शवस्य फ. 10. पिशिताशयोः क, पिशिताशयोः यथासङ्ख्यम् ह. 11. पिश आच इत्येतौ ह. 12. बृसिः ह. 13. उदाहरणमिदं नास्ति फ. 14. महित्थ इत्यधिकम् ब.क.ड.फ.ह. 15. वाड्वलिः ब.क.ड, वाड्वली ह. 16. षोढा कुरु फ. ह. 17. परिग्रहार्थः ह. 18. इति ह. 19. दुरो दाशनाशदभेषु क, दुरो दाशनाशदभत्वं ब. 20. नाश्यते दश्यते ह. 21. दूडाभः ह.

[७६८] स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् । (म.भा. ३. १७५)

'[1]जाय एहि सुवो रोहाव' (तै.सं. १.७.९.१)।

[७६९] पीवोपवसनादीनां च लोपो वक्तव्यः । (म.भा.३.१७५)

'पीवोपवसनानाम्' (ऋ. खि. ५.७.२)। [2]पयोपवसनानाम् ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

## सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ । (११०/२३८)

सङ्ख्या वि साय इत्येवंपूर्वस्य अह्न[3]शब्दस्य स्थाने अहन् इत्ययमादेशो भवत्यन्यतरस्यां ङौ परतः । द्वयोरह्नोर्भवः द्व्यह्नः । त्र्यह्नः । द्व्यह्नि, द्व्यहनि । त्र्यह्नि, त्र्यहनि । द्व्यह्ने । त्र्यह्ने । व्यपगतमहः व्यह्नः । व्यह्नि, व्यहनि, व्यह्ने । सायमह्नः सायाह्नः । सायाह्नि, सायाहनि, सायाह्ने । एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवति इत्येतदेव विसायपूर्वस्य अह्नस्य ग्रहणं ज्ञापकम् । तेन मध्यमह्नः मध्याह्नः इत्यपि भवति । सङ्ख्याविसायपूर्वस्य इति किम् ? पूर्वाह्णे । अपराह्णे ॥

## ढ्रलोपे पूर्वस्य दीर्घोऽणः । (१११/१७४)

ढकाररेफयोः लोपः यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणः दीर्घो भवति । लीढम् । मीढम् । [4]उपगूढम् । मूढः । रलोपे – [5]नीरक्तम् । अग्नीरथः । इन्दूरथः । पुना रक्तं वासः । प्राता राजक्रयः । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अणः इति किम् ? [6]आतृढम् । आवृढम् ॥

## सहिवहोरोदवर्णस्य । (११२/२३९७)

सहि वहि इत्येतयोः अवर्णस्य ओकार आदेशो भवति ढ्रलोपे । सोढा । सोढुम् । सोढव्यम् । वोढा । वोढुम् । वोढव्यम् । अवर्णस्य इति किम् ? ऊढः । ऊढवान् । वर्णग्रहणं किम् ? कृतायामपि वृद्धौ यथा स्यात् । [7]उदवोढाम् । उदवोढम् । तादपि परः तपरः, [8]तपरत्वादाकारस्य ग्रहणं न स्यात् ॥

## साढ्यै साढ्वा साढेति निगमे । (११३/३८३१)

साढ्यै साढ्वा साढा इति निगमे निपात्यन्ते । 'साढ्यै समन्तात्' (मै. सं. १.६.३१) 'साढ्वा शत्रून्' (मै.सं. ३.८.५) । सहेः क्त्वाप्रत्यये ओत्वाभावः । पक्षे क्त्वाप्रत्ययस्य [9]ध्यैभावः । साढा इति तृचि रूपमेतत् । निगमे इति किम् ? सोढ्वा, सोढा इति भाषायाम् ॥

---

1. जाय एहि सुवो रोहाव, रोहावहि सुवम् ह 2. पयोपवसनम् फ, नास्ति ड. 3. °शब्दस्थाने फ. 4. गूढम् फ, मूढम् ह. 5. दूरक्तम् ह. 6. आदृढम् फ. क. ड, आरूढम् ह. 7. उदवोढा उद्वोढव्यम् फ. 8. इत्यस्य इत्यधिकम् फ. 9. धैभावः क, ढचैभावः ह.

## संहितायाम्। (११४/१०३५)

संहितायाम् इत्ययमधिकारः[1]। यद् इत उर्ध्वमनुक्रमिष्यामः संहितायाम् इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'द्वयचोऽतस्तिङः' (६.३.१३५/३५३७) इति। 'विद्मा हि त्वा [2]गोपतिं शूर गोनाम्' (ऋ. १०.४६.१)। संहितायाम् इति किम्? विद्म, हि, त्वा, गोपतिं, शूर, गोनाम्॥

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य। (११५/१०३६)

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट अष्टन् पञ्चन् मणि भिन्न छिन्न छिद्र स्रुव स्वस्तिक इत्येतान् वर्जयित्वा। [3]दात्राकर्णः। द्विगुणाकर्णः। [4]त्रिगुणाकर्णः। द्वयङ्गुलाकर्णः। [5]अङ्गुलाकर्णः। यत् पशूनां स्वामिविशेषसम्बन्ध[6]ज्ञापनार्थं [7]दात्राकारादि क्रियते तदिह लक्षणं गृह्यते। लक्षणस्य इति किम्? शोभनकर्णः। अविष्टादीनाम् इति किम्? विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। [8]मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। (११६/१०३७)

नहि वृति वृषि व्यधि रुचि सहि तनि इत्येतेषु क्विप्रत्ययान्तेषु उत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये। नहि – उपानत्। परीणत्। वृति – नीवृत्। उपावृत्। वृषि – प्रावृट्। उपावृट्। व्यधि – मर्मावित्। हृदयावित्। श्वावित्। रुचि – नीरुक्। [9]अभीरुक्। सहि – [10]ऋतीषट्। तनि – [11]तरीतत्। 'गमः क्वौ' (६.४.४०/२९८६) इति गमादीनामिष्यते। ततः तनोतेरप्यनुनासिकलोपः। क्वौ इति किम्? [12]परिणहनम्॥

## वनगिर्योः सञ्ज्ञायां कोटर[13]किंशुलुकादीनाम्। (११७/१०३८)

वन गिरि इत्येतयोरुत्तरपदयोर्यथासङ्ख्यं कोटरादीनाम् [14]किंशुलुकादीनां च दीर्घो भवति सञ्ज्ञायां विषये। वने कोटरादीनाम् – [15]कोटरावणम्। मिश्रकावणम्। सिध्रकावणम्। [16]सारिकावणम्। गिरौ [17]किंशुलुकादीनाम् – किंशुलुकागिरिः। [18]अञ्जनागिरिः। कोटर[19]किंशुलुकादीनाम् इति किम्? असिपत्रवनम्। [20]कृष्णगिरिः।

कोटर। मिश्रक। [21]पुरक। सिध्रक। सारिक। कोटरादिः।
[22]किंशुलुक। [23]शाल्वक। अञ्जन। [24]भञ्जन। लोहित। कुक्कुट। किंशुलुकादिः॥

## वले। (११८/१०४०)

वले परतः [25]पूर्वस्य दीर्घः भवति। आसुतीवलः। कृषीवलः। दन्तावलः। 'रजःकृष्यासुतिपर्षदो वलच्' (५.२.११२/१९११) इति वलच् प्रत्ययो गृह्यते, न प्रातिपदिकम्। [26]अनुत्साहभ्रातृपितॄणामित्येव। उत्साहवलः। भ्रातृवलः। पितृवलः॥

---

1. वेदितव्यः इत्यधिकम् फ. ह. 2. सत्पतिं मुद्रितः पाठः 3. दत्ताकर्णः ह. 4. नास्ति फ. 5. नास्ति ह. 6. °परिज्ञानार्थम् फ. 7. दात्राकारादिकं फ. 8. नास्ति ड. 9. नास्ति फ. 10. अतीषट् ड, ऋतीषाट् ह. 11. परीतत् ड. फ. क. 12. परिणाहनम् ब. 13–14. किंशुलकादीनाम् क. 15. पुरक्कावणम् फ. 16. शारिकावणम् फ. 17. किंशुलकादीनाम् क. 18. भञ्जनागिरिः फ. ह. 19. किंशुलुकादीनाम् नास्ति क, किंशुकादीनाम् ह. 20. उष्णगिरिः ह. 21. पुरग ड. 22. किंशुक फ. 23. शालुक फ, नड ब, नभ्र ड. 24. भाजन ड. 25. पूर्वस्य नास्ति फ. क. 26. अनुत्साह – पितृवलः नास्ति ब. ह.

## मतौ बह्वचोऽनजिरादीनाम् । (११९/१०४१)

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति सञ्ज्ञायां विषये । उदुम्बरावती । [1]मशकावती । वीरणावती । पुष्करावती । [2]अमरावती । '[3]नद्यां मतुप्' (४.२.८५/१३०४) इति मतुप्प्रत्ययः । 'सञ्ज्ञायाम्' (८.२.११/१८९९) इति मतोर्वत्वम् । बह्वचः इति किम् ? व्रीहिमती । अनजिरादीनाम् इति किम् ? अजिरवती । खदिरवती । पुलिनवती । हंसकारण्डववती । [4]चक्रवाकवती । सञ्ज्ञायाम् इत्येव, वलयवती[5] ॥

## शरादीनां च । (१२०/१०४२)

शरादीनां च मतौ दीर्घो भवति सञ्ज्ञायां विषये । शरावती । वंशावती ।

शर । वंश । धूम । अहि । कपि । मणि । [6]मुनि । शुचि । [7]हनु । शरादिः ।

'सञ्ज्ञायाम्' (८.२.११/१८९९) इति मतोर्वत्वम्[8] । यवादित्वात् व्रीह्यादिभ्यो न भवति ॥

## इको वहेऽपीलोः । (१२१/१०४३)

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वहे उत्तरपदे [9]दीर्घो भवति । ऋषीवहम् । [10]कपीवहम् । मुनीवहम् । इकः इति किम् ? पिण्डवहम् । अपीलोः इति किम् ? पीलुवहम् ।

[७७०] अपील्वादीनामिति वक्तव्यम् । (म.भा. ३.१७६)

इह मा भूत्, [11]चारुवहम् । (म.भा. ३.१७६) ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् । (१२२/१०४४)

उपसर्गस्य घञन्ते उत्तरपदे अमनुष्येऽभिधेये बहुलं दीर्घो भवति । वीक्लेदः । वीमार्गः । अपामार्गः । न च भवति । [12]प्रसेवः । प्रसारः ।

[७७१] सादकारयोः कृत्रिमे दीर्घो भवति । (म.भा. ३.१७६)

प्रासादः । प्राकारः । कृत्रिमे इति किम् ? प्रसादः । प्रकारः ।

[७७२] वेशादिषु विभाषा दीर्घो भवति । (म.भा. ३.१७६)

प्रतिवेशः, [13]प्रतीवेशः । प्रतिरोधः, प्रतीरोधः ।

अमनुष्ये इति किम् ? [14]निषादो मनुष्यः ॥

## इकः काशे । (१२३/१०४५)

इगन्तस्य उपसर्गस्य काशशब्दे उत्तरपदे दीर्घो भवति । नीकाशः । [15]वीकाशः । अनूकाशः । पचाद्यच्-प्रत्ययान्तोऽयं काशशब्दः, न तु घञन्तः । इकः इति किम् ? प्रकाशः ॥

---

1. नास्ति फ. 2. नास्ति फ. 3. नद्याः ड.फ. 4. नास्ति फ. 5. इति इत्यधिकम् फ, अजिर खदिर पुलिन हंस कारण्डव चक्रवाक अजिरादिः इत्यधिकम् ड. 6–7. नास्ति फ. 8. शरवती भूमिः इत्यधिकम् फ. 9. परतः इत्यधिकम् ह. 10. नास्ति फ. 11. दारुवहम् क.फ.ह. 12. प्रसवः क. 13. नास्ति क. 14. निषदो मनुष्यः ह. 15. वीकाशः – प्रकाशः नास्ति फ.

## दस्ति। (१२४/३०७९)

दा इत्येतस्य यः तकारादिरादेशः तस्मिन् परतः इगन्तस्योपसर्गस्य दीर्घो भवति। नीत्तम्। वीत्तम्। [1]परीत्तम्। 'अच उपसर्गात् तः' (७.४.४७/३०७८) इत्यन्तस्य यद्यपि तकारः क्रियते तथापि चर्त्वस्याश्रयात् सिद्धत्वम् इति तकारादिर्भवति। इकः इत्येव, प्रत्तम्। [2]अवत्तम्। दः इति किम्? [3]वितीर्णम्। नितीर्णम्। ति इति किम्? [4]सुदत्तम्॥

## अष्टनः सञ्ज्ञायाम्। (१२५/१०४६)

अष्टन् इत्येतस्य उत्तरपदे सञ्ज्ञायां दीर्घो भवति। अष्टावक्रः। अष्टाबन्धुरः। अष्टापदम्। सञ्ज्ञायाम् इति किम्? अष्टपुत्रः। अष्टभार्यः॥

## छन्दसि च। (१२६/३६३२)

छन्दसि विषयेऽष्टनः उत्तरपदे दीर्घो भवति। 'आग्नेयमष्टाकपालं निर्वपेत् चरुम्' (मै. सं. १.२.७)। अष्टाहिरण्या दक्षिणा। अष्टापदी [5]देवता सुमती। अष्टौ पादौ अस्याः इति बहुव्रीहौ पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' (४.१.८/४५७) इति ङीप्।

[७७३] [6]गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम्।

अष्टागवम् शकटम्॥

## चितेः कपि। (१२७/१०४७)

चितिशब्दस्य कपि परतः दीर्घो भवति। एकचितीकः। द्विचितीकः। [7]त्रिचितीकः॥

## विश्वस्य वसुराटोः। (१२८/३७०)

विश्वशब्दस्य वसु राट् इत्येतयोः उत्तरपदयोः दीर्घ आदेशो भवति। विश्वावसुः। विश्वाराट्। राट् इति विकारनिर्देशो यत्रास्य एतद् [8]रूपं तत्रैव यथा स्यात्। [9]इह न भवति, विश्वराजौ। विश्वराजः॥

## नरे सञ्ज्ञायाम्। (१२९/१०४८)

नरशब्द उत्तरपदे सञ्ज्ञायां विषये विश्वस्य दीर्घो भवति। विश्वानरो [10]नाम यस्य वैश्वानरिः पुत्रः। सञ्ज्ञायाम् इति किम्? [11]विश्वे नरा यस्य स विश्वनरः॥

---

1–2. नास्ति फ. 3. नास्ति ब. क. ड. फ. ह. 4. अवदत्तम् फ. 5. देवानां ब. 6. गवि च नास्ति ब. ड. 7. नास्ति क. 8. रूपं – विश्वराजौ नास्ति क. 9. तेन इत्यधिकम् ह. 10. नाम नास्ति फ. ह. 11. विश्वो नरो यस्य ह.

## मित्रे चर्षौ । (१३०/१०४९)

मित्रे चोत्तरपदे ऋषावभिधेये [1]विश्वस्य दीर्घो भवति । विश्वामित्रो नाम ऋषिः । ऋषौ इति किम् ? [2]विश्वमित्रो माणवकः ॥

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । (१३१/३६३४)

मन्त्रविषये सोम अश्व इन्द्रिय विश्वदेव्य इत्येतेषां मतुप्प्रत्यये परतः दीर्घो भवति । 'सोमावती' (ऋ. १०.९७.७) । 'अश्वावती' (ऋ. १०.९७.७) । 'इन्द्रियावती' (तै. सं. २.४.२.१) । 'विश्वदेव्यावती' (तै. सं. ४.१.६.१) ॥

## ओषधेश्च विभक्तावप्रथमायाम् । (१३२/३६३४)

मन्त्रे इति वर्तते । ओषधिशब्दस्य विभक्तावप्रथमायां परतः दीर्घो भवति । ओषधीभिरपीतत् । 'नमः पृथिव्यै नम ओषधीभ्यः (तै. आ. २.१२.१) । विभक्तौ इति किम् ?ओषधिपते । अप्रथमायाम् इति किम् ? [3]स्थिरेयमस्त्वोषधिः ॥

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् । (१३३/३६३४)

[4]ऋचि विषये 'तु नु घ मक्षु तङ् कु त्र उरुष्य इत्येषां दीर्घो भवति । 'आ तू न इन्द्र वृत्रहन्' (वा. सं. ३.६५) । नु – [5]नू करणे । घ – 'उत वा [6]घा स्यालात्' (ऋ. १.१०९.२) । मक्षु – '[7]मक्षू गोमन्तमीमहे' (ऋ. ८.३३.३) । तङ् – 'भरता जातवेदसम्' (ऋ. १०.१७६.२) । तङ इति थादेशस्य ङित्वपक्षे ग्रहणं, तेनेह न भवति, 'शृणोत ग्रावाणः' (तै. सं. १.३.१३.१) । कु – [8]कूमनः । त्र – अत्रा गौः । उरुष्य – 'उरुष्या णो' (ऋ. १.९१.१५) ॥

## इकः सुञि । (१३४/३६३६)

सुञ् निपातो गृह्यते । इगन्तस्य[9] सुञि परतो मन्त्रविषये दीर्घो भवति । 'अभी षु णः सखीनाम्' (ऋ. ४.३१.३) । 'ऊर्ध्व ऊ षु ण ऊतये' (ऋ. १.३६.१३) । 'सुञः' (८.३.१०७/३६४४) इति षत्वम्, 'नश्च धातुस्थोरुषुभ्यः' (८.४.२७/३६४९) इति णत्वम् ॥

## द्व्यचोऽतस्तिङः । (१३५/३६३७)

ऋचि इति वर्तते । द्व्यचस्तिङन्तस्य अतः ऋग्विषये दीर्घो भवति । 'विद्मा हि त्वा [10]गोपतिं शूर गोनाम्' (ऋ. १०.४७.१) । 'विद्मा [11]शरस्य पितरम्' (अ. वे. १.२.१) । द्व्यचः इति किम् ? 'अश्वा भवत वाजिनः (वा. सं. ९.६) । अतः इति किम् ? 'आ देवान् वक्षि यक्षि च' (ऋ. ५.२६.१) ॥

---

1. विश्वशब्दस्य ह. 2. विश्वमित्रको क. 3. स्थिरेयं समास्वोषधिः ड.क. 4. तङ् इति प्रत्याहारग्रहणम् इत्यधिकम् ह. 5. नूमर्तः ब. फ, नूष्णतः ह. 6. घा लस्यात् क. 7. मक्षूदेववतो रथः ड. 8. कूमवन् ह. 9. निपातस्य इत्यधिकम् फ. 10. सत्पतिं मुद्रितः पाठः 11. तस्य मुद्रितः पाठः

## निपातस्य च । (१३६/३५३८)

ऋचि इत्येव । निपातस्य च [1]ऋग्विषये दीर्घ आदेशो भवति । '[2]एवा ते' (ऋ. १०.२०.१०) । 'अच्छा' (ऋ. १.२.२) ॥

## अन्येषामपि दृश्यते । (१३७/३५३९)

अन्येषामपि दीर्घो दृश्यते, स शिष्टप्रयोगादनुगन्तव्यः । यस्य दीर्घत्वं विहितं, दृश्यते च प्रयोगे, तदनेन कर्तव्यम् । केशाकेशि । कचाकचि । जलाषाट् । नारकः पूरुषः ।

[७७४] शुनो दन्तदंष्ट्राकर्ण[3]कुन्दवराहपुच्छपदेषु ।

श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । [4]श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापदः ॥

## चौ । (१३८/४१७)

चौ परतः पूर्वपदस्य दीर्घो भवति । चौ इति अञ्चतिर्लुप्तनकाराकारो गृह्यते । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधूचे । अन्तरङ्गोऽपि यणादेशो दीर्घविधानसामर्थ्यान् न प्रवर्तते ॥

## सम्प्रसारणस्य । (१३९/१००४)

उत्तरपदे इति वर्तते । सम्प्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदीगन्धीपतिः । करीषस्य इव गन्धोऽस्य, कुमुदस्य इव गन्धोऽस्य, [5]'अल्पाख्यायाम्' (५.४.१३६/८७५), 'उपमानाच्च' (५.४.१३७/८७६) इति इकारः समासान्तः । करीषगन्धेरपत्यम् कारीषगन्ध्या । कुमुदगन्धेरपत्यम् कौमुदगन्ध्या, तस्याः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । 'इको ह्रस्वोऽङ्यो गालवस्य' (६.३.६१/९९९) इत्येतन्न भवति । व्यवस्थितविभाषा हि सा । अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते । पुनः प्रसङ्गविज्ञानं च न भवति, 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (व्या. प. ४०) इति ॥

इति श्रीवामनविरचितायां काशिकायां वृत्तौ

षष्ठाध्यायस्य तृतीयः पादः ॥

---

1. मन्त्रे ब. 2. एवा देव अच्छा ते ह. 3. कर्द क, कुर्द व, कुक्कुट ह. 4. श्वाकर्दः क, श्वाकुक्कुटः ह. 5. अल्पाख्यायाम् – कौमुदगन्धीपुत्रः नास्ति फ.

## षष्ठाध्यायस्य चतुर्थः पादः

### अङ्गस्य । (१/२००)

अधिकारोऽयम् आसप्तमाध्यायपरिसमाप्तेः । यदित [1]ऊर्ध्वमनुक्रमिष्यामः अङ्गस्य इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'हलः' (६.४.२/२५५९) – हूतः । जीनः । संवीतः[2] । अङ्गस्य इति किम् ? निरुतम् । दुरुतम् । 'नामि दीर्घः' (६.४.६/२८९)–अग्नीनाम् । वायूनाम् । अङ्गस्य इति किम् ? [3]क्रिमिणां पश्य । [4]पामनां पश्य । 'अतो भिस ऐस्' (७.१.९/२०३)–वृक्षैः । प्लक्षैः । अङ्गस्य इति किम् ? ब्राह्मणभिस्सा । [5]ओदनभिस्सिटा (म. भा. ३. १७९) । अङ्गाधिकारः कृतोऽन्यार्थो नामि दीर्घत्वाद्यपि व्यवस्थापयति इति तदर्थम् अर्थवद्ग्रहणपरिभाषा (व्या.प. १) नाश्रयितव्या भवति ।

अङ्गस्य इति सम्बन्ध[6]सामान्ये [7]एषा षष्ठी यथायोगं विशेषेषु अवतिष्ठते । अथ वा प्रातिपदिकार्थमात्रम् अविवक्षितविभक्त्यर्थम् अधिक्रियते । तत् उत्तरत्र यथायोगं विपरिणम्यते । ततोऽकारान्तादङ्गात् भिस ऐस् इत्येवमाद्यपि सम्यक् [8]सम्पन्नं भवति ॥

### हलः । (२/२५५९)

[9]अङ्गावयवाद्धलो यदुत्तरं सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घो भवति । हूतः । जीनः । संवीतः । हलः इति किम् ? उतः । उतवान् । [10]अङ्गावयवात् इति किम् ? निरुतम् । तदन्तस्य इति किम् ? विद्धः । विचितः । [11]अणः इत्येव, तृतीयः । तृतीया (२.३.१८/५६१) इति वा निपातनादत्र दीर्घाभावः । अङ्गग्रहणमावर्तयितव्यम् हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्त्यर्थं च ॥

### नामि । (३/२०९)

नाम् इति [12]एतत् षष्ठीबहुवचनम् आगतनुट्कं गृह्यते । तस्मिन् परतोऽङ्गस्य दीर्घो भवति । अग्नीनाम् । वायूनाम् । कर्तॄणाम् । [13]हर्तॄणाम् । अणः इत्येतदत्र निवृत्तम् । [14]आगतनुट्कग्रहणमुत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम् । अन्यथा हि नुडेव न स्यात् ।

नामि दीर्घ आमि चेत् स्यात् कृते दीर्घे न नुट् भवेत् ।
वचनाद् यत्र तन्नास्ति नोपधायाश्च चर्मणाम् (म.भा. ३.१८२) ॥

---

1. पञ्चपाद्याम् इत्यधिकम् फ. 2. शूनः इत्यधिकम् फ.ड. 3. क्रिमिणः क, कृमीणाम् ह. 4. पामना क. 5. ओदनभिस्सटा क. ह, ओदनभिस्सदा प.मं. 6. सामान्येन क. 7. षष्ठी सा ह.फ. 8. सिद्धम् फ. 9. हलः दीर्घः सम्प्रसारणस्य इति वर्तते इत्यधिकम् फ. ह. 10. अङ्गस्य फ. 11. अणः – दीर्घाभावः नास्ति फ. 12. एतत् नास्ति फ.ह. 13. नास्ति फ. 14. आगतनुट्कस्य ग्रहणम् फ.ह.

## न तिसृचतसृ। (४/३००)

तिसृ चतसृ इत्येतयोः नामि दीर्घो न भवति। तिसृणाम्। चतसृणाम्। इदमेव नामि [1]इति दीर्घ-प्रतिषेधवचनं ज्ञापकम् 'अचि र ऋतः' (७.२.१००/२५४१) इत्येतस्मात् पूर्वविप्रतिषेधेन नुडागमो भवति इति॥

## छन्दस्युभयथा। (५/३५४०)

छन्दसि विषये तिसृचतस्रोः नामि परतः उभयथा [2]दृश्यते, दीर्घश्चादीर्घश्च। तिसृणां (मै. सं. ४.५.९) [3]मध्यदिने, तिसृ॒णां (ऋ. ५.६९.२) मध्यदिने। चतसृणां (काठ. सं. २७.९) मध्यदिने, चतसृ॒णां मध्यदिने॥

## नृ च। (६/२८४)

नृ इत्येतस्य नामि [4]परे उभयथा भवति। त्वं नृणां (पै. २.१०.४) नृपते, त्वं नृ॒णां (ऋ. १४३.७) नृपते केचिदत्र छन्दसि इति नानुवर्तयन्ति, तेन भाषायामपि [5]विकल्पो भवति[6]॥

## नोपधायाः। (७/३७०)

[7]नान्तस्याङ्गस्य उपधायाः नामि परतो दीर्घो भवति। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। नः इति किम्? चतुर्णाम्। नामि इत्येव, चर्मणाम्॥

## सर्वनामस्थाने चासम्बुद्धौ। (८/२५०)

[8]सर्वनामस्थाने च परतो[9]ऽसम्बुद्धौ नोपधायाः दीर्घो भवति। राजा, राजानौ, [10]राजानः। [11]राजानम्, राजानौ। सामानि तिष्ठन्ति। सामानि पश्य। सर्वनामस्थाने इति किम्? राजनि। सामनि। असम्बुद्धौ इति किम्? हे राजन्। हे तक्षन्॥

## वा षपूर्वस्य निगमे। (९/३५४१)

षपूर्वस्य अचः [12]नोपधायाः निगमविषये सर्वनामस्थाने परतः असम्बुद्धौ वा दीर्घो भवति। 'स तक्षाणं तिष्ठन्तमब्रवीत्' (मै. २. ४. १)। स तक्षणं तिष्ठन्तमब्रवीत्। ऋभुक्षाणमिन्द्रम्। 'ऋभुक्षणमिन्द्रम्' (ऋ. १. १११. ४)। निगमे इति किम्? [13]तक्षा, तक्षाणौ, तक्षाणः॥

---

1. इति नास्ति ब. फ, परतः ह. 2. भवति फ. 3. मध्यंदिने क. 4. परे नास्ति फ, परतः ड. 5. उभयप्राप्तिः फ, उभयथा ह. 6. नृणाम्। नृणाम् इत्यधिकम् ड. 7. नकारान्तस्य फ. 8. नोपधायाः इति अनुवर्तते इत्यधिकम् ड. फ. ह. 9. सम्बुद्धिवर्जिते नान्तस्य फ. 10. राजानः नास्ति फ 11 राजानम् नास्ति फ. 12. नोपधायाः नास्ति फ. ह. 13. तक्षा नास्ति क.

## सान्तमहतः संयोगस्य । (१०/३१७)

सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्योपधायाः दीर्घो भवति सर्वनामस्थाने परतः असम्बुद्धौ । श्रेयान्, श्रेयांसौ, श्रेयांसः । श्रेयांसि । पयांसि । यशांसि । महतः स्वल्वपि – महान्, महान्तौ, महान्तः[1] । असम्बुद्धौ इति [2]किम् ? हे श्रेयन् । हे महन् ॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् । (११/२७७)

[3]अप् इत्येतस्य, [4]तृनन्तस्य, तृजन्तस्य, स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ इत्येतेषां चाङ्गानामुपधाया दीर्घो भवति सर्वनामस्थाने परतो[5]ऽसम्बुद्धौ । अप् – आपः[6] । बह्वाम्पि तडागानि इति केचिद् इच्छन्ति, तत्र [7]समासान्तो विधिरनित्यः इति समासान्तो न क्रियते । नित्यमपि [8]च नुममकृत्वा दीर्घत्वमिष्यते । तृन् – [9]कर्तारौ कटान् । [10]वदितारौ जनापवादान् । कर्तारः । तृच् – कर्तारौ कटस्य । कर्तारः । [11]हर्तारौ भारस्य । हर्तारः । स्वसृ – स्वसा, स्वसारौ, स्वसारः । नप्तृ – नप्ता, नप्तारौ, नप्तारः । नेष्टृ – नेष्टा, नेष्टारौ, नेष्टारः । त्वष्टृ – त्वष्टा, त्वष्टारौ, त्वष्टारः । क्षत्तृ – क्षत्ता, क्षत्तारौ, क्षत्तारः । होतृ – होता, होतारौ, होतारः । पोतृ – पोता, पोतारौ, पोतारः । प्रशास्तृ – प्रशास्ता, प्रशास्तारौ, प्रशास्तारः । नप्त्रादीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम् । व्युत्पत्तिपक्षे नियमार्थम्, एवम्भूतानामन्येषां सञ्ज्ञाशब्दानां दीर्घो मा भूत् इति । पितरौ, पितरः । मातरौ, मातरः । असम्बुद्धौ इति [12]किम् ? हे कर्तः । हे स्वसः ॥

## इन्हन्पूषार्यम्णां शौ । (१२/३७८)

इन् हन् पूषन् अर्यमन् इत्येवमन्ताना[13]मङ्गानां शौ परत उपधाया दीर्घो भवति । बहुदण्डीनि । बहुच्छत्रीणि । बहुवृत्रहाणि । बहुभ्रूणहानि । बहुपूषाणि । बह्वर्यमाणि । सिद्धे सत्यारम्भो नियमार्थः, इन्हन्पूषार्यम्णामुपधायाः शावेव दीर्घो भवति नान्यत्र (म. भा. ३.१८२) । दण्डिनौ । छत्रिणौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

दीर्घविधिर्य [14]इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्यात् भ्रूणहनीति तथास्य न दुष्येत् ॥
शास्मि [15]निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे [16]हन्त यि दीर्घविधौ च न दोषः ॥
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन [17]न तत्र भवेद्विनियम्यम् ॥ (म.भा. ३.१८३)

हन्तेः 'अनुनासिकस्य क्विझलोः क्ङिति' (२.४.१५/२६६६) इति दीर्घत्वं यत् तदपि [18]नियमेन बाध्यते वृत्रहणि, भ्रूणहनि इति । कथम् ? योगविभागः [19]क्रियते । इन्हन्पूषार्यम्णाम् सर्वनामस्थाने एव दीर्घो

---

1. महान्तं, महान्तौ इत्यधिकम् ह. 2. एव फ.ह. 3. सर्वनामस्थाने चासम्बुद्धौ इति वर्तते इत्यधिकम् ह. 4. तृनन्तस्य नास्ति अ.ब. 5. सम्बुद्धिवर्जिते ह. 6. तिष्ठन्ति इत्यधिकम् फ. 7. समासान्तविधिः फ. 8. च नास्ति फ. 9. कर्ता, कर्तारौ फ, कटस्य ह. 10. वदिता फ, नास्ति ह. 11. नास्ति फ, भर्तारौ ह. 12. एव फ. 13. अङ्गानां नास्ति फ. 14. इन्हन्° ड. 15. निवृत्य क. 16. हन्ति ड. 17. हि क. 18. अनेन ह. 19. करिष्यते फ. ह.

भवति, नान्यत्र इति। ततः शौ इति द्वितीयो [1]नियमः। शौ एव सर्वनामस्थाने [2]दीर्घो भवति नान्यत्र इति[3]। सर्वस्योपधालक्षणस्य [4]दीर्घस्य नियमेन निवृत्तिः क्रियते। यस्तु [5]न उपधालक्षणः स भवत्येव। वृत्रहायते। [6]भ्रूणहायते। अथ वा अनुवर्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयम[7]विशेषेण नियमः। शिशब्दो हि सर्वनामस्थानं नपुंसकस्य[8], न च तस्यान्यत्सर्वनामस्थानमस्ति इत्यविशेषेण नियमः। [9]तत्र तु नपुंसकस्य इत्येतन्नाश्रीयते। तेनानपुंसकस्यापि दीर्घो न भवति। सर्वनामस्थानसञ्ज्ञाविधाने तु नपुंसकस्य व्यापारोऽस्ति इति तत्र नियमः क्रियमाणो नपुंसकस्य स्यात्॥

## सौ च। (१३/३८७)

सावसम्बुद्धौ परतः [10]इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति। दण्डी। वृत्रहा। पूषा। अर्यमा। असम्बुद्धौ इति [11]किम्? हे दण्डिन्। हे पूषन्। हे अर्यमन्॥

## अत्वसन्तस्य चाधातोः। (१४/४२८)

[12]अतु [13]अस् इत्येवमन्तस्य [14]अधातोरुपधायाः साव[15]सम्बुद्धौ परतः दीर्घो भवति। डवतु – भवान्। क्तवतु – [16]कृतवान्। मतुप् – गोमान्। [17]यवमान्। अत्र कृते [18]दीर्घे नुमागमः [19]कर्तव्यः। [20]यदि हि परत्वान्नित्यत्वाच्च नुम् स्यात्, दीर्घस्य निमित्तम[21]नुपधा विहन्येत। असन्तस्य[22]–[23]सुपयाः। सुयशाः। सुश्रोताः। अधातोः इति किम्? पिण्डं ग्रसते इति पिण्डग्रः। चर्म वस्ते इति चर्मवः। अनर्थकोऽप्यस्शब्दो गृह्यते, 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (व्या.प. १३९) इति। अन्तग्रहणमुपदेशप्रयोगैकदेशस्याप्यत्वन्तस्य [24]परिग्रहार्थम्, अन्यथा [25]मतुपो ग्रहणं न स्याद्, उपदेशे [26]रूपनिर्ग्रहहेतौ नायमत्वन्तः इति। असम्बुद्धौ इत्येव, हे गोमन्। सुपयः॥

## अनुनासिकस्य क्विझलोः क्ङिति। (१५/२६६६)

अनुनासिकान्तस्य अङ्गस्य उपधायाः दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति। प्रशान्। प्रतान्। झलादौ किति – शान्तः। शान्तवान्। शान्त्वा। शान्तिः। ङिति खल्वपि – शंशान्तः। तन्तान्तः। यङ्लुगन्तादयं तस्। अनुनासिकस्य इति किम्? ओदनपक्। पक्वः। पक्ववान्। क्विझलोः इति किम्? गम्यते। रम्यते। क्ङिति इति किम्? गन्ता। रन्ता॥

---

1. योगः सोऽपि नियमार्थः ह. 2. परतः इत्यधिकम् ह. 3. अथवा सर्वनामस्थाने इति निवृत्तमेतत्। तेन इन्हन्पूषार्यम्णां उपधायाः चानेन दीर्घो भवति नान्यत्र इति इत्यधिकम् ड. फ. 4. दीर्घस्य नास्ति फ. 5. अनुपधालक्षणः फ. 6. उदाहरणमिदं नास्ति फ, भ्रूणायते ह. 7. अविशेषे क. 8. एव इत्यधिकम् ड. 9. तत्र–स्यात् नास्ति ह. 10. इन्हनादीनाम् फ. 11. एव फ. 12. असम्बुद्धौ इति वर्तते इत्यधिकम् ह. 13. अस् नास्ति फ. 14. धातुर्वर्जितस्य फ.ह. 15. सम्बुद्धिवर्जिते ह. 16. भुक्तवान् ह. 17. उदाहरणमिदं नास्ति फ. 18. दीर्घत्वे ब.क.ड.ह. 19. नास्ति फ, भवति ह. 20. यदीह ह. 21. अनुपधा क. 22. खल्वपि इत्यधिकम् फ. 23. सुवयाः ह. 24. परिग्रहणार्थं न. 25. हि इत्यधिकम् फ. 26. तूपनिग्रहहेतौ ह.

## अज्झनगमां सनि । (१६/२६१४)

अजन्तानाम् अङ्गानां [1]हनिगम्योश्च सनि झलादौ [2]परे दीर्घो भवति । अजन्तानाम् – विवीषति । तुष्टू-षति । चिकीर्षति । जिहीर्षति । हन् – जिघांसति । गम् – अधिजिगांसते ।

[७७५] गमेरिङादेशस्येति वक्तव्यम् । (म. भा. ३.१८४)

इह मा भूत् सञ्जिगंसते वत्सो [3]मात्रा (म. भा. ३.१८४) इति । [4]'स्वर्गं लोकं समजिगांसत्' इति [5]छन्दसि यदनिङादेशस्यापि दीर्घत्वं [6]दृश्यते, तद् 'अन्येषामपि दृश्यते' (६. ३. १३७/३५३९) इत्यनेन भवति ।

अथ वा इहाज्ग्रहणं न कर्तव्यम् । सनि दीर्घो भवति इत्येतावदेव सूत्रं कर्तव्यम् । [7]तत्राचा गृह्यमाणस्य [8]विशेषणे सति सिद्धमजन्तस्य दीर्घत्वम् ? तत् क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्, अजन्तस्याङ्गस्य दीर्घो भवति, अजादेशस्य गमेः इति । ततो न वक्तव्यम् इदं गमेरिङादेशस्य इति ॥

## तनोतेर्विभाषा । (१७/२६२२)

तितांसति, [10]तितंसति । झलि इत्येव, तित-
तनोतेरङ्गस्य [9]सनि झलादौ विभाषा दीर्घो भवति । तितांसति, ... इत्यत्र तनोतेरुपसङ्ख्यानाद् इडागमो [11]भवति विकल्पेन ॥
निषति । सनीवन्तर्ध (७.२.४९/२६१८) इत्यत्र तनोतेरुपसङ्ख्यानाद् इडागमो [11]भवति विकल्पेन ॥

## क्रमश्च क्त्वि । (१८/३३२९)

क्रम उपधाया [12]विभाषा दीर्घो भवति क्त्वा प्रत्यये झलादौ परतः । क्रान्त्वा, क्रान्त्वा । झलि इत्येव, क्रमित्वा । प्रक्रम्य, [13]उपक्रम्य इति बहिरङ्गोऽपि ल्यबादेशोऽन्तरङ्गानपि विधीन् बाधते इति पूर्वमेव दीर्घत्वं न प्रवर्तते ॥

## छ्वोः शूडनुनासिके च । (१९/२६६१)

छ इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासङ्ख्यं श् ऊठ् इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङिति[14] । प्रश्नः । विश्नः । अन्तरङ्गत्वात् 'छे च' (६.१.७३/१४६) इति तुकि कृते सतुक्कस्य [15]शादेशः । वकारस्य ऊठ्–स्योनः । सिवे[16]रौणादिके न प्रत्यये (उ. २९३) लघूपधगुणात् पूर्वमूठ् क्रियते । तत्र कृतेऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वात् च न 'वार्णादाङ्गं बलीयः' (व्या. प. ३९) भवति । 'क्वब्वचि' (उ. २२५) इत्यादिनौणादिकः क्विप् दीर्घश्च । गोविट् । वकारस्य – अक्षद्यूः । क्वौ छस्य–शब्दप्राट् ।

---

3. मात्रा नास्ति फ, मातरम् ह. 4. स्वर्गं लोकं
1. हनगम इत्येतयोः ह. 2. परतः क. फ. ह. 7. तत्र च क. ह. 8. विशेषणेति सिद्धम् क. नास्ति क, स्वर्गं तु फ. 5. छन्दसि नास्ति ह. 6. क्रियते ह. 11. भवति नास्ति ब.क. 12. विभाषा झलादौ ह.
9. सनि परतः ह. 10. नास्ति क, सन्तितांसति, सन्तितंसति ह. 15. श आदेशः फ. ह. 16. औणादिकेन प्रत्ययेन क.
13. उपक्रम्य नास्ति फ. 14. परतः इत्यधिकम् ह.

हिरण्यष्ठ्यूः । 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) इति [1]नाजानन्तर्ये (व्या. प. ४६) इति प्रतिषिध्यते । झलादौ[2] छस्य – पृष्टः । पृष्टवान् । पृष्ट्वा । वकारस्य – द्यूतः । द्यूतवान् । द्यूत्वा । क्ङिति इत्येव, द्युभ्यास् । द्युभिः ।

केचिदत्र क्ङिति इति नानुवर्तयन्ति । कथं द्युभ्याम्, द्युभिः इति ऊठि कृते ? 'दिव उत्' (६.१.१३१/३३७) इति [3]तपरत्वान् मात्राकालो भविष्यति[4] । [5]छशां षः (८.२.३६/२९४) इत्यत्र छग्रहणं न कर्तव्यम्[6] । अनेनैव हि सर्वत्र शकारो [7]विधीयते । ऊठष्ठित्करणम् 'एत्यधत्यूठ्सु' (६.१.८९/७३) इति विशेषणार्थम् । 'वाह ऊठ्' (६.४.१३२/३२९) इत्ययमपि ठिदेव ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च । (२०/२६५४)

ज्वर त्वर स्रिवि अव मव इत्येतेषामङ्गानां वकारस्य उपधायाश्च स्थाने ऊठ् इत्ययमादेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति । जूः, जुरौ, जुरः । जूर्तिः[8] । त्वर – तूः, तुरौ, तुरः[9] । तूर्तिः । स्रिवि- स्रूः, स्रुवौ, स्रुवः । स्रूतः । स्रूतवान् । स्रूतिः । अव – ऊः, उवौ, उवः[10] । ऊतिः । मव – मूः, मुवौ, मुवः । मूतः । मूतवान् । मूतिः । ज्वरत्वरोपधा वकारात् परा, स्रिव्यवमवां [11]पूर्वा ॥

## राल्लोपः । (२१/२६५५)

[12]रेफादुत्तरयोः छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च[13] परतः । [14]मुर्च्छा–मूः, मुरौ, मुरः । मूर्तः । मूर्तवान् । मूर्तिः । 'न ध्याख्यापॄमूर्छिमदाम्' (८.२.५७/३०४०) इति निष्ठानत्वाभावः । हुर्च्छा – हूः, हुरौ, हुरः । हूर्णः । हूर्णवान् । हूर्तिः । राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते । वकारस्य – तुर्वी – तूः, तुरौ, तुरः । तूर्णः । तूर्णवान् । तूर्तिः । धुर्वी – धूः, धुरौ, धुरः । धूर्णः । धूर्णवान् । धूर्तिः ॥

## असिद्धवदत्रा भात् । (२२/२१८३)

असिद्धवत् इत्ययमधिकारः[15] । यदित ऊर्ध्वमनुक्रमिष्यामः आ अध्यायपरिसमाप्तेः [16]तद् असिद्धवत् [17]भवतीत्येवं वेदितव्यम् । आ भात् इति विषयनिर्देशः । आभसंशब्दनाद् यदुच्यते तत्र कर्तव्ये[18] । अत्र इति समानाश्रयत्वप्रतिपत्त्यर्थम् । तच्चेदत्र [19]यत्र भवति [20]तदा भात् शास्त्रीयं [21]विधीयते तदाश्रयमेव भवति । व्याश्रयं तु नासिद्धवद् भवति इत्यर्थः । [22]असिद्धवचनमुत्सर्गलक्षणभावार्थम्, आदेशलक्षणप्रतिषेधार्थं च । एधि, शाधि इत्यत्र एत्वशाभावयोः [23]कृतयोः झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद् भवति । आगहि, जहि इत्यत्र अनुनासिक-लोपे जभावे च[24] 'अतो हेः' (६.४.१०५/२२०२) इति लुक् प्राप्नोति, असिद्धत्वान्न भवति । आ भात् इति किम् ? अभाजि । रागः । 'अत उपधायाः' (७.२.११६/२२८२) इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति । अत्रग्रहणं किम् ? पपुषः पश्य । चिच्युषः पश्य । लुलुवुषः पश्य । [25]वसुसंप्रसारणम् आल्लोपे यणादेशे [26]उवङादेशे च कर्तव्ये नासिद्धं भवति । आल्लोपादीनि [27]वसौ, वस्वन्तस्य विभक्तौ संप्रसारणम् इति समानाश्रयत्वं

---

1. न अजन्तार्य क. 2. ङिति इत्यधिकम् ब. 3. तपरकरणात् ब. 4. इति इत्यधिकम् ब. 5. तेषाम् इत्यधिकम् ब. ड. 6. भवति इत्यधिकम् फ. 7. भविष्यति फ. 8. जूर्णः जूर्णवान् इत्यधिकम् ब. क. 9. तूर्णः तूर्णवान् इत्यधिकम् ब. क. फ. ह. 10. ऊतवान् इत्यधिकम् ब. क. 11. उपधा इत्यधिकम् फ. 12. छ्वोः इति वर्तते इत्यधिकम् फ. 13. च नास्ति फ, परतः नास्ति क. 14. मुर्च्छा नास्ति ह. 15. अयम् इत्यधिकम् फ. 16. तद् नास्ति फ. 17. भवति इति एतद् ह. 18. इति इत्यधिकम् फ. 19. यद् ड. 20 तत् फ. 21. कार्यम् फ. ह. 22. असिद्धवद् ड. 23. कृतयोः नास्ति फ. 24. कृते इत्यधिकम् क. फ. 25. क्वसु ब, वसोः ह. 26. उवङादेशे नास्ति फ. 27. क्वसावत्र ड. फ.

नास्ति । 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) इति ? एतदप्यत्र न भवति । किं कारणम् ? एषा हि परिभाषा आभाच्छास्त्रीया । तस्यां प्रवर्तमानायां [1]वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वाद[2]न्तरङ्ग-बहिरङ्गयोः युगपत् [3]समुपस्थापनं नास्ति इति परिभाषा [4]न प्रवर्तते ।

[७७६] वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम् । (म. भा. ३.१९१)

वुग् उवङादेशे – [5]बभूव, बभूवतुः, बभूवुः । [6]युट् यणादेशे – उपदिदीये, उपदिदीयाते, उपदिदीयिरे । आभात् इत्ययमभिविधावाङ् । [7]तेन भाधिकारेऽप्यसिद्धवद् भवति ॥

## श्नान्नलोपः । (२३/२५४४)

श्नात् इति श्नमयमुत्सृष्टमकारो गृह्यते । तत उत्तरस्य नकारस्य लोपो भवति । अनक्ति । भनक्ति । हिनस्ति । शकारवतो ग्रहणं किम् ? यज्ञानाम् । [8]यत्नानाम् । 'सुपि च' (७.३.१०२/२०२) इति परत्वात् कृतेऽपि [9]दीर्घत्वे स्थानिवद्भावात् नलोपः स्यादेव । विश्नानाम्, [10]प्रश्नानाम् इत्यत्र लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव[11] (व्या. प. ३) इत्येवं[12] न भवति ॥

## अनिदितां हल उपधायाः क्ङिति । (२४/४१८)

अनिदितामङ्गानां हलन्तानामुपधायाः नकारस्य लोपो भवति क्ङिति प्रत्यये परतः । स्रस्तः । ध्वस्तः । स्रस्यते । ध्वस्यते । सनीस्रस्यते । दनीध्वस्यते । [13]अनिदिताम् इति किम् ? नन्द्यते । नानन्द्यते । हलः इति किम् ? नीयते । नेनीयते । उपधायाः इति किम् ? नह्यते । नानह्यते । क्ङिति इति किम् ? स्रंसिता । [14]ध्वंसिता ।

[७७७] [15]अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसङ्ख्यानं [16]कर्तव्यम् । (म.भा.३.१९४)

विलगितः । विकपितः । उपतापशरीरविकारयोः इति किम् ? विलङ्गितः । विकम्पितः ।

[७७८] रञ्जेर्णौ मृगरमण उपसङ्ख्यानं [17]कर्तव्यम् । (म. भा. ३.१९४)

रजयति मृगान् । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. सि. कौ. पृ. ७३२) इति मित्त्वादुपधाह्रस्वत्वम् । मृगरमण इति किम् ? [18]रञ्जयति वस्त्राणि ।

[७७९] घिनुणि च रञ्जेरुपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.१९४)

रागी । त्यजरजभज (३.२.१४२/३१२२) इति निपातनाद् वा सिद्धम् ।

[७८०] रजकरजनरजःसूपसङ्ख्यानं [19]कर्तव्यम् । (म. भा. ३.१९५)

रजकः । रजनम् । रजः ॥

---

1. वसो ह. 2. बहिरङ्गान्तरङ्गयोः क. 3. समवस्थापनम् ड, समुपस्थापनम् क. ह. 4. नोपतिष्ठते फ. 5. बभूव नास्ति क. 6. यक् यणादेशे क. 7. एतेन क. 8. नास्ति क. 9. नास्ति क, दीर्घे फ. ह. 10. नास्ति क. 11. बचनम् इत्यधिकम् फ. 12. एवं नास्ति ह. 13. अनिदितानाम् क. 14. नास्ति क. 15. अनिदितां नास्ति फ. 16–17. नास्ति फ. 18. रजयति फ. 19. नास्ति क.

## दंशसञ्जस्वञ्जां शपि । (२५/२३९६)

[1]दंश सञ्ज ष्वञ्ज इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति । दशति । सजति । [2]परिष्वजते ॥

## रञ्जेश्च । (२६/२३९७)

रञ्जेश्च शपि परतः उपधायाः [3]नकारस्य लोपो भवति । रजति, रजतः, रजन्ति । पृथग्योगकरणमुत्तरार्थम् ॥

## घञि च भावकरणयोः । (२७/३१८८)

भावकरणवाचिनि घञि परतो रञ्जेः उपधाया नकारस्य लोपो भवति । [4]भावे – आश्चर्यो रागः । विचित्रो रागः । करणे – रज्यते अनेन इति रागः । भावकरणयोः इति किम् ? [5]रजन्ति तस्मिन्निति रङ्गः ॥

## स्यदो जवे । (२८/३१८६)

[6]जवेऽभिधेये स्यदः इति घञि निपात्यते । स्यन्देर्नलोपो वृद्ध्यभावश्च[7] । इक्प्रकरणात्[8] न धातुलोपः (१.१.४/२६५६) इति प्रतिषेधो नास्ति । गोस्यदः । अश्वस्यदः । जव इति किम् ? तैलस्यन्दः । घृतस्यन्दः ॥

## अवोदैधौद्मप्रश्रथहिमश्रथाः । (२९/३१८७)

अवोद एध ओद्म प्रश्रथ हिमश्रथ इत्येते निपात्यन्ते । अवोद [9]इति उन्देरवपूर्वस्य घञि [10]नलोपो निपात्यते । एध इति इन्धेर्घञि नलोपो गुणश्च निपात्यते । '[11]न धातुलोप आर्धधातुके' (१.१.४/२६५६) इति हि प्रतिषेधः स्यात् । ओद्म इति उन्देरौणादिके [12]मन्प्रत्यये नलोपो गुणश्च निपात्यते । प्रश्रथ इति प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । हिमश्रथ इति हिमपूर्वस्य श्रन्थेः घञ्येव निपातनम् ॥

## नाञ्चेः पूजायाम् । (३०/४२४)

अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति । अञ्चिता अस्य गुरवः । अञ्चितमेव शिरो वहति । 'अञ्चेः पूजायाम्' (७.२.५३/३०४७) इति इडागमः । पूजायाम् इति किम् ? उदक्तमुदकं कूपात् । उद्धृतम् इत्यर्थः । 'यस्य विभाषा' (७.२.१५/३०२५) इति इट्प्रतिषेधः ॥

---

1. नलोप उपधाया इति वर्तते इत्यधिकम् फ. 2. परिष्वजति ब. 3. नकारस्य नास्ति फ. 4. भावे नास्ति फ. 5. रजति ड. ह. 6. जवो वेगः इत्यधिकम् फ. ह. 7. घञि निपात्यते इत्यधिकम् फ. 8. वृद्धेः इत्यधिकम् ड. फ. 9. इति नास्ति फ. 10. नकारलोपो फ. 11. न धातुलोप – वृद्ध्यभावश्च नास्ति ह. 12. मत्प्रत्यये क.

## क्त्वि स्कन्दिस्यन्दोः। (३१/३३२१)

क्त्वाप्रत्यये परतः स्कन्द स्यन्द इत्येतयो[1]र्नकारलोपो न भवति। स्कन्त्वा। स्यन्त्वा। स्यन्देरूदित्वात् (धा.पा. ७६१) पक्षे इडागमः (७.२. ४४/२२७९)। स्यन्दित्वा। तत्र यदा इडागमः तदा 'न क्त्वा सेट्' (१. २. १८/३३२२) इति कित्त्वप्रतिषेधादेव नलोपाभावः॥

## जान्तनशां विभाषा। (३२/३३३०)

जान्ताना[2]मङ्गानां नशेश्च क्त्वाप्रत्यये परतः विभाषा नकारलोपो न भवति। रङ्क्त्वा, रक्त्वा[3]। भङ्क्त्वा, भक्त्वा। नश – नंष्ट्वा, नष्ट्वा। [4]इट्पक्षे नशित्वा॥

## भञ्जेश्च चिणि। (३३/२७५४)

भञ्जेश्च चिणि परतो विभाषा [5]नकारलोपो भवति। अभाजि, अभञ्जि। अप्राप्तोऽयं नलोपः पक्षे विधीयते, ततो न इति नानुवर्तते॥

## शास इदङ्हलोः। (३४/२४८६)

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। हलादौ किति-शिष्टः। शिष्टवान्। ङिति – [6]आवां शिष्वः। वयं शिष्मः। इत्त्वे कृते 'शासिवसिघसीनां च' (८.३.६०/२४१०) इति षत्वम्। अङ्हलोः इति किम्? [7]शासति। शशासतुः। शशासुः।

[७८१] क्वौ च शास इत्त्वं भवतीति वक्तव्यम्। (म. भा. ३. १९५)

आर्यान् शास्ति इति आर्यशीः। [8]मित्रशीः। यस्मात् शासेः [9]अङ विहितः 'शासु अनुशिष्टौ' (धा. पा. १०७६) इति, तस्यैवेदं ग्रहणम् [10]इष्यते। '[11]आङः शासु इच्छायाम्' (धा. पा. १०२३) इति[12] अस्य न भवति। आशास्ते। आशास्यमानः।

[७८२] क्विप्प्रत्यये [13]तु तस्यापि भवतीति वक्तव्यम्। (म. भा. ३. १९५)

आशीः, आशिषौ, आशिषः। 'क्षियाशीःप्रैषेषु [14]तिङाकाङ्क्षम्' (८. २. १०४/३६२३) इति निपातनाद् वा सिद्धम्॥

---

1. नकारस्य लोपो क. 2. अङ्गानाम् नास्ति फ. 3. मङ्क्त्वा मक्त्वा इत्यधिकम् ह. 4. वाक्यमिदं नास्ति ब. क. 5. नलोपो फ. 6. तौ शिष्टः फ. ह. 7. शास्ति ड, शशास क. 8. नास्ति क. 9. इट क. 10. इष्यते नास्ति फ. 11. न त्वाङः फ. 12. एतस्य फ. 13. तु नास्ति फ. 14. तिङाकाङ्क्षायाम् फ.

## शा हौ। (३५/२४८७)

शासो हौ परतः शा इत्ययमादेशो भवति। अनुशाधि। [1]प्रशाधि। उपधायाः इति निवृत्तम्, ततः शासः [2]इति स्थानेयोगा षष्ठी (१.१.४९/३८) भवति। क्ङिति [3]एतदपि निवृत्तम्। तेन यदा 'वा छन्दसि' (३.४.८८/३५५२) इति पित्त्वं हिशब्दस्य [4]तदाप्यादेशो भवत्येव। शाधि इत्याद्युदात्तमपि [5]छन्दसि दृश्यते॥

## हन्तेर्जः। (३६/२४३१)

[6]हन्ते[7]र्धातोः जः इत्ययमादेशो भवति हौ परत। जहि शत्रून्॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। (३७/२४२८)

अनुदात्तोपदेशानामङ्गानां वनतेः तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः। [8]यमु – यत्वा। यतः। यतवान्। यतिः। रमु – रत्वा। रतः। रतवान्। रतिः। अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनि[9]मन्यतयः। वनति – वतिः। [10]क्तिनो रूपमेतत्। क्तिचि तु 'न क्तिचि दीर्घश्च' (६.४.३९/३३१४) इति [11]भवति। अन्यत्र झलादाविटा भवितव्यम्। [12]तनोत्यादयः – ततः। ततवान्[13]। सनोतेरात्वं वक्ष्यति। क्षणु – क्षतः। क्षतवान्[14]। ऋणु – ऋतः। ऋतवान्[15]। तृणु–तृतः। तृतवान्[16]। घृणु – घृतः। घृतवान्[17]। वनु – वतः। वतवान्[18]। मनु – मतः। मतवान्[19]। ङिति[20]– अतत। अतथाः। अनुदात्तोपदेशवनतितनोत्यादीनाम् इति किम्? [21]शान्तः। शान्तवान्। तान्तः। तान्तवान्। दान्तः। दान्तवान्। अनुनासिकस्य इति किम्? पक्वः। पक्ववान्। झलि इति किम्? [22]गम्यते। रम्यते। क्ङिति इति किम्? यन्ता। यन्तव्यम्। उपदेशग्रहणं किम्? इह च यथा स्यात्, [23]गतिः। इह च मा भूत्, शान्तः, शान्तवान् [24]इति॥

## वा ल्यपि। (३८/३३३४)

ल्यपि परतः अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः वा भवति। व्यवस्थितविभाषा चेयम्, तेन मकारान्तानां [25]विकल्पो भवति, अन्यत्र नित्यमेव लोपः। प्रयत्य, प्रयम्य। प्ररत्य, प्ररम्य। प्रणत्य, प्रणम्य। आगत्य, आगम्य। [26]आहत्य। प्रमत्य। प्रवत्य[27]। प्रक्षत्य॥

## न क्तिचि दीर्घश्च। (३९/३३१४)

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपः दीर्घश्च न भवति। [28]यन्तिः। [29]वन्तिः। तन्तिः। [30]अनुनासिकलोपे प्रतिषिद्धे '[31]अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५/२६६६) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते॥

---

1. प्रशाधि नास्ति क. 2. इति नास्ति फ. 3. एतद् नास्ति फ. 4. तदा शादेशः ह. 5. छन्दसि नास्ति फ. 6. हौ इति वर्तते इत्यधिकम् फ. 7. धातोः नास्ति फ. 8. यमि फ. 9. मन्यादयः फ. 10. क्तिनि ड, क्तिन्नेतत् फ. 11. प्रतिषेधो इत्यधिकम् ड. 12. तनोत्यादीनाम् फ. 13. तत्वा ततिः इत्यधिकम् ह.फ. 14. क्षत्वा क्षतिः इत्यधिकम् फ.ह. 15. ऋत्वा ऋतिः इत्यधिकम् फ.ह. 16. तृत्वा तृतिः इत्यधिकम् फ.ह. 17. घृत्वा घृतिः इत्यधिकम् फ.ह. 18. वत्वा वतिः इत्यधिकम् फ.ह. 19. मत्वा मतिः इत्यधिकम् फ.ह. 20. खल्वपि इत्यधिकम् ह. 21. शान्तः नास्ति फ. 22. यम्यते फ.ह. 23. यतिः फ, रतिः इत्यधिकम् ब. क.ड.ह. 24. इति नास्ति फ. 25. विकल्पेन लोपो ह. 26. आहन्य क. 27. प्रतत्य प्रतन्य इत्यधिकम् क. 28. गन्तिः फ. 29. रन्तिः ह. 30. अनुनासिकलोपप्रतिषेधे ब. 31. सूत्रमिदं नास्ति फ.

## गमः क्वौ। (४०/२९८६)

गमः क्वौ परतः अनुनासिकलोपो भवति। [1]अङ्गगत्। कलिङ्गगत्। अध्वगतो हरयः।

[७८३] गमादीनामिति वक्तव्यम्। (म.भा.३.१९६)

इहापि यथा स्यात्, संयत्। [2]परीतत्।

[७८४] [3]ऊ च गमादीनामिति वक्तव्यम्। (म.भा.३.१९६)

'अग्रेगूः' (तै. सं. १. १. ५. १)। [4]अग्रेभ्रूः॥

## विड्वनोरनुनासिकस्यात्। (४१/२९८२)

विटि वनि च प्रत्यये परतः अनुनासिकान्तस्याङ्गस्य आकार आदेशो भवति। 'अब्जा गोजा [5]ऋतजा अद्रिजा' (ऋ.४. ४०. ५)। 'गोषा इन्दो नृषा असि' (ऋ. ९. २. १०)। कूपखाः। [6]शतखाः। सहस्रखाः। दधिक्राः। अग्रेगा [7]उन्नेतृणाम्। 'जनसनखनक्रमगमो विट्' (३. २. ६७/३४१३) इति विट् प्रत्ययः। 'सनोतेरनः' (८. ३. १०८/३६४५) इति [8]षत्वम् 'गोषा इन्दो नृषा असि' (ऋ. ९. २. १०) इत्यत्र। वन- विजावा। [9]अग्रेजावा। 'अन्येभ्योऽपि दृश्यन्ते' (३. २. ७५/२९८०) इति वनिप् प्रत्ययः। अनुनासिकस्य इति वर्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम्, अन्यथा हि अनुदात्तोपदेशवनतितनोत्यादीनामेव [10]स्यात्॥

## जनसनखनां सञ्झलोः। (४२/२५०४)

झलि [11]क्ङिति इति चानुवर्तते। जन सन खन इत्येतेषामङ्गानां सनि झलादौ क्ङिति [12]झलादौ प्रत्यये परतः आकार आदेशो भवति। जन्-जातः। जातवान्। जातिः। सन्-[13]सनि सिषासति। सातः। सातवान्। सातिः। खन्-खातः। खातवान्। खातिः। झल्ग्रहणं सन्विशेषणार्थं [14]किमर्थ[15]मनुवर्त्यते? इह मा भूत्, जिजनिषति। सिसनिषति। चिखनिषति। सनोतेः सनीवन्तर्ध (७. २. ४९/२६१८) इति[16] पक्षे इडागमः। तदिह सनोत्यर्थमेव [17]सन्ग्रहणम्। [18]अत्र झलादौ क्ङिति[19] सनोते[20]र्विप्रतिषेधाद् आत्वमनुनासिकलोपं बाधते। 'घुमस्थागापाजहातिसां हलि' (६. ४. ६६/२४६२) [21]इति हल्ग्रहणं ज्ञापकम् अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवति इति॥

---

1. जनगत् ह. 2. परिणत् प्रतीतत् ह. 3. ऊङ ब. क. ड. म. भा. 4. अग्रभ्रूः ह. 5. ऋतजा नास्ति फ. 6. नास्ति फ, गतखाः ह. 7. उत् नास्ति ब. 8. षः क. 9. अग्रेयावा फ. ह. क. 10. हि इत्यधिकम् ह. 11. क्ङिति नास्ति फ. 12. झलादौ प्रत्यये नास्ति फ. क. 13. सनि सिषासति नास्ति फ.क. 14. किमर्थं नास्ति फ. ह. 15. अनुवर्तते ह. 16. सति इत्यधिकम् ड. 17. झल्ग्रहणम् फ. 18. अन्यत्र फ. क. 19. च इत्यधिकम् क. 20. विप्रतिषेधार्थे फ. 21. इत्यत्र ह.

## ये विभाषा । (४३/२३१९)

यकारादौ क्ङिति प्रत्यये परतो जनसनखनाम् आकार [1]आदेशो भवति विभाषा । जायते, जन्यते । जाजायते, जञ्जन्यते । सायते, सन्यते । सासायते, संसन्यते । खायते, खन्यते । चाखायते, चङ्खन्यते । जनेः श्यनि 'ज्ञाजनोर्जा' (७.३.७९/२५११) इति नित्यं जादेशो भवति ॥

## तनोतेर्यकि । (४४/२७५९)

तनोतेः यकि परतो विभाषा आकार आदेशो भवति । तायते, तन्यते । यकि इति किम्? तन्तन्यते ॥

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् । (४५/३३१५)

सनोतेरङ्गस्य [2]क्तिचि प्रत्यये परत आकार आदेशो भवति, लोपश्चास्य अन्यतरस्याम् । सातिः, सन्तिः, सतिः । अन्यतरस्यां[3]ग्रहणं विस्पष्टार्थम्, [4]येसम्बद्धं हि विभाषाग्रहणम् इह निवृत्तम् इत्याशङ्क्येत[5] ॥

## आर्धधातुके । (४६/२३०७)

आर्धधातुके इत्यधिकारः । 'न ल्यपि' (६.४.६९/३३३५) इति[6] प्रागेतस्माद् यदित ऊर्ध्वमनुक्रमिष्यामः आर्धधातुके इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'अतो लोपः' (६.४.४८/२३०८) । चिकीर्षिता । जिहीर्षिता । आर्धधातुके इति किम् ? भवति । भवतः । अदिप्रभृतिभ्यः शपो लुग्वचनं (२.४.७२/२४२३)[7] प्रत्यय[8]लोपलक्षणप्रतिषेधार्थं स्यात् इत्येतन्न ज्ञापकं शपो लोपाभावस्य ।

'यस्य हलः' (६.४.४९/२६३१) । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । आर्धधातुके इति किम् ? बेभिद्यते ।

'णेरनिटि' (६.४.५१/२३१३) । कारणा । हारणा । आर्धधातुके इति किम् ? कारयति । हारयति ।

'आतो लोप इटि च' (६.४.६४/२३७२) । [9]ययतुः । ययुः । ववतुः । ववुः । आर्धधातुके इति किम् ? यान्ति । वान्ति ।

'घुमास्थागापाजहातिसां हलि' (६.४.६६/२४५२) । दीयते । धीयते । आर्धधातुके इति किम् ? अदाताम् । अधाताम् ।

'वाऽन्यस्य संयोगादेः' (६.४.६८/२३७८) । स्नेयात्, स्नायात् । आर्धधातुके इति किम् ? स्नायात् । आशीर्लिङोऽन्यत्र न भवति ।

---

1. इत्यादेशो फ. 2. क्तिच् ह. 3. इति इत्यधिकम् फ. 4. यत्सम्बद्धम् फ. क, यत्सम्बन्धात् ह. 5. आशङ्क्यते ह. 6. यावत् इत्यधिकम् फ. 7. मृष्टः वित्तः इत्यत्र इत्यधिकम् ड. 8. लोप नास्ति ड.फ. 9. पपतुः पपुः क.

'स्यसिच्सीयुट्[1]तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' (६.४.६२/२७५७)। कारिषीष्ट। हारिषीष्ट[2]। [3]आर्धधातुके इति किम्? क्रियेत। ह्रियेत। यगन्तस्याजन्तत्वाच् चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक् प्रसज्येत।

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम्।
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि (म.भा. ३.१९८)॥

## भ्रस्जो रोपधयो रमन्यतरस्याम्। (४७/२५३७)

भ्रस्जो रेफस्य उपधायाश्च रम् अन्यतरस्यां भवति। रोपधयोः इति [4]स्थानषष्ठीनिर्देशात् उपधा रेफश्च निवर्तेते। मित्त्वाच्चायम् अचोऽन्त्यात्परो भवति। भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्। भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रज्जनम्, भर्जनम्। भृष्टः, भृष्टवान् इत्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति। उपदेशे इत्येव, बरीभृज्यते॥

## अतो लोपः। (४८/२३०८)

अकारान्तस्य[5] आर्धधातुके[6] लोपो भवति। चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्[7]। [8]धिनुतः। कृणुतः। अतः इति किम्? चेता। स्तोता। तपरकरणं किम्? याता। वाता। आर्धधातुके इति किम्? वृक्षत्वम्[9]। [10]वृक्षता। वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन (म.भा. ३.२००)। चिकीर्षकः। जिहीर्षकः। चिकीर्ष्यते। जिहीर्ष्यते॥

## यस्य हलः। (४९/२६३१)

हल उत्तरस्य यशब्दस्य आर्धधातुके[11] लोपो भवति। [12]बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। यस्य इति सङ्घातग्रहणमेतत्। तत्र 'अलोऽन्त्यस्य' (१.१.५२/४२) इत्येतन्न भवति, 'अतो लोपः' (६.४.४८/२३०८) इत्यनेनैव [13]तस्य सिद्धत्वात्। हलः [14]इति वा पञ्चमीनिर्देशः, तत्र 'आदेः परस्य' (१.१.५४/४४) इति यकारो[15]ऽनेन लुप्यते। सङ्घातग्रहणं किम्? ईर्ष्यिता। मव्यिता। हलः इति किम्? लोलूयिता। पोपूयिता॥

## क्यस्य विभाषा। (५०/२६६०)

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके। समिध्यिता, समिधिता। दृषद्यिता, दृषदिता। समिधमा[17]त्मनः इच्छति, समिधम् इव [18]आत्मानम् आचरति इति वा क्यच्क्यङौ यथायोगं कर्तव्यौ॥

## णेरनिटि। (५१/२३१३)

अनिडादावार्धधातुके[19] णेर्लोपो भवति। इयङ्यण्गुणवृद्धिदीर्घाणामपवादः। अततक्षत्। [20]अररक्षत्। [21]आशिशत्। आटिटत्। कारणा। हारणा। कारकः। [22]हारकः। कार्यते। [23]हार्यते। ज्ञीप्सति। अनिटि इति किम्? कारयिता। हारयिता॥

---

1. तासिषु -- इट् च नास्ति फ. 2. कृषीष्ट इत्यधिकम् फ.ह. 3. आर्धधातुके–स्नायात् नास्ति क. 4. षष्ठीनिर्देशात् क.ह. 5. अङ्गस्य इत्यधिकम् क.ड.फ.ह. 6. परतः इत्यधिकम् फ. ह. 7. जिहीर्षिता जिही–र्षितुम् जिहीर्षितव्यम् इत्यधिकम् ड. 8. धिनुतः नास्ति क. 9. प्लक्षत्वम् इत्यधिकम् ह. 10. नास्ति क, प्लक्षता इत्यधिकम् ह. 11. परतः इत्यधिकम् फ. 12. बिभिदिका ह. 13. तस्य नास्ति फ.ह. 14. इति वा नास्ति फ, वा नास्ति क. 15. अनेन नास्ति फ. ह. 16. परतः इत्यधिकम् फ. ह. 17. आत्मानम् क. 18. आत्मानम् नास्ति क. 19. परतः इत्यधिकम् फ.ह. 20. नास्ति क. 21–22. नास्ति फ. 23. नास्ति ब.

## निष्ठायां सेटि । (५२/३०५७)

निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् । सेटि इति किम् ? [1]संज्ञपितः पशुः । [2]सेड्ग्रहणसामर्थ्यादिह पूर्वेणापि न [3]भवति । सनीवन्तर्ध (७. २. ४९/२६२८) इति ज्ञपेरिटि विकल्पिते 'यस्य विभाषा' (७. २. १५/३०२५) इति निष्ठायां प्रतिषेधः । अथ पुनः एकाचः इति तत्रानुवर्तते, तदा नित्यमत्र भवितव्यम् एव इडागमेन इति सेड्ग्रहणमनर्थकम् ? तत् क्रियते [4]कालावधारणार्थम्, इडागमे कृते णिलोपो यथा स्यात् । अकृते हि तत्र णिलोपे सति कारितम् इत्यत्र 'एकाच उपदेशेऽनुदात्तात्' (७. २. १०/२२४६) इति इटः प्रतिषेधः प्रसज्येत ॥

## जनिता मन्त्रे । (५३/३५४२)

जनिता इति मन्त्रविषये इडादौ णिलोपो निपात्यते । 'यो नः पिता जनिता' (ऋ. १०. ८२. ३) । मन्त्रे इति किम् ? जनयिता ॥

## शमिता यज्ञे । (५४/३५४३)

यज्ञकर्मणि शमिता इति इडादौ तृचि णिलोपो निपात्यते । शृतं हविः शमितः । तृचि सम्बुद्ध्यन्तमेतत् । यज्ञे इति किम् ? शृतं हविः [5]शमयितः ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु । (५५/२३११)

आम् अन्त आलु आय्य इत्नु इष्णु [6]इत्येतेषु परतः णेः अयादेशो भवति । कारयाञ्चकार । हारयाञ्चकार । अन्त – गण्डयन्तः । मण्डयन्तः । आलु – स्पृहयालुः । गृहयालुः । आय्य – '[7]स्पृहयाय्यः' (ऋ. ६. १५. १२) । गृहयाय्यः । इत्नु – स्तनयित्नुः । [8]इष्णु – 'पोषयिष्णुः' (मै. ४. २. १४) । पारयिष्णवः । न इति वक्तव्ये अयादेशवचनमुत्तरार्थम् ॥

## ल्यपि लघुपूर्वात् । (५६/३३३६)

ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेः अयादेशो भवति । प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः । ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवति असमानाश्रयत्वात्, ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति । लघुपूर्वात् इति किम् ? प्रपात्य गतः ॥

## विभाषाऽऽपः । (५७/३३३७)

आप उत्तरस्य णेर्ल्यपि परतो विभाषा अयादेशो भवति । प्रापय्य गतः, प्राप्य गतः । इङादेशस्य लाक्षणिकत्वान् न भवति, अध्याप्य गतः ॥

---

1. सञ्ज्ञप्तः क. ह. 2. सेड्ग्रहणम् ड. फ, इड्ग्रहणम् क. 3. भवितव्यम् फ. ह. 4. कालावधारणार्थम् नास्ति क. 5. शमयिता ड. फ. 6. इत्येषु फ. 7. नास्ति ड. 8. इष्णुच् ह.

## युप्लुवोर्दीर्घश्छन्दसि । (५८/३५४४)

यु प्लु इत्येतयोर्ल्यपि परतः छन्दसि विषये दीर्घो भवति । '[1]दान्त्यनुपूर्वं वियूय' (ऋ. १०.१३१.२) । 'यत्रा[2] यो दक्षिणा परिप्लूय' (काठ. सं. २५.३) । छन्दसि इति किम् ? संयुत्य । आप्लुत्य ॥

## क्षियः । (५९/३३३८)

क्षियश्च दीर्घो भवति ल्यपि परतः । प्रक्षीय[3] ॥

## निष्ठायामण्यदर्थे । (६०/३०१४)

ण्यतः कृत्यस्यार्थो भावकर्मणी, [4]ताभ्यामन्यत्र या निष्ठा तस्यां[5] क्षियो दीर्घो भवति । आक्षीणः । प्रक्षीणः । [6]परिक्षीणः । अकर्मकत्वात् [7]क्षियः कर्तरि क्तः । प्रक्षीणमिदं देवदत्तस्य इति 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३.४.७६/३०८७) इत्यधिकरणे [8]क्तः । अण्यदर्थे इति किम् ? 'अक्षितमसि [9]मा मेक्षेष्ठाः' (तै. सं. १.६.५.१) । क्षितम् इति भावे दीर्घाभावात् 'क्षियो दीर्घात्' (८.२.४६/३०१५) इति निष्ठानत्वमपि[10] न भवति ॥

## वाऽऽक्रोशदैन्ययोः । (६१/३०८१)

आक्रोशे गम्यमाने दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति । [11]क्षितायुरेधि, क्षीणायुरेधि । दैन्ये – क्षितकः, क्षीणकः । क्षितोऽयं तपस्वी, क्षीणोऽयं तपस्वी ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च । (६२/२७६७)

स्य सिच् सीयुट् तासि इत्येतेषु भावकर्मविषयेषु परत उपदेशे अजन्तानामङ्गानां हन् ग्रह् दृश् इत्येतेषां च चिण्वत् कार्यं [12]भवति वा । यदा [13]चिण्वत् तदा इडागमो [14]भवति । कस्य ? [15]स्यसिच्सीयुट्तासीनाम् एव इति वेदितव्यम् । ते हि प्रकृताः । अङ्गस्य तु लक्ष्यविरोधात् न क्रियते । कानि पुनरस्य [16]योगस्य प्रयोजनानि ?

चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥

---

1. यथा इत्यधिकम् ड. 2. या फ, आपो ह. क. 3. उपक्षीय इत्यधिकम् ह. 4. ताभ्याम् नास्ति फ. 5. परतः इत्यधिकम् ड. फ. 6. नास्ति फ. ह. 7. क्षियः नास्ति फ. 8. क्तः नास्ति फ. ह. 9. मा मेक्षिष्ठाः क. 10. अपि नास्ति फ. 11. क्षितायुर्जाल्म. क्षीणायुर्जाल्मः ह. 12. भवति नास्ति ह. 13. चिण्वद्भावः फ. ड. 14. कार्यः फ, यदा चिण्वन्न भवति तदेडागमो न भवति इत्यधिकम् ह. 15. तच्चेति इत्यधिकम् ह. 16. योगस्य नास्ति क.

अजन्तानां तावत् – चायिष्यते, चेष्यते। अचायिष्यत, अचेष्यत। दायिष्यते, दास्यते। अदायिष्यत, अदास्यत। शामिष्यते, शमिष्यते, शमयिष्यते। अशामिष्यत, अशमिष्यत, अशमयिष्यत। हन् – घानिष्यते, हनिष्यते। अघानिष्यत, अहनिष्यत। ग्रह् – ग्राहिष्यते, ग्रहीष्यते। अग्राहिष्यत, अग्रहीष्यत। 'ग्रहोऽलिटि दीर्घः' (७.२.३७/२५६२) इति प्रकृतस्य इटो दीर्घत्वम्। दृश् – दर्शिष्यते, द्रक्ष्यते। अदर्शिष्यत, अद्रक्ष्यत।

सिचि अजन्तानाम् – अचायिषाताम्, अचेषाताम्। अदायिषाताम्, अदिषाताम्। अशामिषाताम्, अशमिषाताम्, अशमयिषाताम्। हन् – अघानिषाताम्, अवधिषाताम्, अहसाताम्। ग्रह् – अग्राहिषाताम्, अग्रहीषाताम्। दृश् – अदर्शिषाताम्, अदृक्षाताम्।

[1]सीयुटि अजन्तानाम् – चायिषीष्ट, चेषीष्ट। दायिषीष्ट, दासीष्ट। शामिषीष्ट, शमिषीष्ट, [2]शमयिषीष्ट। हन् – घानिषीष्ट, वधिषीष्ट। ग्रह् – ग्राहिषीष्ट, ग्रहीषीष्ट। दृश् – दर्शिषीष्ट, दृक्षीष्ट।

तासावजन्तानाम्[3] – चायिता, चेता। दायिता, दाता। शामिता, शमिता, [4]शमयिता। हन् – घानिता, हन्ता। ग्रह् – ग्राहिता, ग्रहीता। दृश् – दर्शिता, द्रष्टा।

स्यसिच्सीयुट्तासिषु इति किम्? चेतव्यम्। दातव्यम्। भावकर्मणोः इति किम्? चेष्यति। दास्यति। उपदेशे इति किम्? कारिष्यते [5]इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति। अज्झनग्रहदृशाम् इति किम्? पठिष्यते[6]। [7]अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङा[8]मादेशा न भवन्ति[9]। हनिष्यते, घानिष्यते। एष्यते, आयिष्यते। अध्येष्यते, अध्यायिष्यते। 'हनो वध लिङि' (२.४.४२/२४३३), 'लुङि च' (२.४.४३/२४३४), 'इणो गा लुङि' (२.४.४५/२४५८), 'विभाषा लुङ्लृङोः' (२.४.५०/२४६०) इत्येते विधयो न भवन्ति॥

## दीङो युडचि क्ङिति। (६३/२५०७)

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। [10]उपदिदीये, उपदिदीयाते, उपदिदीयिरे। दीङः इति पञ्चमीनिर्देशाद् [11]अजादेर्युडागमो भवति। विधानसामर्थ्याच्च 'एरनेकाचोऽसंयोगपूर्वस्य' (६.४.८२/२७२) इति यणादेशे कर्तव्ये तस्यासिद्धत्वं न भवति। अचि इति किम्? उपदेदीयते। क्ङिति इति किम्? [12]उपदानम्॥

## आतो लोप इटि च। (६४/२३७२)

इटचजादावार्धधातुके क्ङिति च आकारान्तस्य अङ्गस्य लोपो भवति। [13]इटि – पपिथ। तस्थिथ। [14]किति – पपतुः। पपुः। तस्थतुः। तस्थुः। गोदः। कम्बलदः। ङिति – प्रदा। प्रधा। आर्धधातुके इत्येव, यान्ति। वान्ति। व्यत्यरे। व्यत्यले। रातेर्लातेश्च लङि इटि रूपम्। अचि इत्येव, ग्लायते। दासीय॥

---

1. सीयुट् क. 2. शमयिषीष्ट नास्ति क. ह. 3. च इत्यधिकम् क. 4. शमयिता नास्ति क. ह. 5. इत्यत्र फ. क. 6. वदिष्यति इत्यधिकम् ह. 7. अङ्गाधिकारकार्यम् क. 8. आदेशो न भवति ब. क. 9. इति इत्यधिकम् फ. 10. उपदिदीये – भवति नास्ति क. 11. अजादेः एव ह. 12. उपादानम् क. ड. 13. इटि – वान्ति नास्ति क. 14. क्ङित्यपि ह.

## ईद्यति। (६५/२८४३)

ईकारः आदेशो भवति आकारान्तस्याङ्गस्य यति [1]परतः। देयम्। धेयम्। हेयम्। [2]स्तेयम्॥

## घुमास्थागापाजहातिसां हलि। (६६/२४६२)

घुसञ्ज्ञकानाम् अङ्गानां, मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति [3]प्रत्यये परतः ईकारादेशो भवति। दीयते। धीयते। देदीयते। देधीयते। [4]मीयते। मेमीयते। स्थीयते। तेष्ठीयते। गीयते। जेगीयते। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। पीयते। पेपीयते। पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात्। पायते इत्येव तस्य भवति। हीयते। जेहीयते। जहातेरिह निर्देशात् जिहातेर्ग्रहणं न भवति। हायते। '[5]षोऽन्तकर्मणि' (धा. पा. ११४८)। अवसीयते। [6]अवसेसीयते। हलि इति किम्? ददतुः। ददुः। आतो लोपाद्धि परत्वाद् [7]ईत्वं स्यात्। एतदेव हल्ग्रहणं ज्ञापकम् अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति[8]। क्ङिति इत्येव, दाता। धाता॥

## [9]एर्लिङि। (६७/२३७४)

घुमास्थागापाजहातिसामङ्गानां लिङि[10] परतः एकारादेशो भवति। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्। क्ङिति इत्येव, दासीष्ट। धासीष्ट॥

## वाऽन्यस्य संयोगादेः। (६८/२३७८)

घ्वादिभ्यः अन्यस्य संयोगादेराकारान्तस्य[11] वा एकारादेशो भवति[12] लिङि परतः। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। अन्यस्य इति किम्? स्थेयात्। संयोगादेः इति किम्? यायात्। क्ङिति इत्येव, ग्लासीष्ट। [13]अङ्गस्य इत्येव, निर्वायात्॥

## न ल्यपि। (६९/३३३५)

ल्यपि प्रत्यये परतः घुमास्थागापाजहातिसां यदुक्तं तन्न[14]। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। [15]अवसाय॥

## मयतेरिदन्यतरस्याम्। (७०/३३१८)

मयतेरिकारादेशो वा भवति ल्यपि परतः। अपमित्य, अपमाय॥

---

1. प्रत्यये इत्यधिकम् फ. 2. गेयम् फ, म्लेयम् क. ब. ह, मेयम् इत्यधिकम् ह. 3. प्रत्यये नास्ति क. 4-5. नास्ति फ. 6. अवसेषीयते ब. ड. 7. दीर्घत्वम् फ. 8. इति इत्यधिकम् फ. 9. इदं सूत्रमेव नास्ति ह. 10. हलादौ क्ङिति आर्धधातुके इत्यधिकम् फ. 11. अङ्गस्य इत्यधिकम् फ. ह. 12. आर्धधातुके इत्यधिकम् ह. 13. वाक्यमिदं नास्ति ह. 14. भवति इत्यधिकम् क. ब. फ. ई. 15. नास्ति ई, प्रसाय ह.

## लुङ्लङ्लृङ्क्ष्वडुदात्तः । (७१/२२०६)

लुङ लङ लृङ इत्येतेषु परतोऽङ्गस्य अडागमो भवति, [1]उदात्तश्च स भवति । लुङ – अकार्षीत् । अहार्षीत् । लङ – अकरोत् । अहरत् । लृङ – अकरिष्यत् । अहरिष्यत् ॥

## आडजादीनाम् । (७२/२२५४)

आडागमो भवति अजादीनां [2]लुङ्लङलृङक्षु परतः, उदात्तश्च [3]स भवति । ऐक्षिष्ट । ऐहिष्ट । औब्जीत् । औम्भीत् । लङ – ऐक्षत । ऐहत । औब्जत् । औम्भत् । लृङ – ऐक्षिष्यत । ऐहिष्यत । औब्जिष्यत् । औम्भिष्यत् ।

इह [4]ऐज्यत, औप्यत, औह्यत इति लङि कृते लावस्थायामडागमादन्तरङ्गत्वाल् लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं [5]बाधते । शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्, कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति । ननु शब्दान्तरादिति विकरणोऽनित्यः? विकरणे कृते सम्प्रसारणमडागमान् नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातमिति[6] 'आडजादीनाम्' इत्याडागमः ॥

## छन्दस्यपि दृश्यते । (७३/३५४७)

छन्दसि विषये आडागमो दृश्यते । [7]यत्र हि विहितः ततोऽन्यत्रापि दृश्यते । 'आडजादीनाम्' (६.४.७२/२२५४) इत्युक्तम्, अनजादीनामपि दृश्यते । 'सुरुचो वेन आवः' (वा.सं. १३.३) । [8]आनक् । आयुनक् । आव. इति वृञो लुङि मन्त्रे घसह्वर (२.४.८०/३४०२) इति लेर्लुकि कृते [9]च भवति । तथा आनक् इति नशेः[10] । आयुनक् इति युजेर्लङि ॥

## न माङ्योगे । (७४/२२२८)

माङ्योगे लुङलङलृङक्षु यदुक्तं तन्न भवति । मा भवान् कार्षीत् । मा भवान् हार्षीत् । मा स्म [11]करोत् । मा स्म [12]हरत् । मा भवानीहिष्ट । मा भवानीक्षिष्ट । [13]मा स्म भवानीहत । [14]मा स्म भवानीक्षत ॥

## बहुलं छन्दस्यमाङ्योगेऽपि । (७५/३५४६)

छन्दसि विषये [15]माङ्योगेऽपि बहुलम् अडाटौ भवतः, [16]अमाङ्योगेऽपि न भवतः । अमाङ्योगे तावत् – 'जनिष्ठा [17]उग्रः' (ऋ. १०.७३.१) । '[18]काममूनयीः' (ऋ. १.५३.३) । काममर्दयीत् । माङ्योगेऽपि भवतः – 'मा वः क्षेत्रे परबीजान्यवाप्सुः' (आ.ध. २.१३.६) । मा अभित्थाः । मा आवः ॥

---

1. उदात्तश्च स भवति नास्ति क. 2. अङ्गानाम् त्यधिकम् फ.ह. 3. स नास्ति ई. 4. कथम् इत्यधिकम् ह. 5. बाध्यते ह. 6. आडजादीनामिति नास्ति ह 7. यतः ड. 8. कुरुते धेनु रायः आनक् ह. 9. च नास्ति ह. 10. वा इति कुत्वे कृते भवति इत्यधिकम् ह.ड. 11–12. भवान् इत्यधिकम् फ. 13. उदाहरणमिदं नास्ति फ. 14. उदाहरणमिदं नास्ति क. 15. अमाङ्योगेऽपि ब. फ. इ. ह. 16. अपिशब्दान्माङ्-योगेऽपि ह. 17. उग्रतः क. 18. आकाममानयीत् क.

## इरयो रे। (७६/३६४७)

इरे इत्येतस्य छन्दसि विषये [1]बहुलं रे इत्ययमादेशो भवति। 'गर्भं प्रथमं दध्र आपः'। (ऋ. १०.८२.५)। [2]याऽस्य परिदध्रे। धाञो रेभावस्य असिद्धत्वाद् आतो लोपो भवति। न च भवति। [3]परमाया धियोऽग्निकर्माणि चक्रिरे। अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थम् इरयोः इत्ययं [4]द्विवचननिर्देशः॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। (७७/२७१)

श्नुप्रत्ययान्तस्याङ्गस्य धातोः इवर्णोवर्णान्तस्य भ्रु इत्येतस्य इयङ उवङ इत्येतावादेशौ भवतो[5]ऽजादौ प्रत्यये परतः। आप्नुवन्ति। [6]राध्नुवन्ति। शक्नुवन्ति। धातोः – चिक्षियतुः। चिक्षियुः। लुलुवतुः। लुलुवुः। नियौ। नियः। लुवौ। लुवः। [7]भ्रुवौ। भ्रुवः। अचि इति किम्? आप्नुयात्। शक्नुयात्। साध्नुयात्। श्नुधातुभ्रुवाम् इति किम्? लक्ष्म्यौ। वध्वौ। य्वोः इति किम्? चक्रतुः। चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः।

[७८५] इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलम्[8]पसङ्ख्यानं कर्तव्यम्। (म. भा. ३.२०९)

तन्वं (अ.वे. ५.३.१) पुषेम। तनुवं (तै. १.५.५.४) पुषेम। विष्वं पुषेम। विषुवं पुषेम। स्वर्गो लोकः। सुवर्गो (तै. १.५.७.१) लोकः। त्र्यम्बकं (तै. १.८.६) यजामहे। त्रियम्बकं यजामहे॥

## अभ्यासस्यासवर्णे। (७८/२२९०)

अभ्यासस्य इवर्णोवर्णान्तस्य असवर्णेऽचि परतः इयङ उवङ [9]इत्येतावादेशौ भवतः। इयेष। उवोष। इयर्ति। असवर्णे इति किम्? ईषतुः। ईषुः। ऊषतुः। ऊषुः। अचि इत्येव, इयाज। उवाप॥

## स्त्रियाः। (७९/३०१)

स्त्री इत्येतस्याजादौ प्रत्यये परतः इयङ आदेशो भवति। [10]स्त्री, स्त्रियौ, स्त्रियः। स्त्रीणाम् इत्यत्र परत्वान्नुडागमः। पृथग्योगकरणमुत्तरार्थम्॥

## वाऽम्शसोः। (८०/३०२)

अमि शसि[11] परतः [12]स्त्रियां वा इयङ आदेशो भवति। स्त्रीं पश्य, स्त्रियं पश्य। स्त्रीः पश्य, स्त्रियः पश्य॥

---

1. बहुलम् नास्ति ह. 2. यस्य ड, योऽस्य क. 3. परिमाया वियोगी कर्माणि विचिक्रिरे ह. 4. वचननिर्देशः क. 5. यथासङ्ख्यम् इत्यधिकम् फ. ह. 6. नास्ति ह. 7. नास्ति फ. 8. वक्तव्यम् ह. 9. इत्येतौ नास्ति फ. 10. स्त्री नास्ति ड. क. ह. 11. च इत्यधिकम् ड. फ. ह. 12. स्त्रीशब्दस्य फ. ह.

## इणो यण्। (८१/२४५८)

इणोऽङ्गस्य यणादेशो भवति अचि परतः[1]। यन्ति। यन्तु। आयन्। इयङादेशापवादोऽयम्। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' (व्या. प. १०) इति गुणवृद्धिभ्यां परत्वादयं बाध्यते। अयनम्। आयकः ॥

## एरनेकाचोऽसंयोगपूर्वस्य। (८२/२७२)

धातोः इति वर्तते, तेन संयोगो विशेष्यते। धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न [2]भवति असावसंयोग-पूर्वः, तदन्तस्या[3]ङ्गस्य अनेकाचोऽचि परतो यणादेशो भवति। निन्यतुः। निन्युः। उन्न्यौ। उन्न्यः। ग्रामण्यौ। ग्रामण्यः। एः इति किम्? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूत् इति। लुलुवतुः, लुलुवुः [4]इत्येतत् तु 'ओः सुपि' (६. ४. ८३/२८१) इति नियमादपि[5] सिध्यति। अनेकाचः[6] इति किम्? नियौ। नियः। असंयोगपूर्वस्य इति किम्? यवक्रियौ। यवक्रियः। धातुना संयोगविशेषणं किम्? इहापि स्यात उन्न्यौ, उन्न्यः इति। गतिकारकाभ्यामन्यपूर्वस्य नेष्यते (म. भा. ३. २१०), परमनियौ, परमनियः इति ॥

## ओः सुपि। (८३/२८१)

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान्न [7]भवति, तदन्तस्याङ्गस्य अनेकाचः अजादौ सुपि[8] परतो यणादेशो भवति। खलप्वौ। खलप्वः। [9]शतस्वौ। शतस्वः। सकृल्ल्वौ। सकृल्ल्वः। सुपि इति किम्? लुलुवतुः। लुलुवुः। अनेकाचः इत्येव, लुवौ। लुवः। असंयोगपूर्वस्य इत्येव, कटप्रुवौ। कटप्रुवः। गति-कारकाभ्यामन्यपूर्वस्य नेष्यते, परमलुवौ। परमलुवः ॥

## वर्षाभ्वश्च। (८४/२८२)

वर्षाभू इत्येतस्याजादौ सुपि परतो यणादेशो भवति। वर्षाभ्वौ। वर्षाभ्वः।

[७८६] पुनर्भ्वश्चेति वक्तव्यम्। (म. भा. ३. २१०)

पुनर्भ्वौ। पुनर्भ्वः। कारापूर्वस्यापीष्यते। काराभ्वौ। काराभ्वः (म. भा. ३. २१०) ॥

## न भूसुधियोः। (८५/२७३)

[10]भू सुधी इत्येतयोर्यणादेशो न भवति[11]। प्रतिभुवौ। प्रतिभुवः। सुधियौ। सुधियः ॥

## छन्दस्युभयथा। (८६/३५४५)

छन्दसि विषये भू सुधी इत्येतयोः उभयथा दृश्यते। 'वनेषु चित्रं विभ्वं विशे' (ऋ. ४. ७. १)। 'विभुवं विशे' (तै. सं. १. ५. ५)। सुध्यो हव्यमग्ने। सुधियो हव्यमग्ने ॥

---

1. अन्तरङ्गत्वात् इको यणचि इति सिद्धे समानाश्रये वार्णादाङ्गं बलीयः इति ज्ञापकार्थं वचनम् इत्यधिकम् ड. 2. भवति नास्ति ब. फ. इ. 3. अङ्गस्य नास्ति क. 4. इत्येव तु क. 5. अपि नास्ति फ. 6. ग्रहणम् इत्यधिकम् ह. 7. भवति नास्ति फ. ह. 8. प्रत्यये इत्यधिकम् फ. ह. 9. शकह्वौ शकह्वः फ. ह. 10. भू-ग्रहणेन तदन्तस्यापि ग्रहणम् इत्यधिकम् फ. ह. 11. अचि सुपि इत्यधिकम् ब.

## हुश्नुवोः सार्वधातुके । (८७/२३८७)

[1]हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्य[2] अनेकाचः असंयोगपूर्वस्य अजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति । जुह्वतु । [3]जुह्वत् । सुन्वन्ति । सुन्वन्तु । असुन्वन् । हुश्नुवोः इति किम् ? योयुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङलुगस्ति इति । छन्दसि[4] 'छन्दस्युभयथा' (६.४.८६/३५४८) इत्यार्धधातुकत्वादेव[5] यणादेशस्याप्रसङ्गः । न च यङलुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तम् अनेकाच् असंयोगपूर्वं सार्वधातुके विद्यते । सार्वधातुके इति किम् ? जुहुवतुः । जुहुवुः । असंयोगपूर्वस्य इत्येव, आप्नुवन्ति । राध्नुवन्ति ।।

## भुवो वुग् लुङ्लिटोः । (८८/२१७४)

भुवो [6]वुगागमो भवति लुङि लिटि चाजादौ [7]परतः । अभूवन् । अभूवम् । लिट् – [8]बभूव, बभूवतुः, बभूवुः ।।

## ऊदुपधाया गोहः । (८९/२३६४)

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः । [9]निगूहति । निगूहकः । [10]साधुनिगूही । [11]निगूहंनिगूहम् । निगूहन्ति । [12]गूहो वर्तते । उपधायाः इति किम् ? अलः अन्त्यस्य मा भूत् । गोहः इति विकृतग्रहणं [13]विषयार्थम् (म.भा. ३.२११) । [14]यत्रास्यैतद्रूपं तत्रैव यथा स्यात् । इह मा भूत्, निजुगुहतुः । निजुगुहुः[15] । [16]अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति । [17]निगूह्य गतः इत्यूत्वस्यासिद्धत्वाद् ल्यपि लघुपूर्वादिति[18]णेरयादेशः स्यात्[19] । [20]व्याश्रयत्वादेवा[21]सिद्धत्वमत्र नास्ति, णावूत्वम्, ण्यन्तस्य च ल्यप्ययादेश इति । अचि इत्येव, निगोढा । निगोढुम् ।।

## दोषो णौ । (९०/२६०४)

दोषः उपधाया ऊकारः आदेशो भवति णौ परतः । दूषयति, दूषयतः, दूषयन्ति । विकृतग्रहणं [22]प्रक्रमाभेदार्थम् । पूर्वत्र हि गोहः इत्युक्तम् । णौ इति किम् ? दोषो वर्तते ।।

## वा चित्तविरागे । (९१/२६०५)

[23]चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः । चित्तं दूषयति, चित्तं दोषयति । [24]प्रज्ञां दूषयति, प्रज्ञां दोषयति ।।

---

1. यण् इति वर्तते इत्यधिकम् ह. 2. च इत्यधिकम् क, अङ्गस्य इत्यधिकम् ह. 3. अजुह्वन् अ.ब.क. 4. हि इत्यधिकम् ब.क.ड. 5. एव यणादेशस्य नास्ति क. 6. अङ्गस्य इत्यधिकम् क. 7. प्रत्यये इत्यधिकम् फ. 8. बभूव नास्ति फ.इ. 9. निगूहयति क. 10. साधुनिगूहिनी ह. 11. निगूढम् क, गूहनम् ह. 12. निगूहो वर्तते क.फ.ह.इ. 13. विषयनियमार्थम् ह.ड.इ. 14. घजन्तस्य ब. 15. इति इत्यधिकम् फ.ह. 16. अयादेशो भवति प्रतिषेधार्थं च क. 17. उपगुह्य गतः ह. 18. इत्ययमादेशः क. 19. इति इत्याधिकम् फ. ह. 20. तच्च इत्यधिकम् ब, तस्य इत्यधिकम् ह. 21. असिद्धमत्वमत्र नास्ति क. 22. क्रमाभेदार्थम् ह. 23. चित्तविरागे अर्थे ब.क.इ, विरागार्थे ड, विचित्तविरागेऽर्थे ह. 24. प्रज्ञातम् दूषयति, प्रज्ञातम् दोषयति ह.

## मितां ह्रस्वः। (९२/२५६८)

मितो धातवः 'घटादयो मितः' (सि.कौ.पृ. ७३२) [1]इत्येवमादयो ये प्रतिपादिताः, तेषामुपधाया ह्रस्वो भवति णौ [2]परतः। घटयति। व्यथयति। जनयति। रजयति। शमयति। ज्ञपयति[3]। केचिदत्र वा इत्यनुवर्तयन्ति। सा च व्यवस्थितविभाषा। तेन उत्क्रामयति, सङ्क्रामयति इत्येवमादि सिद्धं [4]भवति॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम्। (९३/२७६२)

चिण्परे णमुल्परे च णौ परतः मितामङ्गानामुपधायाः दीर्घो भवति अन्यतरस्याम्। अशमि, [5]अशामि। अतमि, अतामि। शमंशमम्, शामंशामम्। तमन्तमम्, तामन्तामम्। [6]दीर्घग्रहणं किं, न ह्रस्व[7]विकल्प एव [8]विधीयते? नैवं शक्यम्, शमयन्तं प्रयुङ्क्ते इति द्वितीये णिचि [9]ह्रस्वविकल्पो न स्यात्। [10]णिलोपस्य स्थानिवद्भावाद् दीर्घविधौ त्वजादेशो न स्थानिवत्[11]। शयमन्तं प्रयुक्तवान्। अशमि, अशामि। शमंशमम्, शामंशामम्। शंशमयतेः – अशंशमि, अशंशामि। शंशमंशंशमम्, शंशामंशंशामम् (म.भा. ३.२१२)। योऽसौ णौ णिर्लुप्यते, यश्च यङ्कारः, तयोर्दीर्घविधौ [12]आदेशो न स्थानिवद् भवति इति [13]अस्थानिवद्भावात् दीर्घः सिद्धो भवति। ह्रस्वविकल्पे तु [14]विधीयमाने स्थानिवद्भावः [15]स्यात्। णिण्यन्ते यङण्यन्ते त्वसिद्धिरेव। व्याश्रयत्वाद[16]सिद्धत्वमपि नास्ति। णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वम्॥

## खचि ह्रस्वः। (९४/२९५५)

खच्परे णौ परतो ह्रस्वो भवति अङ्गस्य उपधायाः। द्विषन्तपः। परन्तपः। [17]पुरंदरः॥

## ह्लादो निष्ठायाम्। (९५/३०७३)

ह्लादोऽङ्गस्य उपधायाः ह्रस्वो भवति निष्ठायां परतः। [18]प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायाम् इति किम्? प्रह्लादयति। [19]ह्लादः इति योगविभागः क्रियते, [20]क्तिन्यपि यथा स्यात्, प्रह्लत्तिः इति॥

## छादेर्घेऽद्व्युपसर्गस्य। (९६/३२०७)

छादेरङ्गस्य अद्व्युपसर्गस्य घप्रत्यये परतः उपधायाः ह्रस्वो भवति। [21]उरश्छदः। प्रच्छदः। [22]दन्तच्छदः। णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र[23] न भवति इति ह्रस्वभाविनी उपधा भवति। अद्व्युपसर्गस्य इति किम्? समुपच्छादः।

[७८७] अद्विप्रभृत्युपसर्गस्य इति वक्तव्यम्। (म.भा. ३.२१३)

[24]समुपातिच्छादः। उत्तरा हि सङ्ख्या पूर्वसङ्ख्याकृतं व्यपदेशं निवर्तयति, नहि त्रिपुत्रो द्विपुत्रः इति [25]व्यपदिश्यते॥

---

1. इत्येवमादिना प्रतिपादिताः क.ह.इ. 2. परः क. 3. रमयति इत्यधिकम् ह. 4. भवति नास्ति फ. 5. नास्ति क. 6. दीर्घग्रहणम् – प्रयुक्तवान् नास्ति ह. 7. विकल्प नास्ति फ. 8. विकल्प्यते फ. 9. विकल्पो क. 10. णिलोपस्य – स्थानिवत् नास्ति क. 11. भवति इति दीर्घः सिद्धो भवति इत्यधिकम् फ. 12. अजादेशो क.ह.ड. 13. अस्थानिवत्वात् क. 14. विधीयमानस्थानिवद्भावः ह. 15. स्यात् नास्ति फ. 16. असिद्धिः इ. 17. नास्ति इ. 18. प्रह्लणः प्रह्लणवान् ह. 19. वाक्यमिदं नास्ति ब.ह. 20. क्डित्यपि ह. 21. तनुच्छदः फ. 22. परिच्छदः फ. 23. अत्र नास्ति फ. 24. समुपाभिच्छादः इ.ह. 25. अत्र अभिधीयते फ.

## इस्मन्त्रन्क्विषु च। (९७/२९८७)

इस् मन् त्रन् क्वि इत्येतेषु परतः छादेः उपधायाः ह्रस्वो भवति। छदिः। छद्म। छत्त्रम्। धामच्छत्। उपच्छत्॥

## गमहनजनखनघसां लोपः क्ङित्यनङि। (९८/२३६३)

गम हन जन खन घस इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङिति अनङि परतः। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। [1]जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः। चख्नुः। जक्षतुः। जक्षुः। 'अक्षन् पितरोऽमीमदन्त [2]पितरः' (वा.सं.१९.३६)। क्ङिति इति किम्? गमनम्। हननम्। अनङि इति किम्? [3]अगमत्। अघसत्। अचि इत्येव, गम्यते। हन्यते॥

## तनिपत्योश्छन्दसि। (९९/३५४९)

तनि पति इत्येतयोः छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः। 'वितत्निरे कवयः' (ऋ.१.१६४.५)। 'शकुना इव पप्तिम' (ऋ.१.१०७.२०)। छन्दसि इति किम्? वितेनिरे। पेतिम॥

## घसिभसोर्हलि च। (१००/३५५०)

घसि भस इत्येतयोः छन्दसि[4] उपधाया लोपो भवति हलादौ अजादौ च क्ङिति प्रत्यये परतः। 'सग्धिश्च मे सपीतिश्च मे' (वा. सं. १८.९)। 'बब्धां ते हरी धानाः' (नि.५.१२)। सग्धिः इति अदेः क्तिनि 'बहुलं छन्दसि' (२.४.३९/३३९८) इति घस्लादेशे उपधायाः लोपे च कृते 'झलो झलि' (८.२.२६/२२८१) इति सकारलोपः। धत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिः इति समासे कृते समानस्य सभावः। बब्धाम् इति भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि। द्विर्वचनात् परत्वान् नित्यत्वाच्च उपधालोपः प्राप्नोति, छान्दसत्वात् स तथा न क्रियते। अजादौ[5]–बप्सति। क्ङिति इत्येव, '[6]अंशून् बभस्ति' (काठ. सं. ३५.१४)॥

## हुझल्भ्यो हेर्धिः। (१०१/२४२५)

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेः हेः स्थाने धिरादेशो भवति। जुहुधि। झलन्तेभ्यः–भिन्धि। छिन्धि। हुझल्भ्यः इति किम्? क्रीणीहि। प्रीणीहि। हेः इति किम्? जुहुताम्[7]। [8]हलि इत्येव, [9]रुदिहि। स्वपिहि। इह जुहुतात्, भिन्तात् त्वम् इति परत्वात् [10]तातङि कृते सकृद्गतौ 'विप्रतिषेधेन यद् बाधितं तद् बाधितमेव' (चा प. ६०) इति पुनः धिभावो न भवति। भिन्धकि, छिन्धकि इत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानाद् अकच् क्रियते॥

---

1. जज्ञतुः। जज्ञुः इ. ह. 2. पितरः नास्ति फ. 3. अगमत् नास्ति इ. 4. विषये इत्यधिकम् क. 5. खल्वपि इत्यधिकम् फ. ह. 6. पशून् ह. इ. 7. छिन्ताम् इत्यधिकम् ह. 8. हलादेः इत्येव फ. ह. 9. नास्ति क, स्वपिहि नास्ति इ. 10. तातङादेशस्तत्र फ. ह.

## श्रुशृणुपृकृवृभ्यश्छन्दसि । (१०२/३६७१)

श्रु शृणु पृ कृ वृ इत्येतेभ्य उत्तरस्य हेः [1]धिरादेशो भवति छन्दसि विषये । 'श्रुधी हवमिन्द्र[2]' (ऋ. २. ११. ३) । 'शृणुधी[3] गिरः' (ऋ. ८. १३. ७) । 'पूर्धि[4]' (ऋ. ८. ७८. १०) । 'उरु णस्कृधि' (ऋ. ८. ५७. ११)[5] । 'अपा वृधि' (ऋ. १.७.६) । शृणुधि इत्यत्र धिभावविधानसामर्थ्याद् उतश्च प्रत्ययात्[6] (६.४.१०६/२३३४) इति हेर्लुक् न भवति । 'अन्येषामपि दृश्यते' (६. ३. १३७/३५३९) इति दीर्घत्वम् । अतोऽन्यत्र 'व्यत्ययो बहुलम्' (३. १. ८५/३४३३) इति शप्, तस्य 'बहुलं छन्दसि' (२.४.७३/३४००) इति लुक् ॥

## अङितश्च । (१०३/३६७३)

अङितश्च हेर्धिरादेशो भवति[7] । 'वा छन्दसि' (३.४.८८/३१५२) इति पित्वेना[8]स्य अङित्त्वम् । 'सोमं रारन्धि' (ऋ. १. ९१. १३) । 'अस्मभ्यं तद्धर्यश्व प्रयन्धि' (ऋ. ३. ३६. ९) । 'युयोध्यस्मज्जुहुराणमेनः' (ऋ. १. १८९. २०) । अङितः इति किम् ? 'हव्यं प्रीणीहि' (काठ. सं. ४०. ९४) । रारन्धि इति रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लु, अभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावस्तु अङित्त्वादेव । प्रयन्धि इति यमेःशपो लुक् । युयोधि इति [9]यौतेः शपः श्लुः ॥

## चिणो लुक् । (१०४/२३२९)

चिण उत्तरस्य प्रत्ययस्य लुग् भवति । अकारि । अहारि । अलावि । अपाचि । अकारितराम्, अहारितमाम् इत्यत्र तलोपस्य असिद्धत्वात् तरप्तमपोर्न लुग् भवति । चिणो लुक् इत्येतद् विषयभेदाद् भिद्यते ॥

## अतो हेः । (१०५/२२००)

अकारान्तादङ्गादुत्तरस्य हेः लुग् भवति । पच । पठ । गच्छ । धाव । अतः इति किम् ? युहि । रुहि । तपरकरणं किम् ? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वा[10]दकार एव भवति ॥

## उतश्च प्रत्ययादसंयोगपूर्वात् । (१०६/२३३४)

उकारो योऽसंयोगपूर्वः तदन्तात् प्रत्ययादुत्तरस्य हेर्लुक् भवति । चिनु । सुनु । कुरु । उतः इति किम् ? लुनीहि । पुनीहि । प्रत्ययात् इति किम् ? युहि । रुहि । असंयोगपूर्वात् इति किम् ? प्राप्नुहि । राध्नुहि । [11]तक्ष्णुहि ।

[७८८] उतश्च प्रत्ययाच्छन्दोवावचनम् । (म.भा. ३. २१५)

उतश्च प्रत्ययादित्यत्र छन्दसि [12]वा इति वक्तव्यम् । आतनुहि यातुधानान् । '[13]धिनुहि यज्ञपतिम्' (काठ. सं. १.६) । 'तेन मा भगिनं कृणु' (अ.वे. ६.१२९.१) ॥

---

1. धिभावः फ. 2. इन्द्र नास्ति ब.इ. 3. शिरः क. 4. चक्षुः इत्यधिकम् ह. 5. नश्च धातुस्थोरुष्ठभ्यः इति णत्वम् इत्यधिकम् ह. 6. असंयोगपूर्वात् इत्यधिकम् फ. ह. 7. छन्दसि विषये इत्यधिकम् फ. 8. तस्य फ. 9. यौधेः ह. 10. अकारान्तमेतत् फ.ह. 11. नास्ति फ. 12. च फ. 13. धिनुहि यज्ञम् फ.ह.

## लोपश्चास्यान्यतरस्यां म्वोः । (१०७/२३३३)

योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्य अन्यतरस्यां लोपो भवति [1]वकारमकारादौ प्रत्यये परतः । सुन्वः, सुनुवः । सुन्मः, सुनुमः । तन्वः, तनुवः । तन्मः, तनुमः । प्रत्ययस्य इत्येव, युवः । युमः । असंयोगपूर्वस्य इत्येव, शक्नुवः । शक्नुमः । लुक् इति वर्तमाने लोपग्रहणमन्त्यलोपार्थम् ॥

## नित्यं करोतेः । (१०८/२५४८)

करोतेः उत्तरस्य उकार[2]प्रत्ययस्य वकारमकारादौ प्रत्यये परतः नित्यं लोपो भवति । कुर्वः । कुर्मः । उकारलोपस्य दीर्घविधौ अस्थानिवद्भावाद् 'हलि च' (८. २. ७७/३५४) इति दीर्घत्वं प्राप्तम्, 'न भकुर्छुराम्' (८. २. ७९/१६२९) इति प्रतिषिध्यते ॥

## ये च । (१०९/२५४९)

यकारादौ[3]च प्रत्यये परतः करोतेः उत्तरस्य उकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात्, कुर्याताम्, कुर्युः ॥

## अत उत् सार्वधातुके । (११०/२४६७)

[4]उकारप्रत्ययान्तस्य करोतेः अकारस्य स्थाने उकारः आदेशो भवति सार्वधातुके क्ङिति परतः । [5]कुरुतः । कुर्वन्ति । सार्वधातुकग्रहणं किम् ? भूतपूर्वेऽपि सार्वधातुके [6]यथा स्यात्, कुरु । तपरकरणं [7]लघूपधस्य गुणनिवृत्त्यर्थम् । क्ङिति इत्येव, करोति । करोषि । करोमि ॥

## श्नसोरल्लोपः । (१११/२४६९)

[8]श्नस्य अस्तेश्च अकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । [9]रुन्धः । रुन्धन्ति । [19]भिन्तः । भिन्दन्ति । अस्तेः[11] – स्तः । सन्ति । क्ङितीत्येव – [12]भिनत्ति । अस्ति । श्नसोः इति आकारस्य पररूपत्वं शकन्ध्वादिषु द्रष्टव्यम् ॥

## श्नाभ्यस्तयोरातः । (११२/२४८३)

श्ना इत्येतस्य [13]अभ्यस्तानां चाङ्गानाम् आकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । लुनते । लुनताम् । अलुनत[14] । अभ्यस्तानाम् – मिमते । मिमताम् । अमिमत । संजिहते । संजिहताम् । समजिहत । श्नाभ्यस्तयोः इति किम् ? यान्ति । वान्ति । आतः इति किम् ? बिभ्रति[15] । क्ङिति इत्येव, अलुनात् । [16]अजहात् । आद्ग्रहणं स्पष्टार्थम् ॥

---

1. मकारवकाराद्योः प्रत्यययोः फ. ह. 2. प्रत्ययान्तस्य वकारादौ मकारादौ च क. 3. च नास्ति फ. 4. उप्रत्ययान्तस्य फ. 5. कुरुथः कुरुथ । कुर्वः कुर्मः इत्यधिकम् फ. ह. 6. इति क. 7. किम् इत्यधिकम् क. 8. श्नः इत्येतस्य फ. 9 नास्ति ह. 10. छिन्तः, छिन्दन्ति ह. 11. खल्वपि इत्यधिकम् फ. 12. छिनत्ति फ, अस्ति नास्ति फ. 13. अभ्यस्ताङ्गानां च फ, अभ्यस्तसञ्ज्ञकानाम् ह. 14. लुनतः पुनते पुनताम् पुनतः इत्यधिकम् ह. ब. क. इ. 15. जिघ्रति इत्यधिकम् फ, जिह्रियति इत्यधिकम् क. 16. अपुनात् ह.

## ई हल्यघोः । (११३/२४९७)

श्नान्तानामङ्गानाम् अभ्यस्तानां च घुवर्जितानाम् आतः ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । लुनीतः । पुनीतः । लुनीथः । पुनीथः । लुनीते । पुनीते । अभ्यस्तानाम्[1] – मिमीते । मिमीषे । मिमीध्वे[2] । संजिहीते । संजिहीषे । संजिहीध्वे[3] । हलि इति किम् ? लुनन्ति । मिमते[4] । अघोः इति किम् ? दत्तः । धत्तः । क्ङिति इत्येव, लुनाति । [5]जहाति ॥

## इद् दरिद्रस्य । (११४/२४८२)

[6]दरिद्रातेः हलादौ सार्वधातुके क्ङिति परतः इकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः । हलि इत्येव, दरिद्रति । क्ङिति इत्येव, दरिद्राति ।

[७८९] दरिद्राते[7]रार्धधातुके लोपो वक्तव्यः । (म. भा. ३.२१७)

[७९०] सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् । (म. भा. ३.२१७)

दरिद्राति इति दरिद्रः । आकारान्तलक्षणो [8]णप्रत्ययो न भवति, पचादित्वादजेव[9] भवति ।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा (म.भा. ३.२१७) ॥

[७९१] अद्यतन्यां वेति वक्तव्यम्[10] ।

अदरिद्रीत्, अदरिद्रासीत् । दरिद्रस्य इति निर्देशे छान्दसं ह्रस्वत्वम् द्रष्टव्यम् ॥

## भियोऽन्यतरस्याम् । (११५/२४९२)

भी इत्येतस्या[11]ङ्गस्यान्यतरस्याम् इकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः, बिभीतः । बिभिथः, बिभीथः । बिभिवः, बिभीवः । बिभिमः, बिभीमः ।

[12]हलादौ इत्येव, बिभ्यति । क्ङिति इत्येव, बिभेति । सार्वधातुके इत्येव, भीयते[13] ॥

## जहातेश्च । (११६/२४९८)

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः । जहितः, जहीतः । जहिथः, जहीथः । [14]हलादौ इत्येव, जहति । क्ङिति इत्येव, जहाति । सार्वधातुके इत्येव, हीयते । जेहीयते । पृथग्योगकरणमु[15]त्तरार्थम् ॥

---

1. खल्वपि इत्यधिकम् ह. 2. मिमीवहे मिमीमहे इत्यधिकम् फ. ह. 3. सञ्जिहीवहे सञ्जिहीमहे इत्यधिकम् फ. ह. 4. लुनते पुनते इत्यधिकम् फ. 5. पुनाति फ. 6. दरिद्रा इत्येतस्य फ. 7. असार्वधातुके क. 8. ण नास्ति क. 9. एव नास्ति फ. 10. लुङः एषा सञ्ज्ञा पूर्वाचार्याणाम् इत्यधिकम् फ. 11. अङ्गस्य नास्ति फ. 12. हलादौ – भीयते नास्ति ब. क. 13. बेभीयते इत्यधिकम् ड. 14. हलादौ – जेहीयते नास्ति क. 15. उत्तरार्थः क.

## आ च हौ। (११७/२४९९)

जहातेराकारश्चान्तादेशो भवति इकारश्च अन्यतरस्यां हौ परतः। जहाहि, जहिहि, जहीहि ॥

## लोपो यि। (११८/२५००)

लोपो भवति जहातेः यकारादौ क्ङिति सार्वधातुके परतः। जह्यात्, जह्याताम्, जह्युः[1] ॥

## घ्वसोरेद्धावभ्यासलोपश्च। (११९/२४७)

घुसञ्ज्ञकानामङ्गानाम् अस्तेश्च एकारादेशो भवति हौ परतः अभ्यासलोपश्च। देहि। धेहि। अस्तेः– 'श्नसोरल्लोपः' (६.४.१११/२४६९) इत्यकारलोपः, एधि। [2]शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि। (१२०/२२६०)

[3]लिटि [4]परत आदेशः आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलो[5]र्मध्ये योऽकारस्तस्य एकारादेशो [6]भवति, अभ्यासलोपः च लिटि क्ङिति परतः[7]। [8]रेणतुः। रेणुः। [9]येमतुः। येमुः। [10]पेचतुः। पेचुः। [11]देमतुः। देमुः। अतः इति किम्? दिदिवतुः। दिदिवुः। तपरकरणं किम्? ररासे, ररासाते, ररासिरे। [12]एकहल्मध्ये इति किम्? [13]शश्रमतुः। शश्रमुः। तत्सरतुः। तत्सरुः। अनादेशादेः इति किम्? चकणतुः। चकणुः। जगणतुः। [14]जगणुः। बभणतुः। [15]बभणुः। लिटः आदेशविशेषणं किम्? इहापि यथा स्यात्, नेमतुः। नेमुः। सेहे, सेहाते, सेहिरे। [16]अनैमित्तिके नत्वसत्वे, तदादिर्लिटि आदेशादिर्न भवति।

इह अभ्यासजश्त्वचर्त्वयोरसिद्धत्वं [17]नास्ति, [18]तेन तदादिरप्यादेशादिर्भवति। तथा च फलिभजोरेत्वं विधीयते। रूपाभेदे चादेशादिर्नाश्रीयते इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्। अन्यथा हि पेचतुः, पेचुः, [19]देमतुः, देमुः इत्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात्। [20]क्ङिति इत्येव, अहं पपच। अहं पपठ।

[७९२] दम्भेरेत्वं वक्तव्यम्। (म.भा. ३ २१८)

देभतुः। देभुः। नलोपस्यासिद्धत्वान्न प्राप्नोति।

[७९३] नशिमन्योरलिट्येत्वं वक्तव्यम्। (म.भा. ३.२१८)

अनेशम्। मेनका। अनेशम् इति नशेः लुङि पुषादित्वाद् अङ्। मेनका इति मनेः 'आशिषि च' (३.१.१५०/२९१२) इति वुन्। क्षिपकादिषु प्रक्षेपादित्वं न क्रियते।

---

1. सार्वधातुके इत्येव, हेयात् इत्यधिकम् ड.फ.ह. 2. शेरयं क. 3. किति इत्यधिकम् फ. ह. इ. 4. परभूतः फ, परभूते क.इ. 5. मध्यगतस्याकारस्य ह. 6. भवति नास्ति फ. 7. एकशब्द असहायवाची। असहाययोः मध्ये इत्यर्थः इत्यधिकम् फ.ह. 8. रण इत्यधिकम् ह. 9. यम इत्यधिकम् ह. 10. पच इत्यधिकम् ह. 11. दम इत्यधिकम् ह, मेदतुः मेदुः फ. 12. एकहल्मध्यगत फ. 13. ततक्षतुः ततक्षुः फ. ह, चक्षरतुः चक्षरुः ब.क.इ. 14. जगणुः नास्ति फ. 15. बभणुः नास्ति ड. 16. नैमित्तिके न क. 17. नाश्रीयते फ. ह. 18. तेन नास्ति फ. 19. उदाहरणमिदं नास्ति फ. 20. किति इ.

[७९४] छन्दस्यमिपचोरप्यलिटचेत्वं वक्तव्यम् । (म.भा. ३.२१९)

व्येमानम् । अमेर्विपूर्वस्य चानशि मुक् न क्रियते । लिङि-पेचिरन् । पचेरन् इत्येतस्य छान्दसं ह्रस्वत्वम् ।

[७९५] यजिवप्योश्च । (म.भा. ३.२१९)

आयेजे । आवेपे । [1]लङि इटि 'छन्दस्यपि दृश्यते' (६.४.७३/३५४५) इति अनजादेरपि इडागमः ॥

## थलि च सेटि । (१२१/२२६१)

थलि च सेटि परतोऽनादेशादेः अङ्गस्य [2]एकहल्मध्यगतस्य अतः स्थाने एकार आदेशो भवति, अभ्यासलोपश्च । पेचिथ । शेकिथ[3] । सेटि इति किम ? पपक्थ[4] । थल्ग्रहणं विस्पष्टार्थम् । [5]अक्ङिदर्थमेतद्वचनम् इति अन्यस्येटोऽसम्भवात् । अतः इत्येव, दिदेविथ । [6]एकहल्मध्यगतस्य इत्येव, [7]ततक्षिथ । [8]ररक्षिथ । अनादेशादेरित्येव, चकणिथ । बभणिथ ॥

## तॄफलभजत्रपश्च । (१२२/२३०१)

तॄ फल भज त्रप इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि । तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे, त्रेपाते, त्रेपिरे । तरतेर्गुणार्थं वचनम् । फलिभजो[9]रादेशाद्यर्थम् । त्रपेरनेकहल्मध्यार्थम् ।

[७९६] श्रन्थेश्चेति वक्तव्यम् ।

श्रेथतुः । श्रेथुः ॥

## राधो हिंसायाम् । (१२३/२५३२)

राधः हिंसायामर्थेऽवर्णस्य एकारः आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि । [10]अपरेधतुः । अपरेधुः । [11]अपरेधिथ । हिंसायाम् इति किम् ? [12]रराधतुः । रराधुः । रराधिथ । अतः इत्येतदि[13]होपस्थितं तपरत्वकृतमपास्य कालविशेषमसम्भवादवर्णमात्रं प्रतिपादयति । अथ वा 'श्नाभ्यस्तयोरातः' (६.४.११२/२४८३) [14]इत्यनुवर्तते [15]इति व्याख्येयम् । एकहल्मध्ये वा यः [16]स स्थानी भविष्यति ॥

## वा जॄभ्रमुत्रसाम् । (१२४/२३५६)

जॄ भ्रमु त्रस इत्येतेषाम् अङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति [17]परतः थलि च सेटि । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ ॥

---

1. यजेर्वपेश्च इत्यधिकम् क. ह. 2. एकहल्मध्ये क. 3. नेमिथ इत्यधिकम् ब. क. फ. ह. ड. 4. शशक्थ इत्यधिकम् फ, भारद्वाजादन्यस्य मतेन उपदेशे त्वत इत्यादिनियमेन यः प्राप्तः तस्यैव इटः प्राप्तः प्रतिषेधः इत्यधिकम् ह. 5. वाक्यमिदं नास्ति ड. 6. एकहल्मध्यस्य क.ह. 7. जजक्षिथ ब. 8. तत्सरिथ ह. 9. आदेशार्थं वचनम् फ. 10. नास्ति क. 11. नास्ति फ. 12. आरराधतुः आरराधुः ह. 13. इह नास्ति ह.फ. 14. इत्यतः आतः इत्यधिकम् फ. 15. एवं इत्यधिकम् फह. 16. आकारः इत्यधिकम् ह. 17. परतः नास्ति फ.

## फणां च सप्तानाम् । (१२५/२३५४)

फणादीनां सप्तानां [1]धातूनाम् अवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे, भ्रेजाते, भ्रेजिरे । बभ्राजे, बभ्राजाते, बभ्राजिरे । भ्रेशे, भ्रेशाते, भ्रेशिरे । बभ्राशे, बभ्राशाते, बभ्राशिरे । भ्लेशे, भ्लेशाते, भ्लेशिरे । बभ्लाशे, बभ्लाशाते, बभ्लाशिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ । सप्तानाम् इति किम् । दध्वनतुः । दध्वनुः । दध्वनिथ ॥

## न शसददवादिगुणानाम् । (१२६/२२६३)

शस दद इत्येतयोः वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारः तस्य स्थाने [2]एकारादेशो न भवति, अभ्यासलोपश्च । विशशसतुः । विशशसुः । विशशसिथ । दददे, ददद‍ाते, ददरिरे । वादीनाम् – ववमतुः । ववमुः । ववमिथ । गुणस्य – विशशरतुः । विशशरुः । विशशरिथ[3] । लुलविथ । [4]पुपविथ । गुणशब्दाभिनिर्वृत्तस्य अर्शब्दस्य ओकारस्य चाग्रमकारः इति एत्वं प्रतिषिध्यते ॥

## अर्वणस्त्रसावनञः । (१२७/३६४)

अर्वन् इत्येतस्य अङ्गस्य तृ इत्ययमादेशो भवति, [5]सुश्चेत् ततः परो न भवति, स च नञ उत्तरो न भवति । अर्वन्तौ । अर्वन्तः । अर्वन्तम्, अर्वन्तौ, अर्वतः । अर्वता, अर्वद्भ्याम्, अर्वद्भिः । [6]अर्वती । आर्वतम् । असौ इति किम् ? अर्वा । अनञः इति किम् ? अनर्वाणौ । अनर्वाणः । 'अनर्वाणं वृषभं मन्द्रजिह्वम्' (ऋ. १.१९०.१) ॥

## मघवा बहुलम् । (१२८/३६०)

मघवन् इत्येतस्य अङ्गस्य बहुलं तृ इत्ययमादेशो भवति । मघवान्, मघवन्तौ, मघवन्तः । मघवन्तम्, मघवन्तौ, मघवतः । मघवता[7] । मघवती । माघवतम् । न [8]च भवति । मघवा, मघवानौ, मघवानः । मघवानम्, मघवानौ, मघोनः । मघोना, मघवभ्याम्, मघवभिः[9] । मघोनी (ऋ. १.४८.८) । [10]माघवनम् ॥

## भस्य । (१२९/२३३)

भस्य इत्ययमधिकारः आ अध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामः भस्य इत्येवं तद्वेदितव्यम् । वक्ष्यति – 'पादः पत्' (६.४.१३०/४१४)[11] । [12]द्विपदः पश्य । द्विपदा कृतम् । भस्य इति किम् ? द्विपादौ । द्विपादः ॥

---

1. धातूनाम् नास्ति फ. ह. 2. एत्वं प्रतिषिध्यते फ. 3. विववरतुः विववरुः विवरिथ इत्यधिकम् ह. ड. 4. नास्ति फ.ह. 5. असौ परतः, सुशब्दः फ. 6. इति यावत् अर्वत्सु इत्यधिकम् ह. 7. मघवद्भ्याम् मघवद्भिः इत्यधिकम् क. ड. 8. च नास्ति फ. क. 9. इति इत्यधिकम् फे. 10. माघवनं हविः फ. ह. 11. इति इत्यधिकम् फ. 12. उदाहरणमिदं नास्ति क.

## पादः पत् । (१३०/४१४)

पादः इति पादशब्दो लुप्ताकारो गृह्यते । तदन्तस्याङ्गस्य भस्य पत् इत्ययमादेशो [1]भवति । स च 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या. प. १०६) इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य । द्विपदः पश्य[2] । द्विपदा[3] । द्विपदे । द्विपदिकां ददाति । त्रिपदिकां ददाति । वैयाघ्रपद्यः ॥

## वसोः सम्प्रसारणम् । (१३१/४३७)

वस्वन्तस्य भस्य सम्प्रसारणं भवति । विदुषः पश्य । विदुषा । विदुषे । पेचुषः पश्य । पेचुषा । पेचुषे । [4]पपुषः पश्य । आकारलोपे कर्तव्ये [5]वसुसंप्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति[6] । [7]वसुग्रहणे क्वसोरपि ग्रहणमिष्यते ॥

## वाह ऊठ् । (१३२/३२९)

वाहः इत्येवमन्तस्य भस्य ऊठ् इत्येतत् सम्प्रसारणं [8]भवति । प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । 'एत्येधत्यूठ्सु' (६. १. ८९/७३) इति वृद्धिः । अथ किमर्थमूठ् क्रियते, सम्प्रसारणे एव कृते गुणे च 'वृद्धिरेचि' (६. १. ८८/७२) इति वृद्धौ [9]सत्यां सिद्धं रूपं भवति प्रष्ठौहः इति, अनकारान्ते चोपपदे वहे[10]ण्विर्न दृश्यते ? ज्ञापनार्थम् । एतज् ज्ञापयति, भवत्येषा परिभाषा[11] 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या. प. ४२) इति । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्य असिद्धत्वात् अन्तरङ्गो गुणो न स्यात् ॥

## श्वयुवमघोनामतद्धिते । (१३३/३६२)

श्वन् युवन् मघवन् इत्येतेषाम् [12]अङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति । शुनः[13] । शुना । शुने । यूनः[14] । यूना । यूने । मघोनः[15] । मघोना । मघोने । अतद्धिते इति किम् ? [16]शौवं मांसम् । यौवनं वर्तते । माघवनः स्थालीपाकः । शुनो विकारे 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४/१५३२), द्वारादित्वादैजागमः । श्वादीनामेतत् सम्प्रसारणं [17]नकारान्तानामिष्यते । इह न भवति, युवतीः पश्य । मघवतः । मघवता[18] । मघवते । तदर्थमुत्तरत्र योगविभागं कुर्वन्ति । अल्लोपः । अनः । अनः इत्युभयोः शेषः [19]इति ॥

## अल्लोपोऽनः । (१३४/२३४)

[20]अन् इत्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञः पश्य । राज्ञा । राज्ञे । [21]तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे । अनो [22]नकारान्तस्यायं लोप इष्यते । इह न भवति, राजकीयम् इति ॥

---

1. भविष्यति फ. 2. त्रिपदः पश्य इत्यधिकम् फ. 3. द्विपदा द्विपदे नास्ति फ. ह. 4. ययुषः पश्य फ. ह. 5. वसोः सम्प्रसारणस्य फ. 6. उकारोच्चारणसामर्थ्यात् इत्यधिकम् ह. 7. वसुसम्प्रसारणे ब. ड. 8. स्यात् फ. 9. कृतायाम् फ. 10. ण्विन् क, ण्विन् प्रत्ययो ह. 11. अस्मिन् प्रकरणे इत्यधिकम् फ. 12. भसञ्ज्ञकानाम् इत्यधिकम् ह. 13–15. पश्य इत्यधिकम् फ. 16. शौवनम् क. फ. 17. नकारान्तस्य फ. 18. इति फ, मघवते नास्ति फ. 19. नास्ति फ. 20. अन्नन्तस्य अङ्गस्य फ. ह. 21. तक्ष्णः तक्ष्णा नास्ति क. 22. नकारस्यायम् फ.

## षपूर्वहन्धृतराज्ञामणि । (१३५/११६०)

षकारपूर्वो यः [1]अन् [2]हनः धृतराज्ञश्च तस्य अकारलोपो भवति [3]अणि परतः । औक्ष्णः । ताक्ष्णः । [4]भ्रौणघ्नः । धार्तराज्ञः । षपूर्वहन्धृतराज्ञाम् इति किम् ? सामनः । [5]वैमनः । अन् इति प्रकृतिभावेन अल्लोपटिलोपौ उभावपि न भवतः । अणि इति किम् ? ताक्ष्ण्यः[6] ।।

## विभाषा ङिश्योः । (१३६/२३७)

[7]ङौ परतः शीशब्दे च[8] अनो विभाषा अकारलोपो भवति । राज्ञि, राजनि । [9]साम्नि, सामनि । साम्नी, सामनी ।।

## न संयोगाद्वमन्तात् । (१३७/३५७)

वकारमकारान्तात् संयोगादुत्तरस्य अनः अकारस्य लोपो न भवति । पर्वणा । पर्वणे । अथर्वणा । अथर्वणे[10] । संयोगात् इति किम् ? प्रतिदीव्ना । प्रतिदीव्ने । साम्ना । साम्ने । वमन्तात् इति किम् ? तक्ष्णा । तक्ष्णे ।।

## अचः । (१३८/४१६)

अचः इत्ययमञ्चतिर्लुप्तनकारो गृह्यते । तदन्तस्य भस्य अकारस्य लोपो भवति । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा । मधूचे ।।

## उद ईत् । (१३९/४२०)

उदः उत्तरस्य अचः ईकारादेशो भवति । उदीचः[11] । उदीचा । उदीचे ।।

## आतो धातोः । (१४०/२४०)

आकारान्तस्य धातोः भस्य लोपो भवति । कीलालपः पश्य । कीलालपा । कीलालपे । शुभंयः पश्य । शुभंया । शुभंये । आतः इति किम्? [12]नियो । निये । धातोः इति किम्? खट्वाः पश्य । मालाः पश्य । आतः इति योगविभागः, तेन क्त्वो [13]ल्यप् (७.१.३७/३३३२), हलः श्नः शानच् (३.१.८३/२५५७) इत्येवमादि सिद्धं भवति ।।

---

1. अन्शब्दः ह. 2. हन्शब्दस्य फ. ह. 3. अणि प्रत्यये ह. 4. वार्तघ्नः ब. क. फ. ह. ड. 5. वेमनः क. 6. तक्ष्णोऽपत्यम् इति सेनान्तलक्षणकारिभ्यश्च इति ण्यः इत्यधिकम् फ. ह. 7. ङौ शब्दे फ. ह. 8. परतः इत्यधिकम् फ. क. ह. 9. नाम्नि नामनि दाम्नि दामनि ह. 10. चर्मणा चर्मणे इत्यधिकम् ड. फ. ह, वर्मणा वर्मणे इत्यधिकम् क. इ. 11. पश्य इत्यधिकम् फ. ह. 12. नियः इत्यधिकम् फ. 13. यक् इ. ह.

## मन्त्रेष्वाङ्यादेरात्मनः। (१४१/३६७४)

मन्त्रेषु आङि परतः आत्मनः आदेर्लोपो भवति[1]। त्मना देवेभ्यः। त्मना सोमेषु। मन्त्रेषु इति किम्? आत्मना कृतम्। आङि इति किम्? [2]यदात्मनस्तन्नो वरिष्ठा।

[७९७] आङोऽन्यत्रापि दृश्यते।

[3]'त्मन्या समञ्जन्' (ऋ. १०.११०.१०)॥

## ति विंशतेर्डिति। (१४२/८४४)

भस्य विंशतेः तिशब्दस्य डिति प्रत्यये लोपो भवति। विंशत्या क्रीतः विंशकः[4]। विंशं शतम्[5]। [6]विंशतेः पूरणो विंशः[7]। एकविंशः। डिति इति किम्? विंशत्या॥

## टेः। (१४३/३१६)

टिसञ्ज्ञकस्य डिति प्रत्यये परतः लोपो भवति। कुमुद्वान्। नड्वान्। वेतस्वान्[8]। उपसरजः। मन्दुरजः। त्रिंशता क्रीतः त्रिंशकः। डिति अभस्यापि [9]अनुबन्धकरणसामर्थ्यात् टिलोपो भवति॥

## नस्तद्धिते। (१४४/६७०)

नकारान्तस्य भस्य टेः लोपो भवति तद्धिते परतः। आग्निशर्मिः। औडुलोमिः[10]। बाह्वादित्वाद् (४.१.९६/१०९६) इञ् प्रत्ययः। नः इति किम्? सात्वतः। तद्धिते इति किम्? [11]शर्मणा। शर्मणे।

[७९८] [12]नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डि-सूकरसद्मसुपर्वणामुपसङ्ख्यानं [13]कर्तव्यम्। (म.भा. ३.२२५)।

अत्र ये इन्नन्ताः तेषाम् 'इनण्यनपत्ये' (६.४.१६४/१२४५) इति प्रकृतिभावः प्राप्तः, ये [14]तु अन्नन्ताः तेषाम् 'अन्' (६.४.१६७/११५५) इति। सब्रह्मचारिणः इमे साब्रह्मचाराः, [15]पीठसर्पिणः पैठसर्पाः। कलापिना प्रोक्तमधीयते कालापाः,[16] कुथुमिनः[17] कौथुमाः। तैतिलिजाजलिनौ आचार्यौ, तत्कृतो ग्रन्थः उपचारात् तैतिलि-जाजलिशब्दाभ्यामभिधीयते, तं [18]ग्रन्थमधीयते तैतिलाः, जाजलाः[19]। शैशिकेष्वर्थेषु [20]वृद्धत्वादत्र छः प्राप्नोति।

---

1. आङ् इति तृतीयैकवचनस्य पूर्वाचार्याणां सञ्ज्ञा त्मना पितृभ्यः इत्यधिकम् ह. 2. यदात्मनस्तं देवो वरिष्ठां इ, यदात्मनस्तन्नोऽवतिष्ठते वरिष्ठः ह, यदात्मनस्तन्नो वरिष्ठम् ड, यदात्मनि तन्नो मे विरिष्ट क. अ. 3. त्मन्या समजत् मनि यज सोमेभ्यः ह, त्मन्या समञ्जन् देवानाम् इ. 4. विंशतित्रिंशद्भ्याम् ड्वुन्नसंज्ञायाम् इति ड्वुन् इति इत्यधिकम् ह.फ. 5. विंशतिरधिकाऽस्मिन् शते। तदस्मिन् अधिकमिति दशान्तात् डः दशान्त-विंशतेश्च इति डः इत्यधिकम् ह.फ. 6. उदाहरणमिदं नास्ति ड. 7. तस्य पूरणे डट् इत्यधिकम् फ. ह. 8. कुमुदनडवेतसेभ्यो मतुप् इत्यधिकम् फ.ह. 9. अनुबन्धकरणे क. 10. शारलौमिः इत्यधिकम् फ. 11. शर्मणः इ. 12. नकारान्तस्य 13. कर्तव्यम् नास्ति फ. 14. तु नास्ति फ. 15. नास्ति फ, पीठसर्पिण इमे ह. 16. कलापिवैशम्पयनान्तेवासिभ्यश्च इति णिनेः प्राप्तस्यापवादः कलापिनो अण् इति अण् इत्यधिकम् फ. 17. इमे इत्यधिकम् फ. 18. ग्रन्थम् नास्ति क. 19. तदधीते इत्यण् इत्यधिकम् फ. 20. वृद्धाच्छः फ. ह.

एवं [1]लाङ्गलाः। [2]शैलालाः। शिखण्डिनः [3]शैखण्डाः। सूकरसद्मनः[4] सौकरसद्माः। [5]सुपर्वणः सौपर्वाः।

[७९९] अश्मनो विकार उपसङ्ख्यानम्। (म.भा. ३.२२६)

अश्मनो विकारः आश्मः। अश्मनोऽन्यः।

[८००] चर्मणः कोश उपसङ्ख्यानम्। (म.भा. ३.२२६)

चार्मः कोशः। चार्मणोऽन्यः।

[८०१] शुनः सङ्कोच उपसङ्ख्यानम्। (म.भा. ३.२२६)

शौवः सङ्कोचः। शौवनोऽन्यः।

[८०२] अव्ययानां च सायंप्रातिकाद्यर्थमुपसङ्ख्यानम्। (म.भा. ३.२२६)

के पुनः सायंप्रातिकादयः? येषामव्ययानाम[6]विहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायंप्रातिकप्रकाराः [7]ग्रहीतव्याः। सायंप्रातर्भवः सायंप्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः[8]। 'कालाट् ठञ्' (४.३.११/१३८१) इति ठञ्प्रत्ययः। टचुटचुलौ तु नेष्येते[9]। आरातीयः, शाश्वतिकः, शाश्वतः इत्येवमादिषु न दृश्यते टिलोपः[10]॥

## अह्नष्टखोरेव। (१४५/७८९)

अहन् इत्येतस्य टखोरेव [11]परतः [12]टिलोपो भवति। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः। त्र्यहीनः। अह्नां समूहः क्रतुः अहीनः।

[८०३] [13]अह्नः समूहे खो वक्तव्यः।

सिद्धे सति आरम्भो नियमार्थः। इह मा भूत्, अह्ना निर्वृत्तम् आह्निकम्। एवकारकरणं विस्पष्टार्थम्। अह्नः एव टखोः [14]इत्येवं नियमो न [15]भविष्यति, 'आत्माध्वानौ खे' (६.४.१६९/१६७१) [16]इति प्रकृतिभाव-[17]विधानात्॥

## ओर्गुणः। (१४६/८४७)

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। परशव्यमयः। औपगवः। कापटवः। ओरोत् इति वक्तव्ये गुणग्रहणं सञ्ज्ञापूर्वको विधिरनित्यो[18] (व्या.प. ६४) यथा स्यात्, तेन स्वायम्भुवः इति सिद्धं भवति॥

---

1. जाङ्गलाः ब. 2. नास्ति फ.क, शिलालिनः इमे इत्यधिकम् ब.ह. 3–4. इमे इत्यधिकम् फ. 5. उदाहरणमिदं नास्ति फ. 6. अविहितलक्षणः फ.ह. 7. वेदितव्याः फ. 8. अव्ययसमुदायोऽपि अव्ययग्रहणेन गृह्यते इत्यधिकम् फ.ह. 9. बहुषु टिलोपवचनं ज्ञापकम् अव्ययादिनां टिलोपः नित्यः इति इत्यधिकम् फ.ह. 10. विभाषाग्रहणं चानुवर्तते। सा च व्यवस्थिविभाषा व्याख्यायते इत्यधिकम् ह. 11. प्रत्यययोः इत्यधिकम् फ. 12. टेर्लोपो भवति फ.ह. 13. क्रतौ इत्यधिकम् फ.ह. 14. एषः क.ड.ह. 15. भवति फ. 16. इति नास्ति फ. 17. विधानसामर्थ्यात् फ.ह. 18. इति ज्ञापयत्याचार्यः इत्यधिकम् फ.

## ढे लोपोऽकद्र्वाः । (१४७/११४२)

ढे परतः उवर्णान्तस्य[1] भस्य [2]अकद्र्वाः लोपो भवति । कामण्डलेयः । शैतबाहेयः । जाम्बेयः । माद्रबाहेयः । अकद्र्वाः इति किम् ? काद्रवेयो मन्त्रमपश्यत्[3] ।।

## यस्येति च । (१४८/३११)

[4]इवर्णान्तस्य अवर्णान्तस्य च भस्य इकारे [5]परे तद्धिते च लोपो भवति । इवर्णान्तस्य [6]ईकारे – दाक्षी । प्लाक्षी । सखी । सवर्णदीर्घत्वे हि सति अतिसखेरागच्छति इत्यत्र एकादेशस्या[7]न्तवत्त्वादसखि (१.४.७/२४३) इति [8]घिसञ्ज्ञायाः प्रतिषेधः स्यात् । इवर्णान्तस्य तद्धिते – दुलि – दौलेयः । वलि – वालेयः । अत्रि – आत्रेयः । अवर्णान्तस्य ईकारे – कुमारी । गौरी । शार्ङ्गरवी[9] । [10]अवर्णान्तस्य तद्धिते – दाक्षिः । प्लाक्षिः । [11]चौडिः । बालाकिः । सौमित्रिः ।

[८०४] [12]यस्येत्यौङः [13]श्यां प्रतिषेधो वक्तव्यः । (म. भा. ३. २२७)

काण्डे । [14]कुड्ये । सौर्ये हिमवतः शृङ्गे । औङः शीभावे कृते 'यस्येति च' इति, 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' (६. ४. १४९/४९९) इति च लोपः प्राप्नोति ।

[८०५] इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । (म. भा. ३. २२७)

वत्सान् प्रीणाति वत्सप्रीः[15], तस्य अपत्यम् वात्सप्रेयः । 'चतुष्पाद्भ्यो ढञ्' (४. १. १३५/११४१) इति [16]ढञ्प्रत्ययः । लेखाभ्रूः [17]शुभ्रादिः, तस्याः अपत्यम् लैखाभ्रेयः ।।

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । (१४९/४९९)

सूर्य तिष्य अगस्त्य मत्स्य इत्येतेषां यकारस्य उपधायाः भस्य लोपो भवति [18]ईति परतस्तद्धिते च । सूर्येणैकदिक्[19] सौरी बलाका । अणि यो यस्येति लोपः तस्यासिद्धत्वं नास्ति, व्याश्रयत्वात् । ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धी इति लुप्यते । तिष्य–तैषमहः । तैषी रात्रिः । अगस्त्य–अगस्त्यस्यापत्यं स्त्री, [20]ऋषित्वादणि कृते आगस्ती । आगस्तीयः । [21]मत्स्य – गौरादित्वात् ङीष्, मत्सी । उपधायाः इति किम् ? मत्स्यचरी । यग्रहणमुत्तरार्थम् । विषयपरिगणनमत्र कर्तव्यम् ।

---

1. अङ्गस्य इत्यधिकम् फ. 2. कद्रूशब्दं वर्जयित्वा फ. 3. स्त्रीभ्यो ढक् इत्यधिकम् ह. 4. इवर्णो–वर्णयोः फ. 5. प्रत्यये परतः फ, परे नास्ति ड. 6. ईकारे नास्ति फ. 7. अन्तवत्त्वे सति फ. ह. 8. घिसञ्ज्ञा–प्रतिषेधः फ. क. 9. किशोरी इत्यधिकम् ह. 10. अवर्णान्तस्य नास्ति फ. 11. चौलिः फ. 12. यस्येति नास्ति फ. 13. परे इत्यधिकम् फ. ह, इत्यादौ प्रतिषेधो वक्तव्यः क. 14. कुण्डे फ. 15. गौः इत्यधिकम् ड. फ. ह. 16. ढञ्प्रत्ययः नास्ति फ. 17. शुभ्रादिः नास्ति फ. 18. ईति ईकारप्रत्यये भसञ्ज्ञानिमित्ते तद्धिते परतः फ. 19. बलाका इत्यधिकम् ह. 20. ऋषित्वादणि कृते नास्ति ह. 21. मत्स्य नास्ति फ.

[८०६] मत्स्यस्य ङ्यामिति वक्तव्यम्[1]। (म. भा. ३. २२८)

[2]इह मा भूत्, मत्स्यस्येदं [3]मांसं मात्स्यम्।

[८०७] सूर्यागस्त्ययोश्छे च ङ्यां च। (म. भा. ३. २२८)

सौरीयः। सौरी। आगस्तीयः। आगस्ती। इह मा भूत्, सौर्यं चरुं निर्वपेत्। आगस्त्यः।

[८०८] तिष्यपुष्ययोर्नक्षत्राणि। (म. भा. ३. २२८)

तिष्येण नक्षत्रेण युक्तः कालः तैषः। पौषः।

[८०९] अन्तिकस्य तसि कादिलोप [4]आद्युदात्तं च। (म. भा. ३. २२८)

[5]अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपः, आद्युदात्तत्वं च। अन्तितो न दूरात्।

[८१०] [6]तमे तादेश्च। (म. भा. ३. २२८)

तमप्रत्यये [7]अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः[8]। तत्र तादिलोपे – अन्तमः। कादिलोपे – अन्तितमः।

[८११] कादिलोपे बहुलमिति वक्तव्यम्। (म. भा. ३. २२९)

अन्यत्रापि हि दृश्यते, अन्तिके सीदति इति अन्तिषत्। 'पूर्वपदात्' (८. ३. १०६/३६४३) इति षत्वम्।

[८१२] ये च। (म. भा. ३. २२९)

अन्तियः॥

## हलस्तद्धितस्य। (१५०/४७२)

[9]तद्धिते इति निवृत्तम्। [10]हल उत्तरस्य तद्धितयकारस्य उपधायाः ईति परतो लोपो भवति। गार्गी। वात्सी। हलः इति किम्? [11] कारिकेयी। तद्धितस्य इति किम्? [12]वैद्यस्य भार्या वैद्यी॥

---

1. भवति इत्यधिकम् ह. 2. मात्सी इत्यधिकम् फ. 3. मांसं नास्ति क. 4. भवति इत्यधिकम् ह. 5. अन्तिकस्य शब्दस्य फ. 6. तमबादेशश्च क. 7. परतः अन्तिकस्य फ. 8. भवति इत्यधिकम् फ. 9. तद्धिते इति निवृत्तम् नास्ति ब. ड. क. 10. पुनः तद्धितस्य ग्रहणात् इत्यधिकम् ह. 11. हारिकेयी फ. ह. 12. विद्यामधीते वैद्यः तस्य स्त्री ह.

## आपत्यस्य च तद्धितेऽनाति । (१५१/१०८२)

आपत्ययकारस्य हलः उत्तरस्य तद्धिते[1] अनाकारादौ [2]लोपो भवति । [3]गार्ग्याणां समूहो गार्गकम् । [4]वात्सकम् । आपत्यस्य इति किम् ? साङ्काश्यकः । काम्पिल्यकः[5] । तद्धितग्रहणम्[6] ईत्यनापत्यस्यापि[7] लोपार्थम् । सौमी इष्टिः । अनाति इति किम् ? गार्ग्यायणः । वात्स्यायनः । हलः इत्येव, कारिकेयस्यापत्यं कारिकेयिः[8] ॥

## क्यच्व्योश्च । (१५२/२११९)

क्य च्वि इत्येतयोश्च परतः आपत्ययकारस्य हल उत्तरस्य लोपो भवति । वात्सीयति । गार्गीयति । वात्सीयते । गार्गीयते । च्वौ – गार्गीभूतः । वात्सीभूतः । आपत्यस्य इत्येव, साङ्काश्यायते[9] । [10]साङ्काश्यभूतः । हलः इत्येव, कारिकेयीयति । कारिकेयीभूतः ॥

## बिल्वकादिभ्यश्छस्य लुक् । (१५३/१३११)

नडादिषु बिल्वादयः पठ्यन्ते[11] । 'नडादीनां कुक् च' (४.२.९१/१३१०) इति कृतकुगागमा बिल्वकादयो भवन्ति । तेभ्यः उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा [12]यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः । वेणुकीया–वैणुकाः । वेत्रकीया – वैत्रकाः । वेतसकीया – वैतसका । तृणकीया – तार्णकाः । इक्षुकीया – ऐक्षुकाः । काष्ठकीया – काष्ठकाः । कपोतकीया – कापोतकाः । 'कुञ्चायां ह्रस्वत्वं च' (ग. सू. ९२) । कुञ्चकीया – क्रौञ्चकाः । छग्रहणं किम् ? छमात्रस्य लुग् यथा स्यात्, कुको निवृत्तिर्मा भूत् इति । अन्यथा हि संनियोगशिष्टानाम् अन्यतरापाये उभयोरपि अभावः (व्या. प. ४८) इति कुगपि निवर्तेत । लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् ॥

## तुरिष्ठेमेयस्सु । (१५४/२००८)

इष्ठन् [13]इमनिच् ईयसुन् इत्येतेषु परतः तृशब्दस्य लोपो भवति । [14]आसुतिं करिष्ठः । [15]विजयिष्ठः । [16]वहिष्ठः । दोहीयसी धेनुः । सर्वस्य तृशब्दस्य लोपार्थं वचनम् । अन्त्यस्य हि 'टेः' (६.४.१५५/१७८६) इत्येव [17]सिद्धः । लुग् इत्येतदत्र नानुवर्तते, तथाहि सति 'न लुमताङ्गस्य' (१.१.६३/२६३) इति [18]प्रतिषेधाद् गुणो न स्यात् । इमनिज्ग्रहणमुत्तरार्थम् । इतरौ तु 'तुश्छन्दसि' (५.३.५९/२००७) इति भवतः ॥

---

1. परतः इत्यधिकम् फ. 2. यलोपः ब. क. ड. 3. गर्गाणाम् ब. फ. ह. ड. 4. नास्ति फ. 5. साङ्काश्यादिभ्यो ण्यः ततो ध्वन्वयोपधात् वुञ् इत्यधिकम् फ. 6. किम् इत्यधिकम् फ. 7. पूर्वेण इत्यधिकम् फ. ह. 8. तद्धिते इति किम् गार्ग्ययोः इत्यधिकम् फ. ह, वात्स्ययोः इत्यधिकम् ह. 9. काम्पिल्यायते इत्यधिकम् फ. 10. साङ्काश्यीभूतः ब. ड फ, काम्पिल्यीभूतः इत्यधिकम् फ. 11. छविधानार्थं ये नडादयः ते यदा छसंनियोगेन कृतकुगागमाः ते इह गृह्यन्ते इत्यधिकम् ड. 12. अस्याम् फ. 13. इमन् इ. 14. असुतिम् क. 15. विजयं वरिष्ठः क. 16. सहिष्ठः फ, नास्ति इ. 17. सिद्धम् फ. ह, सिद्धेः इ. 18. प्रतिषेधः स्यात् फ.

टेः । (१५७/१७८६)

भस्य[1] टेर्लोपो भवति इष्ठेमेयस्सु परतः । पटु – पटिष्ठः । पटिमा । पटीयान् । लघु – लघिष्ठः । लघिमा । लघीयान् ।

[८१३] णाविष्ठवत् प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् । (म.भा. ३.२३०)

किं प्रयोजनम् ? पुंवद्भावरभावटिलोपयणादिपरार्थम् । पुंवद्भावः – एनीमाचष्टे एतयति । [2]श्येतयति । 'तसिलादिष्वाकृत्वसुचः' (६.३.३५/८३६) इति इष्ठे पुंवद्भाव उक्तः । [3]रभावः – पृथुमाचष्टे प्रथयति । म्रदयति । टिलोपः – पटुमाचष्टे पटयति । [4]लघयति । यणादिपरम् – स्थूलमाचष्टे स्थवयति[5] ।

भारद्वाजीयास्तु पठन्ति, 'णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्[6]कनर्थम्' इति । स्रग्विणमाचष्टे स्रजयति । वसुमन्तमाचष्टे वसयति[7] । युवानमाचष्टे यवयति । कनयति । एतदुभयमपि उदाहरणमात्रम्, न परिगणनम् । प्रादयोऽपि ह्मीष्यन्ते, प्रियमाचष्टे प्रापयति[8] ॥

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । (१५८/२०१८)

[9]स्थूल [10]दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां [11]यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति । स्थूल – स्थविष्ठः । स्थवीयान् । दूर – दविष्ठः । दवीयान् । युवन् – यविष्ठः । यवीयान् । [12]ह्रस्व – ह्रसिष्ठः । ह्रसिमा । ह्रसीयान् । क्षिप्र – क्षेपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षुद्र – क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते । परग्रहणं किम् ? यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयान् [13]इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत्[14] । पूर्वग्रहणं विस्पष्टार्थम्[15] ॥

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । (१५७/२०१६)

[16]प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां [17]प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राघि वृन्द इत्येते यथासङ्ख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः । प्रिय – प्रेष्ठः । प्रेमा । प्रेयान् । स्थिर– स्थेष्ठः[18] । स्थेयान् । स्फिर – स्फेष्ठः । स्फेयान् । उरु – वरिष्ठः । [19]वरिमा । वरीयान् । बहुल – बंहिष्ठः । बंहिमा । बंहीयान् । गुरु – गरिष्ठः । गरिमा । गरीयान् । वृद्ध – वर्षिष्ठः । वर्षीयान् । तृप्र – त्रपिष्ठः । त्रपीयान् । दीर्घ – द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृन्दारक – वृन्दिष्ठः । वृन्दीयान् । प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषामिमनिज् न भवति इति नोदाह्रियते ॥

---

1. अङ्गस्य इत्यधिकम् फ. 2. श्येनीमाचष्टे इत्यधिकम् फ.ह. 3. रभावः नास्ति ब. 4. घटयति ह. 5. दवयति इत्यधिकम् फ.ह.इ. 6. कन्विध्यर्थमिति ह. 7. स्थानिवद्भावात् न वृद्धिः इत्यधिकम् फ. ह. 8. स्थिरमाचष्टे स्थापयति इत्यधिकम् क.ह. 9. इष्ठेमेयस्सु इति वर्तते इत्यधिकम् ह. 10. स्थूलादीनां परम् फ. 11. यणादि फ. 12. ह्रस्व-क्षोदीयान् नास्ति क. 13. अत्र नास्ति ह. 14. इति इत्यधिकम् ह. 15. ये इह गुणवचनास्तेषामत्रैव ज्ञापकादजादिप्रत्ययौ भवतः इत्यधिकम् ह. 16. प्रियादीनां स्थाने फ. 17. प्रस्थेत्यादयः फ. 18. स्थेमा इत्यधिकम् फ. 19. नास्ति फ.

## बहोर्लोपो भू च बहोः। (१५८/२०१७)

बहोरुत्तरेषाम् इष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने भू इत्ययमादेशो भवति। भूमा। भूयान्। बहुशब्दः पृथ्वादिषु पठ्यते। बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्, अन्यथा [1]हि प्रत्ययानामेव भूभावः स्यात्॥

## इष्ठस्य यिट् च। (१५९/२०१८)

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति, बहोश्च [2]भूरादेशो भवति। भूयिष्ठः। लोपापवादो यिडागमः, तस्मिन्निकार उच्चारणार्थः॥

## ज्यादादीयसः। (१६०/२०१९)

[3]ज्यादुत्तरस्य [4]ईयसः आकार आदेशो भवति। ज्यायान्। लोपस्य [5]यिटा व्यवहितत्वात् आत् इत्युच्यते। लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायान् इति सिध्यति॥

## र ऋतो हलादेर्लघोः। (१६१/१७८७)

[6]रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोः इष्ठेमेयस्सु परतः। प्रथिष्ठः। प्रथिमा। प्रथीयान्। म्रदिष्ठः। म्रदिमा। म्रदीयान्। ऋतः इति किम्? पटिष्ठः। पटिमा। पटीयान्। हलादेः इति किम्? ऋजिष्ठः। ऋजिमा। [7]ऋजीयान्। लघोः इति किम्? कृष्ण – कृष्णिष्ठः। कृष्णिमा। [8]कृष्णीयान्। परिगणनमत्र कर्तव्यम्।

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्॥

[9]ततः इह न भवति, कृतमाचष्टे कृतयति। [10]मातरमाचष्टे मातयति। भ्रातयति॥

## विभाषर्जोश्छन्दसि। (१६२/३६७७)

ऋजु इत्येतस्य ऋतः स्थाने [11]विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतः छन्दसि [12]विषये। 'रजिष्ठमनु नेषि पन्थाम्' (ऋ. १.९१.१)। [13]त्वमृजिष्ठः॥

---

1. हि नास्ति फ. 2. आदेशः नास्ति फ, भूभावः ह. 3. ज्या इत्येतस्मात् फ. 4. इयस्शब्दस्य फ. 5. यिडागमेन फ. 6. रेफः क. ब. 7. ऋजीयान् नास्ति ब. 8. कृष्णीयान् नास्ति ब. 9. तेन फ. 10. मातरमाचष्टे नास्ति फ. 11. विभाषा नास्ति फ. 12. विषये नास्ति फ. 13. स त्वमृजिष्ठः। ऋजिष्ठमेति पन्थानम्। स त्वं रजिष्ठः ह.

## प्रकृत्यैकाच्। (१६३/२०१०)

एकाच् यद् [1]भसञ्ज्ञकं तद् [2]इष्ठेमेयस्सु परतः प्रकृत्या भवति। स्रग्विन्नित्येतस्य विन्नन्तस्य स्रजिष्ठः, स्रजीयान्, स्रजयति। स्रुग्वदित्येतस्य मत्वन्तस्य स्रुचिष्ठः, स्रुचीयान्, स्रुचयति। एकाच् इति किम्? [3]वसुमत् इत्येतस्य वसिष्ठः, वसीयान्।

[८१४] प्रकृत्याऽके राजन्यमनुष्ययुवानः[4]। (म. भा. ३.२३३)

अके प्रत्यये परतो राजन्य मनुष्य युवन् इत्येते प्रकृत्या भवन्ति। राजन्यानां समूहो राजन्यकम्। [5]मनुष्याणां समूहो मानुष्यकम्। 'आपत्यस्य च तद्धितेऽनाति' (६.४.१५१/१०८२) इति [6]यलोपः प्रकृतिभावेन न भवति। यूनो भावः यौवनिका। मनोज्ञादित्वाद् वुञ्। तस्य 'नस्तद्धिते' (६.४.१४४/६७९) इति टिलोपो न भवति॥

## इनण्यनपत्ये। (१६४/१२४७)

इन्नन्तम[7]नपत्यार्थे अणि परतः प्रकृत्या भवति। [8]साङ्कूटिनम्। सांराविणम्। सांमार्जिनम्। [9]'अभिविधौ भाव इनुण्' (३.३.४४/३२१८), 'अणिनुणः' (५.४.१५/३२१९) इत्यण्। [10]स्रग्विण इदम् स्राग्विणम्। अणि इति किम्? दण्डिनां समूहो दाण्डम्। 'अनुदात्तादेरञ्' (४.२.४४/१२५३) इति [11]अञ्प्रत्ययः। अनपत्ये इति किम्? मेधाविनोऽपत्यं मैधावः॥

## गाथिविदथिकेशिगणिपणिनश्च। (१६५/१२७५)

गाथिन् विदथिन् केशिन् गणिन् पणिन् इत्येते च अणि [12]प्रकृत्या भवन्ति। [13]गाथिनः अपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। [14]पाणिनः। अपत्यार्थोऽयमारम्भः॥

## संयोगादिश्च। (१६६/११५६)

संयोगादिश्च इन् अणि [15]प्रकृत्या भवति। शङ्खिनोऽपत्यं शाङ्खिनः। माद्रिणः। वाज्रिणः[16]॥

## अन्। (१६७/११५५)

अन्नन्तमणि [17]प्रकृत्या भवति अपत्ये चानपत्ये च। सामनः। वैमनः। [18]सौत्वनः। [19]जैत्वनः॥

---

1. भं. फ. 2. इष्ठादिषु फ. 3. वसुमन्तमाचष्टे इति वसयति ह. 4. इति वक्तव्यम् इत्यधिकम् ह. 5. मनुष्याणां समूहो नास्ति फ. 6. तत्र यकारलोपः ह. 7. अनपत्येऽर्थे कः 8. साङ्कोटिनम् क. ह. 9. वाक्यमिदं नास्ति ब. क. फ. 10. उदाहरणमिदं नास्ति फ. 11. अञ् फ. 12. परतः इत्यधिकम् फ. 13. गाथिनोऽपत्यं नास्ति फ. 14. पाणिनः नास्ति क. 15. परतः इत्यधिकम् फ. 16. चाक्रिणः इत्यधिकम् ब. फ. इ. 17. परतः इत्यधिकम् फ. 18. नास्ति ड. फ. 19. नास्ति फ.

## ये चाभावकर्मणोः । (१६८/११६४)

यकारादौ [1]च तद्धिते[2] अभावकर्मणोरर्थयोः अन् प्रकृत्या भवति । सामसु साधुः सामन्यः । [3]वेमन्यः अभावकर्मणोः इति किम् ? राज्ञो भावः कर्म वा राज्यम् । राजन् इति पुरोहितादिषु (५. १. १२८/१७९३) पठ्यते, ततोऽयं यक्प्रत्ययः ॥

## आत्माध्वानौ खे । (१६९/१६७१)

आत्मन् अध्वन् इत्येतौ[4] खे परतः प्रकृत्या भवतः । [5]आत्मने हितः आत्मनीनः । अध्वानमलङ्गामी अध्वनीनः । खे इति किम् ? प्रत्यात्मम् । प्राध्वम् । प्रत्यात्मम् इति अव्ययीभावे 'अनश्च' (५.४.१०८/६७८) इति समासान्तः टच्प्रत्ययः । प्राध्वम् इति 'उपसर्गादध्वनः' (५.४.८५/९५३) इति अच्प्रत्ययः ॥

## न मपूर्वोऽपत्येऽवर्मणः । (१७०/११६७)

मपूर्वः अन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति । [6]सुषाम्णोऽपत्यं सौषामः । [7]चान्द्रसामः । मपूर्वः इति किम् ? [8]सौत्वनः । अपत्ये इति किम् ? चर्मणा परिवृतो रथः चार्मणः । अवर्मणः इति किम् ? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

[८१५] मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् । (म.भा. ३.२३३)

हितनाम्नोऽपत्यं हैतनामः, हैतनामनः ॥

## ब्राह्मोऽजातौ । (१७१/११६८)

योगविभागो[9]ऽत्र क्रियते । ब्राह्मः इत्येतदपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्राणि [10]टिलोपार्थं निपात्यते । [11]ब्राह्मो गर्भः । [12]ब्राह्ममस्त्रम् । ब्राह्मं हविः[13] । ततः अजातौ । अपत्ये इत्येव । अपत्ये जातावणि [14]ब्रह्मणष्टिलोपो न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये इत्येव, ब्राह्मी ओषधिः ॥

## कार्मस्ताच्छील्ये । (१७२/१६१३)

कार्मः इति ताच्छील्ये टिलोपो निपात्यते । कर्मशीलः कार्मः । '[15]शीलम्', 'छत्रादिभ्यो णः' (४. ४. ६१, ६२/१६११, १६१२) इति णप्रत्ययः । [16]यद्येवं किमर्थमिदम्, 'नस्तद्धिते' (६. ४. १४४/६७९) इत्येव टिलोपः सिद्धः ? [17]सत्यमेतत् । ज्ञापकार्थं तु[18] । एतज् ज्ञापयति ताच्छीलिके [19]णेऽणकृतानि [20]भवन्ति इति । तेन चौरी, तापसी इति णान्तादपि ईकारः सिद्धो भवति । ताच्छील्ये इति किम् ? कर्मणः इदं कार्मणम् ॥

---

1. च नास्ति फ. 2. परतः इत्यधिकम् फ. 3. ब्राह्मण्यः अ. 4. शब्दौ इत्यधिकम् फ. 5. आत्मने हितम् आत्मनीनम् । अध्वनीनम् फ. 6. सुषमणः क. 7. माद्रसामः ह. 8. सौत्वमनम् क. 9. अत्र नास्ति फ. 10. टेर्लोपार्थम् क.इ. 11. ब्राह्मो मन्त्रः फ. 12. ब्राह्मं वस्त्रम् ड.फ.क. 13. ब्राह्मी ओषधिः इत्यधिकम् फ. 14. ब्रह्मन् इत्यस्य फ. 15. शीलम् नास्ति ह. 16. यद्येवं नास्ति फ. 17. सत्यमेवैतत् ह. 18. तु नास्ति फ. 19. णेऽप्यणि ब.क. 20. कार्याणि इत्यधिकम् ह.ड.

## औक्षमनपत्ये । (१७३/११५९)

औक्षम् इति अनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्ये इति किम् ? उक्ष्णोऽपत्यम् औक्ष्णः । 'षपूर्वहन्धृतराज्ञामणि' (६.४.१३५/११६०) इत्यलोपः ॥

## दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । (१७४/११४५)

[1]दाण्डिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वासिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते ।

दण्डिन् हस्तिन् इत्येतौ नडादिषु (४.१.९९/११०३) पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते । केषांचित्तु हस्तिन् इति नडादिषु न पठ्यते, तेषामत एव निपातनात् फगपि भवति । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः ।

अथर्वन् इति [2]वसन्तादिषु (४.२.६३/१२७३) पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचारात् अथर्वन् इति उच्यते, तमधीते यः स आथर्वणिकः । इके प्रकृतिभावो निपात्यते ।

जिह्माशिन् इति शुभ्रादिषु (४.१.१२३/११२६) पठ्यते, तस्य ण्ये परतः प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं जैह्माशिनेयः ।

वासिनोऽपत्यम् । 'उदीचां वृद्धादगोत्रात्' (४.१.१५७/११८१) इति फिञ् । तत्र प्रकृतिभावो निपात्यते । वासिनायनिः ।

भ्रूणहन्, धीवन् इत्येतयोः ष्यञि परतः तकारादेशो निपात्यते । भ्रूणघ्नः भावः भ्रौणहत्यम् । धीव्नः भावः धैवत्यम् । 'हनस्तोऽचिण्णलोः' (७.३.३२/२५७४) इति यत् तत्वं तद् धातुप्रत्यय एव इति भ्रौणघ्नः, वार्त्रघ्नः इत्यत्र न भवति, अतः [3]भ्रौणहत्ये तत्वं निपात्यते ।

सारव इति सरयू इत्येतस्य अणि परतो [4]यूशब्दस्य व इत्यादेशो निपात्यते । सरय्वां भवं सारवम् उदकम् ।

ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च [5]निपात्यते । इक्ष्वाकोः अपत्यम्, 'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६६/११८२) इति अञ्, [6]तत्र उकारलोपो निपात्यते । ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः, 'कोपधादण्' (४.२.१३२/१३५६) इत्यण् । ऐक्ष्वाकः[7] ।

मैत्रेय इति । मित्रयुशब्दो गृष्ट्यादिषु (४.१.१३६/११४३) पठ्यते, ततो [8]ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः ।

---

1. दाण्डिनायन – निपात्यन्ते नास्ति फ. 2. बसन्तादौ फ. 3. भ्रूणहत्ये ह. 4. यूशब्दलोपो ह. 5. इष्यते फ.ह. 6. तत्र – अण् नास्ति फ. 7. इति इत्यधिकम् फ. 8. ढञि कृते नास्ति फ.

अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव (४.१.१०४/११०६) न पठ्यते, [1]तत्राञि कृते यादेः इति इयादेशेनैव सिद्धम्, एवं च युलोपार्थं निपातनं कर्तव्यं न भवति, यस्कादिषु (२.४.६३/११४६) च बहुषु लुगर्थः पाठो न कर्तव्यो भवति, मित्रयवः इत्यञः 'यञञोश्च' (२.४.६४/११८) इत्येव हि लुकः सिद्धत्वात् ? नैतदस्ति । मित्रयूणां सङ्घः इत्यत्र गोत्रचरणाद् वुञं (४.३.१२६/१५०६) बाधित्वा मैत्रेयकः सङ्घः इत्यत्र 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४. ३.१२७/१५०७) इति अण् प्राप्नोति ।

हिरण्मयम् इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः ॥

## ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि । (१७५/३५५६)

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये । ऋतु वास्तु इत्येतयोः[2] यति यणादेशो निपात्यते । ऋतौ भवं ऋत्व्यम् (पै. १९.२५.१४) । वास्तौ भवं वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते । वस्तुनि भवः वास्त्वः । मधुशब्दस्य अणि स्त्रियां यणादेशो निपात्यते । 'माध्वीर्नः सन्त्वोषधीः' (ऋ. १.९०.६) । हिरण्यशब्दाद् विहितस्य मयटो [3]मशब्दस्य लोपो निपात्यते । हिरण्ययम् (ऋ. १.२५.१३) ॥

इति श्रीवामनविरचितायां काशिकायां वृत्तौ
षष्ठाध्यायस्य चतुर्थः पादः ॥

----(०)----

1. तत्राञि .... भवति नास्ति फ. 2. भावे छन्दसि इत्यधिकम् ह. 3. मशब्दलोपः क.

# का शि का

## सप्तमोऽध्यायः
## प्रथमः पादः

### युवोरनाकौ । (१/१२४७)

[1]यु वु इत्येतयोः उत्सृष्टविशेषणयोः अनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने [2]यथासङ्ख्यम् अन [3]अक इत्येतावादेशौ भवतः । योः अनः, वोः अकः । नन्द्यादिभ्यो ल्युः (३.१.१३४/२८९६) – नन्दनः । रमणः । सायमादिभ्यष्टच्युटच्युलौ तुट् च (४.३.२३/१३९१) – सायन्तनः । चिरन्तनः । ण्वुल्तृचौ – कारकः । हारकः । 'वासुदेवार्जुनाभ्यां [4]वुन्' (४.३.९८/१४७८) – वासुदेवकः । अर्जुनकः । अनुनासिकयणोः इति [5]किम्? 'ऊर्णाया युस्' (५.२.१२३/१९२९) – ऊर्णायुः । 'भुजिमृङ्भ्यां युक्त्युकौ' (उ. ३०८) – भुज्युः, मृत्युः [6]इति । एवमादीनां हि यणोऽनुनासिकत्वं न [7]प्रतिज्ञायते, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' (व्या. प. १२१) । [8]इह युवो-रिति [9]निर्देशाद् द्वन्द्वैकवद्भावपक्षे 'अनित्यमागमशासनम्' (व्या. प. ९९) इति नुम् न क्रियते । नपुंसकलिङ्गता [10]वा 'लिङ्गमशिष्यं लोकाश्रयत्वाल् लिङ्गस्य' (चा. प. ७३) इति न भवति । इतरेतरपक्षे तु छान्दसत्वात् वर्ण-लोपो द्रष्टव्यः ।

युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यण् तु प्रसज्यते ।
[11]अथ चेदेकवद्भावः कथं पुंवद् भवेदयम् ॥

द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
[12]अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम् ॥

### आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् । (२/४७८)

आयन् एय् ईन् ईय् इय् इत्येते आदेशाः भवन्ति यथासङ्ख्यं फ ढ ख छ घ इत्येतेषां[13] प्रत्ययादीनाम् । फ इत्येतस्य आयनादेशो भवति । 'नडादिभ्यः फक्' (४.१.९९/११०१)–नाडायनः । [14]चारायणः । ढस्य एयादेशो भवति । 'स्त्रीभ्यो ढक्' (४.१.१२०/११२०)–सौपर्णेयः । वैनतेयः । खस्य ईनादेशो भवति । 'कुलात् खः' (४.१.१३९/११६२)–आढ्यकुलीनः । श्रोत्रियकुलीनः । छस्य ईयादेशो भवति । 'वृद्धाच्छः' (४.२.११४/१३३७) – गार्गीयः । वात्सीयः । घ इत्येतस्य इयादेशो भवति । 'क्षत्राद्घः' (४.१.१३८/११६१)–क्षत्रियः । प्रत्ययग्रहणं किम् ? फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते । आदिग्रहणं किम् ? ऊरुदघ्नम् । जानुदघ्नम् । एते आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति । कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति, तथा च 'घच्छौ च' (४.४.११७/३४६३) इति घचश्चित्करणमर्थवद् भवति । शङ्ख्ः, षण्ढः इत्येवमादीनां हि 'उणादयो बहुलम्' (३.३.१/३१३९) इति बहुलवचनाद् आदेशा न भवन्ति । 'ऋतेरीयङ' (३.१.२९/२४२२) इति वावचनं ज्ञापकं [15]धातुप्रत्ययानामादेशाभावस्य । 'एजेः खश्' (३.२.२८/२९४१), 'पदरुजविशस्पृशो घञ्' (३.३.१६/३१८२) इत्येवमादिषु [16]तु इत्सञ्ज्ञया भवितव्यम् । तद्धितेषु हि खकारघकारयोरादेशवचनम् अवकाशवदिति इत्सञ्ज्ञां बाधितुं नोत्सहते । आयन्नीनोः नकारस्य इत्सञ्ज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं [17]हि सम्भवति ॥

---

1. अङ्गस्य इत्येव इत्यधिकम् ब. फ. 2. यथाक्रमम् इ. 3. अक् क. 4. वुञ् फ.ड. 5. किमर्थम् ड. 6. इति नास्ति ब. 7. प्रतिज्ञातं क. 8. इह नास्ति ब. फ. ड. 9. सूत्रनिर्देशात् इ. 10. वापि क. 11. अथ–समाश्रितम् नास्ति क. ह. 12. प्रसिद्धत्वाद्धि इ. 13. स्थाने इत्यधिकम् फ. 14. उदाहरणमिदं नास्ति फ. 15. धातुप्रत्ययादेशा न भवन्ति इति ब.इ. 16. तु नास्ति इ, हि ह. 17. तत्र इ.

## झोऽन्तः । (३/२१६९)

[1]प्रत्ययग्रहणमनुवर्तते, आदिग्रहणं निवृत्तम् । प्रत्ययावयवस्य झस्य[2] अन्त इत्ययमादेशो भवति । कुर्वन्ति । सुन्वन्ति । [3]चिन्वन्ति । 'अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै' (वासि.गृ. १३.२४) । 'जॄविशिभ्यां झच्' (उ.४१३) – जरन्तः । वेशन्तः । प्रत्ययस्य इत्येव, उज्झिता । उज्झितुम् । उज्झितव्यम् । [4]अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्त्वं भवति । तथा च झचः चित्करणमर्थवद् भवति ॥

## अदभ्यस्तात् । (४/२४७९)

अभ्यस्तादङ्गादुत्तरस्य झकारस्य[5] अत् इत्ययमादेशो भवति । ददति । ददतु । दधति । दधतु । जक्षति । जक्षतु । [6]जाग्रति । जाग्रतु । अन्तादेशापवादोऽयं[7] जुसादेशेन तु बाध्यते । अदधुः । अजागरुः[8] । [9]अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवति ॥

## आत्मनेपदेष्वनतः । (५/२२५८)

आत्मनेपदेषु यो झकारः, तस्य अनकारान्तात् अङ्गात् उत्तरस्य अत् इत्ययमादेशो भवति । चिन्वते[10] । चिन्वताम् । अचिन्वत । पुनते । लुनते । लुनताम् । अलुनत । आत्मनेपदेषु इति किम् ? चिन्वन्ति । लुनन्ति । अनतः इति किम् ? च्यवन्ते । प्लवन्ते । नित्यत्वादत्र विकरणे कृते [11]झोऽन्तादेशेन भवितव्यम् इत्यदादेशो न भवति । अनकारान्तेनाङ्गेन झकारविशेषणं किम् ? इह मा भूत्, 'अद्य श्वो[12] विजनिष्यमाणाः पतिभिः शयान्तै' (वासि.गृ. १३.२४) ॥

## शीङो रुट् । (६/२४४२)

शीङोऽङ्गादुत्तरस्य झादेशस्य अतः रुडागमो भवति । शेरते । शेरताम् । अशेरत । रुडयं परादिः क्रियते । स यदि झकारस्यैव स्याददादेशो न स्यादित्यत एवायमादेशस्यागमो विधीयते । [13]सानुबन्धग्रहणमयङ्लुगर्थम् । तेनेह न भवति, व्यतिशेश्यते ॥

## वेत्तेर्विभाषा । (७/२७०१)

वेत्तेरङ्गादुत्तरस्य झादेशस्य अतो विभाषा रुडागमो भवति । संविदते, संविद्रते । संविदताम्, संविद्रताम् । समविदत, समविद्रत । [14]वेत्तेः इति लुग्विकरणस्य ग्रहणं[15] किम् ? इह मा भूत्, विन्ते, विन्दाते, विन्दते [16]इति ॥

---

1. प्रत्यय इति अनुवर्तते इ. ई. 2. स्थाने इत्यधिकम् क. ड. इ. ई. 3. पुनन्ति इ. ई, मुष्णन्ति क. 4. अस्मिन्नादेशे ह. 5. स्थाने इत्यधिकम् क. इ. ड. ई. 6. जाग्रति नास्ति क. 7. योगः इत्यधिकम् क. 8. अजक्षुः इत्यधिकम् क. ड. इ. फ. ह. 9. अत्रापि नास्ति क. 10. चिनुताम् इत्यधिकम् क. 11. झोऽन्त नास्ति क. 12. वा इत्यधिकम् क. इ. 13. वाक्यमिदं नास्ति ब. क. ड, शीङः इति अनुबन्धनिर्देशः यङ्लुग्निवृत्त्यर्थः इ. ह. 14. वित्तेः क. ड, विन्देः ह. 15. संविदर्थम् ड. 16. इति नास्ति क.

## बहुलं छन्दसि। (८/३५५७)

छन्दसि विषये बहुलं रुडागमो भवति। 'देवा अदुह्र'। गन्धर्वा [1]अप्सरसो अदुह्र। (मै. ४.२.१३)। दुहेर्लङि झकारस्य अदादेशे कृते रुट्। 'लोपस्त आत्मनेपदेषु' (७.१.४१/३५६३) इति [2]तकारलोपः। न च भवति, अदुहत। बहुलवचनादन्यत्रापि भवति। 'अदृश्रमस्य केतवः' (ऋ. १.५०.३)। 'ऋदृशोऽङि गुणः' (७.४.१६/२४०६) इत्येतदपि बहुलवचनादेवात्र न भवति।।

## अतो भिस ऐस्। (९/२०३)

अकारान्तादङ्गादुत्तरस्य भिसः ऐस् [3]इत्ययमादेशो भवति। वृक्षैः। प्लक्षैः। अतिजरसैः। जरा- मतिक्रान्तैः इति [4]विगृह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति। 'एकदेशविकृतमनन्यवद् भवति' (व्या. प. १६) इति जरशब्दस्य जरसादेशः। 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति परिभाषा इयमनित्या, 'कष्टाय क्रमणे' (३.१.१४/२६७०) इति निर्देशात्। अतः इति किम्? अग्निभिः। [5]वायुभिः। तपरकरणं किम्? खट्वाभिः। मालाभिः।

एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति (म. भा. ३.२४४)।।

अतः इत्यधिकारो 'जसः शी' (७.१.१७/२१४) इति यावत्।।

## बहुलं छन्दसि। (१०/३५५८)

छन्दसि विषये [6]बहुलमैसादेशो भवति। अतः इत्युक्तम्, अनतोऽपि भवति नद्यैः इति। अतो न भवति, देवेभिः सर्वेभिः प्रोक्तम् इति।।

## नेदमदसोरकोः। (११/३४९)

इदम् अदस् इत्येतयोः अककारयोः [7]भिस ऐस् न भवति। एभिः। अमीभिः। अकोः इति किम्? इमकैः। अमुकैः। अकोः इत्येतदेव प्रतिषेधवचनं ज्ञापकम् 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' (व्या. प. २१) इति। [8]'इदमदसोः कात्' इति नोक्तम्, विपरीतोऽपि नियमः सम्भाव्येत 'इदमदसोरेव कात्' इति। ततश्चेह न स्यात्, सर्वकैः, विश्वकैः। इह च स्यादेव, एभिः, अमीभिः[9]। प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम्।।

## टाङसिङसामिनात्स्याः। (१२/२०१)

अकारान्तादङ्गादुत्तरेषां [10]टाङसिङसाम् इन आत् स्य इत्येते आदेशाः भवन्ति यथासङ्ख्यम्। टा इत्येतस्य इनादेशो भवति। वृक्षेण। प्लक्षेण। ङसि इत्येतस्य आत्। वृक्षात्। प्लक्षात्। ङस् इत्येतस्य स्यादेशो भवति। वृक्षस्य। प्लक्षस्य। अतः इति किम्? सख्या। पत्या। अतिजरसिन, अतिजरसात् इति केचिदिच्छन्ति। यथा तु भाष्ये तथा नैतदिष्यते इति लक्ष्यते।।

---

1. अप्सरसः नास्ति ड. 2. तलोपः ब. क. ड. 3. इत्यादेशः ब. 4. विगृह्य नास्ति ड. इ. 5. वायुभिः नास्ति ब. 6. भिसः स्थाने इत्यधिकम् फ. 7. भिसः स्थाने क. 8. इदमदसोः – अमीभिः नास्ति क. 9. इति इत्यधिकम् ह. 10. टा ङसि ङस् इत्येतेषाम् ब. ह.

## ङेर्यः । (१३/२०४)

ङेः इति चतुर्थ्येकवचनस्य[1] ग्रहणम् । अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य यः इत्ययमादेशो भवति । वृक्षाय । प्लक्षाय । अतः इति किम् ? सख्ये । पत्ये । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति परिभाषेयमनित्या, तेन [2]दीर्घो भवति ॥

## सर्वनाम्नः स्मै । (१४/२१५)

अकारान्तात् [3]सर्वनाम्नः उत्तरस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । यस्मै । तस्मै । कस्मै । अतः इत्येव, भवते । अथोऽत्रास्मै इत्यन्वादेशेऽशादेशे[4] (२.४.३२/३५०) एकादेशः प्राप्नोति ? तत्रान्तरङ्गत्वादेकादेशात् पूर्वं स्मैभावः क्रियते पश्चादेकादेशः इति ॥

## ङसिङ्योः स्मात्स्मिनौ । (१५/२१६)

[5]ङसि ङि इत्येतयोरकारान्तात् सर्वनाम्नः उत्तरयोः [6]स्मात् स्मिन् इत्येतावादेशौ भवतः । ङसि इत्येतस्य स्मात् । सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् । कस्मात् । ङि इत्येतस्य स्मिन् । सर्वस्मिन् । विश्वस्मिन् । यस्मिन् । तस्मिन् । अन्यस्मिन् । अतः इत्येव, भवतः । भवति । सर्वनाम्नः इत्येव, वृक्षात् । वृक्षे ॥

## पूर्वादिभ्यो नवभ्यो वा । (१६/२२१)

पूर्वादिभ्यो नवभ्यः सर्वनाम्नः उत्तरयोः ङसिङ्योः [7]स्मात् स्मिन् इत्येतावादेशौ वा भवतः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । परस्मात्, परात् । परस्मिन्, परे । अवरस्मात्, अवरात् । अवरस्मिन्, अवरे । दक्षिणस्मात्, दक्षिणात् । दक्षिणस्मिन्, दक्षिणे । उत्तरस्मात्, उत्तरात् । उत्तरस्मिन्, उत्तरे । अपरस्मात्, अपरात् । अपरस्मिन्, अपरे । अधरस्मात्, अधरात् । अधरस्मिन्, अधरे । स्वस्मात्, स्वात् । स्वस्मिन्, स्वे । अन्तरस्मात्, अन्तरात् । अन्तरस्मिन्, अन्तरे । नवभ्यः इति किम् ? त्यस्मात् । त्यस्मिन् ॥

## जसः शी । (१७/२१४)

अकारान्तात् सर्वनाम्नः [8]उत्तरस्य जसः [9]शी इत्ययमादेशो भवति । सर्वे । विश्वे । ये । के । ते । [10]दीर्घोच्चारणमुत्तरार्थम् । त्रपुणी । जतुनी ॥

## औङ आपः । (१८/२८७)

[11]आबन्तादङ्गादुत्तरस्य औङः [12]शी इत्ययमादेशो भवति । खट्वे तिष्ठतः । खट्वे पश्य । बहुराजे । करीषगन्ध्ये । ङकारः सामान्यग्रहणार्थः, औटोऽपि ग्रहणं यथा स्यात् ।

---

1. अतः इत्यधिकम् क. 2. दीर्घत्वं भवत्येव ङ. 3. अङ्गात् इ.ई.ह. 4. कृते इत्यधिकम् इ. 5. सर्वनाम्नः इत्येव इत्यधिकम् क. 6. स्मात्स्मिनौ इ. 7. स्थाने इत्यधिकम् क. 8. अङ्गात् इत्यधिकम् क. ई.ह. 9. स्थाने इत्यधिकम् क. 10. शी इति इत्यधिकम् ह. 11. आकारान्तात् क, आकारात् इ. 12. स्थाने

औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन् ङित्कार्यं ते श्यां प्रसक्तं स दोषः ।।

ङित्त्वे विद्याद् वर्णनिर्देशमात्रं वर्णे यत् स्यात् तच्च विद्यात् तदादौ ।
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् (म.भा.३.२४७) ।।

## नपुंसकाच्च । (१९/३१०)

नपुंसकादङ्गादुत्तरस्य औङः[1] शी इत्ययमादेशो भवति । कुण्डे तिष्ठतः । कुण्डे पश्य । यस्येति (६.४.१४८/३११) लोपः प्राप्तः ।

[८१६] श्यां प्रतिषेधो वक्तव्यः ।

इति न भवति । दधिनी । मधुनी । त्रपुणी । जतुनी ।।

## जश्शसोः शिः । (२०/३१२)

नपुंसकादङ्गादुत्तरयोः जश्शसोः[2] शि इत्ययमादेशो भवन्ति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । दधीनि । मधूनि । त्रपूणि । जतूनि । जसा सहचरितस्य शसो ग्रहणादिह न भवति, कुण्डशो ददाति, वनशः प्रविशन्ति इति ।।

## अष्टाभ्य औश् । (२१/२८७)

अष्टाभ्यः इति कृताकारो[3]ऽष्टन्शब्दो गृह्यते । तस्मादुत्तरयोः [4]जश्शसोः औश् इत्यादेशो भवति । अष्टौ तिष्ठन्ति । अष्टौ पश्य । [5]कृताकारस्य ग्रहणं किम् ? अष्ट तिष्ठन्ति । अष्ट पश्य । एतदेव[6] कृतात्वस्य ग्रहणं ज्ञापकम् 'अष्टन आ विभक्तौ' (७.२.८४/३७१) इत्यात्वविकल्पस्य । 'षड्भ्यो लुक्' (७.१.२२/२६१) इत्यस्यायमपवादः, नाप्राप्ते[7] तस्मिन्निदमारभ्यते । यस्तु 'सुपो धातुप्रातिपदिकयोः' (२.४.७१/६५०) इति, तस्मिन् प्राप्ते चाप्राप्ते च इति स न बाध्यते, अष्टपुत्रः, अष्टभार्यः इति । तदन्तग्रहणमत्रेष्यते । परमाष्टौ । उत्तमाष्टौ । प्रियाष्टानः इत्यत्रात्वस्य अभावाद् औश्त्वं न भवति ।।

## षड्भ्यो लुक् । (२२/२६१)

षट्सञ्ज्ञकेभ्य उत्तरयोः जश्शसोर्लुक् भवति । षट् तिष्ठन्ति । षट् पश्य । पञ्च । सप्त । नव । दश । षट्प्रधानात् तदन्तादपि[8] भवति । [9]उत्तमषट् । यत्र तूपसर्जनं षट् ततो न भवति, प्रियषषः, प्रियपञ्चानः इति ।।

---

1. स्थाने इत्यधिकम् क. 2. स्थाने इत्यधिकम् ड. ह. 3. अष्टशब्दो ब. ड. 4. जसिशसोः क. 5. कृताकारस्य ग्रहणमिह भवति ह. 6. एव नास्ति क. 7. तु एतस्मिन् इ. 8. जसिशसोः लुक् इत्यधिकम् क.ह. 9. उत्तमपञ्च ड.

## स्वमोर्नपुंसकात् । (२३/३१९)

सु अम् इत्येतयोः नपुंसकादु[1]त्तरयोः लुग् भवति । [2]दधि तिष्ठति । दधि पश्य । मधु तिष्ठति । मधु पश्य । त्रपु । जतु । तद्ब्राह्मणकुलम् इत्यत्र [3]लुका त्यदाद्यत्वं बाध्यते, पूर्वविप्रतिषेधेन नित्यत्वाद् वा । लुको हि निमित्तम् 'अतोऽम्' (७.१.२४/३०९) इति [4]लक्षणान्तरेण विहन्यते, न पुनस्त्यदाद्यत्वेनैव । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति ॥

## अतोऽम् । (२४/३०९)

[5]अकारान्तान्नपुंसका[6]दुत्तरयोः स्वमोः अम् इत्ययमादेशो भवति । [7]कुण्डं तिष्ठति । कुण्डं पश्य । पीठम् । मकारः कस्मान्न क्रियते ? दीर्घत्वं प्राप्नोति (७.३.१०२/२०२) ॥

## अद्ड्डतरादिभ्यः पञ्चभ्यः । (२५/३१५)

[8]डतरादिभ्यः परयोः स्वमोः अद्ड् इत्ययमादेशो भवति । कतरत् तिष्ठति । कतरत् पश्य । कतमत् तिष्ठति । कतमत् पश्य । इतरत् । अन्यतरत् । अन्यत् । पञ्चभ्यः इति किम् ? नेमं तिष्ठति । नेमं पश्य । डित्करणं किम् ? कतरत् तिष्ठति इत्यत्र पूर्वसवर्णदीर्घो मा भूत् । इह तु कतरत् पश्य [9]इति स्थानिवद्–भावाद् अमि पूर्वत्वेनापि सिध्यति । एवं तर्हि तकारादेश एव कस्मान्न [10]विधीयते ? हे कतरत् इति सम्बुद्धेर्लोपो मा भूत् ।

अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अड्डित्त्वाड्डतरादीनां न लोपो नापि दीर्घता ॥

## नेतराच्छन्दसि । (२६/३७७)

इतरशब्दादुत्तरयोः स्वमोः छन्दसि विषये अद्डादेशो [11]न भवति । 'मृतमितरमाण्डमवापद्यत' (मै.१.६.१२) । [12]वार्त्रघ्नमितरम् । छन्दसि इति किम् ? इतरत् काष्ठम् । इतरत् कुडचम् । 'अतोऽम्' (७.१.२४/३०९) इत्यस्मादनन्तरमितराच्छन्दसि इति वक्तव्यम् ? नेतराच्छन्दसि इति वचनं योगविभागार्थम्

[८१७] एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते । (म. भा. ३.२५०)

एकतरं तिष्ठति, एकतरं पश्य इति ॥

---

1. अङ्गात् इत्यधिकम् इ. ह. 2. दधि तिष्ठति नास्ति क. 3. लुक् क. 4. लक्षणान्तरेण नास्ति क. 5. नपुंसकात् इत्येव इत्यधिकम् क. 6. अङ्गात् इत्यधिकम् क. ई. 7. वनं तिष्ठति वनं पश्य क. इ. ई. 8. पञ्चभ्यः नपुंसकेभ्यः इत्यधिकम् ब. ड. इ. ई. ह. 9. इत्येव क. 10. क्रियते क. 11. न नास्ति क. 12. वार्त्रघ्नम् इतरत् इ.

## युष्मदस्मद्भ्यां ङसोऽश्। (२७/३९९)

युष्मद् अस्मद् इत्येताभ्यामुत्तरस्य ङसः अश् इत्ययमादेशो भवति। तव स्वम्। मम स्वम्। शित्करणं सर्वादेशार्थम्। अन्यथा हि आदेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च 'योऽचि' (७.२.८९/३९२) इत्येतन् न स्यात्॥

## ङे प्रथमयोरम्। (२८/३८२)

ङे इत्यविभक्तिको[1] निर्देशः। ङे इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथमाद्वितीययोः युष्मदस्मद्भ्यामुत्तरयोः अम् इत्ययमादेशो भवति। तुभ्यं दीयते। मह्यं दीयते। प्रथमयोः[2] – त्वम्। अहम्। युवाम्। आवाम्। यूयम्। वयम्। त्वाम्। माम्। युवाम्। आवाम्॥

## शसो न। (२९/३९१)

युष्मदस्मद्भ्यामुत्तरस्य शसो [3]नकारादेशो भवति। युष्मान् ब्राह्मणान्। अस्मान् ब्राह्मणान्। युष्मान् ब्राह्मणीः। अस्मान् ब्राह्मणीः। [4]युष्मान् कुलानि। अस्मान् कुलानि[5]॥

## भ्यसो भ्यम्। (३०/३९८)

युष्मदस्मद्भ्यामुत्तरस्य भ्यसः भ्यम् इत्ययमादेशो भवति। युष्मभ्यं दीयते। अस्मभ्यं दीयते। भ्यमादेशे कृते शेषेलोपे च 'बहुवचने झल्येत्' (७.३.१०३/२०५) इति एत्वं प्राप्नोति, तत् 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या. प. ३८) इति न भवति। केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं [6]कुर्वन्ति। येषां तु शेषेलोपः टिलोपः, तेषामभ्यमादेश एव[7]। [8]उदात्तनिवृत्तिस्वरश्चादेरेव भवति॥

## पञ्चम्या अत्। (३१/३९७)

पञ्चम्याः भ्यसः युष्मदस्मद्भ्यामुत्तरस्य अत् इत्ययमादेशो भवति। युष्मद् गच्छन्ति। अस्मद् गच्छन्ति॥

## एकवचनस्य च। (३२/३९६)

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्य अत् इत्ययमादेशो भवति। [9]त्वद् गच्छन्ति। मद् गच्छन्ति॥

---

1. अयम् इत्यधिकम् इ. ई. 2. खल्वपि इत्यधिकम् क. 3. न इत्ययमादेशः क. 4. युष्मान् ब्राह्मणकुलानि अस्मान् ब्राह्मणकुलानि ब. क. इ. ई. 5. तस्माच्छसो नः पुंसि इति सिद्धे स्त्रीनपुंसकार्थं वचनम्। अलिङ्गे वा युष्मदस्मदी इत्यधिकम् ड. प. मं. 6. इच्छन्ति क. इ. 7. अयम् इत्यधिकम् क. 8. तदा तु इत्यधिकम् क. 9. त्वद् इच्छति मद् इच्छति ब. क. ड. ह.

## साम आकम् । (३३/४००)

साम इति षष्ठीबहुवचनमागतसुट्कं गृह्यते। तस्य युष्मदस्मद्भ्याम् उत्तरस्य आकम् इत्ययमादेशो भवति। युष्माकम्। अस्माकम्। अथ किमर्थमागत[1]सुट्को गृह्यते, न ह्यादेशविधानकाले[2] सुड् [3]विद्यते ? तस्यैव [4]तु भाविनः सुटो निवृत्त्यर्थम्। [5]आदेशे कृते हि शेषेलोपे[6] युष्मदस्मदोरकारान्तत्वात् सुट् प्राप्नोति, स स्थान्यन्तर्भूतत्वात् निवर्तते। दीर्घोच्चारणं सवर्णदीर्घार्थम्। [7]अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति ? तत्सामर्थ्यमेत्वं प्रति भविष्यति इति अकारकरणमेत्वनिवृत्त्यर्थम् इति। अतो गुणे (६.१.९७/१९१) पररूपत्वं स्यात्॥

## आत औ णलः। (३४/२३७१)

आकारान्तादङ्गादुत्तरस्य णलः औकारादेशो भवति। [8]पपौ। तस्थौ। जग्लौ। मम्लौ। अत्र औत्वम्, एकादेशः, [9]स्थानिवद्भावः, द्विर्वचनम् इत्यनेन क्रमेण कार्याणि क्रियन्ते। एकादेशादनवकाशत्वादौत्वं द्विर्वचनादपि परत्वादे[10]कादेशः इति॥

## तुह्योस्तातङाशिष्यन्यतरस्याम्। (३५/२१९७)

तु हि इत्येतयोः आशिषि विषये तातङ आदेशो भवत्यन्यतरस्याम्। जीवताद् भवान्। जीवतात् त्वम्। जीवतु भवान्। जीव त्वम्। ङित्करणं गुणवृद्धिप्रतिषेधार्थम् इति सर्वादेशस्तातङ भवति। ङित्त्वाच्चास्य स्थानिवद्भावात् यत् पित्त्वं प्राप्नोति तन्निवर्तते। ङिच्च पित् न भवति। तेन 'ब्रुव ईट्' (७.३.९३/२४५२) इति ब्रूताद् भवान् इति ईट् न भवति। आशिषि इति किम् ? ग्रामं गच्छतु भवान्। गच्छ त्वम्।

तातङि ङित्त्वं सङ्क्रमकृत् स्यादन्त्यविधिश्चेत् तच्च तथा न।
हेरधिकारे हेरधिकारो लोपविधौ [11]तु ज्ञापकमाह॥

तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः।
न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः॥

## विदेः शतुर्वसुः। (३६/३१०७)

'विद ज्ञाने' (धा.पा. १०६५) [12]इत्येतस्माद् धातोरुत्तरस्य शतुः वसुरादेशः भवति। विद्वान्, विद्वांसौ, विद्वांसः[13]। [14]स्थानिवद्भावादुगित्कार्ये सिद्धे वसोः उकारकरणं 'वसोः सम्प्रसारणम्' (६.४.१३१/४३५) इत्यत्र क्वसोरपि सामान्यग्रहणार्थम्। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' (व्या.प. ५२) इत्येतदपि न भवति। तथा सति उकारकरणमनर्थकं स्यात्। अन्यतरस्यांग्रहणं केचिदनुवर्तयन्ति। विदन्, विदन्तौ, विदन्तः[15]॥

---

1. सुट्कं ब, सुट्क इति क. 2. एव इत्यधिकम् इ. 3. विधीयते इ. 4. उत्तरकालभाविनः क. 5. अतोऽपि हि इत्यधिकम् क.इ. 6. च इत्यधिकम् क.इ.ई. 7. अकम् इति हि सति अकारकरणम् एत्वनिवृत्त्यर्थम् इति क.ड.इ.ई.ह. 8. ययौ ब.क.इ.ह. 9. स्थानिवद्भावात् क.ड.इ.ई.ह. 10. आदेशः क. 11. तज् ड. 12. इति नास्ति क. 13. विदन् विदन्तौ विदन्तः इत्यधिकम् क.ह. 14. स्थानिवद्भावादेव क. 15. इत्येतदपि सिद्धं भवति इत्यधिकम् ड.

## समासेऽनञ्पूर्वे क्त्वो ल्यप्। (३७/३३३२)

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य[1] ल्यप् इत्ययमादेशो भवति। प्रकृत्य। प्रहृत्य। पार्श्वतःकृत्य। नानाकृत्य। द्विधाकृत्य। समासे इति किम्? कृत्वा। [2]हृत्वा। अनञ्पूर्वे इति किम्? अकृत्वा। अहृत्वा। परमकृत्वा। उत्तमकृत्वा।

अनञ् इति [3]नञा अन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते। तेन नञ्[4] अनव्ययं चानञ् न भवति। स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल् ल्यबादेशो न भवति। अथवा समासे इति निर्धारणे सप्तमी। तेन क्त्वान्तः समास एव [5]परिगृह्यते। स च 'येन विधिस्तदन्तस्य' (व्या. प. ३) इत्यनेन तदन्तविधिना, न तु 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' (व्या. प. १२६) इति। तथा चानञ्पूर्वे इत्युच्यते। गतिकारकपूर्वस्य एव तु ग्रहणे सति नञ्पूर्वस्य [6]प्रसङ्ग एव नास्ति, नञ् न गतिर्न कारकम् (म. भा. ३.२५६) इति। प्रधाय, प्रस्थाय इत्यादिषु हिप्रभृतीन् अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते एव इति ज्ञापितमेतत्॥

## क्त्वापि छन्दसि। (३८/३५६०)

समासे अनञ्पूर्वे क्त्वा[7] इत्येतस्य क्त्वा इत्ययमादेशो भवति, अपिशब्दाल् ल्यबपि भवति छन्दसि विषये। 'कृष्णं वासो यजमानं परिधापयित्वा' (काठ.सं. ११.१०)। 'प्रत्यञ्चमर्कं प्रत्यर्पयित्वा' (अ.वे. २.१२.५५)। ल्यबपि भवति। 'उद्धृत्य जुहोति' (काठ.सं. ६.८)। [8]वा च्छन्दसि इति नोक्तम्, सर्वोपाधिव्यभिचारार्थम्। तेनासमासे ल्यब् भवति। अर्च्य तान् देवान् गतः। छन्दोऽधिकारः 'आज्जसेरसुक्' (७.१.५०/३५७२) इति यावत्॥

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः। (३९/३५६१)

छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्ण आ आत् शे या डा ड्या याच् आल् इत्येते आदेशाः भवन्ति। सु–'अनृक्षरा ऋजवः सन्तु [9]पन्थाः' (ऋ. १०.८५.२३)। पन्थानः इति प्राप्ते।

[८१८] सुपां [10]सुपो भवन्तीति वक्तव्यम्। (म.भा. ३.२५६)

'[11]धुरि दक्षिणायाः' (ऋ. १.१६४.९)। दक्षिणायाम् इति प्राप्ते।

[८१९] तिङां तिङो भवन्तीति वक्तव्यम्। (म. भा. ३.२५६)।

'चषालं ये अश्वयूपाय तक्षति' (ऋ. १.१६२.६)। तक्षन्ति इति प्राप्ते। लुक्–'आर्द्रे चर्मन्' (तै. १.५.९.३)। 'रोहिते चर्मन्' (काठ. सं. २४.२)। चर्मणि इति प्राप्ते। [12]हविर्धाने यत् सुन्वन्ति

---

1. प्रत्ययस्य इत्यधिकम् ङ. ह. ड. 2. हृत्वा नास्ति फ. 3. नञा नास्ति क, नञोऽन्यत्र ङ. ई. 4. अव्ययं इत्यधिकम् क. 5. गृह्यते ङ.इ. 6. प्राप्तिः क. 7. अकृष्णं ब. 8. वा च्छन्दसि – भवति नास्ति ब, वा च्छन्दसि नास्ति ह.ई. 9. ते इत्यधिकम् क. 10. स्थाने इत्यधिकम् क. 11. भुवि क. 12. हविर्धानाय इ.

तत्सामिधेनीरन्वाह । यस्मिन् सुन्वन्ति तस्मिन् सामिधेनीः इति प्राप्ते । पूर्वसवर्णः – 'धीती' (ऋ. १.१६४.८)। मती । 'सुष्टुती' (ऋ. २.३२.४) । धीत्या, मत्या, सुष्टुत्या इति प्राप्ते । आ – 'द्वा यन्तारा' (तै. सं. ४.६.९.३) । द्वौ यन्तारौ इति प्राप्ते । आत् – न ताद् ब्राह्मणाद् निन्दामि । तान् ब्राह्मणान् इति प्राप्ते । शे – न 'युष्मे वाजबन्धवः' (ऋ. ८.६८.१९) । 'अस्मे इन्द्राबृहस्पती' (ऋ. ४.४९.४) । यूयं वयम् इति प्राप्ते । यूयादेशो वयादेशश्च छान्दसत्वान् न भवति । या – 'उरुया' (मै. ३.७.८) । धृष्णुया । उरुणा, धृष्णुना इति प्राप्ते । डा – 'नाभा पृथिव्याम्' (अ. ७.६१.१) । नाभौ पृथिव्याम् इति प्राप्ते । ड्या – 'अनुष्टुयोच्च्यावयतात्' (मै. ४.१३४.२५) । अनुष्टुभा इति प्राप्ते । याच् – 'साधुया' (ऋ. १०. ६६.१२) । साधु इति सोर्लुकि प्राप्ते । आल् – 'वसन्ता यजेत' (मै. २.३.४) । वसन्ते इति प्राप्ते ।

[८२०] इयाडियाजीकाराणामुपसङ्ख्यानम् । (म. भा. ३.२५६)

इया – 'उर्विया परि ख्यन्' (ऋ. १०.१०.२) । दार्विया परिज्मन् । उरुणा, दारुणा इति प्राप्ते । डियाच् – 'सुक्षेत्रिया सुगातुया' (ऋ. १.९७.२) । सुक्षेत्रिणा, सुगात्रिणा इति प्राप्ते । ईकारः – 'दृतिं न शुष्कं सरसी शयानम्' (ऋ. ७.१०३.२) । सरसि शयानम् इति प्राप्ते ।

[८२१] आङ्याजयारां चोपसङ्ख्यानम् । (म. भा. ३.२५७)

आङ – 'प्र बाहवा' (ऋ. २.३८.२) । प्रबाहुना इति प्राप्ते । अयाच् – 'स्वप्नया सचसे जनम्' (अ. ५. ७. ८)। स्वप्नेन इति प्राप्ते । अयार् – 'स नः सिन्धुमिव नावया' (ऋ.१. ९७ ८) । नावा इति प्राप्ते ॥

## अमो मश् । (४०/३६६२)

अमः प्रति मिबादेशो गृह्यते । तस्य छन्दसि विषये [1]मशादेशो भवति । 'वधीं वृत्रम्' (ऋ. १. १६५.८) । क्रमीं वृक्षस्य शाखाम् । लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५/३५४६) इत्यडागमाभावः । शित्करणं सर्वादेशार्थम् । मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात् ॥

---

1. मश् इति आदेशः ब. ड.

## लोपस्त आत्मनेपदेषु । (४१/३५६३)

आत्मनेपदेषु यस्तकारः तस्य छन्दसि विषये लोपो भवति । 'देवा अदुह्र' (मै. ४. २. १) । गन्धर्वाप्सरसो अदुह्र । अदुहत इति प्राप्ते । 'दुहामश्विभ्यां पयो अघ्न्येयम्' (ऋ. १. १६४. २७) । दुग्धाम् इति प्राप्ते । '[1]दक्षिणत उपशये' (काठ. २०. ६) । शेते इति प्राप्ते । अपीत्यधिकारान्न भवति, [2]तत्र आत्मानमनृतं कुरुते । आत्मनेपदेषु इति किम् ? 'वत्सं दुहन्ति कलशं चतुर्बिलम्' (तै. ब्रा. ३. ७. ४. १६) ॥

## ध्वमो ध्वात् । (४२/३५६४)

छन्दसि विषये ध्वमो ध्वात् इत्ययमादेशो भवति । 'अन्तरेवोष्माणं [3]वारयध्वात्' (मै. ३. ४. १३) । वारयध्वम् इति प्राप्ते ॥

## यजध्वैनमिति च । (४३/३५६५)

यजध्वम् इत्येतस्य एनमित्येतस्मिन् परतो मकारलोपो निपात्यते वकारस्य च यकारः छन्दसि विषये । 'यजध्वैनं प्रियमेधाः' (ऋ. ८. २. ३७) । यजध्वमेनम् इति [4]प्राप्ते ॥

## तस्य तात् । (४४/३५६६)

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने तात् इत्ययमादेशो [5]भवति । 'गात्रं गात्रमस्यानूनं कृणुतात्' (मै. ४. १३. ४. २५) । कृणुत इति प्राप्ते । 'ऊवध्यगोहं पार्थिवं खनतात्' (मै. ४. १३. ४. २५) । खनत इति प्राप्ते । 'अस्ना रक्षः संसृजतात्' (मै. ४. १३. ४. २५) । संसृजत इति प्राप्ते । 'सूर्यं चक्षुर्गमयतात्' (मै. ४. १३. ४. २४) । गमयत इति प्राप्ते ॥

## तप्तनप्तनथनाश्च । (४५/३५६७)

तस्य इति वर्तते । छन्दसि विषये तस्य स्थाने तप् तनप् तन थन इत्येते आदेशा भवन्ति । तप्— 'शृणोत ग्रावाणः' (तै. १. ३. १३. १) । शृणुत इति प्राप्ते । 'सुनोत' (ऋ. ७. ३२. ८) । सुनुत इति प्राप्ते । तनप्—'सं वरत्रा दधातन' (ऋ. १०. १०१. ५) । धत्त इति प्राप्ते । तन—'जुजुष्टन' (ऋ. ४. ३६. ७) । जुषत इति प्राप्ते । छान्दसत्वात् श्लुः । थन—'यदिष्ठन' (ऋ. १०. ६३. ६) । यदिच्छत इति प्राप्ते । पित्करणमङित्त्वार्थम् ॥

---

1. दक्षिणतः शये ब. क. ड. 2. तत्रैव आत्मानं आदृतं कुरुते ब. 3. वावदध्वम् क. 4. प्राप्ते नास्ति ब. 5. छन्दसि इत्यधिकम् क.

## इदन्तो मसि । (४६/३६६८)

छन्दसि विषये मस् इत्ययं शब्दः इकारान्तो भवति । मसः सकारान्तस्य इकारागमो भवति, स च तस्यान्तो भवति । तद्ग्रहणेन गृह्यते इत्यर्थः । 'पुनस्त्वोद्दीपयामसि' (अ.वे. १२.२.५) । [1]उद्दीपयामः इति प्राप्ते । 'शलभं भञ्जयामसि' (पै. ५.२०.४) । भञ्जयामः इति प्राप्ते । 'त्वयि रात्रि[2] वसामसि' (शौ. १९. ४७.९)[3] । वसामः इति प्राप्ते ।।

## क्त्वो यक् । (४७/३६६९)

क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये । दत्त्वाय (ऋ. १०.८५.३३) [4]सविता धियः । दत्त्वा इति प्राप्ते । 'क्त्वापि छन्दसि' (७.१.३८/३६६०) इत्यस्यानन्तरमिदं [5]कस्मान्नोच्यते ? समासे इति तत्रानुवर्तते ।।

## इष्ट्वीनमिति च । (४८/३६७०)

इष्ट्वीनम् इत्ययं शब्दो निपात्यते छन्दसि विषये । यजेः क्त्वाप्रत्ययान्तस्य ईनम् आदेशोऽन्त्यस्य निपात्यते । 'इष्ट्वीनं देवान्' (आश्व.श्रौ.पृ. २०४) । इष्ट्वा देवान् इति प्राप्ते । [6]पीत्वीनम् इत्यपि इष्यते । चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धम् ।।

## स्नात्व्यादयश्च । (४९/३६७१)

स्नात्वी इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये । 'स्नात्वी मलादिव' (मै.सं. ३. ११. १०) । स्नात्वा इति प्राप्ते । 'पीत्वी सोमस्य वावृधे' (ऋ. ३.४०.७) । पीत्वा इति प्राप्ते । प्रकारार्थोऽयमादिशब्दः ।।

## आज्जसेरसुक् । (५०/३६७२)

अवर्णान्तात् अङ्गादुत्तरस्य जसेः असुक् आगमो भवति छन्दसि विषये । 'ब्राह्मणासः पितरः सोम्यासः' (ऋ. ६.७५.१०) । ब्राह्मणाः सोम्याः इति प्राप्ते । 'ये पूर्वासो य उपरासः' (ऋ. १०.१५.२) इत्यत्र परत्वादसुकि [7]पुनः प्रसङ्गविज्ञानात् शीभावः [8]प्राप्तः, 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' (व्या. प. ४०) इति न भवति ।।

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । (५१/२६६२)

छन्दसि [9]इत्यतःप्रभृति निवृत्तम् । अश्व क्षीर वृष लवण [10]इत्येतेषामङ्गानाम् आत्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति । अश्वस्यति वडवा (म.भा. ३.२५८) । क्षीरस्यति माणवकः । वृषस्यति गौः (म.भा. ३.२५८) लवणस्यत्युष्ट्रः । आत्मप्रीतौ इति किम् ? अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति ।

---

1. दीपयामः ब. ड. फ. ह. 2. वासयामसि इति मुद्रितः पाठः 3. वासयामः इति मुद्रितः पाठः 4. सविता नास्ति ई, दत्त्वाय केशान् इच्छन्ति । स्थित्वाय । दत्त्वा स्थित्वा इति प्राप्ते इत्यधिकम् ह. 5. नानुबध्यते ह. 6. पीत्वीनं सोमम् । पीत्वा इति स्थिते क. 7. कृते इत्यधिकम् ब. क. इ. ई. 8. प्राप्तोऽसौ क. इ. 9. इत्यतःप्रभृति नास्ति इ. ह. 10. एतेषाम् नास्ति क.

[८२२] अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् । (म.भा. ३.२५८)

[८२३] क्षीरलवणयोर्लालसायामिति [1]वक्तव्यम् । (म.भा. ३.२५८)

तृष्णातिरेको लालसा । अन्यत्रात्मप्रीतावपि न भवति । अपर आह –

[८२४] सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः । (म.भा. ३.२५८)

दध्यस्यति, मध्वस्यति इत्येवमाद्यर्थम् । अपर आह –

[८२५] सुग्वक्तव्यः । (म.भा. ३.२५८)

दधिस्यति, मधुस्यति इत्येवमाद्यर्थम् ॥

## आमि सर्वनाम्नः सुट् । (५२/२१७)

आत् इति वर्तते । अवर्णात् सर्वनाम्न उत्तरस्य आमः सुडागमो भवति । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । [2]सर्वासाम् । यासाम् । तासाम् । आत् इत्येव । भवताम् । आमि इति षष्ठी-बहुवचनं गृह्यते, [3]न 'ङेराम् नद्याम्नीभ्यः' (८.३.११६/२४७१) इति, तस्य हि परत्वात् आड्याट्स्याटो भवन्ति । यश्च घात् आमुः (५.४.११/२००४), आमश्च लिटि (३.१.३५/२३०६), न तौ सर्वनाम्नः स्तः । सानुबन्धकौ इति वा तौ न गृह्येते । आमि इति सप्तमीनिर्देशः उत्तरार्थः । इह तु सर्वनाम्नः इति पञ्चमीनिर्देशात् 'तस्मादि-त्युत्तरस्य' (१.१.६७/४१) इति, [4]षष्ठीप्रक्लृप्तिर्भविष्यति ॥

## त्रेस्त्रयः । (५३/२६४)

त्रि इत्येतस्य आमि परे त्रय इत्ययमादेशो भवति । त्रयाणाम् । त्रीणाम् इत्यपि छन्दसि [5]इष्यते । [6]त्रीणामपि समुद्राणाम्[7] इति ॥

## ह्रस्वनद्यापो नुट् । (५४/२०८)

ह्रस्वान्तात् नद्यन्तात् आबन्ता[8]च्चोत्तरस्य आमः नुडागमो भवति । ह्रस्वान्तात् [9]तावत् – वृक्षाणाम् । प्लक्षाणाम् । अग्नीनाम् । [10]वायूनाम् । कर्तॄणाम्[11] । नद्यन्तात् – कुमारीणाम् । [12]किशोरीणाम् । [13]गौरी-णाम् । शार्ङ्गरवीणाम् । लक्ष्मीणाम् । ब्रह्मबन्धूनाम् । [14]वीरबन्धूनाम् । आबन्तात् – खट्वानाम् । मालानाम् । बहुराजानाम् । कारीषगन्ध्यानाम् ॥

## षट्चतुर्भ्यश्च । (५५/३३८)

षट्सञ्ज्ञकेभ्यः चतुःशब्दाच्चोत्तरस्यामो नुडागमः भवति । षण्णाम् । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । चतुर्णाम् । रेफान्तायाः सङ्ख्यायाः षट्सञ्ज्ञा न विहिता, 'षड्भ्यो लुक्' (७.१.२२/२६१) इति लुग् मा भूत्[15] । बहुवचननिर्देशादत्र सङ्ख्या[16]प्रधानस्य ग्रहणं भवति । [17]परमषण्णाम् । [18]परम-पञ्चानाम् । [19]परमसप्तानाम् । परमचतुर्णाम् । [20]उपसर्जनीभूतायास्तु सङ्ख्यायाः न भवति, प्रियषषाम्, [21]प्रियपञ्चाम्, प्रियचतुराम् इति ॥

---

1. वक्तव्यम् नास्ति फ.इ. 2. सर्वासाम् यासाम् तासाम् नास्ति ई. 3. न तु क. 4. षष्ठीप्रकल्पिता भवति ब.ई. 5. लभ्यते क, सर्वे विधयः छन्दसि विकल्प्यन्ते इत्यधिकम् ह. 6. त्रीणामिव इ. 7. युगान्तेषु समागमः इत्यधिकम् इ.ई. 8. अङ्गात् इत्यधिकम् क.ई. 9. तावत् नास्ति क. 10. बहूनाम् इत्यधिकम् इ. 11. हर्तॄणाम् इत्यधिकम् ई. 12. शौरीणाम् ब. 13. गौरीणाम् नास्ति ब. 14. वीरबन्धूनाम् नास्ति ब.क. 15. इति इत्यधिकम् ई. 16. प्रधानस्यापि तदन्तग्रहणम् क.फ. 17. परमषण्णाम् नास्ति क. 18. परमपञ्चा-नाम् नास्ति ब. 19. परमसप्तानाम् नास्ति क. 20. उपसर्जनीभूता षट्सञ्ज्ञा तत्र न भवति क, उपसर्जनी-भूतायाम् तु सङ्ख्यायाम् न भवति इ.ई. 21. प्रियपञ्चाम् नास्ति क.

## श्रीग्रामण्योश्छन्दसि। (५६/३५७३)

श्री ग्रामणी इत्येतयोः छन्दसि विषये आमो नुडागमो भवति। 'श्रीणामुदारो [1]धरुणो रयीणाम्' (ऋ. १०. ४५. ५)। '[2]अपि तत्र सूतग्रामणीनाम्' (काठ. २८. ३)। श्रीशब्दस्य 'वामि' (१. ४. ५/३०४) इति विकल्पेन नदीसञ्ज्ञा, [3]तत्र नित्यार्थं वचनम्। सूतग्रामणीनाम् इति यदा सूताश्च ते ग्रामण्यश्च सूतग्रामण्यो भवन्ति तदर्थमिदं वचनम्। यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि च इति [4]सूतग्रामणीनाम् इति, तदा ह्रस्वात् (७. १. ५४/२०८) इत्येव सिद्धम्[5]॥

## गोः पादान्ते। (५७/३५७४)

गो इत्येतस्मात्[6] ऋक्पादान्ते वर्तमानादुत्तरस्य आमः नुडागमो भवति। 'विद्मा हि त्वा [7]गोपतिं शूर गोनाम्' (ऋ. १०. ४७. २)। पादान्ते इति किम्? 'गवां गोत्रमुदसृजो यदङ्गिरः' (ऋ. २. २३. १८)। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु. प. ३५) इति पादान्तेऽपि क्वचिन्न भवति। 'हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्' (ऋ. १०. १६६. १)॥

## इदितो नुम् धातोः। (५८/२२६२)

इदितो धातोर्नुमागमो भवति। [8]कुडि – कुण्डिता। कुण्डितुम्। [9]कुण्डितव्यम्। [10]कुण्डा। हुडि – हुण्डिता। हुण्डितुम्। [11]हुण्डितव्यम्। [12]हुण्डा। इदितः इति किम्? पचति। [13]पठति। अयं धातूपदेशावस्थायामेव नुगाममो भवति कुण्डा, हुण्डा इति, 'गुरोश्च हलः' (३. ३. १०३/३२८०) [14]इत्यकारप्रत्ययो यथा स्यात्। तथा हि 'धिन्विकृण्व्योर च' (३. १. ८०/२३३२) इति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम्। धातुग्रहणं चेह क्रियते [15]धातूपदेशकाल एव नुमागमो यथा स्यात् इत्येवमर्थम्। तासिसिचोरिदित्कार्यं नास्ति इत्युच्चारणार्थो [16]निरनुनासिक इकारः पठ्यते। अमंस्त इत्येवमादौ हि 'हनः सिच्' (१.२.२४/२६९७) इति कित्त्वविधानसामर्थ्यात् नकारलोपो न भवति। मन्ता इत्यत्रापि 'असिद्धवदत्राभात्' (६. ४. २२/२१८३) इति टिलोपस्यासिद्धत्वान्नलोपो न भवति। इह कस्मान्न भवति, भेत्ता, छेत्ता इति? 'इरितां समुदायस्येत्सञ्ज्ञा' (७. २. ४/२२६८ वा.) इति इदित्वं नास्ति। अवयवशोऽपि इत्सञ्ज्ञायां सत्यां 'गोः पादान्ते' (७. १. ५७/३५७४) इतोऽन्तग्रहणमनुवर्तयितव्यम्, तेनान्तेदितो धातवो गृह्यन्ते॥

## शे मुचादीनाम्। (५९/२५४२)

शे [17]प्रत्यये परतो मुचादीनम्[18] नुमागमो भवति। मुच्लृ – मुञ्चति। लुप्लृ – लुम्पति। विद्लृ –विन्दति। लिपि – लिम्पति। [19]सिच् – सिञ्चति। कृती – [20]कृन्तति। खिद – खिन्दति। पिश – पिंशति।

---

1. धरुणो नास्ति क. 2. अन्यत्रापि क. 3. तत्र नास्ति क. 4. बहूनाम् सूतग्रामणिशब्दानाम् एकशेषः क्रियते तदा इत्यधिकम् क 5. इति इत्यधिकम् क, तस्मान्नारम्भणीयम् इत्यधिकम् ई. 6. उत्तरस्य इत्यधिकम् क. 7. सत्पतिं मुद्रितः पाठः 8. कुण्डी इ. 9–12. नास्ति ई. 13. पठति नास्ति इ. 14. इत्यकारो ई. 15. सञ्ज्ञाप्रवृत्तिकाले क. इ. ई. ह. 16. अननुनासिकः ह. 17. प्रत्यये नास्ति क. 18. अङ्गानाम् इत्यधिकम् ब. क. इ. ह. 19. सिच्लृ क. 20. निकृन्तति ब.

शे इति किम् ? मोक्ता । मोक्तुम् । [1]मोक्तव्यम् । मुचादीनाम् इति किम् ? [2]तुदति । नुदति ।

[८२६] शे तृम्फादीनामुपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.२६१)

के पुनः तृम्फादयः ? [3]'तृफ तृम्फ तृप्तौ' (धा. पा. १३०८,१३०९) 'दृफ दृम्फ उत्क्लेशे' (धा. पा. १३१४, १३१५), 'गुफ गुम्फ ग्रन्थे' (धा. पा. १३१८,१३१९), 'उभ उम्भ [4]पूरणे (धा. पा. १३२०/१३२१), 'शुभ शुम्भ [5]शोभार्थे' (धा.पा. १३२२, १३२३) इत्यत्र ये सानुषङ्गाः तृम्फादयः [6]तेषाम् 'अनिदितां हल उपधायाः क्ङिति' (६.४.२४/४१५) इति अनुनासिकलोपे कृते नुम् विधीयते, स च विधानसामर्थ्यात् न लुप्यते । तृम्फति । दृम्फति । गुम्फति । उम्भति । शुम्भति । ये तु निरनुषङ्गाः तेषां [7]तृफति, दृफति, गुफति, उभति, शुभति इत्येवं भवति ॥

## मस्जिनशोर्झलि । (६०/२५४२)

मस्जि [8]नशि इत्येतयोरङ्गयोः झलादौ प्रत्यये[9] नुमागमो भवति । मङ्क्ता । मङ्क्तुम् । मङ्क्तव्यम् । नंष्टा । नंष्टुम् । नंष्टव्यम् । झलि इति किम् ? मज्जनम् । नशनम् । 'मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति अनुषङ्गादि[10]लोपार्थम्' (८.२.२१/२५४१ वा.) । मग्नः । मग्नवान् ॥

## रधिजभोरचि । (६१/२३०२)

रधि जभि इत्येतयोः[11] अजादौ प्रत्यये[12] नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्धं-रन्धम् । रन्धो वर्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भंजम्भम् । जम्भो वर्तते । परापि सती वृद्धिर्नुमा बाध्यते, नित्यत्वात् । अचि इति किम् ? रद्धा । [13]जभ्यम् ॥

## नेट्यलिटि रधेः । (६२/२५१६)

इडादौ अलिटि प्रत्यये परे रधे[14]र्नुमागमो न भवति[15] । रधिता । रधितुम् । रधितव्यम् । इटि इति किम् ? रन्धनम् । रन्धकः । अलिटि इति किम् ? ररन्धिव । ररन्धिम । नुमि कृते संयोगान्तत्वात् 'असं-योगाल्लिट् कित्' (१.२.५/२२४२) इति कित्त्वं नास्ति इति [16]नलोपो न भवति । अथ क्वसौ कथं भवितव्यम् ? रेधिवान् इति । कथम् ? एत्वाभ्यासलोपयोः कृतयोः इडागमः [17]क्रियते, [18]ततो नुमागमः, तस्य औपदेशिक-कित्त्वाश्रयो लोपः । अथ इटि लिटि [19]इत्येवं नियमः कस्मान् न [20]क्रियते, लिट्येव इटि नान्यत्र इति ? विपरीत-मप्यवधारणं सम्भाव्येत, इट्येव लिटि नान्यत्र इति । तथा हि सति ररन्ध इत्यत्र न स्यात्, रधिता इत्यत्र च स्यादेव ।

## रभेरशब्लिटोः । (६३/२५८१)

[21]रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये [22]परतो नुमागमो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्तते । अशब्लिटोः इति किम् ? आरभते । आरेभे[23] । अचि इत्येव, आरब्धा ॥

1. मोक्तव्यम् नास्ति क. ई. 2. तुदती नुदती क. 3. तृप तृम्फ क. 4. प्लवने क. 5. शोभने क. 6. पठ्यन्ते इत्यधिकम् क. ई. 7. नुम् न इत्यधिकम् क. 8. नश् क. ह. 9. परतो इत्यधिकम् क. ह. 10. लोपार्थे यथा स्यात् क, संयोगादिलोपो यथा स्यात् इ. 11. अङ्गयोः इत्यधिकम् क. 12. परतो इत्यधिकम् क. ब. ड. इ. ई. 13. जभ्यम् नास्ति इ. 14. अङ्गस्य इत्यधिकम् क. 15. पूर्वेण प्राप्तः प्रतिषिध्यते इत्यधिकम् ह. 16. नकारलोपो ई. 17. क्रियते नास्ति ई. 18. तत्र कृते ब. ई. 19. इत्येष ब. 20. उक्तः ब.क. 21. रभेः इत्यस्य क. 22. परे ई. 23. आरेभाते आरेभिरे इत्यधिकम् इ.

## लभेश्च । (६४/२५८२)

लभेश्च[1] अजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति । लम्भयति । लम्भकः । साधुलम्भी । लम्भंलम्भम् । लम्भो वर्तते[2] । अशब्लिटोः इत्येव, लभते । लेभे । अचि इत्येव, लब्धा । लभेश्च पृथग्योग-करण[3]मुत्तरार्थम् ॥

## आङो यि । (६५/२८४५)

आङः उत्तरस्य लभेः[4] यकारादि[5]प्रत्ययविषये नुमागमो भवति । आलम्भ्या गौः । आलम्भ्या वडवा । प्राक् प्रत्ययोत्पत्तेः नुमि कृते विहितमदुपधत्वम् इति 'ऋहलोर्ण्यत्' (३.१.१२४/२८७२) इति[6] ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेन अन्तस्वरितत्वं [7]भवति । यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात्[8] । आङः इति किम् ? लभ्यम्[9] । कथम् 'अग्निष्टोम आलभ्यः' (मै. ३. ९.५) इति ? 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु.प. ३५) । अथ वा [10]आलभ्यः इत्यत्र नुमि कृतेऽनुषङ्गलोपः क्रियते ॥

## उपात् प्रशंसायाम् । (६६/२८४६)

उपादुत्तरस्य लभेः[11] प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति । उपलम्भ्या [12]भवता विद्या । उपलम्भ्यानि धनानि । ण्यत्प्रत्ययान्तत्वात् अन्तस्वरितत्वमेव । प्रशंसायाम् इति किम् ? उपलभ्यमस्माद् वृषलात् किञ्चित् । पोरदुपधत्वाद् यत्प्रत्ययान्तमिदम् ॥

## उपसर्गात् खल्घञोः । (६७/३३०६)

उपसर्गादुत्तरस्य लभेः[13] खल्घञोः परतः नुमागमो भवति । ईषत्प्रलम्भः । सुप्रलम्भः । दुष्प्रलम्भः । घञि – प्रलम्भः । विप्रलम्भः । सिद्धे सत्यारम्भो नियमार्थः, उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र । ईषल्लभः । लाभो वर्तते ॥

## न सुदुर्भ्यां केवलाभ्याम् । (६८/३३०७)

सु दुर् इत्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्याम् उपसृष्टस्य लभेः[14] खल्घञोः परतः नुमागमो न भवति । [15]सुलभम् । दुर्लभम् । घञि – सुलाभः । दुर्लाभः । केवलाभ्याम् इति किम् ? सुप्रलम्भः । दुष्प्रलम्भः । सुदुर्भ्यामिति तृतीयां मत्वा केवलग्रहणं[16] क्रियते । पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः । अतिसुलभम् इत्यत्र कर्मप्रवचनीयत्वादतः केवल एव सुशब्द [17]उपसर्गः इति भवति[18] प्रतिषेधः । [19]यदा तु अतिशब्दो न कर्मप्रवचनीयः, तदा नुम् भवति एव अतिसुलम्भः इति । [20]पञ्चमीनिर्देशपक्षेऽप्येवमर्थं केवलग्रहणं कर्तव्यम्[21] ॥

---

1. अङ्गस्य इत्यधिकम् क. इ. 2. इति इत्यधिकम् क. 3. उत्तरत्र लभेरेवानुवृत्तिः यथा स्यात् इत्यधिकम् क. 4. अङ्गस्य यकारादौ प्रत्यये परतः क. 5. प्रत्यये विषयभूते इ. 6. एवम् इत्यधिकम् क. 7. भवति नास्ति क. इ. 8. यतोऽनावः इत्यधिकम् क. 9. अदुपधत्वाद् यत्प्रत्ययान्तमेतत् । यि इति किम् ? आलब्धा इत्यधिकम् ब. ड. इ. ई. 10. आलभ्यते क. ड. ई. ह. 11. अङ्गस्य यकारादिप्रत्यये परतः ह. 12. भवता नास्ति क. 13–14. अङ्गस्य इत्यधिकम् क. 15. सुलभः दुर्लभः इ. ई. क. 16. इह इत्यधिकम् ह. 17. उपसर्गः नास्ति क. 18. एव इत्यधिकम् क. 19. यदि तु क. 20. सुदुर्भ्याम् इति इत्यधिकम् क. 21. एव इत्यधिकम् क. ई.

## विभाषा चिण्णमुलोः । (६९/२७६८)

चिण् णमुल् इत्येतयोः[1] विभाषा लभेर्नुम् भवति । अलाभि, अलम्भि । लाभंलाभम्, लम्भंलम्भम् । व्यवस्थितविभाषा चेयम्, तेनानुपसृष्टस्य विकल्पः, उपसृष्टस्य नित्यं नुम् भवति । प्रालम्भि । प्रलम्भम् ॥

## उगिदचां सर्वनामस्थानेऽधातोः । (७०/३६१)

उगितामञ्चानां धातुवर्जितानाम् अञ्चतेश्च सर्वनामस्थाने [2]परतो नुमागमो भवति । भवतु – भवान्, भवन्तौ, भवन्तः । ईयसुन् – श्रेयान्, श्रेयांसौ, श्रेयांसः[3] । शतृ – पचन्, पचन्तौ, पचन्तः । अञ्चतेः – प्राङ, प्राञ्चौ, प्राञ्चः[4] । उगिदचाम् इति किम् ? दृषद्, दृषदौ, दृषदः[5] । सर्वनामस्थाने इति किम् ? भवतः पश्य । श्रेयसः पश्य । अञ्चतिग्रहणं नियमार्थम्, अञ्चतेरेव धातोरन्यस्य मा भूत् । उखास्रत् । पर्णध्वत् । अधातोः इति किम् ? अधातुभूतपूर्वस्य यथा स्यात् । गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः गोमान् । अत्र हि धातुत्वादञ्चतिग्रहणान् न स्यात् ॥

## युजेरसमासे । (७१/३७६)

युजे[6]रसमासे सर्वनामस्थाने परतो नुमागमो भवति । युङ, युञ्जौ, युञ्जः । असमासे इति किम् ? अश्वयुक्, अश्वयुजौ, अश्वयुजः । युजेः इति इकारनिर्देशात् ‘युज समाधौ’ (धा. पा. ११७८) इत्यस्य ग्रहणं न भवति । युजमापन्ना ऋषयः ॥

## नपुंसकस्य झलचः । (७२/३१४)

नपुंसकस्य झलन्तस्य अजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति । उदश्विन्ति । [7]शकृन्ति । यशांसि । [8]पयांसि । अजन्तस्य – कुण्डानि । वनानि । त्रपूणि । [9]जतूनि । नपुंसकस्य इति किम् ? [10]अग्निचिद् ब्राह्मणः । झलचः इति किम् ? बहुपुरि । [11]बहुधुरि । विमलदिवि । चत्वारि । अहानि । उगितो झलन्तस्य नपुंसकस्य परत्वादनेनैव नुम् भवति । [12]श्रेयांसि । भूयांसि । कुर्वन्ति । कृषन्ति ब्राह्मणकुलानि ।

[८२७] बर्हीजि प्रतिषेधो वक्तव्यः । (म. भा. ३.२६५)

बर्हीजि ब्राह्मणकुलानि । अन्त्यात् पूर्वं नुमम् [13]एके इच्छन्ति । बर्हीञ्जि ब्राह्मणकुलानि ॥

---

1. परतः इत्यधिकम् क, प्रत्यययोः परतः इत्यधिकम् इ. 2. परे क. 3. श्रेयांसम् इत्यधिकम् क. 4. प्राञ्चम् प्राञ्चौ इत्यधिकम् क. 5. दृषदम् दृषदौ इत्यधिकम् क. 6. धातोरङ्गस्य इत्यधिकम् इ. 7. यकृन्ति इ. 8. पयांसि नास्ति ई. 9. जतूनि नास्ति क. दधीनि मधूनि इत्यधिकम् क. 10. अग्निचितो ब्राह्मणाः क. 11. बहुधुरि नास्ति क. 12. यशांसि क. 13. केचित् इ.

## इकोऽचि विभक्तौ । (७३/३२०)

इगन्तस्य नपुंसकस्याङ्गस्य अजादौ विभक्तौ [1]नुमागमो भवति । त्रपुणी । जतुनी । तुम्बुरुणी । त्रपुणे । जतुने । तुम्बुरुणे । इकः इति किम् ? कुण्डे । पीठे । अचि इति किम् ? उत्तरार्थम् । यद्येवम्, तत्रैव कर्तव्यम् ? इह तु करणस्य एतत् प्रयोजनम्, हे त्रपो इत्यत्र नुम् मा भूत् इति, 'न ङिसम्बुद्ध्योः' (८.२.८/३५२) इति [2]नलोपप्रतिषेधः स्यात् । ननु च 'न लुमताङ्गस्य' (१.१.६३/२६३) इति [3]प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति ? एतदेवाज्ग्रहणं [4]ज्ञापकं प्रत्ययलक्षणप्रतिषेधोऽत्र न भवति इति । तथा च सम्बुद्धिगुणः क्रियते । विभक्तौ इति किम् ? तौम्बुरवं चूर्णम् ।

इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ।
[5]रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति (म. भा. ३.२६७) ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य । (७४/३२१)

[6]तृतीयादिषु विभक्तिष्वजादिषु[7] भाषितपुंस्कम्[8] इगन्तं नपुंसकं गालवस्याचार्यस्य मतेन पुंवद् भवति । यथा पुंसि ह्रस्वनुमौ न भवतः, [9]तद्वदत्रापि न भवतः इत्यर्थः । ग्रामणीः ब्राह्मणः । ग्रामणि ब्राह्मणकुलम् । ग्रामण्या ब्राह्मणकुलेन, ग्रामणिना ब्राह्मणकुलेन । ग्रामण्ये ब्राह्मणकुलाय, ग्रामणिने ब्राह्मणकुलाय । ग्रामण्यो ब्राह्मणकुलात्, ग्रामणिनो ब्राह्मणकुलात् । ग्रामण्यो ब्राह्मणकुलस्य, ग्रामणिनो ब्राह्मणकुलस्य । ग्रामण्योर्ब्राह्मणकुलयोः, ग्रामणिनोर्ब्राह्मणकुलयोः । ग्रामण्यां ब्राह्मणकुलानाम्, नुमचिर (८.२.२४/२८० वा.) इति पूर्वविप्रतिषेधेन नुट्, ग्रामणीनां ब्राह्मणकुलानाम् । ग्रामण्यां ब्राह्मणकुले, ग्रामणिनि ब्राह्मणकुले । शुचिर्ब्राह्मणः । शुचि ब्राह्मणकुलम् । शुचये ब्राह्मणकुलाय, शुचिने ब्राह्मणकुलाय । शुचेर्ब्राह्मणकुलात्, शुचिनो ब्राह्मणकुलात् । शुचेर्ब्राह्मणकुलस्य, शुचिनो ब्राह्मणकुलस्य । शुच्योर्ब्राह्मणकुलयोः, शुचिनोर्ब्राह्मणकुलयोः । शुचौ ब्राह्मणकुले, शुचिनि ब्राह्मणकुले । तृतीयादिषु इति किम् ? ग्रामणिनी ब्राह्मणकुले । शुचिनी ब्राह्मणकुले । भाषितपुंस्कम् इति किम् ? त्रपुणे । जतुने ।

इह कस्मान्न भवति, पीलुर्वृक्षः, पीलु फलम्, पीलुने फलाय इति ? समानायामाकृतौ यद् भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः । इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य, फलाकृतिर्नपुंसके । तदेतदेवं कथं भवति भाषितपुंस्कम् इति ? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देन उच्यते, तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम् । तस्य प्रतिपादकं यच्छब्दरूपं तदपि भाषितपुंस्कम् इति । इकः इत्येव, कीलालपा ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन । अचि इत्येव, ग्रामणिभ्यां ब्राह्मणकुलाभ्याम् ॥

---

1. परतः इत्यधिकम् क. 2. नकारलोप इ. 3. प्रत्ययलोपलक्षणे क. 4. ज्ञापयति क. 5. वायात्वं क. 6. इकोऽचि विभक्तौ इति वर्तते इत्यधिकम् क. 7. परतः इत्यधिकम् क. 8. यत् इत्यधिकम् क. 9. तथात्रापि क.

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। (७५/३२२)

अस्थि दधि सक्थि अक्षि इत्येतेषां नपुंसकानां तृतीयादिषु अजादिषु विभक्तिषु [1]परतोऽनङ इत्ययमादेशो भवति, स चोदात्तो भवति। अस्थ्ना। अस्थ्ने। दध्ना। दध्ने। सक्थ्ना। सक्थ्ने। अक्ष्णा। अक्ष्णे। अस्थ्यादय[2] आद्युदात्ताः, तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यात् इति उदात्तवचनम्। तत्र भसञ्ज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति। एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्यापि [3]अङ्गस्य तदन्तग्रहणमिष्यते। प्रियास्थ्ना [4]ब्राह्मणेन। प्रियदध्ना[5]। तृतीयादिषु इति किम्? अस्थिनी। दधिनी। अचि इत्येव, अस्थिभ्याम्। दधिभ्याम्॥

## छन्दस्यपि दृश्यते। (७६/३८७७)

अस्थिदधिसक्थ्यक्ष्णाम् अनङ छन्दस्यपि दृश्यते। [6]यत्र विहितस्ततोऽन्यत्रापि दृश्यते। अचि इत्युक्तम्, [7]अनजादौ अपि दृश्यते। 'इन्द्रो दधीचो अस्थभिः' (ऋ. १.८४.१३)। 'भद्रं पश्येमाक्षभिः' (वा.सं. २५.२१)। तृतीयादिषु इत्युक्तम्, अतृतीयादिषु अपि दृश्यते। अस्थान्युत्कृत्य जुहोति। विभक्तौ इत्युक्तम्, अविभक्तावपि दृश्यते। अक्षण्वता लाङ्गलेन। 'अस्थन्वन्तं यदनस्था बिभर्ति' (ऋ. १.१६४.४)॥

## ई च द्विवचने। (७७/३८७८)

द्विवचने परतः छन्दसि विषये अस्थ्यादीनाम् ईकारादेशो भवति, स च उदात्तः। अक्षी ते इन्द्र पिङ्गले [8]कपेरिव। 'अक्षीभ्यां ते नासिकाभ्याम्' (ऋ. १०. १६३. १)। अक्षी इत्यत्र नुम् परत्वादीकारेण बाध्यते। तेन कृते 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' (व्या. प. ४०) इति पुनर् नुम् न [9]क्रियते॥

## नाभ्यस्ताच्छतुः। (७८/४२७)

अभ्यस्तादङ्गादुत्तरस्य शतुः नुम् न भवति। ददत्, ददतौ, ददतः। दधत्, दधतौ, दधतः। जक्षत्, जक्षतौ, जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः। शतुरनन्तर [10]ईकारो न विहितः इति व्यवहितस्यापि [11]नुमः प्रतिषेधो विज्ञायते॥

## वा नपुंसकस्य। (७९/४४४)

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य [12]वा नुमागमो[13] भवति। ददति, ददन्ति कुलानि। दधति, दधन्ति कुलानि। जक्षति, जक्षन्ति कुलानि। जाग्रति, जाग्रन्ति कुलानि॥

---

1. परतः नास्ति इ. ई. 2. शब्दाः इत्यधिकम् इ. ई. 3. अङ्गस्य नास्ति क. इ. 4. ब्राह्मणकुलेन क. 5. प्रियदध्ने इत्यधिकम् ई. 6. यतः ई, हि इत्यधिकम् इ. 7. अनच्यपि क. ब. ड. इ. ई. ह. 8. कपेरिव नास्ति क, अक्षी ते ते युधि विहते कपेरिव इ. 9. भवति क. 10. ईकारो नास्ति क. 11. नुमः नास्ति इ. 12. वा नास्ति ड. 13. न इत्यधिकम् ड.

## आच्छीनद्योर्नुम् । (८०/४४८)

[1]अवर्णान्तादङ्गादुत्तरस्य शतुः वा नुमागमो भवति शीनद्योः परतः । तुदती कुले, तुदन्ती कुले । तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी । याती कुले, यान्ती कुले । याती ब्राह्मणी, यान्ती ब्राह्मणी । करिष्यती कुले, करिष्यन्ती कुले । करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी । [2]अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावात् अवर्णान्तादङ्गादुत्तरस्य शतुः इति न युज्यते वक्तुम्, 'उभयत आश्रये नान्तादिवत्' (व्या.प. ५१) इत्यन्तादिवद्भावोऽपि नास्ति, भूतपूर्वगत्याश्रयणे वा अदती, घ्नती इत्येवमादिषु अतिप्रसङ्गः इति ? अत्र समाधिं केचिदाहुः । शतुरवयवे शतृशब्दो वर्तते, अवर्णान्तादङ्गादुत्तरो यः शत्रवयवः इति[3] । अपरे [4]पुनराहुः । आत् इत्यनेन [5]शीनद्यावेव विशेष्येते । अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः[6] परतः शत्रन्तस्य नुम् भवति इति । तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् इति [7]तकारेण एव व्यवधानमाश्रयिष्यते । आत् इति किम् ? कुर्वती[8] । सुन्वती । शीनद्योः इति किम् ? तुदताम् । नुदताम् ॥

## शप्श्यनोर्नित्यम् । (८१/४४६)

शप् श्यन् इत्येतयोः[9] शतुः शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले । पचन्ती ब्राह्मणी[10] । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले । सीव्यन्ती ब्राह्मणी । नित्यग्रहणं वा इत्यस्याधिकारस्य निवृत्त्यर्थम् । [11]इहारम्भसामर्थ्या[12]न्नित्यमुत्तरत्र [13]विकल्प एवाशङ्क्येत ॥

## सावनडुहः । (८२/३३२)

सौ परतः [14]अनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् । अत्र केचित् आत् इत्यधिकारादाममोः कृतयोः नुमं कुर्वन्ति । तेन नुमा आममौ न बाध्येते, आमम्भ्यां च नुम् इति । अपरे तु सत्यपि [15]सामान्यविशेषत्वे आममोः नुमश्च समावेशमिच्छन्ति, न बाध्यबाधकभावम्, यथा चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोः इति[16] ॥

## दृक्स्ववस्स्वतवसां छन्दसि । (८३/३८७७)

दृक् स्ववस् स्वतवस् इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये । ईदृङ् । [17]तादृङ् । यादृङ् । [18]सदृङ् । स्ववान् । स्वतवान् पायुरग्ने ॥

## दिव औत् । (८४/३३६)

दिव् इत्येतस्य सौ परतः औत् इत्ययमादेशो भवति । द्यौः । दिव् इति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः, स इह न गृह्यते, अक्षद्यूः[19] ॥

---

1. वा इत्यनुवर्तते इत्यधिकम् क. 2. अत्र नास्ति क. 3. यथा ग्रामो दग्ध इति ग्रामैकदेशः निर्दिश्यते इत्यधिकम् ब. ड. 4. पुनरेवमाचक्षते ई. 5. शीनद्योरेव क. 6. शीनद्योः इत्यधिकम् इ. 7. इति एकेन वर्णेन इत्यधिकम् क, तकारेण शतृप्रत्ययेन व्यवधानमाश्रितम् ड. 8. ब्राह्मणी इत्यधिकम् क. 9. परतः इत्यधिकम् क. 10. यजन्ती कुले यजन्ती ब्राह्मणी श्यन् इत्यधिकम् ई. इ. ड. 11. इह तु क. 12. नित्यो विधिः । उत्तरत्र तदनुवर्तते एव इति आशङ्क्येत ई. इ. 13. अनुवृत्तिरेव क. 14. अनडुहः इत्येतस्याङ्गस्य क. 15. सामान्यविशेषविषयत्वे ई. 16. जिज्ञास्यम् इत्यधिकम् क. 17. तादृङ् नास्ति ड. 18. पुरुत्राहि सदृङ्ङसि ड. 19. इति इत्यधिकम् ई. ब. ड. इ.

## पथिमथ्यृभुक्षामात् । (८५/३६५)

पथिन् मथिन् ऋभुक्षिन् इत्येतेषाम्[1]ङ्गानां सौ परतः [2]आकारः आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यननुनासिकेऽपि आकारोऽनुनासिको न भवति । [3]भाव्यमानेन सवर्णानां ग्रहणं न भवति इति शुद्धो ह्ययमुच्चार्यते ॥

## इतोऽत् सर्वनामस्थाने । (८६/३६६)

पथ्यादीनाम् [4]इकारस्य स्थाने [5]अकारादेशो भवति [6]सर्वनामस्थाने परतः । पन्थाः, पन्थानौ, पन्थानः । पन्थानम्, पन्थानौ[7] । मन्थाः, मन्थानौ, मन्थानः । मन्थानम्, मन्थानौ । ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः । ऋभुक्षाणम्, ऋभुक्षाणौ । आत् इति वर्तमाने पुनर् अद्वचनं षपूर्वार्थम् । ऋभुक्षणम् [8]इत्यत्र 'वा षपूर्वस्य निगमे' (६.४.९/३५४१) इति [9]दीर्घविकल्पः ॥

## थो न्थः । (८७/३६७)

पथिमथोः थकारस्य स्थाने न्थः इत्ययमादेशो भवति सर्वनामस्थाने परतः । पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः[10] ॥

## भस्य टेर्लोपः । (८८/३६८)

[11]पथ्यादीनां भसञ्ज्ञकानां टेः लोपो भवति । पथः । पथा । पथे । मथः । मथा । मथे । ऋभुक्षः । ऋभुक्षा । ऋभुक्षे । सर्वनामस्थाने इत्यनुवर्तमानमपि विरोधादिह न सम्बध्यते[12] ॥

## पुंसोऽसुङ् । (८९/४३६)

[13]पुंस इत्येतस्य सर्वनामस्थाने परतोऽसुङ इत्ययमादेशो भवति । पुमान्, पुमांसौ, पुमांसः[14] । इह परमपुमान् [15]इति प्रागेव [16]विभक्त्युत्पत्तेः समासान्तोदात्तत्वम्, उत्पन्नायां विभक्तौ [17]असुज् इत्यनिष्टः स्वरः प्राप्नोति ? तदर्थम् [18]असुङि उपदेशिवद्वचनं कर्तव्यम् । तेन परमपुमान् इत्यन्तोदात्तो भवति । पुमान् इत्ययं पुनराद्युदात्त एव ॥

---

1. अङ्गानाम् नास्ति ब. 2. आत् इत्ययमादेशो क.ब. 3. भाव्यमानोऽण् सवर्णान् न गृह्णाति इति ब.क. इ.ह. 4. अङ्गानाम् इत्यधिकम् क. 5. अत् इत्ययमादेशो भवति ब. 6. सर्वनामस्थाने नास्ति क. 7. एवं सर्वनामस्थाने उदाहार्यम् इत्यधिकम् ह. 8. इति दीर्घविकल्पो यथा स्यात् इ. ह. क. 9. दीर्घत्वविकल्पः ड. 10. पन्थानम् पन्थानौ मन्थानम् मन्थानौ इत्यधिकम् ब.क.ड.इ.ह. 11. पथिमथिऋभुक्षाणाम् इ. 12. पुरस्तात् तु सम्बध्यते एव इत्यधिकम् इ. 13. सर्वनामस्थाने इति वर्तते इत्यधिकम् ब. 14. पुमांसम् । सर्वनामस्थाने इत्येव । पुंसः पश्य इत्यधिकम् इ. ड. 15. इत्यत्र क. 16. च प्रत्ययोत्पत्तेः क. ब. 17. असुजि सति ब. 18. असुङि नास्ति क.

## गोतो णित् । (९०/२८४)

गोशब्दात् परं सर्वनामस्थानं [1]णित् भवति । [2]णित्कार्यं तत्र भवति इत्यर्थः । गौः, गावौ, गावः । तपरकरणं किम् ? चित्रगुः । शबलगुः । कथं हे चित्रगो, हे [3]शबलगव इति? '[4]अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या. प. ३४) इति सम्बुद्धिजसोर्गुणे कृते णित्वं न [5]भवति । अथ वा गोतः इति [6]सम्बन्धलक्षणा षष्ठी, गोतः सम्बन्धि यत् सर्वनामस्थानम् इति । यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानम् इत्युच्यते । चित्रगुशब्दात् तु[7] सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह । तपरकरणं तु निर्देशार्थमेव । केचित् 'ओतो णित्' इति पठन्ति, द्योशब्दादपि [8]यत् सर्वनामस्थानं विद्यते तदर्थम् । द्यौः, द्यावौ, द्यावः । गोतः [9]इत्येतदेव तपरकरणनिर्देशात् ओकारान्तोपलक्षणं द्रष्टव्यम् । वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम् ॥

## णलुत्तमो वा । (९१/२२८३)

उत्तमो णल् वा णित् भवति । णित्कार्यं तत्र वा भवति इत्यर्थः । [10]अहं चकर, अहं चकार । [11]अहं पपच, अहं पपाच[12] ॥

## सख्युरसम्बुद्धौ । (९२/२५३)

असम्बुद्धौ यः सखिशब्दः तस्मात् परं सर्वनामस्थानं [13]णित् भवति । सखायौ । सखायः[14] । असम्बुद्धौ इति किम् ? हे सखे ॥

## अनङ् सौ । (९३/२४८)

सखिशब्दस्य सौ परतः अनङ इत्ययमादेशो भवति, [15]स चेत् सुशब्दः सम्बुद्धिः न भवति । सखा । असम्बुद्धौ [16]इति किम् ? हे सखे ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च । (९४/२७६)

ऋकारान्तानामङ्गानाम् उशनस् पुरुदंसस् अनेहस् इत्येतेषां च असम्बुद्धौ सौ परतः अनङ आदेशो भवति । कर्ता । हर्ता । माता । पिता । भ्राता । उशना । पुरुदंसा । अनेहा । असम्बुद्धौ इत्येव, हे कर्तः । हे मातः । हे पितः । हे पुरुदंसः । हे अनेहः । हे उशनः । उशनसः सम्बुद्धौ अपि पक्षे अनङ इष्यते । हे उशनन् । 'न ङिसम्बुद्ध्योः' (८.२.८/३५२) इति नलोपप्रतिषेधोऽपि पक्षे इष्यते । हे उशन । तथा चोक्तम् –

सम्बोधने तूशनस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥

इति[17] । तपरकरणमसन्देहार्थम् ॥

---

1. णिद्वत् क. इ. 2. णित्कार्याणि भवन्ति ड. इ. 3. चित्रगव ड. 4. अङ्गवृत्तेः क. 5. भविष्यति इ. 6. सम्बन्धलक्षणे क. 7. यत् इत्यधिकम् इ. क. ड. 8. यथा स्यात् ड. 9. इत्यस्मादेव क. 10. बहु जगद पुरस्तात्तस्य मत्ता किलाहम् । चकर च किल चाटु प्रौढयोषिद्वदस्य इत्यधिकम् क. 11. उदाहरणमिदं नास्ति क. 12. उत्तम इति किम् ? देवदत्तः पपाच इत्यधिकम् क. 13. णिद्वद् भवति क. 14. सखायम् सखायौ इत्यधिकम् क. 15. सम्बुद्धिवर्जिते सौ परतः ह. 16. इत्येव क. इ. 17. श्लोकवार्तिके इत्यधिकम् क.

## तृज्वत् क्रोष्टुः । (९५/२७४)

क्रोष्टुशब्दः तुन्प्रत्ययान्तः सञ्ज्ञाशब्दः सर्वनामस्थाने[1]ऽसम्बुद्धौ परतः तृज्वद् भवति । तृजन्तस्य यद् रूपं तदस्य भवति इत्यर्थः । रूपातिदेशोऽयम् । प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद् रूपं तदतिदिश्यते । तच्च क्रोष्टृ इत्येतदन्तोदात्तम्[2] । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः । क्रोष्टारम्, क्रोष्टारौ । सर्वनामस्थाने इत्येव, क्रोष्टून् । असम्बुद्धौ इत्येव, हे क्रोष्टो ॥

## स्त्रियां च । (९६/३०७)

असर्वनामस्थानार्थमारम्भः । स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति । क्रोष्ट्री । क्रोष्ट्रीभ्याम् । क्रोष्ट्रीभिः । क्रोष्टुशब्दं केचिद् गौरादिषु [3]पठन्ति, ते[4] ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति । तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्टृभी रथैः इति स्त्रीशब्दस्य लुकि कृते न सिध्यति, तत्र प्रतिविधेयम् । ये तु गौरादिषु न पठन्ति, तेषां स्त्रियाम् इत्यर्थनिर्देशः, स्त्रियां वर्तमानः क्रोष्टुशब्दः तृज्वद् भवति । कृतेऽतिदेशे 'ऋन्नेभ्यो ङीप्' (४.१.५/३०६) इति ङीप्प्रत्ययः । तत्र 'उदात्तयणो हल्पूर्वात्' (६.१.१७४/३७२०) इत्यन्तोदात्त एव क्रोष्ट्रीशब्दो [5]भवति ॥

## विभाषा तृतीयादिष्वचि । (९७/२७८)

तृतीयादिषु [6]विभक्तिषु अजादिषु [7]क्रोष्टुर्विभाषा तृज्वद् भवति । क्रोष्ट्रा, क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे । क्रोष्टुः, क्रोष्टोः । क्रोष्टरि, क्रोष्टौ । क्रोष्ट्रोः, क्रोष्ट्वोः । तृतीयादिषु इति किम् ? क्रोष्टून् । अचि इति किम् ? क्रोष्टुभ्याम् । क्रोष्टुभिः ।

[८२८] तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम्नुटौ भवतः । (म. भा. ३.२७६)

प्रियक्रोष्टुने अरण्याय । हतक्रोष्टुने [8]वृषलकुलाय । नुट् – क्रोष्टूनाम् ॥

## चतुरनडुहोरामुदात्तः । (९८/३३१)

चतुर् अनडुह् इत्येतयोः सर्वनामस्थाने परतः आम् आगमो भवति, स चोदात्तः । चत्वारः । अनड्वान्, अनड्वाहौ, अनड्वाहः । अनड्वाहम् । तदन्तविधिरत्रेष्यते । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । प्रियानड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः ।

[८२९] अनडुहः स्त्रियां वेति वक्तव्यम् । (म. भा. ३.२७६)

अनडुही, अनड्वाही । [9]गौरादिपाठात् सिद्धम् ॥

---

1. सम्बुद्धिवर्जिते ह. 2. वर्तते इत्यधिकम् क. ह. 3. वदन्ति ब. ड. 4. ङीष्प्रत्यये क, ते नास्ति ह. 5. भवति नास्ति ब. क. 6. विभक्तिषु नास्ति क. 7. परतः क्रोष्टुशब्दः ब. क. ड. ह. 8. भवाय क. 9. गौरादिषु ह.

## अम् सम्बुद्धौ । (९९/३३३)

सम्बुद्धौ परतश्चतुरनडुहोः[1] अम् आगमो भवति । [2]पूर्वस्यायमपवादः । हे प्रियचत्वः । हे प्रियानड्वन्[3] ॥

## ऋत इद्धातोः । (१००/२३९०)

ऋकारान्तस्य धातोः अङ्गस्य इकारादेशो भवति । किरति । गिरति । आस्तीर्णम् । विशीर्णम् । धातोः इति किम् ? पितॄणाम् । मातॄणाम् । लाक्षणिकस्याप्यत्र ग्रहणमिष्यते । चिकीर्षति इत्यत्रापि यथा स्यात् इति धातुग्रहणं क्रियते[4] ॥

## उपधायाश्च । (१०१/२५७१)

[5]उपधायाश्च [6]ऋकारस्य इकारादेशो भवति । [7]कीर्तयति, कीर्तयतः, कीर्तयन्ति ॥

## उदोष्ठ्यपूर्वस्य । (१०२/२४९४)

ओष्ठ्यः पूर्वो यस्माद् ऋकारात् असौ ओष्ठ्यपूर्वः, तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । पूर्ताः पिण्डाः । पुपूर्षति । मुमूर्षति । [8]सुस्वूर्षति । दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवति इत्यत्रापि भवति, वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम् । ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन 'ॠ गतौ' (धा.पा. १४९८) इत्यस्य सम्पूर्वस्य समीर्णम् इति भवति ।

[८३०] इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । (म.भा. ३.२७७)

आस्तरणम् । आस्तारकः । निपरणम् । निपारकः । निगरणम् । निगारकः ॥

## बहुलं छन्दसि । (१०३/३५७८)

[9]छन्दसि विषये ऋकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति । ओष्ठ्यपूर्वस्य इत्युक्तम्, अनोष्ठ्यपूर्वस्यापि भवति । मित्रावरुणौ ततुरिः (ऋ. १.१४५.३) । 'दूरे ह्यध्वा जगुरिः' (ऋ. १०.१०८.१) । ओष्ठ्यपूर्वस्यापि न भवति । पप्रितमम् । वव्रितमम् । क्वचिद् भवति । 'पपुरिः' (ऋ. १.४६.४) ॥

[10]इति काशिकायां वृत्तौ
सप्तमाध्यायस्य प्रथमः पादः ॥

---

1. चतुरनडुहः इत्येतयोः क. 2. पूर्वस्य आमोऽपवादः ब. क. इ. 3. हे अनड्वन् इत्यधिकम् क. 4. तपरकरणम् असंदेहार्थम् इत्यधिकम् ब.इ.ई.ह. 5. ऋत इति वर्तते इत्यधिकम् ब.इ.ई. 6. धातोः इत्यधिकम् क.ह. 7. कीर्तयति नास्ति क. 8. सुस्मूर्षति ब. 9. ऋत इति वर्तते । ऋतः धातोः उद् इति च इत्यधिकम् ड.ई. 10. वामनकाशिकायाम् ब.इ.ई, वामनविरचितायाम् ड.

# सप्तमाध्यायस्य
## द्वितीयः पादः

### सिचि वृद्धिः परस्मैपदेषु । (१/२२९७)

परस्मैपदपरे सिचि परतः इगन्तस्याङ्गस्य वृद्धिर्भवति[1] । अचैषीत् । अनैषीत् । अलावीत् । [2]अपावीत् । अकार्षीत् । अहार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद् बाधते । न्यनुवीत्, न्यधुवीत् इत्यत्र कुटादित्वात् ङित्त्वे सति प्रतिषिद्धायां वृद्धौ उवङादेशः क्रियते । परस्मैपदेषु इति किम् ? अच्योष्ट । अप्लोष्ट ।।

### अतो ल्रान्तस्य । (२/२३३०)

[3]रेफलकारौ यावतः [4]अन्तौ समीपौ तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिः भवति[5] । क्षर – अक्षारीत् । त्सर – अत्सारीत् । ज्वल – अज्वालीत् । ह्मल – अह्मालीत्[6] । 'अतो हलादेर्लघोः' (७.२.७/२२८४) इति विकल्पस्य अयमपवादः । अतः इति किम् ? न्यखोरीत् । न्यमीलीत् । ल्रान्तस्य इति किम् ? मा भवान् अटीत् । मा भवानशीत् । अन्तग्रहणं किम् ? अवभ्रीत् । अश्वल्लीत् । अत्र यौ रेफलकारौ [7]अङ्गस्यान्तौ न तावतः समीपौ[8] ।।

### वदव्रजहलन्तस्याचः । (३/२२६७)

वदव्रजोः [9]हलन्तानां च अङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदिव्रजिग्रहणम् । हलन्तानाम् – अपाक्षीत् । [10]अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत्[11] ।

अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिध्यति । कथम् ? वदिव्रज्योः इत्यत्र प्रथमयोगे अतः इति स्थानी अनुवर्तते[12], ततो यत् अचः इति [13]सूत्रं तत्राङ्गेन अज्विशेष्यते, अङ्गस्य अचः सिचि परतः वृद्धिर्भवति । तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम् । इहापि स्यात्, अराङ्क्षीत्, असाङ्क्षीत् । अन्यथा हि येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् इत्येकेन[14] वर्णेन व्यवधाने स्यात्, अनेकेन हला[15] न स्यात् । उदवोढाम्, उदवोढम् [16]इत्यत्र वहेः सिचि ढत्वसलोपादीनाम् 'पूर्वत्रासिद्धम्' (८.२.१/१२) इत्यसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोपनिमित्तमोत्वम् । तत्र कृते पुनर्वृद्धिर्न भवति, कृतत्वात् । यत्र त्वकृता वृद्धिः, ओकारस्य एव तत्र भवति, सोढामित्रस्य अपत्यम् सौढामित्रिः [17]इति ।।

### नेटि । (४/२२६८)

[18]इडादौ सिचि[19] हलन्तस्याङ्गस्य वृद्धिर्न भवति । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् । हलन्तस्य इत्येव, अलावीत्[20] । ननु [21]च एतदप्यन्तरङ्गत्वात् गुणावादेशयोः कृतयोः हलन्तं भवति ? नैतदेवम् । अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्यात् सिचि वृद्धिर्बाधते इत्युक्तम् ।।

---

1. गुणस्यापवादः इत्यधिकम् ब. ई ड. इ. 2. अपावीत् नास्ति ब. ड. 3. समीपवचनोऽयमन्तशब्दः इत्यधिकम् क. 4. अन्तौ नास्ति ड. ह. 5. परस्मैपदे परे सिचि परतः इत्यधिकम् क. ड. ई. इ. ब. 6. ह्वल अह्वालीत् इत्यधिकम् ई. इ. 7. अन्तस्थाने गतौ ह. 8. भवतः इत्यधिकम् क. 9. हलन्तस्याचः क. 10. अभैक्षीत् ब. 11. अताप्सीत् अत्राप्सीत् इत्यधिकम् क. 12. अतः स्थाने इत्यधिकम् ब. 13. द्वितीयम्, द्वितीयो योगः इ. 14. एव इत्यधिकम् क. 15. व्यवधानम् इत्यधिकम् क. ई. 16. अत्र नास्ति क. 17. इति नास्ति ब. 18. पूर्वेण हलन्तलक्षणा वृद्धिर्न भवति इत्यधिकम् ड. 19. परस्मैपदपरे इत्यधिकम् ई. ह. 20. अपावीत् इत्यधिकम् क. इ. ड. 21. चात्र क.

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । (७/२२९०)

[1]हकारान्तानां मकारान्तानां [2]यकारान्तानामङ्गानाम्, क्षण [3]श्वस जागृ णि श्वि इत्येतेषाम्, एदितां च इडादौ सिचि [4]परस्मैपदे परतो वृद्धिर्न भवति । ग्रह – अग्रहीत् । स्यम – अस्यमीत् । [5]व्यय – अव्ययीत् । टुवम – अवमीत् । क्षण – अक्षणीत् । श्वस – अश्वसीत् । जागृ – अजागरीत् । णि – औनयीत् । ऐलयीत् । श्वि – अश्वयीत् । एदिताम् – रगे – अरगीत्[6] । कखे – अकखीत् । ह्म्यन्तक्षणश्वसामेदितां च 'अतो हलादेर्लघोः' (७.२.७/२२८४) इति [7]विकल्पे प्राप्ते प्रतिषेधः । जागृणिश्वीनां तु सिचि वृद्धिः [8]प्राप्ता, सा च 'नेटि' (७.२.४/२२६८) इति न प्रतिषिध्यते । न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति, सिचि वृद्धेरनवकाशत्वात् । यदि[9] पूर्वं गुणः [10]स्यादिह णिश्विग्रहणमनर्थकं स्यात्, गुणायादेशयोः कृतयोः यकारान्तत्वादेव [11]प्रतिषेधस्य सिद्धत्वात् । तस्मादिदमेव श्विग्रहणं ज्ञापकम् न[12] सिच्यन्तरङ्गमस्ति [13]इति । अथ जागृग्रहणं किमर्थम्, [14]'जाग्रोऽविचिण्णल्ङित्सु' (७.३.८५/२४८०) इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते, स यथा 'अचो ञ्णिति' (६.२.११५/२५४) इति वृद्धिं बाधते तथा सिचि वृद्धिमपि बाधिष्यते ? नैतदस्ति । [15]कृते गुणे 'अतो ल्रान्तस्य' (७.२.२/२३३०) इति या वृद्धिः प्राप्नोति सा प्रतिषिध्यते । अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते, यथा जागरयति इत्यत्र 'अत उपधायाः' (७.१.११३/२२८२) इत्यपि वृद्धिर्न भवति, तथा चिण्णलोः प्रतिषेधोऽर्थवान् भवति इति शक्यमिह जागृग्रहणमकर्तुम् ? तत्तु क्रियते विस्पष्टार्थम् ॥

## ऊर्णोतेर्विभाषा । (६/२४४९)

ऊर्णोते[16]रिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । प्रौर्णवीत्, प्रौर्णावीत् । 'विभाषोर्णोः' (१.२.३/२४४७) इति [17]अङित्त्वपक्षे [18]वृद्धिविकल्पोऽयम् । ङित्त्वपक्षे तु [19]गुणवृद्ध्योरभावे उवङ् भवति । प्रौर्णुवीत् ॥

## अतो हलादेर्लघोः । (७/२२८४)

[20]हलादेरङ्गस्य लघोरकारस्य [21]इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । अकणीत्, अकाणीत् । अरणीत्, अराणीत् । अतः इति किम् ? अदेवीत् । असेवीत् । न्यकुटीत्, न्यपुटीत् [22]इत्यत्र अतः इत्यस्मिन्नसति स्थानिनिर्देशार्थमचः इत्येतद[23]नुवर्तयितव्यम् । तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवति इति[24] 'क्ङिति च' (७.२.११८/१०७६) इति प्रतिषेधो न [25]स्यात् । हलादेरिति किम् ? मा भवानशीत् । मा भवानटीत् । लघोः इति किम् ? अतक्षीत् । अरक्षीत् । अथेह कस्मान्न भवति अचकासीत् इति ? येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् इति हला व्यवधानमाश्रितम्, न पुनरचापि व्यवधानम् इति वृद्धिर्न भवति । अथ पुनरेकेन [26]वर्णेन व्यवधानमाश्रीयते न पुनरनेकेन इति कल्पने शक्यमकर्तुं लघोः इति, अतक्षीत् इत्यत्रानेकेन व्यवधानम् [27]इति न भविष्यति ? तत् क्रियते विस्पष्टार्थम् । इटि इत्येव, अपाक्षीत् ॥

---

1. नेटि इति वर्तते क. 2. यकारान्तानां च ब. 3. श्वसि क. 4. परस्मैपदपरे क. ब. ड. इ. 5. यकारान्तानां क. 6. लगै अलगीत् इत्यधिकम् क. ड. 7. विकल्पप्रतिषेधार्थम् नित्यम् वचनम् क. ई. ह. 8. प्राप्नोति इ. 9. च इत्यधिकम् ब. 10. स्यादत्र ई. 11. वृद्धि इत्यधिकम् क. ड. इ. 12. हि इत्यधिकम् क. 13. इति नास्ति ब. 14. यावता इत्यधिकम् क. ड. इ. 15. गुणे रपरत्वे च कृते क. 16. अङ्गस्य परे इत्यधिकम् क. 17. यदा न ङित्त्वं तदा क. 18. विकल्पोऽयम् इ. 19. उभयोरपि इत्यधिकम् क. 20. नेटि इति वर्तते विभाषा इति च इत्याधिकम् क. 21. स्थाने इत्यधिकम् क. 22. अत्र क. 23. अनुवर्तनीयम् इ. 24. कुटादित्वात् ङित्वे इत्यधिकम क. 25. तस्मादत इत्येवं कर्तव्यम् इत्यधिकम् क. 26. वर्णेन नास्ति क. 27. अस्ति इत्यधिकम् क.

## नेड् वशि कृति। (८/२९८१)

वशादौ कृति प्रत्यये परतः इडागमो न भवति[1]। वरमनादौ [2]प्रयोजनम्। ईशिता। ईशितुम्। ईश्वरः। दीपिता। दीपितुम्। दीप्रः। भसिता। भसितुम्। भस्म। याचिता। याचितुम्। याच्ञा। वरमनादौ इत्युदाहरणप्रदर्शनार्थम्, न परिगणनम्। तेन 'अमन्ताड्डः' (उ. ११९) इत्येवमादावपि हि प्रतिषेधो भवति। अथ तत्र 'उणादयो बहुलम्' (३.३.१/३१६९) इति समाधीयते? सम्भवोदाहरणप्रदर्शनमेतत्। कृति इति किम्? [3]रुदिवः। रुदिमः॥

## तितुत्रतथसिसुसरकसेषु च। (९/३१६३)

ति तु त्र त थ सि सु सर क स इत्येतेषु कृत्सु इडागमो न भवति। ति इति क्तिन्क्तिचोः [4]सामान्यग्रहणम्। [5]क्तिच्—तनिता। तनितुम्। तन्तिः। [6]क्तिन्—दीपिता। दीपितुम्। दीप्तिः। तु—'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' (उ. ७२)। सचिता। सचितुम्। सक्तुः। त्र—दाम्नीशसयुयुज (३.३.१८२/३१६२) इति ष्ट्रन्। पतिता। पतितुम्। पत्रम् [7]वाहनम्। उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन्' (उ. ६०८)। तनिता। तनितुम्। तन्त्रम्। त—'हसिमृग्रिण्वाऽमिदमिलूपूर्धुर्विभ्यस्तन्' (उ. ३७३)। हसिता। हसितुम्। हस्तः। लविता। लवितुम्। लोतः। पविता। पवितुम्। पोतः। धूर्विता। धूर्वितुम्। धूर्तः। औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य, हसितम् इत्येव हि तत्र भवति। थ—'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ. १६७)। कोषिता। कोषितुम्। कुष्ठम्। काशिता। काशितुम्। काष्ठम्। सि—'प्लुषिशुषिकुषिभ्यः क्सिः' (उ. ४४३)। कोषिता। कोषितुम्। कुक्षिः। [8]सुक् च इषेः (उ. ४४५)। एषिता। एषितुम्। इक्षुः। [9]अशेः क्सरन् (उ. ३५७)। अशिता। अशितुम्। अक्षरम्। क—'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ. ३३०)। शलिता। शलितुम्। शल्कः। स—'वृतृवदिहनिकमिकषिभ्यः सः' (उ. ३४९)। वदिता। वदितुम्। वत्सः।

[८३१] तितुत्रतथेष्वग्रहादीनामिति वक्तव्यम्। (म. भा. ३.२८३)

ग्रहादयो ग्रहप्रकाराः, [10]येषामिट् क्तिनि दृश्यते। निगृहीतिः। उपस्निहितिः। निकुचितिः। निपठितिः। कृति इत्येव, रोदिति। स्वपिति॥

## एकाच उपदेशेऽनुदात्तात्। (१०/२२४६)

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मा[11]दिडागमो न भवति। प्रकृत्याश्रयोऽयं प्रतिषेधः। के पुनरुपदेशेऽनुदात्ताः? ये तथा गणे पठचन्ते, त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते।

---

1. आर्धधातुकस्य इड्वलादेः इति वक्ष्यति तस्य पुरस्तात् प्रतिषेधोऽयमारभ्यते इत्यधिकम् ह. इ. 2. कृति इत्यधिकम् ह. 3. रुरुदिव रुरुदिम ब. क. ड. ह. 4. सामान्येन ग्रहणम् क. इ. 5. नास्ति क. 6. नास्ति क. 7. नास्ति क. ई. 8. इषेः क्सुः क. 9. असेः सर क. 10. तेषाम् क. 11. उत्तरस्य वलादेरार्धधातुकस्य इत्यधिकम् क. ब.

अनिट्स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥

गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत ॥

[1]द्वये एव धातवः, स्वरान्ताः व्यञ्जनान्ताश्च । तत्र सर्वे स्वरान्ताः एकाचः अनुदात्ताः अदन्तादीन् वर्जयित्वा । [2]दाता । नेता । चेता । स्तोता । कर्ता । हर्ता । अदन्तादय उदात्ताः । अवधिष्ट । ॠदन्तम् – तरिता, [3]तरीता । ऋतां च वृङ्वृञौ – निर्वरिता, निर्वरीता[4] । प्रवरिता, प्रवरीता[5] । श्विडीङि– वर्णेष्वथ शीङ्श्रिञावपि – श्वयिता । उड्डयिता । शयिता । श्रयिता । गणस्थमूदन्तम् – लविता । पविता । उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः – रविता । प्रस्नविता । क्षविता । प्रोर्णविता । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्[6] इत्यतिदेशाद् एकाच्त्वम् ऊर्णोतेरस्ति इति उदात्त उपदिश्यते । यविता । नविता । क्ष्णविता । इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत ।

शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ।

[7]घसिः प्रकृत्यन्तरमस्ति – घस्ता । वसिः प्रसारणी – वस्ता । प्रसारणी इति किम् ? वसिता वस्त्राणाम् । 'वस निवासे' (धा.पा. १००६) इत्यस्य यजादित्वात् संप्रसारणं विहितम्, न तु 'वस आच्छादने' (धा.पा. १०२४) इत्यस्य ।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥

आरब्धा । [8]यब्धा । लब्धा ।

यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो [9]हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥

यन्ता । रन्ता । मन्ता । श्यनि इति किम् ? [10]मनुतेः मनिता इत्येव भवति । नन्ता । हन्ता । गन्ता ।

दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥

[11]देग्धा । दोग्धा । मेढा । रोढा । वोढा । नद्धा । दग्धा । लेढा । मुक्तसंशयाः इति किम्? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते । सहिमुहिरिहिलुहयः । तत्र [12]सहेर्विकल्पस्तकारादौ, मुहिरपि रधादौ पठ्यते, तेन तौ ससंशयौ सविकल्पौ । इतरौ तु धातुषु न पठ्येते, कैश्चिदभ्युपगम्येते इति स्वरूपेणैव [13]ससंशयौ ।

1. अत्र द्विविधा धातवः क, अत्र द्वेधा धातवः इ. 2. धाता क. 3. तरितुं ब.ङ, तरीतव्यम् क. 4. निर्वरितुम् निर्वरीतुम् निवरितव्यम् निवरीतव्यम्, इत्यधिकम् क. 5. प्रवरितुम् प्रवरीतुम्, प्रवरितव्यम् प्रवरीतव्यम् इत्यधिकम् क. 6. आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात् इत्यधिकम् क. ई. ह. इ. 7. शक्ता शक्तुं शक्तव्यम् इत्यधिकम् क. 8. नास्ति ब. 9. हलिरेव क. 10. मन्यतेः क. 11. नास्ति इ. 12. सहेरिडविकल्पः ब.ह.ड. 13. सन्दिग्धौ क.

दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥

देष्टा । द्रष्टा । दंष्टा । आम्रष्टा, आमर्ष्टा । स्प्रष्टा, स्पर्ष्टा । ऋदुपधानामुदात्तोपदेशानां मृजिदृशी वर्जयित्वा 'अनुदात्तस्य [1]चर्दुपधस्यान्यतरस्याम्' (६. १. ५९/२४०२) इति रमागमविकल्पः । रेष्टा । रोष्टा । क्रोष्टा । प्रवेष्टा । लेष्टा ।

रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे [2]तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥

रोद्धा । राद्धा । योद्धा । बन्द्धा । साद्धा । क्रोद्धा । क्षोद्धा । शोद्धा । बोद्धा । व्यद्धा । सेद्धा । बुध्यतिसिध्यत्योः श्यना निर्देशात् न्याय्यविकरणयोर्बुद्धिसिध्योरिड् भवत्येव । बोधिता । सिधिता । निष्ठायामपि प्रतिषेधाभावात् बुधितम्, सिधितम् इत्येव भवति ।

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥

शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्वेष्टा । [3]क्रष्टा । कर्ष्टा । [4]कृषेस्तौदादिकस्य भौवादिकस्य [5]च कृषिकर्षती इति निर्देशः ।

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं [6]क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥

तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव[7] । इट् त्वनयोः रधादिपाठाद् विकल्पेन भवति । त्रप्ता, तर्प्ता, तर्पिता । द्रप्ता, दर्प्ता, दर्पिता । तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव । स्रप्ता, सर्प्ता । शप्ता । छोप्ता । क्षेप्ता ।

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥

अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । क्षोत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यति इति श्यना निर्देशो 'ञिष्विदा' (धा. पा. ९७९) इत्यस्य ग्रहणं मा भूत् इति । उदात्त एवायम्[8] । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यति विन्त इत्यपि श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः । वेत्तिविन्दती उदात्तौ एव । वेदिता [9]विद्यानाम् । वेदिता धनानाम् ।

---

1. चर्वपरस्य ड. 2. इमे उदात्ताः क. 3. आक्रष्टा आकर्ष्टा ब. ह. 4. कर्षतेः क. 5. ग्रहणम् क. 6. क्षिपान् क. 7. एव नास्ति क. 8. पठ्यते इत्यधिकम् क. 9. विद्यायाः फ.

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्धचनिट्स्वरान् ॥

पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । प्रष्टा । निर्णेक्ता । सेक्ता । मोक्ता । भक्ता । भङ्क्ता । भ्रष्टा, भर्ष्टा । त्यक्ता । यष्टा । योक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा । मृजिरयमूदित् पठ्यते, ततोऽस्य विकल्पेन [1]इटा भवितव्यम् । मार्ष्टा, मर्जिता[2] इति, अमागमोऽप्यस्य न दृश्यते ? तदिह पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति, सृजिं विजिं विद्धचनिट्स्वरान् इति । निजादिषु यो विजिरसौ अनिडिष्यते । तथा च [3]तन्त्रान्तरे निजिविजिष्वञ्जिवर्जम् इत्युक्तम् । एकाच इति किम् ? अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो[4] वधिरुपदिश्यते । उपदेशग्रहणं किम् ? इह च यथा स्यात्, लविष्यति, पचिष्यति । इह च मा भूत्, कर्ता कटान्, कर्तुम् इति ॥

## श्र्युकः किति । (११/२३८१)

श्रि इत्येतस्य[5] उगन्तानां च किति प्रत्यये परतः इडागमो न भवति । श्रि – श्रित्वा । श्रितः । श्रितवान् । उगन्तानां च–युत्वा । युतः । युतवान् । लूत्वा । लूनः । लूनवान्[6] । [7]वृत्वा । वृतः । वृतवान् । तीर्त्वा । तीर्णः । तीर्णवान् । श्र्युकः इति किम् ? [8]विदितः । किति इति किम् ? श्रयिता । श्रयितुम् । श्रयितव्यम् ।

केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति, भूष्णुः इत्येवं यथा स्यात् । सौत्रत्वाच्च निर्देशस्य श्र्युकः किति इत्यत्र चर्त्वस्य असिद्धत्वमनाश्रित्य रोरुत्वं न कृतम् विसर्जनीयश्च कृतः इति । 'ग्लाजिस्थश्च क्स्नुः' (३. २. १३९/३११९) इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किंचिदेतत् ।

उपदेशे इत्येव, तीर्ण इत्यत्रापि[9] यथा स्यात् । इत्वे हि कृते रपरत्वे च न स्यात् । मा भूदेवम् । 'इट् सनि वा' (७. २. ४१/२६२५) इति विकल्पे विहिते 'यस्य विभाषा' (७. २. १५/३०२५) इति निष्ठायां प्रतिषेधो भविष्यति ? कस्य पुनः सा विभाषा ? ॠतः । यद्येवम् इत्वे[10] हि कृते नायमॄकारान्तो भविष्यति ? स्थानिवद्भावाद् भविष्यति । अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ? तस्मादनुवर्तयितव्यम् [11]उपदेशे इति । तथा च सति जागरितः, जागरितवान् इत्यत्रापि[12] प्राप्नोति, तदर्थम् एकाचः इत्यनुवर्तयितव्यम् । ऊर्णोतेस्तु –

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

प्रोर्णुतः[13] । प्रोर्णुतवान्[14] ॥

---

1. इटा नास्ति ब. 2. सम्मार्जिता इत्यधिकम् क. 3. ग्रन्थान्तरे ब. फ. ह. 4. अपि इत्यधिकम् ह. 5. इत्येतस्य धातोः इत्यधिकम् इ. 6. पूतः पूतवान् इत्यधिकम् क. 7. वृत्वा, वृतवान् नास्ति ब. 8. विदितवान् विदित्वा इत्यधिकम् क. इ. 9. प्रतिषेधो इत्यधिकम् इ. 10. रपरत्वे इत्यधिकम क. 11. उपदेशग्रहणम क. 12. प्रतिषेधः इत्यधिकम् क. 13. इति इत्यधिकम् ब. क. 14. इति इत्यधिकम् ई, ऊर्णुतः ऊर्णुतवान् इत्यधिकम् ब.

## सनि ग्रहगुहोश्च । (१२/२६१०)

ग्रह गुह इत्येतयोः उगन्तानां च सनि प्रत्यये परतः इडागमो न भवति । [1]जिघृक्षति । जुघुक्षति । उगन्तानां च – [2]रुरूषति । लुलूषति । 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि सनाम्' (७.२.४९/२६१८) इति [3]विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । [4]ग्रहेर्नित्यं प्राप्तः । गुहेः ऊदित्वाद् विकल्पः (७.२.४४/२२७९) ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । (१३/२२९३)

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां[5] लिटि प्रत्यये इडागमो न भवति । कृ – चकृव, चकृम । सृ – ससृव, ससृम । भृ – बभृव, बभृम । वृञ् – ववृव, ववृम । [6]वृङ – ववृवहे, ववृमहे । स्तु – तुष्टुव, तुष्टुम । द्रु – दुद्रुव, दुद्रुम । स्रु – सुस्रुव, सुस्रुम । श्रु – शुश्रुव, शुश्रुम ।

'सिद्धे सत्यारम्भो नियमार्थः' (कात. प. ६२), क्रादय एव लिटि अनिटः, ततोऽन्ये सेटः[7] इति । बिभिदिव, बिभिदिम । लुलुविव, लुलुविम । अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः,[8] वृञ्वृङोस्तु प्रत्ययाश्रयः, तदुभयस्या[9]प्ययं नियमः । वृञो हि थलि ववर्थ इति निपातनाद् व्यवस्था । स्तुद्रुस्रुश्रुवां तु 'ऋतो भारद्वाजस्य' (७.२.६३/२२९६) [10]इत्यस्मादपि नियमात् य इट् प्राप्नोति सोऽपि नेष्यते । तुष्टोथ । [11]दुद्रोथ । सुस्रोथ । शुश्रोथ ।

[८३२] कृञोऽसुट्कस्येति वक्तव्यम् । (म.भा. ३.२८६)

ससुट्कस्य इडागमो यथा स्यात् । सञ्चस्करिव, सञ्चस्करिम । 'ऋतो भारद्वाजस्य' (७.२.६३/२२९६) इत्येतदप्यसुट्कस्यैवेष्यते, सञ्चस्करिथ ॥

## श्वीदितो निष्ठायाम् । (१४/३०३९)

श्वयतेः [12]ईदितश्च निष्ठायामिडागमो न भवति । शूनः । शूनवान् । ईदितः – ओलजी (धा. पा. १२९१) – लग्नः । लग्नवान् । ओविजी (धा.पा. १२९०) – उद्विग्नः । उद्विग्नवान् । 'ओदितश्च' (८.२.४५/३०१९) इति निष्ठातकारस्य नकारः । दीपी (धा. पा. ११५१) – दीप्तः । दीप्तवान् । डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य । स हि नत्वार्थः, नत्वं च निष्ठातोऽनन्तरस्य विधीयते । उड्डीनः । उड्डीनवान् । निष्ठायाम् इत्यधिकारः 'आर्धधातुकस्येड्वलादेः' (७.२.३५/२१८४) इति यावत् ॥

---

1. ग्रहगुहोः इति पञ्चम्यर्थे षष्ठी इत्यधिकम् ह. 2. नुनूषति ब. 3. विकल्पेन ह. 4. ग्रहेः–विकल्पः नास्ति ब.क.ई. 5. अङ्गानाम् इत्यधिकम् क. 6. वृङ्वृञोः सामान्येन ग्रहणम् इत्यधिकम् क. 7. एव इत्यधिकम् क, लिटि इत्यधिकम् ब.ह. 8. सिद्धः इत्यधिकम् क. 9. अपि नास्ति क. 10. एतस्मादपि क. 11. एवम् इत्यधिकम् ब. 12. इदितां च क.

## यस्य विभाषा । (१५/३०२५)

यस्य [1]धातोः विभाषा क्वचिदिड् उक्तः तस्य निष्ठायां परतः इडागमो[2] न भवति । वक्ष्यति – 'स्वरतिसूतिसूयतिधूञूदितो वा' (७.२.४४/२२७९) । [3]विधूतः । विधूतवान् । गुहू – गूढः । गूढवान् । उदितो वा (७.२.५६/३३२८) – वृधु–वृद्धः । वृद्धवान् । तनिपतिदरिद्राणामुपसङ्ख्यानम् इति पते[4]र्विभाषितेट्कस्यापि 'द्वितीयाश्रितातीतपतित' (२.१.२४/६८६) इति निपातनात् इडागमः[5] ॥

## आदितश्च । (१६/३०३६)

आदितश्च धातोर्निष्ठायामिडागमो न भवति । ञिमिदा (धा. पा. १२४४) – मिन्नः । मिन्नवान् । [6]ञिक्ष्विदा (धा. पा. १२४५) – क्ष्विण्णः । क्ष्विण्णवान् । ञिष्विदा (धा. पा. ७४४) – स्विन्नः । स्विन्नवान् । चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः । वान्तः[7] ।

योगविभागकरणं किमर्थम्, आदितश्च विभाषा भावादिकर्मणोः [8]इत्येवं [9]पठितव्यम्, अन्यत्र हि भावादिकर्मभ्यां 'यस्य विभाषा' (७.२.१५/३०२५) इति प्रतिषेधो भविष्यति ? [10]ज्ञापनार्थमेतत् । ज्ञापयति – यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः (म. भा. ३.२८६) इति । तेन 'विभाषा गमहनविदविशाम्' (७.२.६८/३०९९) इत्यत्र[11] विदेर्लाभार्थस्य विभाषा इति ज्ञानार्थस्य प्रतिषेधो न भवति । विदितः[12] । विदितवान् ॥

## विभाषा भावादिकर्मणोः । (१७/३०५४)

[13]भावे आदिकर्मणि च आदितो धातोः [14]विभाषा निष्ठायामिडागमो [15]न भवति । [16]मिन्नमनेन, मेदितमनेन । प्रमिन्नः, प्रमेदितः । सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन । शकितो घटः कर्तुम्, शक्तो घटः कर्तुम् । [17]भावे न भवत्येव, शक्तमनेन । अस्यतेर्भावे, असितमनेन । आदिकर्मणि च न भवत्येव, [18]अस्तः काण्डः ॥

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । (१८/३०५८)

क्षुब्ध स्वान्त ध्वान्त लग्न म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासङ्ख्यं मन्थ मनः तमः सक्त अविस्पष्ट स्वर अनायास भृश इत्येतेष्वर्थेषु । [19]क्षुब्ध इति भवति मन्थाभिधानं चेत् । क्षुब्धो मन्थः । [20]क्षुभितम्

1. धातोः नास्ति इ. 2. नित्यम् इत्यधिकम् फ. 3. धोता धविता इत्यधिकम् ह, स्वृतः स्वृतवान् सूतिः सूयतिः सूतः सूतवान् धूतः धूतवान् इत्यधिकम् इ. 4. विभाषितेटोऽपि क. 5. भवति इत्यधिकम् क. 6. नास्ति क. 7. इति इत्यधिकम् क. 8. इत्येकयोगेनैव सिद्धम् क. 9. वक्तव्यम् ब. 10. तत् क्रियते ज्ञापनार्थम् क. 11. विशिना तौदादिकेन साहचर्यात् इत्यधिकम् ब. 12. विदित्वा इत्यधिकम् इ. 13. आदितः इति वर्तते इत्यधिकम् क. 14. विभाषा नास्ति क. 15. वा क. 16. पूर्वेण प्रतिषेधे प्राप्ते विकल्पार्थं च वचनम् इत्यधिकम् क. 17. भावे – काण्डः नास्ति क. 18. अस्तः काण्डः नास्ति ह. 19. क्षुभ सञ्चालने इत्यधिकम् ह. 20. क्षुभितोऽन्यः क्षुभितमनेन क.

अन्यत्। क्षुभितं मन्थेन। [1]क्षुब्धा गिरिनदी इत्येवमाद्युपमानात् भविष्यति। स्वान्तम् इति मनोऽभिधानं चेत्। स्वनितम् अन्यत्। स्वनितो मृदङ्गः। स्वनितं मनसा। ध्वान्तम् इति भवति तमोऽभिधानं चेत्। ध्वनितम् अन्यत्[2]। ध्वनितो मृदङ्गः। ध्वनितं तमसा। लग्नम् इति भवति सक्तं चेत्। लगितमन्यत्। म्लिष्टम् इति भवति [3]अविस्पष्टं चेत्। म्लेच्छितम् अन्यत्। इत्वमप्येकारस्य निपातनादेव। विरिब्धम् इति स्वरश्चेत्। [4]विरेभितम् अन्यत्। 'रेभृ शब्दे' (धा. पा. ३८५) इत्यस्यैतन्निपातनम्। अन्ये तु विरिभितम् अन्यत् इति पठन्ति। रिंभि सौत्रं धातुं [5]पठन्ति, ते विरिभितम् इति प्रत्युदाहरन्ति। फाण्टम् इति भवति अनायासश्चेत्। फाणितम् अन्यत्। यदशृतमपिष्टं च कषायमुदकसम्पर्कमात्रात् विभक्तरसमीषदुष्णं तत् फाण्टम्[6]। तदल्पप्रयत्न-साध्यत्वादनायासेन लक्ष्यते। बाढम् इति भवति भृशं चेत्। बाहितम् अन्यत्। 'बाहृ प्रयत्ने' (धा. पा. ६४५) इत्यस्य धातोरेतन्निपातनम्। अतिशयश्च भृशम् इहोच्यते॥

## धृषिशसी वैयात्ये। (१९/३०५९)

वियातस्य भावो वैयात्यम् प्रागल्भ्यम्, अविनीतता। तत्र धृष शस इत्येतयोः निष्ठायाम् इडागमो न भवति। धृष्टोऽयम्[7]। विशस्तोऽयम्। धृषेः 'आदितश्च' (७.२.१६/३०३६) इति प्रतिषेधः सिद्ध एव, शसेरपि 'उदितो वा' (७.२.५६/३३२८), 'यस्य विभाषा' (७.२.१५/३०२५) इति? नियमार्थं वचनम्, [8]धृषिशस्योः वैयात्ये एव इड् न भवति। भावादिकर्मणोरपि वैयात्ये धृषिर्नास्ति। धृष्टः। विशस्तः। वैयात्ये इति किम्? धर्षितः। विशसितः॥

## दृढः स्थूलबलयोः। (२०/३०६०)

दृढ इति निपात्यते स्थूले बलवति चार्थे। दृढः स्थूलः। दृढो बलवान्। किमत्र निपात्यते? दृंहेः क्तप्रत्यये इडभावः, हकारनकारयोः लोपः, परस्य ढत्वम्। अथ दृहिः प्रकृत्यन्तरमस्ति? तत्राप्येतदेव सर्वं न-लोपवर्जम्, नकारस्याभावात्। हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम्। ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वात् द्रढिमा, द्रढीयान्, द्रढयति इत्यत्र 'र ऋतो हलादेर्लघोः' (६.४.१६१/१७८५) इति रेफो न स्यात्, इह च परिद्रढय्य गत इति 'ल्यपि लघुपूर्वात्' (६.४.५६/३४३६) इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं पारिदृढी कन्या इति गुरूपोत्तमलक्षणः ष्यङ (४.१.७८/११९८) च प्रसज्येत। स्थूलबलयोः इति किम्? दृंहितम्। दृहितम्॥

## प्रभौ परिवृढः। (२१/३०६१)

परिवृढ इति निपात्यते प्रभुश्चेद् भवति। परिवृढः कुटुम्बी। पूर्वेण [9]तुल्यमेतत्। वृंहेर्निपातनम्। वृहिश्च यदि प्रकृत्यन्तरमस्ति[10] तस्यापि [11]तदेव सर्वम्। हलोपनिपातनस्य च तदेव प्रयोजनम्। परिव्रढयति। परिव्रढय्य गतः। [12]पारिवृढी कन्या। परिवृढमाचष्टे [13]इति विगृह्य वृढशब्दादेव णिजुत्पद्यते। संग्रामयतेरेव सोपसर्गाण् [14]णिजुत्पत्तिरिष्यते नान्यस्मात् इति। तथा सति[15] परिव्रढयति इति 'तिङ्ङतिङः' (८.१.२८/३९३५) इति निघातः[16]। परिव्रढय्य इत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति। प्रभौ इति किम्? परिवृंहितम्। परिवृहितम्॥

---

1. क्षुब्धः समुद्रः क. इ. 2. स्वन ध्वन शब्दे इत्यधिकम् ह. 3 अविस्पष्टार्थं क. 4. विरभितम् क. 5. वर्णयन्ति ई. ड. 6. इत्युच्यते इत्यधिकम् क. 7. बटुः इत्यधिकम् क. ह. 8. धृषिशसोः क. 9. समानं निपातनमेतत् क. ब, पूर्वेण समानं वृंहेर्निपातनं एतत् ई. इ. ह. 10. तदा इत्यधिकम् इ. ई. क. 11. एतदेव निपातनं नलोपवर्जम् 12. पारिव्रढिकी कन्या क. 13. इत्येवम् क. 14. णिजुत्पाद्यते इ. 15. च इत्यधिकम् क. ई. इ. 16. प्रसिद्धो भवति इत्यधिकम् क. ब.

## कृच्छ्रगहनयोः कषः । (२२/३०६२)

[1]कृच्छ्र गहन इत्येतयोरर्थयोः [2]कषेर्धातोः निष्ठायाम् इडागमो न भवति । कष्टोऽग्निः । कष्टं व्याकरणम् । [3]ततोऽपि कष्टतराणि सामानि । कृच्छ्रं दुःखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रम् इत्युच्यते । गहने – कष्टानि वनानि । कष्टाः पर्वताः । कृच्छ्रगहनयोः इति किम् ? कषितं सुवर्णम् ।।

## घुषिरविशब्दने । (२३/६०६३)

घुषेर्धातोरविशब्दने[4]ऽर्थे निष्ठायाम् इडागमो न भवति । घुष्टा रज्जुः । घुष्टौ पादौ । अविशब्दने इति किम् ? अवघुषितं वाक्यमाह । विशब्दनं प्रतिज्ञानम् । 'घुषिर[5]शब्दार्थे' (धा.पा. ६५३) इति भूवादिषु पठ्यते । 'घुषिर् विशब्दने' (धा.पा. १७२७) इति चुरादिषु । [6]तयोरिह सामान्येन ग्रहणम् । विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज् विशब्दनार्थस्यानित्यः इति । तेनायमपि प्रयोगः उपपन्नो भवति, महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः । स्वाभिप्रायं शब्देनाविष्कृतवन्तः इत्यर्थः ।।

## अर्देः संनिविभ्यः । (२४/३०६४)

सम् नि वि इत्येतेभ्य उत्तरस्य अर्देः निष्ठायामिडागमो न भवति । समर्णः । न्यर्णः । व्यर्णः । अर्देः इति किम् ? समेधितः । संनिविभ्यः इति किम् ? अर्दितः ।।

## अभेश्चाविदूर्ये । (२५/३०६५)

अभिशब्दादुत्तरस्य अर्देः आविदूर्येऽर्थे निष्ठायामिडागमो न भवति । [7]अभ्यर्णा सेना[8] । अभ्यर्णा शरत् । आविदूर्ये इति किम् ? अभ्यर्दितो वृषलः । शीतेन पीडितः इत्यर्थः । विदूरम् विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भावः आविदूर्यम् । एतस्मादेव निपातनात् 'न नञ्पूर्वात् तत्पुरुषात्' (५.१.१२१/१७८३) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति ।।

## णेरध्ययने वृत्तम् । (२६/३०६६)

ण्यन्तस्य वृत्तेर्निष्ठाया[9]मध्ययनार्थे वृत्तमिति इडभावः णिलुक् च निपात्यते । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं [10]देवदत्तेन । अध्ययने इति किम् ? [11]वर्तितमन्यत्र । वृतिरयमकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति । तेन निर्वृत्तम् इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो [12]दृश्यते । [13]तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेन इति [14]भविष्यति इति निपातनमनर्थकम् ? तत् क्रियते [15]यदापि णिच्चैव ण्यर्थोऽभिधीयते तदा वर्तितम् इत्यध्ययने मा भूत् इति केचित् । [16]अपरे तु वर्तितो गुणो देवदत्तेन इत्यपि इच्छन्ति ।।

---

1. कर्षान्तिधातोः इत्यधिकम् क. 2. कर्षतेः ब. 3. ततोऽपि नास्ति क. 4. अर्थे नास्ति क. 5. विशब्दने क. 6. द्वयोरिह क.ब.ई, सोऽपि इह गृह्यते इ. 7. अभ्यर्णे शेते ब. 8. समीपस्था इत्यर्थः इत्यधिकम् ह. 9. अध्ययनेऽर्थे ड. 10. देवदत्तेन नास्ति क. 11. वर्तितव्यम् क. 12. गृह्यते क. 13. तदिहापि क. 14. यस्य विभाषा इति प्रतिषेधो भवति क. 15. यदा णिच्चेरर्थे क. 16. वाक्यमिदं नास्ति क.

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । (२७/३०६८)

णेः [1]इत्यनुवर्तते । [2]दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते । दान्तः, दमितः । शान्तः, शमितः । पूर्णः, पूरितः । [3]दस्तः, दासितः । स्पष्टः, [4]स्पाशितः । छन्नः, छादितः । ज्ञप्तः, [5]ज्ञपितः । इट्प्रतिषेधो णिलुक् च निपात्यते । ज्ञप्तेस्तु भरज्ञपिसनाम् इति विकल्पविधानात् 'यस्य विभाषा' (७. २. १५/३०२५) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ॥

## रुष्यमत्वरसङ्घुषास्वनाम् । (२८/३०६९)

[6]वा इति वर्तते । रुषि अम त्वर सङ्घुष आस्वन इत्येतेषां निष्ठायां वा इडागमो न भवति । रुष्टः. रुषितः । [7]'तीषसहलुभरुषरिषः' (४. २. १०२/१३२७) इति विकल्पविधानात् 'यस्य विभाषा' (७. २. १५/३०२५) इति प्रतिषेधे प्राप्ते [8]विकल्पार्थं वचनम् । अम – अभ्यान्तः, अभ्यमितः । त्वर – तूर्णः, त्वरितः । 'आदितश्च' (७. २. १६/३०३५) इति प्रतिषेधे प्राप्ते [9]वचनम् । सङ्घुष – सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ । सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह । सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ । सम्पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति । आस्वन – आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः । आस्वान्तं मनः, आस्वनितं मनः । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽपि परत्वादयं[10] विकल्पः क्षुब्धस्वान्त (७. २. १८/३०५८) इति निपातनं बाधते ॥

## हृषेर्लोमसु । (२९/३०७०)

[11]लोमसु वर्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति । हृष्टानि लोमानि, हृषितानि लोमानि । हृष्टं लोमभिः, [12]हृषितं लोमभिः । हृष्टाः केशाः, हृषिताः केशाः । हृष्टं केशैः हृषितं केशैः । 'हृषु [13]अलीके' (धा. पा. ७०९) इत्युदित्वान् निष्ठायामनिट्, 'हृष तुष्टौ' (धा. पा. १२३०) इत्ययं सेट्, [14]तयोरुभयोरिह ग्रहणम् इत्युभयत्र विभाषा इयम् । लोमानि [15]मूर्धजानि [16]अङ्गजानि च सामान्येन गृह्यन्ते, यथा लोमनखं स्पृष्ट्वा शौचं कर्तव्यम् इति । तद्विषये च [17]हर्षे वर्तमानो [18]लोमसु वर्तते इत्युच्यते । लोमसु इति किम् ? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्तः इति तुष्ट्यर्थस्य ।

[८३३] विस्मितप्रतिघातयोश्चेति वक्तव्यम् । (म.भा.३.२९०)

हृष्टो देवदत्तः, हृषितो देवदत्तः[19] । विस्मितः इत्यर्थः । हृष्टाः दन्ताः, हृषिताः दन्ताः । प्रतिहताः इत्यर्थः ॥

---

1. वर्तते क. 2. दान्तशान्तपूर्णदस्तस्पृष्टच्छन्नज्ञप्त इत्येते ण्यन्ता निष्ठायां निपात्यन्ते क. इ, दम्यादीनां धातूनां निष्ठायां वा इडागमो निपात्यते ब. 3. दरु हिंसायाम् दसु च इत्यधिकम् ह. 4. स्पशितः ड. 5. ज्ञापितः क. इ. ह. 6. वाक्यमिदं नास्ति क. 7. इट् इत्यधिकम् ब. ह. ड. 8. विकल्प इष्यते ई, इदं इत्यधिकम् ह. 9. अनेन विकल्पः क, अनेन विकल्पः प्राप्तः ई. 10. एव इत्यधिकम् क. 11. वा इति वर्त. इत्यधिकम् क. 12. उदाहरणमिदं नास्ति क. 13. आलीक्ये क. 14. तेन इत्यधिकम् क. 15. मूर्धजाः इते 16. स्वाङ्गजानि इ. 17. हृषिर्वर्तमानो क. 18. लोमसु नास्ति क. 19. इति इत्यधिकम् क.

## अपचितश्च । (३०/३०७१)

अपचितः इति वा निपात्यते । अपपूर्वस्य चायतेः निष्ठायाम् अनिट्त्वं चिभावश्च निपात्यते । अपचितोऽनेन गुरुः, अपचायितोऽनेन गुरुः[1] ।

[८३४] क्तिनि नित्यमिति वक्तव्यम् । (म.भा. ३.२९०)

[2]क्तिनि नित्यं चिभावो[3] निपात्यते । अपचितिः ॥

## हु ह्वरेश्छन्दसि । (३१/३५७९)

ह्वरतेः धातोर्निष्ठायां छन्दसि[4] हु इत्ययमादेशो भवति । हुतस्य चाहुतस्य च । 'अहुतमसि हविर्धानम्' (वा.सं. १.७) । छन्दसि इति किम् ? ह्वृतम् ॥

## अपरिह्वृताश्च । (३२/३५८०)

अपरिह्वृताः इति निपात्यते छन्दसि विषये । [5]हु इत्येतस्यादेशस्याभावो निपात्यते । 'अपरिह्वृताः [6]सनुयाम वाजम्[7]' (ऋ. १.१००.१९) ॥

## सोमे ह्वरितः । (३३/३५८१)

ह्वरितः इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते [8]छन्दसि विषये, सोमश्चेद् [9]भवति । मा नः[10] सोमो ह्वरितः । विह्वरितस्त्वम् ॥

## ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च । (३४/३५८२)

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इत्येतानि[11] छन्दसि विषये निपात्यन्ते । तत्र ग्रसित स्कभित स्तभित उत्तभित इति ग्रसु स्कम्भु स्तम्भु इत्येतेषाम् उदित्त्वान् निष्ठायाम् इट्प्रतिषेधे प्राप्ते इडागमो निपात्यते । 'ग्रसितं वा एतत् सोमस्य' (मै. ३.७.४) । ग्रस्तम् इति भाषायाम् । स्कभित – '[12]विष्कभिते अजरे' (ऋ. ६.७०.१) । विष्कब्ध इति भाषायाम् । स्तभित – '[13]येन स्वः स्तभितम्' (ऋ. १०.१२१.५) । स्तब्धम् इति भाषायाम् । उत्तभित – 'सत्येनो[14]त्तभिता भूमिः' (ऋ.१०.८५.१) । उत्तब्धा इति भाषायाम् । उत्तभिता इति उत्पूर्वस्य [15]निपातसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति ।

---

1. पूजितः इत्यर्थः इत्यधिकम् क. 2. वाक्यमिदम् नास्ति ह. 3. वक्तव्यः ई. 4. विषये इत्यधिकम् इ. 5. नञ्परिपूर्वस्य ह्वरतेः निष्ठायां ह्रु इत्ययमादेशो भवति । तस्यादेशस्याभावो निपात्यते इत्यधिकम् क. 6. सनुयाम नास्ति क. 7. अग्ने इत्यधिकम् ह. 8. छन्दसि विषये नास्ति ड. 9. तत् इत्यधिकम् ई, अभिधेयो भवति इत्यधिकम् ह. 10. मा नः सोम ह्वरितो विह्वरस्व ड. मा.श्रौ. (2.5.4.24) 11. शब्दरूपाणि इत्यधिकम् क. 12. स्कभितो रक्षति क. 13. स्कभिती येन क. 14. उत्तम्भितोऽग्निः क. 15. निपातनात् अन्यपूर्वस्य न भवति क.

चत्त, विकस्त इति चतेः कसेश्च विपूर्वस्य निष्ठायाम् इडभावो निपात्यते। चत्ता वर्षेण [1]विद्युत् चतिता इति भाषायाम्। विकस्त – 'उत्तानाया हृदयं यद् विकस्तम्' (मै. २. ७. ४)। विकसितम् इति भाषायाम्। निपातनं बहुत्वापेक्षम्, विकस्ताः इति बहुवचनं [2]कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः।

विशस्तृ शंस्तृ शास्तृ इति शसेर्विपूर्वस्य शंसेः शासेश्च तृचि इडभावो निपात्यते। विशस्तृ–'एकस्त्वष्टुरश्वस्याविशस्ता' (ऋ. १.१६२.१९)। विशसिता इति भाषायाम्। शंस्तृ–'उत शंस्ता सुविप्रः' (ऋ. १.१६२.५)। शंसिता इति भाषायाम्। [शास्तृ – '[3]प्रशास्ता' (ऋ. १.९४.६)। प्रशासितम् इति भाषायाम्।

तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः इति तरतेः वृङवृञोश्च तृचि उट् ऊट् इत्येतावागमौ निपात्येते। 'तरुतारं रथानाम्' (ऋ. १०.१७८.१), तरूतारम्। तरितारम्, तरीतारम् इति भाषायाम्। वरुतारं रथानाम्, वरूतारं रथानाम्। वरितारम्, वरीतारम् इति भाषायाम्। 'वरुत्री त्वा देवी विश्वदेव्यवती' (मै. २. ७. ६)। जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम्। अतन्त्रं चैतत्। इदमपि हि भवति - अहोरात्राणि वै वरूत्रयः इति। छान्दसिकमत्र ह्रस्वत्वम्। प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्। वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः।

उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम इत्येतेषां च तिपि शपः इकारादेशो निपात्यते, शपो लुग्वा, इडागमः। अग्निरुज्ज्वलिति। उज्ज्वलति इति भाषायाम्। क्षरिति – स्तोकं क्षरिति। क्षरति इति भाषायाम्। क्षमिति – स्तोमं क्षमिति। क्षमति इति भाषायाम्। वमिति – यः सोमं वमिति। वमति इति भाषायाम्। अमिति – अभ्यमिति वरुणः। अभ्यमति इति भाषायाम्। इतिकरणं प्रदर्शनार्थम् तेन क्वचित् ईकारो भवति, 'रविमभ्यमीति वरुणः' (वा. २२.५) इत्यपि हि वेदे पठ्यते॥

## आर्धधातुकस्येड् वलादेः। (३८/२१८४)

[4]छन्दसि इति निवृत्तम्। आर्धधातुकस्य वलादेरिडागमो भवति। लविता। लवितुम्। लवितव्यम्। [5]पविता। पवितुम्। पवितव्यम्। आर्धधातुकस्य इति किम्? आस्ते। शेते। वस्ते[6]। 'रुदादिभ्यः सार्वधातुके' (७.२.७६/२४७४) इत्येतस्मिन् नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवम् भवति इति आर्धधातुकग्रहणं क्रियते। वलादेः इति किम्? लव्यम्। [7]पव्यम्। लवनीयम्। [8]पवनीयम्। इट् इति [9]वर्तमाने पुनः इड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्॥

---

1. विद्युतः क. 2. कृतं नास्ति क. 3. प्रशास्ता पोता जपपुरोहितः इ. 4. वाक्यमिदं नास्ति क. इ, न इति निवृत्तम् ड. 5. पठ पठिता पठितुम् पठितव्यम् ड. 6. इति इत्यधिकम् ब. ई. इ. 7. पठ्यम् ड, लव्यं पव्यम् नास्ति क, नास्ति ई. इ ह. 8. पठनीयम् ड. 9. अनुवर्तमाने क.

## स्नुक्रमोरनात्मनेपदनिमित्ते । (३६/२३२३)

नियमार्थमिदम् । [1]स्नुक्रमोः आर्धधातुकस्य वलादेः इडागमो भवति, न चेत् [2]स्नुक्रमौ [3]आत्मनेपदस्य [4]निमित्तं भवतः । क्व च तावात्मनेपदस्य [5]निमित्तम् ? [6]यत्रात्मनेपदं तदाश्रयं भवति, भावकर्म[7]कर्मकर्तृकर्मव्यतिहाराः क्रमेर्वृत्त्यादयश्च । तेनायं सत्यात्मनेपदे प्रतिषेधो भवति न असति इति । प्रतिषेधफलं चेदं सूत्रम् । स्नुक्रमो[8]रुदित्वात् इट् सिद्ध एव । प्रस्नविता । प्रस्नवितुम् । प्रस्नवितव्यम् । प्रक्रमिता । प्रक्रमितुम् । प्रक्रमितव्यम् । [9]अनात्मनेपदनिमित्ते इति किम् ? प्रस्नोषीष्ट । प्रक्रंसीष्ट । प्रस्नोष्यते । प्रक्रंस्यते । प्रसुस्नूषिष्यते । प्रचिक्रंसिष्यते । सर्वत्रैवात्र स्नौतिः क्रमिश्च आत्मनेपदस्य निमित्तम् । सनन्तादपि 'पूर्ववत्सनः' (१.३.६२/१७६४) इति आत्मनेपदं विधीयते । निमित्तग्रहणं किम् ? सीयुडादे[10]स्तत्परपरस्य च प्रतिषेधार्थम् । इह [11]तु प्रस्नवितेवाचरति इति प्रस्नवित्रीयते इति क्यङन्तमात्मनेपदस्य निमित्तम्, [12]न स्नौतिः ।

[८३५] क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्या[13]त्मनेपदे कृति प्रतिषेधो वक्तव्यः । (म.भा. ३.२९२)

प्रक्रन्ता । उपक्रन्ता । कर्तरि इति किम् ? प्रक्रमितव्यम् । उपक्रमितव्यम् । आत्मनेपदविषयात् इति किम् ? निष्क्रमिता । स्नौतेः सनि किति च प्रत्यये[14] 'श्र्युकः किति' (७.२.११/२३८१), 'सनि ग्रहगुहोश्च' (७.२.१२/२६१०) [15]इत्येव प्रतिषेधो भवति । प्रसुस्नूषति । प्रस्नुतः । प्रस्नुतवान् ॥

## ग्रहोऽलिटि दीर्घः । (३७/२५६२)

ग्रहः उत्तरस्य इटः अलिटि [16]दीर्घो भवति । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । अलिटि इति किम् ? जगृहिव । जगृहिम । प्रकृतस्येटो दीर्घत्वमिदम्[17], चिण्वदिटो न भवति । ग्राहिता । ग्राहिष्यते ॥

## वृतो वा । (३८/२३९१)

[18]वृ इति वृङ्वृञोः सामान्येन ग्रहणम् । तस्मादुत्तरस्य ॠकारान्तेभ्यश्च इटो वा दीर्घो भवति । वरिता, वरीता[19] । प्रावरिता, प्रावरीता । ॠकारान्तेभ्यः – तरिता, तरीता[20] । आस्तरिता, आस्तरीता[21] । वृतः इति किम् ? करिष्यति । हरिष्यति । [22]अलिटि इत्येव, ववरिथ । तेरिथ ॥

---

1. स्नु क्रम इत्येतयोः क. इ. 2. स्नुक्रमी ई. 3. कृत्यात्मनेपदस्य निमित्ते ई. 4. निमित्ते क. 5. निमित्ते क. ई. 6. यत्रैव क. 7. कर्म नास्ति क. इ. 8. उदात्तत्वात् ई. इ, स्नुक्रमोरुदात्तत्वात् इट् ड. 9. आत्मनेपदनिमित्ते इति किम् ? क. 10. तपरकृत्परस्य क. 11. तु नास्ति क. 12. न स्नौतिः नास्ति ह. 13. आत्मनेपदकृति क. 14. परतः इत्यधिकम् ई. इ. 15. इति क.ई. 16. प्रत्यये परतः इत्यधिकम् क. 17. तेन इत्यधिकम् क. 18. दीर्घ इति वर्तते इत्यधिकम् क. 19. वरितुम् वरीतुम् विवरितव्यम् विवरीतव्यम् प्रावरितुम् प्रावरीतुम् प्रावरितव्यम् प्रावरीतव्यम् इत्यधिकम् क. 20. तरितुम् तरीतुम् तरितव्यम् तरीतव्यम् इत्यधिकम् क. 21. आस्तरितुम् आस्तरीतुम् आस्तरितव्यम् आस्तरीतव्यम् इत्यधिकम् क. 22. वाक्यमिदं नास्ति क.इ.ई.ह.

## न लिङि। (३९/२५२९)

[1]वृतः उत्तरस्य इटो लिङि[2] दीर्घो न भवति। विवरिषीष्ट। प्रावरिषीष्ट। आस्तरिषीष्ट। विस्तरिषीष्ट॥

## सिचि च परस्मैपदेषु। (४०/२३९२)

परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घः न भवति[3]। प्रावारिष्टाम्। प्रावारिषुः। [4]अतारिष्टाम्। अतारिषुः। आस्तारिष्टाम्। आस्तारिषुः। परस्मैपदेषु इति किम्? प्रावरिष्ट, प्रावरीष्ट॥

## इट् सनि वा। (४१/२६२५)

[5]वृतः सनि वा इडागमो भवति। वुवूर्षते, विवरिषते, विवरीषते। प्रावुवूर्षति, प्राविवरिषति, प्राविवरीषति। ॠकारान्तेभ्यः–तितीर्षति, तितरिषति, तितरीषति। आतिस्तीर्षते, आतिस्तरिषते, आतिस्तरीषते। 'सनि ग्रहगुहोश्च' (७. २. १२/२६१०) इति इट्प्रतिषेधे प्राप्ते [6]पक्षे इडागमो विधीयते। [7]इटश्च 'वृतो वा' (७. २. ३८/२३९१) इति पक्षे दीर्घः। चिकीर्षति, जिहीर्षति इत्यत्रोपदेशाधिकारात् लाक्षणिकत्वाच् [8]च इडागमो न भवति॥

## लिङ्सिचोरात्मनेपदेषु। (४२/२५२८)

[9]वृतो [10]लिङि सिचि च आत्मनेपदपरे वा इडागमो भवति। वृषीष्ट, वरिषीष्ट। प्रावृषीष्ट, प्रावरिषीष्ट। आस्तरिषीष्ट, आस्तीर्षीष्ट। सिचि खल्वपि – अवृत, अवरिष्ट, अवरीष्ट। प्रावृत, प्रावरिष्ट, प्रावरीष्ट। [11]आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट। आत्मनेपदेषु इति किम्? प्रावारिष्टाम्। प्रावारिषुः। [12]लिङः प्रत्युदाहरणं न दर्शितम्, असम्भवात् यासुटोऽवलादित्वात् इति॥

## ॠतश्च संयोगादेः। (४३/२५२६)

[13]ॠदन्ताद् धातोः संयोगादेः उत्तरयोः लिङ्सिचोरा[14]त्मनेपदेषु वा इडागमो भवति। [15]ध्वृषीष्ट, ध्वरिषीष्ट। स्मृषीष्ट, स्मरिषीष्ट। [16]अध्वृषाताम्, अध्वरिषाताम्। अस्मृषाताम्, अस्मरिषाताम्। ॠत इति किम्? च्योषीष्ट। प्लोषीष्ट। [17]अच्योष्ट। [18]अप्लोष्ट। संयोगादेः इति किम्? कृषीष्ट[19]। [20]हृषीष्ट। अकृत। अहृत। आत्मनेपदेषु इत्येव, अध्वार्षीत्। अस्मार्षीत्। संस्कृषीष्ट, समस्कृत इत्यत्रोपदेशाधिकारात्, अभाक्तत्वाच्च सुट [21]इडागमो न भवति॥

---

1. वृत इति वर्तते इत्यधिकम् क. 2. परतः इत्यधिकम् क. 3. प्रावरिषीष्ट इत्यधिकम् क. 4. व्यशारिष्टाम् व्यशारिषुः इत्यधिकम् ब. क. ह. 5. उत्तरस्य सनि प्रत्यये परतः क, उत्तरस्य इत्यधिकम् इ. ई. 6. पक्षे नास्ति क. 7. इट्पक्षे क. 8. वा क. ह. 9. वृत इति वर्तते इत्यधिकम् क. 10. उत्तरे इत्यधिकम् क. 11. ॠकारान्तरेभ्यः इत्यधिकम् क. 12. वाक्यमिदं नास्ति क. ब. 13. ॠकारान्तान् ब. क. 14. आत्मनेपदे क. 15. वृषीष्ट वरिषीष्ट क. 16. सिचः खल्वपि इत्यधिकम् ब. क. 17. नास्ति ई. 18. नास्ति क. 19. अकृषत इत्यधिकम् ई. ब. ह, वृषीष्ट अवृषत इत्यधिकम् क. 20. नास्ति ई. 21. इतीट् क.

## स्वरतिसूतिसूयतिधूञूदितो वा। (४४/२२७९)

स्वरति सूति सूयति धूञ् इत्येतेभ्यः, ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। स्वर्ता, स्वरिता। सूति – प्रसोता, प्रसविता। सूयति – सोता, सविता। धूञ् – धोता, धविता। ऊदिद्भ्यः खल्वपि– गाहू–विगाढा, विगाहिता। गुपू – गोप्ता, गोपिता। वा इति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम्। सूति-सूयत्योर्विकरणनिर्देशः 'षू प्रेरणे' (धा.पा १४०९) इत्यस्य निवृत्त्यर्थः। धूञ् इति [1]सानुबन्धकस्य निर्देशो 'धू विधूनने' (धा.पा. १३९९) इत्यस्य निवृत्त्यर्थः। सविता, धुविता इत्येव नित्यमेतयोर्भवति। स्वरतेरेतस्माद् विकल्पात् 'ऋद्धनोः स्ये' (७.२.७०/२३६६) इत्येतद्भवति विप्रतिषेधेन। स्वरिष्यति। किति तु प्रत्यये 'श्र्युकः किति' (७.२.११/२३८१) इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा॥

## रधादिभ्यश्च। (४५/२५१८)

'रध हिंसासंसिद्ध्योः' (धा.पा. ११९४) इत्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। रद्धा, रधिता। नंष्टा, नशिता। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता[1], स्नोग्धा, स्नोढा, स्नोहिता। स्नेग्धा, स्नेढा, स्नेहिता। [2]क्रादिनियमाल् [3]लिटि रधादिभ्यः परत्वाद् विकल्पं केचिदिच्छन्ति[4]। [5]अपरे पुनराहुः, पूर्वविधेरिण्निषेधविधानसामर्थ्यात् बलीयस्त्वं प्रतिषेध-नियमस्य इति नित्यमिटा भवितव्यम्। ररन्धिव, ररन्धिम [6]इति भवति॥

## निरः कुषः। (४६/२५६०)

निर् इत्येवंपूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। निष्कोष्टा, निष्कोषिता। निष्कोष्टुम्, निष्कोषितुम्। निष्कोष्टव्यम्, निष्कोषितव्यम्। निरः इति किम्? कोषिता। कोषितुम्। कोषितव्यम्। निसः इति वक्तव्ये निरः इति [7]निर्देशेन [8]रेफान्तमुपसर्गान्तरमस्ति इति [9]ज्ञाप्यते। [10]तस्य हि निलयनम् इति 'उपसर्गस्यायतौ' (८.२.१९/२३२६) इति लत्वं भवति। निसो हि रुत्वस्य असिद्धत्वाल् लत्वं न स्यात्॥

## इण्निष्ठायाम्। (४७/३०४५)

[11]निरः कुषो निष्ठायाम् इडागमो भवति। निष्कुषितः। निष्कुषितवान्। इड्ग्रहणं नित्यार्थम्। आरम्भो हि 'यस्य विभाषा' (७.२.१५/३०२५) इत्यस्य बाधकः, अन्यथा हि [12]विकल्पार्थ एव स्यात्। अत्रैव [13]नित्यमिडागमः, उत्तरत्र विकल्प एव इति॥

---

1. सानुबन्धनिर्देशः क. 2. क्र्यादिनियमात् ब. 3. इटि क. 4. ररन्ध ररन्धिव ररन्धिम इत्यधिकम् क. 5. अपरे – भवति नास्ति क. 6 इत्येवम् ब. 7. निर्देशो क. 8. रेफान्तमप्युपसर्गान्तरम् क. 9. ज्ञायते ब, ज्ञापनार्थं क, विज्ञायते इ. 10. तेन निलयनम् क. 11. निर् इति वर्तते इत्यधिकम् क. 12. विकल्पस्य एव क, विकल्प एव स्यात् ई. 13. च नित्य इडागमः ई.

## तीषसहलुभरुषरिषः। (४८/२३४०)

तकारादावार्धधातुके इषु सह लुभ रुष रिष इत्येतेभ्यो[1] वा इडागमो भवति। इषु – एष्टा, एषिता। 'इषु इच्छायाम्' (धा. पा. १३५२) इत्यस्यायं विकल्प इष्यते। यस्तु 'इष गतौ' (धा. पा. ११२८) इति दैवादिकः, तस्य प्रेषिता, प्रेषितुम्, प्रेषितव्यम् इति नित्यं भवति। [2]योऽपि 'इष आभीक्ष्ण्ये' (धा. पा. १५२६) इति क्र्यादौ पठ्यते, तस्याप्येवमेव। तदर्थमेव 'तीषसह' इति सूत्रे केचित् उदितमिषं पठन्ति। सह – सोढा, सहिता। लुभ – लोब्धा, लोभिता। रुष – रोष्टा, रोषिता। रिष – रेष्टा, रेषिता। तीति किम्? [3]एषिष्यति॥

## सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। (४९/२६१८)

इवन्तानां धातूनाम्, ऋधु भ्रस्ज दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सन् इत्येतेषां च सनि वा इडागमो भवति। इवन्तानाम्[4]–दिदेविषति, दुद्यूषति। सिसेविषति, सुस्यूषति। ऋधु–अर्दिधिषति, [5]ईर्त्सति। भ्रस्ज–बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति। दम्भु – दिदम्भिषति, धिप्सति, धीप्सति। श्रि – उच्छिश्रयिषति, उच्छिश्रीषति। स्वृ – सिस्वरिषति, सुस्वूर्षति। यु – यियविषति, युयूषति। ऊर्णु – प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति। भर इति भृञ् इत्येतस्य भौवादिकस्य ग्रहणम्, शपा निर्देशात्। बिभरिषति, बुभूर्षति। ज्ञपि – जिज्ञपयिषति, ज्ञीप्सति। सन् – सिसनिषति, सिषासति।

केचिदत्र 'भरज्ञपिसनितनिपतिदरिद्राणाम्' इति पठन्ति। तनि – तितनिषति, तितंसति, तितांसति। पति – पिपतिषति, पित्सति। दरिद्रा – दिदरिद्रिषति, दिदरिद्रासति। सनि इति किम्? देविता। भ्रष्टा॥

## क्लिशः क्त्वानिष्ठयोः। (५०/३०४९)

क्लिशः [6]क्त्वानिष्ठयोः वा इडागमो भवति। क्लिष्ट्वा, क्लिशित्वा। क्लिष्टः, क्लिशितः। क्लिष्टवान्, क्लिशितवान्। 'क्लिशू विबाधने' (धा. पा. १५२३) इत्यस्य क्त्वायां विकल्पः सिद्ध एव, निष्ठायां [7]तु 'यस्य विभाषा' (७.२.१५/३०२५) इति प्रतिषेधः प्राप्नोति। 'क्लिश उपतापे' (धा. पा. ११६२) इत्येतस्य तु क्त्वायां निष्ठायां च नित्यमिडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते॥

## पूङश्च। (५१/३०५०)

पूङश्च [8]क्त्वानिष्ठयोर्वा इडागमो [9]भवति। पूत्वा, पवित्वा। [10]सोमोऽतिपूतः, [11]सोमोऽतिपवितः। पूतवान्, पवितवान्। [12]'श्र्युकः किति' (७.२.११/२३८१) इति प्रतिषेधे प्राप्ते विकल्पो विधीयते॥

---

1. धातुभ्यः इत्यधिकम् क. 2. यस्तु क. 3. एषिष्यते ब. क. इ. ई, एष्यति ह. 4. दिवु इत्यधिकम् ब. 5. इत्स्र्यति क. 6. उत्तरयोः इत्यधिकम् क, धातोः इत्यधिकम् ब. ई. 7. तु नास्ति क. 8. धातोः इत्यधिकम् क. ई. 9. प्राप्नोति क. 10–11. सोमो नास्ति क. ब. ह. 12. वाक्यमिदं नास्ति क. ब. ह.

## वसतिक्षुधोरिट् । (५२/३०४६)

वसतेः क्षुधेश्च क्त्वानिष्ठयोः इडागमः भवति । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् । वसति इति विकरणो निर्देशार्थ एव । वस्तेस्तूदात्तत्वादेव भवितव्यमिटा । [1]पुनरिड्ग्रहणं नित्यार्थम् ॥

## अञ्चेः पूजायाम् । (५३/३०४७)

अञ्चेः[2] पूजायामर्थे क्त्वानिष्ठयोः इडागमो भवति । अञ्चित्वा जानु[3] जुहोति । अञ्चिता अस्य गुरवः । 'उदितो वा' (७. २. ५६/३३२८) इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायाम् 'यस्य विभाषा' (७.२.१५/३०२५) इति प्रतिषेधः प्राप्तः, [4]तदर्थमिदं प्रारब्धम् । पूजायाम् इति किम् ? उदक्तमुदकं कूपात् । [5]उद्धृतम् इत्यर्थः ॥

## लुभो विमोहने । (५४/३०४८)

लुभो विमोहनेऽर्थे वर्तमानात् क्त्वानिष्ठयोः[6] इडागमो भवति । लुभित्वा, लोभित्वा । [7]विलुभिताः केशाः । [8]विलुभितः सीमन्तः । विलुभितानि पदानि । विमोहनम् आकुलीकरणम्, तत्र क्त्वायां 'तीषसहलुभरुषरिषः' (७. २. ४८/२३४०) इति विकल्पः, निष्ठायाम् 'यस्य विभाषा' (७. २. १५/३०२५) इति [9]प्रतिषेधः [10]प्राप्तः । विमोहने इति किम् ? लुब्धो वृषलः[11] । [12]शीतेन पीडितः इत्यर्थः । [13]लुब्ध्वा, लुभित्वा, लोभित्वा । गार्ध्ये यथाप्राप्तमेव भवति ॥

## जॄव्रश्च्योः क्त्वि । (५५/३३२७)

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यये[14] इडागमो भवति । जरित्वा, जरीत्वा । व्रश्चित्वा । जॄ इत्येतस्य 'श्र्युकः किति' (७. २. ११/२३८१) इति प्रतिषेधः प्राप्तः, व्रश्चेरुदित्वाद् विकल्पः[15] । क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम् ॥

## उदितो वा । (५६/३३२८)

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति । शमु – शमित्वा, शान्त्वा । तमु – तमित्वा, तान्त्वा । दमु – दमित्वा, दान्त्वा[16] ॥

---

1. इट् इत्यनुवर्तमाने पुनरिड्ग्रहणं विकल्पार्थनिवृत्त्यर्थम् क. 2. धातोः इत्यधिकम् क. ब. 3. जुहोति नास्ति क. 4. नित्यार्थं वचनम् ब. ड. 5. उद्धृतमित्यर्थः नास्ति ब. इ. 6. परतः इत्यधिकम् क. 7. लुभिताः क. 8. लुभितः क. 9. इट्प्रतिषेधः ह, निषेधे प्राप्ते वचनम् ब, प्रतिषेधे प्राप्ते वचनम् ड. 10. नास्ति क. 11. गर्धेन बाधितः इत्यर्थः इत्यधिकम् ह, लुब्धा वृषली इत्यधिकम् क. 12. वाक्यमिदं नास्ति ब. क. इ. 13. लुब्ध्वा नास्ति क. 14. परतः इत्यधिकम् क. 15. प्राप्नोति इत्यधिकम् क. 16. भ्रमु – भ्रमित्वा भ्रान्त्वा । क्षमु– क्षमित्वा क्षान्त्वा इत्यधिकम् ब. इ.

## सेऽसिचि कृतचृतच्छृदतृदनृतः । (५७/२५०६)

सकारादावसिचि आर्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति। कृत – कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति । चृत – चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति । छृद – छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति । तृद – तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति । नृत – नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । [1]निनर्तिषति । से इति किम् ? कर्तिता[2] । असिचि इति किम् ? अकर्तीत्[3] ॥

## गमेरिट् परस्मैपदेषु । (५८/२४०१)

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेषु[4] इडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति । गमेः इति किम् ? चेष्यति[5] । इड्ग्रहणं नित्यार्थम् । परस्मैपदेषु इति किम् ? संगंसीष्ट । संगंस्यते । संजिगंसते । संजिगंसिष्यते । अधिजिगांसते । अधिजिगांसिष्यते । गमेरिङादेशस्य 'अज्झनगमां सनि' (६. ४. १६/२६१४) इति दीर्घत्वम् । से इत्येव, [6]गन्तास्मि, गन्तास्वः, गन्तास्मः । आत्मनेपदेन समानपदस्थस्य गमेः अयमिडागमो नेष्यते । अन्यत्र सर्वत्रैवेष्यते । कृत्यपि हि भवति, परस्मैपदलुकि च, [7]संजिगमिषिता[8], अधिजिगमिषिता व्याकरणस्य, जिगमिष त्वम् इति । पदशेषकारस्य पुनरिदं दर्शनम् – गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात् सकारादेरार्धधातुकस्य इड् भवति । तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य [9]इत्येव भवितव्यम् ॥

## न वृद्भ्यश्चतुर्भ्यः । (५९/२३४८)

वृतादिभ्यश्चतुर्भ्यः उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वृत् – वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । [10]वृधू – वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । शृधू – शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्दू – स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति । चतुर्भ्यः इति न [11]वक्तव्यम्, वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते – कृपू सामर्थ्ये वृत् इति, तदेव यदि वृतादि[12]समाप्त्यर्थमपि विज्ञायते न किञ्चिदनिष्टं प्राप्नोति ? तत् क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो [13]यथा बाधेत इति । चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः संनिधापितो भवति । परस्मैपदेषु इत्येव, वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते । अत्रापि आत्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते । अन्यत्र सर्वत्र प्रतिषधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति, विवृत्सिता, विवृत्स त्वम् इति ॥

---

1. निनर्तिषते क. 2. नर्तिता इत्यधिकम् ब. 3. अनर्तीत् इत्यधिकम् ब. ह. 4. परतः इत्यधिकम् क. 5. स्तोष्यति इत्यधिकम् ब. 6. गन्ता गन्तारौ गन्तारः क. इ. 7. एवं मन्यते योगविभागोऽत्र कर्तव्यः । गमेरिट् । से इति वर्तते । सकारादेव आर्धधातुके गमेः इट् भवति । ततः परस्मैपदेषु इति नियमार्थः । स च नियमो यदि अविशेषेण स्यात् पूर्वो योगः नियमार्थः स्यात् । स च तुल्यजातीयापेक्षो नियमः इत्यधिकम् ड. 8. व्याकरणस्य इत्यधिकम् क. ह. 9. इति भवितव्यमेव क. 10. वृधू पूर्ववत् इ. 11. कर्तव्यम् ब. 12. परिसमाप्त्यर्थम् इ. 13. यथा नास्ति इ.

## तासि च क्लृपः । (६०/२३६२)

[1]कृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । श्वः कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । परस्मैपदेषु इत्येव, [2]कल्पितासे । [3]कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते । क्लृपेरप्या[4]त्मनेपदेन समानपदस्थस्य इडागमः इष्यते । अन्यत्र[5] प्रतिषेधः । कृत्यपि हि परस्मैपद-लुकि च प्रतिषेधो भवति, चिक्लृप्सिता, चिक्लृप्स त्वम् [6]इति ॥

## अचस्तास्वत्थल्यनिटो नित्यम् । (६१/२२९४)

[7]तासौ ये नित्यानिटो धातवः अजन्ताः, तेभ्यस्तासाविव थलि इडागमो न भवति[8] । याता – ययाथ[9] । चेता – चिचेथ । नेता – निनेथ । होता – जुहोथ । अचः इति किम् ? भेत्ता – बिभेदिथ । तास्वत् इति किम् ? लूत्वा – लुलविथ । थलि इति किम् ? [10]याता – ययिव । ययिम । अनिड्ग्रहणं नित्यम् इत्यनेन विशेषणार्थम् । नित्यग्रहणं किम् ? विधोता, विधविता – [11]विदुधविथ । [12]तासि विभाषितेट्, थलि नित्यमिडा-गमो भवति । तास्वत् इति वतिनिर्देशः किमर्थः ? तासौ सतस्थलि प्रतिषेधार्थः । यो हि तासावसन्, असत्त्वाच्च [13]नित्यानिट्, तस्य थलि प्रतिषेधो न भवति । जघसिथ । उवयिथ । उत्तरसूत्रेऽपि तास्वदिति वर्तते । अदा-देशो हि घसिः, वेञादेशश्च वयिस्तासौ नास्ति ॥

## उपदेशेऽत्वतः । (६२/२२९७)

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात् तासाविव थलि इडागमो न भवति । [14]पक्ता – पपक्थ । यष्टा – इयष्ठ । शक्ता – शशक्थ । उपदेशे इति किम् ? कर्ष्टा – चकर्षिथ । अत्वतः इति किम् ? भेत्ता – बिभेदिथ । [15]तपरकरणं किम् ? राद्धा – रराधिथ । तास्वत् इत्येव, जिघृक्षति । जग्रहिथ । नित्य-मनिटः इत्येव, अङ्क्ता, अञ्जिता – आनञ्जिथ ॥

## ऋतो भारद्वाजस्य । (६३/२२९६)

[16]ऋकारान्ताद् धातोः भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति । स्मर्ता – सस्मर्थ । ध्वर्ता – दध्वर्थ । 'सिद्धे सत्यारम्भो नियमार्थः' (कात. प. ६२), ऋत एव भारद्वाजस्य[17], नान्येषां धातूनाम् । ययिथ । वविथ । पेचिथ । शेकिथ । तदयमर्थात् पूर्वयोः योगयोर्विकल्पः । तपरकरणमॄकारान्तस्य निवृत्त्यर्थम् । तथा हि सति विध्यर्थमेतत् स्यात् ॥

---

1. कृपू सामर्थ्ये तस्मात् परस्य तासः क. 2. श्वः कल्पिता ह. 3. श्वः कल्पिष्यते विकल्पिष्यते क. 4. आत्मनेपदात् इडागमः ब. 5. सर्वत्र इत्यधिकम् क. 6. चिक्लप्सितुं चिक्लप्सितव्यम् चिक्लप्सितम् इत्यधिकम् ब. 7. नेटि इति वर्तते इत्यधिकम् क. 8. आदिनियमात् प्राप्तः प्रतिषिध्यते इत्यधिकम् ह. 9. वाता ववाथ इत्यधिकम् क. 10. पाता पपिव पपिम क, ययौ ययिव ययिम ह. 11. विधविथ क. 12. तासौ क. 13. नित्यम-निट् क. 14. शक्ता शशक्थ इ. 15. तपरकरणेन ब. 16. तास्वत् थलि इति वर्तते इत्यधिकम् क. 17. आचार्यस्य मतेन इत्यधिकम् क, नान्यस्मात् धातोः ब. इ.

## बभूथाततन्थजगृभ्मववर्थेति निगमे। (६४/२८२७)

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये। निगमो वेदः। 'त्वं हि होता प्रथमो बभूथ' (तै. ३.१.४.४)। बभूविथ इति भाषायाम्। आततन्थ – 'येनान्तरिक्षमुर्वाततन्थ' (ऋ. ३.२२.२)। आतेनिथ इति भाषायाम्। जगृभ्म – '[1]जगृभ्मा ते दक्षिणमिन्द्र [2]हस्तम्' (ऋ.१०.४७.१)। जगृहिम इति भाषायाम्। ववर्थ – ववर्थ त्वं हि ज्योतिषा[3]। ववरिथ इति भाषायाम्। [4]क्रादिसूत्रादेव अस्य प्रतिषेधे सिद्धे नियमार्थं वचनम्, निगमे एव, न भाषायाम् इति॥

## विभाषा सृजिदृशोः। (६५/२४०४)

[5]सृजि दृशि इत्येतयोः थलि [6]विभाषा इडागमो न भवति। सस्रष्ठ, ससर्जिथ। दद्रष्ठ, ददर्शिथ॥

## इडत्त्यर्तिव्ययतीनाम्। (६६/२३८४)

अत्ति अर्ति व्ययति इत्येतेषां थलि इडागमो भवति। आदिथ। आरिथ। [7]विव्ययिथ। व्येञः 'न व्यो लिटि' (६.१.४६/२४१६) इति आत्वप्रतिषेधः। अत्तिव्ययत्योः 'ऋतो भारद्वाजस्य' (७.२.६३/२२९६) इति नियमाद् विकल्पः[8]। अर्तेरपि [9]नित्यः प्रतिषेधः। अत्र इड्ग्रहणं विस्पष्टार्थम्। विकल्पविधाने हि सति अत्ति-व्ययतिग्रहणमनर्थकम्, प्रतिषेधविधाने च अर्तिग्रहणम् इति नित्योऽयं विधिः इड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम्॥

## वस्वेकाजाद्घसाम्। (६७/३०९६)

कृतद्विर्वचनानां धातूनामेकाचाम्, आकारान्तानाम्, घसेश्च वसौ इडागमो भवति। आदिवान्। आशिवान्। पेचिवान्। शेकिवान्[10]। धात्वभ्यासयोः एकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति। आत् – ययिवान्[11]। तस्थिवान्। घस् – जक्षिवान्। सिद्धे सत्यारम्भो नियमार्थः, एकाजाद् घसामेव वसाविडागमो भवति नान्येषाम्[12]। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात् [13]प्रतिषेधाभावाच्च [14]य इट् प्रसक्तः स नियम्यते। आद्ग्रहणमनेकाज्ग्रहणार्थम्। द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम्। दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम् इत्यामा भवितव्यम्। दरिद्राञ्चकार[15]। अथाप्याम् न क्रियते तथापि च दरिद्रातेः आर्धधातुके लोपः सिद्धश्च प्रत्ययविधौ इति प्रागेव प्रत्ययोत्पत्तेरा[16]कारे लुप्ते इडागमस्य निमित्तं विहतम् इति न इडागमो भवति, ददरिद्र्वान् इति भवितव्यम्। घसेरपि यदि ग्रहणमिह न [17]क्रियते तदा द्विर्वचनात् परत्वाद् 'घसिभसोर्हलि च' (६.४.१००/३५५०) इति [18]उपधालोपे कृते द्विर्वचनमेव न स्यात्, अनच्कत्वात्। [19]इह तु घसिग्रहणाद् उपधालोपमपि परत्वात् इडागमो बाधते। तत्र कृते 'गमहनजनखनघसाम्' (६.४.९८/२३६३) इति उपधालोपः। स च 'द्विर्वचनेऽचि' (१.१.५९/२२४३) इति द्विर्वचने कर्तव्ये स्थानिवद् भवति, तेन जक्षिवान् इति सिध्यति॥

---

1. जगृभ्णा तै.ब्रा. 2.8.2.5. 2. हस्तम् नास्ति क. 3. ऋ. 1.91.22 4. क्रादिसूत्रादेव नास्ति ब. 5. थलि इति वर्तते निगमग्रहणं न स्वर्यते इत्यधिकम् ह. 6. विभाषया इडागमः भवति इ. 7. संविव्ययिथ क. 8. प्राप्तः इत्यधिकम् क. 9. नित्यं क. 10. सेदिवान् इत्यधिकम् क. 11. पपिवान् इत्यधिकम् क. ड. इ. ह. 12. इति इत्यधिकम् ब. ह. 13. इट् इत्यधिकम् क. 14. वसोरिह इत्यधिकम् क. 15. इति प्राप्नोति इत्यधिकम् क. 16. आकारो लुप्तः क. इ. 17. क्रियेत घसिवसोर्हलि च लोपे कृते क. 18. उपधालोपेन भवितव्यम् इ, नास्ति क. 19. क्रियमाणे हि घसिग्रहणे उपधालोपमपि बाधित्वा इडागमो भवति ह.

## विभाषा गमहनविदविशाम् । (६८/३०९९)

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति । गम – जग्मिवान्, जगन्वान् । 'मो नो धातोः' (८.२.६४/३४१) इति नकारः । हन – जघ्निवान्, जघन्वान् । विद – विविदिवान्, विविद्वान् । विश – विविशिवान्, विविश्वान् । विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम् । ज्ञानार्थस्य तु नित्यं विविद्वान् इत्येव भवति ।

[८३६] दृशेश्चेति वक्तव्यम् । (म.भा.३.३०१)

ददृशिवान्, ददृश्वान् (ऋ.४.३३.६) ॥

## सनिंससनिवांसम् । (६९/३५८३)

[1]सनोतेः सनतेर्वा धातोः सनिंससनिवांसम् इति निपात्यते । अग्निस्त्वाग्ने सनिंससनिवांसम् (आ.श्रौ.१ ३.४.१६) । इडागम एत्वाभ्यासलोपश्च निपात्यते । सनिङ्पूर्वात् अन्यत्र सेनिवांसम् इत्येव भवति । छन्दसि इदं निपातनं विज्ञायते । भाषायां सेनिवांसम् इति भवति ॥

## ऋद्धनोः स्ये । (७०/२३६६)

ऋकारान्तानां [2]धातूनां [3]हन्तेश्च स्ये[4] इडागमो भवति । करिष्यति[5] । हरिष्यति । हनिष्यति । स्वरतेर्वेट्त्वात् 'ऋद्धनोः स्ये' इत्येतद्भवति विप्रतिषेधेन । स्वरिष्यति । [6]तपरकरणं विस्पष्टार्थम् ॥

## अञ्जेः सिचि । (७१/२५४६)

अञ्जेः सिचि इडागमो भवति । आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः । सिचि इति किम् ? अङ्क्ता अञ्जिता । ऊदित्वाद् विभाषा भवति ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु । (७२/२३८५)

स्तु सु धूञ् [7]इत्येतेभ्यः सिचि परस्मैपदे [8]परत इडागमो भवति । अस्तावीत् । असावीत् । अधावीत् । परस्मैपदेषु इति किम् ? अस्तोष्ट । [9]असोष्ट । अधोष्ट, अधविष्ट ॥

---

1. सविपूर्वस्य क. 2. धातूनां नास्ति क. 3. हनश्च क. 4. परतः इत्यधिकम् ह. 5. अकरिष्य. इत्यधिकम् क. ह. अहरिष्यत् इत्यधिकम् ह. 6. वाक्यमिदं नास्ति ब. क. 7. एतेषां ब. क. 8. परे कः 9. प्रासोष्ट असविष्ट क.

## यमरमनमातां सक् च । (७३/२३७७)

यम रम नम इत्येषामङ्गानाम् आकारान्तानां च [1]सगागमो भवति [2]परस्मैपदे सिचि, [3]इडागमश्च । यम् अयंसीत्, अयंसिष्टाम्, अयंसिषुः । रम् – अरंसीत्, अरंसिष्टाम्, अरंसिषुः । नम् – अनंसीत्, अनंसिष्टाम् अनंसिषुः । आकारान्तानाम् – अयासीत्, अयासिष्टाम्, अयासिषुः । यमादीनां हलन्तलक्षणा वृद्धिः (७.२.३/२२६७) प्राप्ता सा नेटि (७.२.४/२२६८) प्रतिषिध्यते । परस्मैपदेषु इत्येव, [4]अयंस्त । अरंस्त । अनंस्त ॥

## स्मिपूङ्रञ्ज्वशां सनि । (७४/२६२६)

स्मिङ पूङ ऋ अञ्जू अशू इत्येतेषां धातूनां सनि इडागमो भवति । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते । ङकारग्रहणं पूञो मा भूत् । पुपूषति इत्येव तस्य भवति । अशेः ऊदितो ग्रहणात् अश्नोतेर्नित्यमिडागमोऽस्त्येव[5] ॥

## किरश्च पञ्चभ्यः । (७५/२६११)

[6]किरादिभ्यः पञ्चभ्यः [7]सनि इडागमो भवति । कॄ – चिकरिषति । गॄ – जिगरिषति । दृङ – दिदरिषते । धृङ – दिधरिषते । प्रच्छ् – पिप्रच्छिषति । पञ्चभ्यः इति किम् ? सिसृक्षति । किरतिगिरत्योः– 'इट् सनि वा' (७.२.४१/२६२५) इति विकल्पः प्राप्तः, 'वृतो वा' (७.२.३८/२३९१) इति च । अस्येटो दीर्घत्वं [8]नेच्छन्ति ॥

## रुदादिभ्यः सार्वधातुके । (७६/२४७४)

रुदादिभ्यः [9]उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद् – रोदिति । स्वप् – स्वपिति । श्वस् – श्वसिति । अन् – प्राणिति । जक्ष् – जक्षिति । पञ्चभ्यः इत्येव, जागर्ति । सार्वधातुके इति किम् ? स्वप्ता । वलादेः इत्येव, रुदन्ति ॥

## ईशः से । (७७/२४३९)

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । ईशिष्व[10] ॥

---

1. अमागमः क. 2. परस्मैपदपरे इ. 3. इडागमोऽपि भवति ब. 4. आयंस्त ड. 5. अशिशिषति इत्यधिकम् ह. 6. सनि इति वर्तते इत्यधिकम् क, कॄ इत्येवमादिभ्यः क. 7. सनि परतः ब. इ, उत्तरस्य क. 8. नेष्यते ड. 9. पञ्चभ्यः इत्यधिकम् ब. क. इ. ई. ह. 10. एकदेशविकृतस्यानन्यत्वात् इत्यधिकम् ब.

## ईडजनोर्ध्वे च। (७८/२४४०)

ईड जन इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य, स्ये इत्येतस्य च सार्वधातुकस्य इडागमो भवति। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। जनिध्वे। जनिध्वम्। जनिषे। जनिष्व। 'जनी प्रादुर्भावे' (धा. पा. ११४९) इत्यस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च। 'जन जनने' (धा. पा. ११०५) इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते। तस्य कर्मव्यतिहारे[1] व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम् इति [2]च भवति।

ध्वेशब्दे ईशेरपि इडागम इष्यते ईशिध्वे ईशिध्वम् इति। तदर्थं केचित् 'ईडिजनोः स्ध्वे च' इति सूत्रं पठन्ति। तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानाच्चशब्दो [3]भिन्नक्रमः ईशेरनुकर्षणार्थो [4]विज्ञायते। [5]'ईशीडिजनां सेध्वयोः' इत्येकमेव सूत्रं न पठितम्? विचित्रा हि सूत्रस्य कृतिः पाणिनेः इति। ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा। लोटि [6]पुनरेकदेशविकृतस्य अनन्यत्वात् (व्या. प. १६) [7]भवितव्यमिटा॥

## लिङः सलोपोऽनन्त्यस्य। (७९/२२११)

[8]सार्वधातुके इति वर्तते। सार्वधातुके यो लिङ [9]तस्य अनन्त्यस्प सकारस्य लोपो भवति। कः पुनरनन्त्यो लिङः सकारः? यो यासुट्सुट्सीयुटाम्[10]। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। अनन्त्यस्य इति किम्? कुर्युः। कुर्याः। सार्वधातुके इत्येव, क्रियास्ताम्। क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन्॥

## अतो येयः। (८०/२२१२)

अकारान्तात् अङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति, पचेत्, पचेताम्, पचेयुः इति। अत्र 'उस्यपदान्तात्' (६.१.९६/१२१४) इति पररूपं बाधितम्। अतः इति किम्? चिनुयात्। [11]सुनुयात्। तपरकरणम् किम्? [12]यायात्। सार्वधातुक इत्येव, चिकीर्ष्यात्[13]।

ननु च[14] 'अतो लोपः' (६.४.४८/२३०८) इत्यनेनात्र भवितव्यम्, पचेत् इत्यत्रापि हि तर्हि 'अतो दीर्घो यञि' (७.३.१०१/२१७०) इति दीर्घत्वेन भवितव्यम्, तदनेन अवश्यं विध्यन्तरं बाधितव्यम्, स यथैव [15]दीर्घस्य बाधकः एवम् अतो लोपस्यापि बाधकः स्यात्? स्यादेतदेवं यदि [16]दीर्घः सार्वधातुके विधीयते। [17]अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन [18]दीर्घस्यैव बाधकः स्यान्न पुनरतो लोपस्य[19]। येयः इत्यविभक्तिको निर्देशः। यः इति वा षष्ठी[20]निर्देशे यलोपस्य असिद्धत्वमनाश्रित्य आद्गुणः (६.१.८७/६९) कृतः, [21]सौत्रत्वान् [22]निर्देशस्य इति। केचित् अत्र 'अतो यासियः' इति सूत्रं पठन्ति। तेषां सकारान्तः स्थानी, षष्ठीसमासश्च॥

---

1. आत्मनेपदम् इत्यधिकम् ड. ह. 2. च नास्ति ब. 3. भिन्नक्रमः नास्ति ब. इ. 4. विधीयते ड. 5. इशीडजनां ड. क. 6. एकदेशविकृतमनन्यवद् भवति इति भवितव्यम् ब. 7. भवति क. 8. वाक्यमिदं नास्ति ब. 9. विहितः इत्यधिकम् क. 10. सम्बन्धी इत्यधिकम् ह. 11. नास्ति ब. ह. 12. पायात् ह. 13. चिकीर्ष्यास्ताम् चिकीर्ष्यासुः इत्यधिकम् क. इ. ड, जिहीर्ष्यात् इत्यधिकम् इ. 14. अत्र इत्यधिकम् क. 15. हि दीर्घत्वस्य क, दीर्घत्वं बाधते तथा ह. 16. दीर्घत्वम् इ. 17. वाक्यमिदं नास्ति ह. 18. दीर्घत्वस्यैव क. 19. अपि इत्यधिकम् क. 20. निर्देशः क. 21. सौत्रोऽयं निर्देशः इति ड. 22. निर्देशः ब.

## आतो ङितः । (८१/२२३८)

आकारस्य ङिदवयबस्य आकारान्तादङ्गादुत्तरस्य [1]सार्वधातुकस्य इय् इत्ययमादेशो भवति । पचेते । पचेथे । पचेताम् । पचेथाम् । यजेते । यजेथे । यजेताम् । यजेथाम् ।

'सार्वधातुकमपित्' (१.२.४/२२३४) इत्यत्र न ङितीव ङिद्वत् इत्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वत् इति । पूर्वसूत्र [2]एव उच्चुकुटिषति इति [3]प्रसिद्धये तथाङ्गीकरणम् । [4]यदि गाङकुटादिसूत्रे (१. २. १/२४६१) ङित इव ङिद्वद् भवति इत्येवमङ्गीक्रियते, तदा 'अनुदात्तङित आत्मनेपदम्' (१. ३. १२/२१५७) इत्यात्मनेपदं प्राप्नोति इति । आतः इति किम् ? [5]पचन्ति । यजन्ति । पचन्ते । यजन्ते । ङितः इति किम् ? [6]पचावहै । पचामहै । अतः इत्येव, चिन्वाते । सुन्वाते । तपरकरणम् किम् ? मिमाते । मिमाथे[7] ॥

## आने मुक् । (८२/३१०१)

[8]आने परतोऽङ्गस्यातः मुगागमो भवति । पचमानः । यजमानः । अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यते इति अदुपदेशादिति लसार्वधातुकानुदात्तत्वं भवति । यद्येवम् 'आतो ङितः' (७.२.८१/२२३५) इत्ययमपि विधिः प्राप्नोति ? तपरनिर्देशान्न भविष्यति । मुकि सति अध्यर्धमात्रो भवति । लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति ? [9]नैष दोषः । उपदेशग्रहणं तत्र क्रियते । तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम् । तथा च पचावः, पचामः इत्यत्रापि भवति ॥

## ईदासः । (८३/३१०४)

आसः उत्तरस्य आनशब्दस्य ईकारादेशो भवति । आसीनो [10]यजते । [11]अत्र पञ्चम्याः [12]परस्य षष्ठी [13]कल्प्यते ॥

## अष्टन आ विभक्तौ । (८४/३७१)

[14]अष्टनो विभक्तौ परतः आकारादेशो भवति । अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । विभक्तौ इति किम् ? अष्टत्वम् । अष्टता । आ इति व्यक्तिनिर्देशोऽयम् । आकृतिनिर्देशे तु [15]नकारस्थानेऽ[16]-नुनासिकाकारः स्यात् । विकल्पेनायमाकारो[17]भवति, एतज्ज्ञापितम् 'अष्टनो दीर्घात्' (६.१.१७२/३७१८) इति दीर्घग्रहणात्, 'अष्टाभ्य औश्' (७.१.२१/३७२) इति च कृतात्वस्य [18]निर्देशात् । तेन अष्टभिः, अष्टभ्यः इत्यपि भवति । तदन्तविधिश्चात्रेष्यते । प्रियाः अष्टौ [19]येषाम् ते प्रियाष्टानः । प्रियाष्टौ ॥

---

1. सार्वधातुकस्य नास्ति ब.क.इ. 2. तु ह. 3. सिद्धये क. 4. यदि–प्राप्नोति इति नास्ति क. इ. 5. नास्ति क. 6. यजावहै यजामहै क, नास्ति फ. 7. मिमते इत्यधिकम् ब. 8. आत इत्यनुवर्तते इत्यधिकम् क. 9. नैतदस्ति क. 10. जयते क. 11. वाक्यमिदं नास्ति ब.क.ड. 12. उत्तरस्य ब. 13. प्रकल्पते व. 14. अष्टन् इत्येतस्य क.इ. 15. नकारस्य स्थाने क, नकारस्य ह. 16. अनुनासिकादेशः क, अनुनासिकः इ, सानुनासिकः ह. 17. कथं इत्यधिकम् क. 18. निर्देशाच्च क. 19. यस्याः सा प्रियाष्टाः ड.

## रायो हलि। (८५/२८६)

[1]रै इत्येतस्य हलादौ विभक्तौ परतः आकारादेशो भवति। राभ्याम्। राभिः। हलि इति किम्? रायौ। रायः। विभक्तौ इति किम्? रैत्वम्। रैता। '[2]मृजेर्वृद्धिः' (७.२.११४/२४७३) इत्यतः प्राग्विभक्त्यधिकारः॥

## युष्मदस्मदोरनादेशे। (८६/३९३)

युष्मदस्मदित्येतयोः [3]अनादेशे विभक्तौ परतः आकारादेशो भवति। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु। अनादेशे इति किम्? युष्मत्। अस्मत्। हलि इत्यधिकारादप्यत्र न [4]स्यात्। उत्तरत्र तु अनादेशग्रहणेन प्रयोजनम् 'योऽचि' (७.२.८९/३९२) इति, तद् इहैव क्रियते॥

## द्वितीयायां च। (८७/३९०)

द्वितीयायां[5] च परतः [6]युष्मदस्मदोः आकारादेशो भवति। त्वाम्। माम्। युवाम्। आवाम्। युष्मान्। अस्मान्। आदेशार्थं वचनम्॥

## प्रथमायाश्च द्विवचने भाषायाम्। (८८/३८७)

प्रथमायाश्च द्विवचने परतो भाषायां विषये [7]युष्मदस्मदोः आकारादेशो भवति। युवाम्। आवाम्। प्रथमायाः इति किम्? युवयोः। आवयोः। द्विवचने इति किम्? त्वम्। अहम्। [8]यूयम्। वयम्। भाषायाम् इति किम्? 'युवं वस्त्राणि पीवसा वसाथे' (ऋ. १.१५२.१)॥

## योऽचि। (८९/३९२)

अजादौ विभक्तौ [9]अनादेशे [10]युष्मदस्मदोः यकारादेशो भवति। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। अचि इति किम्? युवाभ्याम्। आवाभ्याम्। 'युष्मदस्मदोरनादेशे' (७.२.८६/३९६) इत्यत्र यदि हलि (७.२.८५/२८६) इति अनुवर्तते, [11]शक्यमकर्तुम् अचि इति एतत्? तत् क्रियते विस्पष्टार्थम्। अनादेशे इत्येव। त्वद् गच्छति। मद् गच्छति॥

## शेषे लोपः। (९०/३८८)

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति। कश्च शेषः? यत्र आकारो यकारश्च न विहितः।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि।
यान्यद्विवचनान्यत्र तेषु लोपो विधीयते॥

---

1. विभक्तौ इति वर्तते इत्यधिकम् क. 2. वाक्यमिदं नास्ति ह. 3. अनादिष्टायाम् ब.इ. 4. भवति क. 5. विभक्तौ इत्यधिकम् इ.ड.क. 6. युष्मदस्मद् इत्येतयोः क. 7. युष्मदस्मद् इत्येतयोः क. इ. 8. यूयं वयम् नास्ति क. 9. परतः इत्यधिकम् क.इ. 10. युष्मदस्मद् इत्येतयोः क. 11. तदा इत्यधिकम् ब.

त्वम्। अहम्। यूयम्। वयम्। तुभ्यम्। मह्यम्। युष्मभ्यम्। अस्मभ्यम्। त्वत्। मत्। युष्मत्। अस्मत्। तव। मम। युष्माकम्। अस्माकम्।

शेषग्रहणं विस्पष्टार्थम्। शेषे लोपे कृते स्त्रियां टाप् कस्मान् न भवति, त्वं ब्राह्मणी, अहं ब्राह्मणी? [1]'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य'[2] (व्या. प. १२), अलिङ्गे वा युष्मदस्मदी इति। केचित्तु शेषे [3]लोपं टिलोपमिच्छन्ति। कथम्? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य (७.२.९१/३८३) [4]विधीयन्ते, तेन मपर्यन्ताद् योऽन्यः स शेषः [5]इति। [6]तत्रायं लोपः इति [7]टिलोपो भवति[8]॥

## मपर्यन्तस्य। (९१/३८३)

[9]मपर्यन्तस्य इत्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्य इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'युवावौ द्विवचने' (७. २. ९२/३८६)। युवाम्। आवाम्। मपर्यन्तस्य इति किम्? युवकाम्, आवकाम् इति साकच्कस्य मा भूत्। 'त्वमावेकवचने' (७.२.९७/३८९) त्वया। मया। मपर्यन्तस्य इति किम्? सर्वस्य मा भूत्। तथा च सति त्वमयोरकारस्य 'योऽचि' (७.२.८९/३९२) इति यकारे कृते अनिष्टं रूपं स्यात्। मान्तस्य [10]इत्येव सिद्धे अस्मिन् यत् परिग्रहणं कृतम्, अवधिद्योतनार्थं तत्। मान्ते मा भूत्। कदा? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः। स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान् न विद्यते॥

## युवावौ द्विवचने। (९२/३८६)

द्विवचने इत्यर्थग्रहणम्। द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोः मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः। युवाम्। आवाम्। युवाभ्याम्। आवाभ्याम्। युवयोः। आवयोः।

[11]यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसङ्ख्यत्वात् एकवचनं बहुवचनं वा भवति, तदापि [12]द्व्यर्थयोः युष्मदस्मदोः युवावौ भवतः, यदि 'त्वाहौ सौ' (७.२.९४/३८४) इत्येवमादिना आदेशान्तरेण न बाध्येते। अतिक्रान्तं युवाम् अतियुवाम्। [13]अत्यावाम्। अतिक्रान्तान् युवाम् अतियुवान्। अत्यावान्। [14]अतिक्रान्तेन युवाम् अतियुवया। अत्यावया। अतिक्रान्तैर्युवाम् अतियुवाभिः। अत्यावाभिः। अतिक्रान्तेभ्यो युवाम् [15]अतियुवभ्यम्[16]। अत्यावभ्यम्[17]। अतिक्रान्ताद् युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तेभ्यो युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तानां युवाम् अतियुवाकम्। अत्यावाकम्। अतिक्रान्ते युवाम् अतियुवयि। अत्यावयि। अतिक्रान्तेषु युवाम् अतियुवासु। अत्यावासु।

त्वाहादीनां तु विषये परत्वात् ते एव भवन्ति। अतिक्रान्तो युवाम् अतित्वम्। अत्यहम्। अतिक्रान्ता युवाम् अतियूयम्। अतिवयम्। अतिक्रान्ताय युवाम् अतितुभ्यम्। अतिमह्यम्। अतिक्रान्तस्य युवाम् अतितव। अतिमम।

यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तौ युष्मान् अतियुष्मान्। अत्यस्मान्। एवमुन्नेयम्॥

---

1. सन्निपातपरिभाषया न भवति क. 2. इति न भवति इत्यधिकम् ह. 3. लोपे ड. 4. विधीयन्ते नास्ति इ. 5. इति नास्ति क. 6. तत्र शेषे अयं क. 7. टिलोपो नास्ति ह. 8. इति इत्यधिकम् ब. 9. अधिकारोऽयम् क. 10. इत्येवं सिद्धे क. 11. यदापि इ. 12. द्व्यर्थयोः युष्मदस्मदोः नास्ति क. इ. ह. 13. अतिक्रान्तं आवाम् अत्यावाम् इ. 14. अतिक्रान्तेन–अत्यावाभिः नास्ति क. 15–17. देहि इत्यधिकम क.

## यूयवयौ जसि। (९३/३८८)

युष्मदस्मदोः [1]मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। तदन्तविधिरत्र भवति, 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (सीर. प.७७) इति॥

## त्वाहौ सौ। (९४/३८४)

[2]युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व अह इत्येतौ आदेशौ भवतः। त्वम्। अहम्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥

## तुभ्यमह्यौ ङयि। (९५/३९४)

युष्मदस्मदोः[3] मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशौ भवतो ङयि परतः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तवममौ ङसि। (९६/३९८)

युष्मदस्मदोः [3]मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः। तव। मम[4]। [5]परमतव। परममम। अतितव। अतिमम॥

## त्वमावेकवचने। (९७/६८९)

एकवचने इत्यर्थ[6]निर्देशः। एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयो[7]र्मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि।

यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसङ्ख्यत्वात् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः। आदेशान्तराणां तु 'त्वाहौ सौ' (७.२.९४/३८४) इत्येवमादीनां विषये पूर्वविप्रतिषेधेन ते एवेष्यन्ते। अतिक्रान्तः त्वाम् अतित्वम्। अत्यहम्। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तान् त्वाम् अतित्वान्। अतिमान्। अतिक्रान्ताभ्याम् त्वाम् अतित्वाभ्याम्। अतिमाभ्याम्। अतिक्रान्तैः त्वाम् अतित्वाभिः। अतिमाभिः। इत्येवमाद्युदाहर्तव्यम्॥

---

1. मपर्यन्तयोः स्थाने क. 2. अनयोः युष्मदस्मदोः मपर्यन्तयोः स्थाने क. 3. मपर्यन्तयोः क, नास्ति ब. 4. इत्यादि इत्यधिकम् ब. 5. परमतव – अतिमम नास्ति इ. 6. निर्देशग्रहणम् ब. 7. मपर्यन्तयोः क.

## प्रत्ययोत्तरपदयोश्च । (९८/१३७३)

एकवचने इत्यनुवर्तते । प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोः युष्मदस्मदो[1]र्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः । [2]तवायं त्वदीयः । मदीयः । अतिशयेन त्वम् त्वत्तरः । मत्तरः । त्वाम् इच्छति त्वद्यति । [3]मद्यति । त्वमिवाचरति त्वद्यते । [4]मद्यते । उत्तरपदे – तव पुत्रः त्वत्पुत्रः । मत्पुत्रः । त्वं नाथोऽस्य त्वन्नाथः । मन्नाथः । [5]एकवचने इत्येव, युष्माकमिदम् युष्मदीयम् । अस्मदीयम् । युष्माकं पुत्रः, अस्माकं पुत्रः युष्मत्पुत्रः, अस्मत्पुत्रः । विभक्तौ इत्यधिकारात् पूर्वयोगो विभक्तावेव । ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यात् इत्ययमारम्भः ।

ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ [6]भविष्यतः ? नैवं शक्यम्, लुका तस्या [7]भवितव्यम् । बहिरङ्गो लुक्, अन्तरङ्गौ आदेशौ, प्रथमं [8]तौ [9]भविष्यतः ? एतदेव [10]तर्हि आदेशवचनं ज्ञापकम् अन्तरङ्गानपि विधीन् बहिरङ्गो[11]ऽपि लुक् बाधते (व्या. प. १२८) इति । तेन गोमान् प्रियोऽस्य गोमत्प्रियः इत्येवमादौ [12]नुमादि लुका बाध्यते । एवं च सति 'त्वाहौ सौ' (७.२.९४/३८४) इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति । त्वं प्रधानमेषां त्वत्प्रधानाः । मत्प्रधानाः । यूयं पुत्रा अस्य युष्मत्पुत्रः । अस्मत्पुत्रः । तुभ्यं हितं त्वद्धितम् । मद्धितम् । तव पुत्रः त्वत्पुत्रः । मत्पुत्रः । अथ [13]किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते ? लक्ष्यस्थित्यपेक्षया । ज्ञापकार्थे [14]ह्येतस्मिन् बहुतरमिष्टं [15]सङ्गृह्यते ॥

## त्रिचतुरोः स्त्रियां तिसृचतसृ । (९९/२९८)

त्रि चतुर् इत्येतयोः स्त्रियां वर्तमानयोः तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः । तिस्रः । चतस्रः[16] । तिसृभिः । चतसृभिः । स्त्रियाम् इति किम् ? त्रयः । चत्वारः । [17]त्रीणि । चत्वारि ।

स्त्रियाम् इति चैतत् त्रिचतुरोरेव विशेषणं नाङ्गस्य । तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु [18]लिङ्गान्तरे, [19]तदाप्यादेशौ भवत एव । प्रियाः तिस्रो [20]ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मणः । प्रियतिस्रौ, प्रियतिस्रः । प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसॄणि । प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः । प्रियचतसृ, प्रियचतसृणी, प्रियचतसॄणि । [21]'नद्यृतश्च' (५.४.१५३/८३३) इति समासान्तो न भवति, [22]विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात् । यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे,[23] स्त्रियामङ्गम्, तदा आदेशौ न भवतः ।

---

1. मपर्यन्तयोः क. 2. तवेदं त्वदीयम् मदीयम् क. 3. मां इच्छति इत्यधिकम् इ. 4 अहमिवाचरति इत्यधिकम् क.इ. 5. एकवचनम् ब. 6. भवतः क.ब.ह. 7. भाव्यम् ब. 8. तौ नास्ति ह. 9. भवतः क. 10. हि क. 11. अपि नास्ति क. 12. नुमादिकम् क. 13. कथं क. 14. ह्यस्मिन् क. 15. सङ्गृहीतं भवति ह. 16. तिस्रः पश्य इत्यधिकम् क. 17. नास्ति क. 18. लिङ्गान्तरे वर्तते क. 19. तदादेशौ भवतः क. 20. ब्राह्मण्यः नास्ति ब. 21. नद्यृतश्च – लक्षणत्वात् नास्ति क. 22. विभक्त्याश्रयत्वात् ह. 23. वर्तेते इत्यधिकम् ड.

प्रियाः त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्याः ब्राह्मण्याः सा प्रियत्रिः । प्रियत्री, प्रियत्रयः । प्रियचत्वा, प्रियचत्वारौ, प्रियचत्वारः ।

[८३७] तिसृभावे सञ्ज्ञायां कन्युपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.३०७)

तिसृका नाम ग्रामः ।

[८३८] चतसर्याद्युदात्तनिपातनं कर्तव्यम् । (म. भा. ३.३०७)

चतस्रः पश्य इत्यत्र 'चतुरः शसि' (६.१.१३७/३६८२) इत्येष स्वरो मा भूत् । चतसृणाम् इत्यत्र तु 'षट्त्रिचतुर्भ्यो हलादिः' (६.१.१७९/३७२५) [1]इत्येव स्वरो भवति । [2]हलादिग्रहणसामर्थ्यान् निपातनस्वरो बाध्यते ॥

## अचि र ऋतः । (१००/२९९)

तिसृ चतसृ इत्येतयोः ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः । तिस्रः तिष्ठन्ति । तिस्रः पश्य । [3]चतस्रः तिष्ठन्ति । [4]चतस्रः पश्य । प्रियतिस्रः आनय । प्रियचतस्रः आनय । [5]प्रियतिस्रः स्वम् । प्रियचतस्रः स्वम् । प्रियतिस्रि निधेहि । प्रियचतस्रि निधेहि । पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानामपवादः । परमपि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते । अचि इति किम् ? तिसृभिः । चतसृभिः । ऋतः इति किम् ? तिसृचतस्रोः प्रतिपत्त्यर्थम्, अन्यथा हि तदपवादः त्रिचतुरोरेव अयमादेशो विज्ञायेत ॥

## जराया जरसन्यतरस्याम् । (१०१/२२७)

जरा इत्येतस्य जरस् इत्ययमादेशो भवति अन्यतरस्यामजादौ विभक्तौ परतः । जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते । [6]जरसे त्वा परिदद्युः, [7]जरायै त्वा परिदद्युः । अचि इत्येव, जराभ्याम् । जराभिः । नुमो विधानात् जरसादेशो भवति विप्रतिषेधेन । अतिजरांसि ब्राह्मणकुलानि ।

इह अतिजरसं ब्राह्मणकुलं पश्य इति लुग् [8]न भवति, [9]आनुपूर्व्या सिद्धत्वात् । अतिजर अम् इति स्थिते लुक्, अम्भावः, जरस्भावः इति त्रीणि कार्याणि युगपत् प्राप्नुवन्ति । तत्र लुक् [10]तावदपवादत्वाद् अम्भावेन बाध्यते, अम्भावोऽपि परत्वाज् जरसादेशेन । न च पुनर् लुक्शास्त्रं प्रवर्तते, [11]भ्रष्टावसरत्वात्, इति एवमेव भवति अतिजरसं ब्राह्मणकुलं पश्य इति । प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैः इति च भवितव्यम् इति गोनर्दीयमतेन[12] (म.भा. ३.३०९) । [13]किं कारणम्? '[14]सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति । अन्ये तु अनित्यत्वात् अस्याः परिभाषायाः अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैः [15]इत्येवं भवितव्यम् इति [16]मन्यन्ते ॥

---

1. इत्येष क. 2. हलादिग्रहणेन क. 3. उदाहरणमिदं नास्ति क. 4. उदाहरणमिदं नास्ति इ. 5. उदाहरणमिदं नास्ति क. 6. उदाहरणमिदं नास्ति क. 7. उदाहरणमिदं नास्ति ब. 8. कस्मात् न भवति ब. 9. आनुपूर्व्यात् ब. 10. तावत् नास्ति ब. 11. भ्रष्टावसरत्वात् नास्ति क. इ. 12. इदम् इत्यधिकम् इ. 13. किं कारणम् नास्ति इ. 14. सन्निपातलक्षणविधिपरिभाषया क. 15. इति सम्पद्यते क. 16. मन्यन्ते नास्ति ब.

## त्यदादीनामः । (१०२/२६५)

[1]त्यद् इत्येवमादीनाम् [2]अकारादेशो भवति विभक्तौ परतः । त्यद्—स्यः, त्यौ, त्ये । तद् – सः, तौ, ते । यद् – यः, यौ, ये । एतद् – एषः, एतौ, एते । इदम् – अयम्, इमौ, इमे । अदस् – असौ, अमू, अमी । द्वि – [3]द्वौ । द्वाभ्याम्[4] । द्विपर्यन्तानां त्यदादीनामत्वमिष्यते (म.भा. ३.३०९) । इह न भवति, भवत् – भवान् । [5]सञ्ज्ञोपसर्जनीभूताः त्यदादयः पाठादेव [6]पर्युदस्ताः इति इह न भवति, [7]त्यद्, त्यदौ, त्यदः । अतित्यद्, अतित्यदौ, अतित्यदः । त्यदादिप्रधाने तु शब्दे भवत्येव, परमसः, परमतौ, परमते ॥

## किमः कः । (१०३/३४२)

किम् इत्येतस्य कः इत्ययमादेशो भवति [8]विभक्तौ परतः । कः, कौ, के । साकच्कस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते [9]'किमोऽत्' (५.३.१२/१९५९) इति ॥

## कु तिहोः । (१०४/१९५४)

[10]तकारादौ हकारादौ च विभक्तौ परतः किम् इत्येतस्य कु [11]इत्ययमादेशो भवति । कुतः । कुत्र । कुह । [12]तिहोः इति इकारः उच्चारणार्थः ॥

## क्वाति । (१०५/१९६०)

अति इत्येतस्यां विभक्तौ परतः किम् इत्येतस्य क्व इत्ययमादेशो भवति । क्व [13]गमिष्यसि । क्व [14]भोक्ष्यते । आदेशान्तरवचनम् ओर्गुण(६. ४. १४६/८४७)निवृत्त्यर्थम् । किमो ड्वत् इति प्रत्ययान्तरं न विधीयते, साकच्कार्थम् ॥

## तदोः सः सावनन्त्ययोः । (१०६/३८१)

त्यदादीनां तकारदकारयोः अनन्त्ययोः सकारादेशो भवति सौ परतः । त्यद् – स्यः । तद् – सः । एतद् – एषः । अदस् – असौ । अनन्त्ययोः इति किम् ? [15]हे स । [16]सा ॥

## अदस औ सुलोपश्च । (१०७/४३७)

अदसः सौ परतः [17]सकारस्य [18]औकारादेशो भवति सोश्च लोपो भवति । असौ ।

---

1. त्यदादीनामङ्गानाम् ह. 2. अकार इत्येवं भवति क. 3. द्वौ द्वौ क. 4. द्वयोः इत्यधिकम् ह. 5. सञ्ज्ञा नास्ति क. 6. निरस्ताः तेन क. 7. अतितत् । अतितदौ । अतितदः क. 8. विभक्तौ परतः नास्ति क. 9. किमोऽत् नास्ति क. 10. तकारहकारादौ ह. 11. इत्ययम् नास्ति क. 12. वाक्यमिदं नास्ति क. ब.ड. 13. गमिष्यति क. 14. भोक्ष्यसे इ.ह. 15. हे स्य क. 16. हे सा इ. 17. सकारस्य नास्ति ब. 18. अकारादेशः क.

[८३९] औत्वप्रतिषेधः [1]साकच्काद् वा वक्तव्यः सादुत्वं च । (म. भा. ३. ३१२)

यदा [2]च औत्वप्रतिषेधः तदा सकारादुत्तरस्य उत्वं भवति । असुकः । असुकौ ।

[८४०] उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः । (म. भा. ३. ३१२)

परमाहम् । परमायम् । परमानेन ।

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ॥

आप एत्वं भवेत् तस्मिन् न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥

## इदमो मः । (१०८/३४३)

[3]इदमः सौ परतः [4]मकारोऽन्तादेशो भवति । इयम् । अयम् । इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

## दश्च । (१०९/३४७)

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः । इमौ, इमे । इमम्, इमौ, इमान् ॥

## यः सौ । (११०/४४१)

इदमो मकारस्य यकारादेशो भवति सौ परतः । इयम् । उत्तरसूत्रे पुंसि इति वचनात् स्त्रियामयं यकारः ।[1]

## इदोऽय् पुंसि । (१११/३४४)

इदमः इद्रूपस्य पुंसि सौ परतः अय् इत्ययमादेशो भवति । अयं ब्राह्मणः । पुंसि इति किम् ? इयं ब्राह्मणी ॥

## अनाप्यकः । (११२/३४६)

इदमः [5]अककारस्य इद्रूपस्य स्थाने [6]अन इत्ययमादेशो भवति आपि विभक्तौ परतः । अनेन । अनयोः । अकः इति किम् ? [7]इमकेन । इमकयोः । आपि इति प्रत्याहारः तृतीयैकवचनात् प्रभृति सुपः पकारेण ॥

---

1. साकच्कत्वात् क. 2. च नास्ति क. 3. सौ इति वर्तते इत्यधिकम् क. 4. मकारादेशो ब.
5. अकस्य क. 6. अनादेशो भवति क. 7. नास्ति क.

## हलि लोपः । (११३/३४७)

हलादौ विभक्तौ परतः इदमोऽककारस्य इद्रूपस्य लोपो भवति । आभ्याम् । एभिः । एभ्यः । एषाम् । एषु । 'नानर्थकेऽलोन्त्यविधिः' (व्या. प. ६२) इति सर्वस्य अयम् इद्रूपस्य लोपः । [1]अथ वा नायम् इल्लोपः । 'अनाप्यकः' (७. २. ११२/३४६) इति अन्ग्रहणमनुवर्तते[2] ॥

## मृजेर्वृद्धिः । (११४/२४७३)

विभक्तौ इति निवृत्तम् । मृजेरङ्गस्य इको वृद्धिर्भवति । मार्ष्टा । मार्ष्टुम् । मार्ष्टव्यम् । मृजेरिति धातुग्रहणमिदम्, धातोश्च[3] कार्यमुच्यमानं धातुप्रत्यय एव वेदितव्यम् । तेन कंसपरिमृड्भ्याम्, कंसपरिमृड्भिः इत्यत्र न भवति ॥

## अचो ञ्णिति । (११५/२५४)

अजन्तस्य अङ्गस्य ञिति णिति च [4]प्रत्यये वृद्धिर्भवति । ञिति–एकस्तण्डुलनिश्चायः । [5]द्वौ शूर्पनिष्पावौ । [6]कारः । हारः । णिति – गौः, गावौ, गावः । सखायौ, सखायः । जैत्रम् । यौत्रम् । च्यौत्नः । जयतेर्यौतेश्च 'उणादयो बहुलम्' (३. ३. १/३१३९) इति ष्ट्रन् प्रत्ययः । च्यवतेरपि त्नण् ॥

## अत उपधायाः । (११६/२२८२)

[7]अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति । पाकः । त्यागः । [8]यागः । पाचयति । पाचकः । पाठयति । पाठकः । अतः इति किम् ? भेदयति । [9]भेदकः । उपधायाः इति किम् ? चकासयति तक्षकः ॥

## तद्धितेष्वचामादेः । (११७/१०७७)

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्य अचाम् आदेः अचः स्थाने वृद्धिर्भवति । गार्ग्यः । वात्स्यः । [10]दाक्षिः । प्लाक्षिः । णिति – औपगवः । कापटवः । [11]त्वाष्ट्रः, जागतः इत्यत्र अचामादेर्वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते ॥

## किति च । (११८/१०७६)

किति च तद्धिते परतोऽङ्गस्याचाम् आदेः अचः स्थाने वृद्धिर्भवति । 'नडादिभ्यः फक्' (४. १. ९९/११७१) नाडायनः । चारायणः । 'प्राग्वहतेष्ठक्' (४. ४. १/१५४८) आक्षिकः । शालाकिकः ॥

इति काशिकायां वृत्तौ सप्तमाध्यायस्य
द्वितीयः पादः ॥

---

1. अथ वा अयमनोऽलोऽन्त्यलोपः क. इ. 2. अक इत्येव इमकाभ्याम् इमकेभिः इत्यधिकम् क. इ. 3. च नास्ति क. 4. स्थाने ब. 5. द्वावपूपनिष्पावौ क. 6. कारकः हारकः ब. क. 7. अङ्गस्य उपधाया ब. 8. रागः ह. 9. नास्ति ब. 10. नास्ति क. 11. वाष्ट्रः यादवः क.

## सप्तमाध्यायस्य
## तृतीयः पादः

### देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्। (१/१४३९)

[1]देविका शिंशपा दित्यवाट् दीर्घसत्र श्रेयस् इत्येतेषाम् अङ्गानाम् अचामादेः अचः स्थाने वृद्धिप्रसङ्गे [2]आकारो भवति ञिति, णिति, किति तद्धिते[3] परतः। देविकायां भवमुदकं दाविकमुदकम्। देविकाकूले भवाः शालयः दाविकाकूलाः शालयः। पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः। 'प्राचां ग्रामनगराणाम्' (७.३.१४/१४००) इति उत्तरपदवृद्धिः, सापि आकार एव भवति। शिंशपा – शिंशपायाः विकारः चमसः शांशपः चमसः। पलाशादिरयम्, तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ्। शिंशपास्थले भवाः शांशपास्थलाः [4]देवाः (म. भा. ३. ३१६)। पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः। दित्यवाट् – दित्यौहः इदम् दात्यौहम्। दीर्घसत्र – दीर्घसत्रे भवम् दार्घसत्रम्। श्रेयस् – श्रेयसि भवम् श्रायसम्।

[८४१] वहीनरस्येद्वचनं कर्तव्यम्। (म. भा. ३.३१७)

[5]वृद्धिविषयेऽचामादेः अचः स्थाने वहीनरस्य इकारादेशो भवति। वहीनरस्य अपत्यम् वैहीनरिः। केचित् तु विहीनरस्यैव वैहीनरिम् इच्छन्ति॥

### केकयमित्रयुप्रलयानां यादेरियः। (२/११४४)

केकय मित्रयु प्रलय इत्येतेषां यकारादेः इय इत्ययमादेशो भवति [6]तद्धिते ञिति, णिति, किति च परतः। केकयस्य अपत्यम् कैकेयः। 'जनपदशब्दात् क्षत्रियादञ्' (४.१.१६८/११८६) इति अञ् प्रत्ययः। मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते। 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५.१.१३४/१७९९) इति वुञ्। लौकिकं हि तत्र गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रम् इत्यभिधीयते। प्रलय – प्रलयात् आगतम् प्रालेयम् उदकम्॥

### न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्। (३/१०९८)

यकारवकाराभ्या[7]मुत्तरस्य अचामादेः अचः स्थाने वृद्धिर्न भवति, ताभ्यां तु यकारवकाराभ्यां [8]पूर्वम् ऐजागमौ भवतः ञिति, णिति, किति च तद्धिते परतः। यकारात् ऐकारः, वकारात् औकारः। व्यसने भवम् वैयसनम्। व्याकरणमधीते[9] वैयाकरणः। स्वश्वस्य अपत्यम् सौवश्वः। य्वाभ्याम् इति किम्? न्यर्थस्यापत्यम् न्यार्थिः[10]। पदान्ताभ्याम् इति किम्? यष्टिः प्रहरणमस्य याष्टीकः। यतः[11] छात्राः याताः[12] (म. भा. ३.३१८)। प्रतिषेधवचनमैचोर्विषय[13]प्रक्लृप्त्यर्थम्। इह मा भूत्, दाध्यश्विः, माध्वश्विः इति। नह्यत्र य्वाभ्यामुत्तरस्य

---

1. तद्धितेपु ञिति णिति किति च अनुवर्तन्ते इत्यधिकम् क. 2. आकारादेशः क. 3. प्रत्यये इत्यधिकम् क. इ. 4. शालयः क. 5. वृद्धिप्रसङ्गे क. 6. तद्धितशब्दानां परतः ब. 7. पदान्ताभ्याम् इत्यधिकम् क. इ. ड, पदाभ्याम् इत्यधिकम् ब. 8. पूर्वौ एव आगमौ क, पूर्वम् ऐजागमो भवति इ. ह. 9. वेत्ति वा इत्यधिकम् क. ह. 10. अतो इञ् इत्यधिकम् ब. 11. इमे इत्यधिकम् इ. 12. छात्राः क. 13. प्रवृत्त्यर्थम् ह.

वृद्धिप्रसङ्गोऽस्ति। वृद्धेरभावात् प्रतिषेधोऽपि नास्ति इत्यप्रसङ्गः। उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वत्र्यलिन्दे भवः पूर्वत्रैयलिन्दः। यत्र तूत्तरपदसम्बन्धी यण् न भवति तत्र नेष्यते प्रतिषेधः। द्वे अशीती भूतो भूतो भावी वा द्वयाशीतिकः ॥

## द्वारादीनां च। (४/१३८६)

द्वार इत्येवमादीनां य्वाभ्याम् [1]उत्तरपदस्य अचामादेरचः स्थाने वृद्धिर्न भवति, पूर्वौ तु ताभ्याम् ऐजागमौ भवतः[2]। द्वारे नियुक्तः दौवारिकः। द्वारपालस्य [3]इदं दौवारपालम्। तदादिविधिश्चात्र [4]भवति। स्वरमधिकृत्य कृतो ग्रन्थः[5] सौवरः[6]। [7]सौवरः अध्यायः, सौवर्यः सप्तम्यः इति। व्यल्कशे भवः वैयल्कशः। स्वस्ति इत्याह सौवस्तिकः। स्वर्भवः सौवः।

[८४२] अव्ययानां भमात्रे टिलोपः[8]।

स्वर्गमनमाह [9]सौवर्गमनिकः। स्वाध्याय इति केचित् पठन्ति, तदनर्थकम्। शोभनोऽध्यायः इत्येतस्यां व्युत्पत्तौ [10]तु पूर्वेणैव[11] सिद्धम्। [12]अथापि एवं व्युत्पत्तिः क्रियते, [13]स्वोऽध्यायः स्वाध्यायः इति? एवमप्यत्रैव स्वशब्दस्यैव पाठात् सिद्धम्। तदादावपि हि [14]वृद्धिरियं भवत्येव। स्फयकृतस्य अपत्यम् स्फैयकृतः। स्वादुमृदुनः इदम् सौवादुमृदवम्। शुनः इदम् [15]शौवनम्। अणि 'अन्' (६.४.१६७/११५५) इति [16]प्रकृतिभावः। शुनो विकारः शौवं मांसम्। '[17]प्राणिरजतादिभ्योऽञ्' (४.३.१५४/१५३२) इत्यञ्। श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः। स्वस्य इदम् सौवम्। स्वग्रामे भवः सौवग्रामिकः[18]। अध्यात्मादित्वात् ठञ् (वा. ४५६)। अपदान्तार्थोऽयमारम्भः।

द्वार। स्वर। व्यल्कश। स्वस्ति। स्वर्। स्फयकृत। स्वादुमृदु। श्वन्। स्व। द्वारादिः ॥

## न्यग्रोधस्य च केवलस्य। (७/१५४३)

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्य अचामादेः अचः स्थाने वृद्धिर्न भवति, [19]तस्माच्च पूर्व[20]मैकार आगमो भवति। न्यग्रोधस्य विकारः नैयग्रोधः [21]चमसः। केवलस्य इति किम्? [22]न्यग्रोधमूले भवाः शालयः न्याग्रोधमूलाः शालयः। न्यग्रोहयति इति न्यग्रोधः इति व्युत्पत्तिपक्षे नियमार्थम्,[23] अव्युत्पत्तिपक्षे विध्यर्थम् ॥

---

1. उत्तरस्य इ. 2. तद्धिते ञिति णिति किति च इत्यधिकम् क. इ. 3. अयं दौवारपालिः इ, इयं दौवारपाली ह. 4. इष्यते क. 5. इति इत्यधिकम् क. 6. ग्रन्थः इत्यधिकम् क. 7. सौवरोऽध्यायः नास्ति ड. 8. वक्तव्यः इत्यधिकम् क. 9. सौवर्गामिकः क, सौवर्गगामिकः ड. 10. तु नास्ति क. ह. 11. सिद्धः क. 12. तथापि क. 13. स्वस्य अध्यायः इ. 14. विधिरयं इ. ड. 15. शौनम् क. 16. प्रकृतिवद्भावः क. इ. ह. 17. प्राणि-आरम्भः नास्ति इ. 18. स्वनगरे भवः सौवनगरिकः इत्यधिकम् क.ह. 19. तद्धिते ञिति णिति किति च परतः इत्यधिकम् क. 20. ऐजागमः क. 21. फलम् इ. 22. वाक्यमिदं नास्ति क. 23. वचनम इत्यधिकम् क.

## न कर्मव्यतिहारे। (६/३२१७)

कर्मव्यतिहारे यदुक्तं तन्न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी,[1] व्यावलेखी, [2]व्यावव्वर्ती, व्यावहासी वर्तते। 'कर्मव्यतिहारे णच् स्त्रियाम्' (३.३.४३/३२१५) इति [3]णच्प्रत्ययः, तदन्तात् 'णचः स्त्रियामञ्' (५.४.१४/३२१६) ॥

## स्वागतादीनां च। (७/१५४९)

स्वागत इत्येवमादीनां यदुक्तं तन्न भवति। स्वागतमित्याह स्वागतिकः। स्वध्वरेण चरति [4]स्वाध्वरिकः। स्वङ्गस्य [5]अपत्यम् स्वाङ्गिः। व्यङ्गस्य अपत्यम् व्याङ्गिः। [6]व्यडस्य अपत्यम् व्याडिः। व्यवहारेण चरति व्यावहारिकः। व्यवहारशब्दो[7]ऽयं [8]लौकिके वृत्ते वर्तते, न तु कर्मव्यतिहारे। स्वपतौ साधुः स्वापतेयः[9]। द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः।

स्वागत। स्वध्वर। स्वङ्ग। व्यङ्ग। व्यड। व्यवहार। स्वपति। स्वागतादिः ॥

## श्वादेरिञि। (८/१५६०)

श्वादेः अङ्गस्य इञि [10]परतो यदुक्तं तन्न भवति। [11]श्वभस्त्रस्य अपत्यम् श्वाभस्त्रिः। श्वादंष्ट्रिः। श्वन्शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवति इति एतदेव [12]वचनं ज्ञापकम्।

[८४३] इकारादिग्रहणं [13]कर्तव्यं श्वागणिकाद्यर्थम्। (म. भा. ३. ३१९)

श्वगणेन चरति श्वागणिकः। श्वायूथिकः। तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते। श्वाभस्त्रेः इदम् श्वाभस्त्रम् ॥

## पदान्तस्यान्यतरस्याम्। (९/१५६१)

श्वादेः अङ्गस्य [14]पदशब्दान्तस्य अन्यतरस्यां यदुक्तं तन्न भवति। श्वपदस्य इदम् श्वापदम्, शौवापदम् ॥

## उत्तरपदस्य। (१०/१३९६)

उत्तरपदस्य इत्ययमधिकारः 'हनस्तोऽचिण्णलोः' (७.३.३२/२४७४) इति प्रागेतस्मात्। यद् इत ऊर्ध्वमनुक्रमिष्यामः उत्तरपदस्य [15]इत्येवं तद् वेदितव्यम्। वक्ष्यति—'अवयवादृतोः' (७.३.११/१३९७)।

---

1. इत्यञन्तात् टिड्ढाणञ् इति ङीप् इत्यधिकम् क. इ. 2. व्याववर्षी क, व्यववर्ची इ. 3. इच्प्रत्ययः क. 4. स्वध्वरिकः क. 5. अपत्यं नास्ति ब, अङ्गस्य अपत्यं आङ्गिः क. 6. व्याडस्य क. इ. 7. अयं नास्ति क. 8. लोकवृत्तौ इ, लोकवृत्तः ह. 9. पथ्यतिथिवसतिस्वपतेर्ढञ् इत्यधिकम् ह. 10. प्रत्यये इत्यधिकम् ह. 11. श्वभस्त्रस्य अपत्यं नास्ति ह. 12. वचनम नास्ति इ. 13. हि इत्यधिकम् इ. क. 14. पदशब्दोत्तर–शब्दस्य इ. 15. च इत्यधिकम् क. ड.

पूर्ववार्षिकम्। अपरवार्षिकम्। पूर्वहैमनम्। [1]अपरहैमनम्। यत्र पञ्चमीनिर्देशो नास्ति 'जे प्रोष्ठपदानाम्[2]' (७.३.१८/१४०९) इत्येवमादौ, तदर्थमुत्तरपदाधिकारः। पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम्, वृद्धेश्च व्यपदेशार्थम्। 'उत्तरपदवृद्धौ सर्वं च' (६.२.१०५/३८३९) [3]इति उत्तरपदाधिकारे [4]या वृद्धिः इत्येवं विज्ञायते ॥

## अवयवादृतोः। (११/१३९७)

अवयववाचिनः[5] उत्तरस्य ऋतुवाचिनः उत्तरपदस्य च अचामादेः अचः [6]वृद्धिर्भवति तद्धिते ञिति, णिति, किति च [7]परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। पूर्वं वर्षाणाम्, अपरं वर्षाणाम् इति एकदेशिसमासः। 'तत्र भवः' (४.३.५३/१४२८) इत्येतस्मिन्नर्थे 'वर्षाभ्यष्ठक्' (४.३.१८/१३८९), 'हेमन्ताच्च' (४.३.२१/३४५२), 'सर्वत्राण् तलोपश्च' (४.३.२२/१३९०) इत्यण् [8]प्रत्ययः। तत्र ऋतोर्वृद्धिमद्विधौ अवयवात् इति तदन्तविधिः। अवयवात् इति किम्? पूर्वासु वर्षासु भवम् पौर्ववर्षिकम्। 'कालाट् ठञ्' (४.३.११/१३८१) इति ठञ्। अवयवपूर्वस्यैव तदन्तविधिः, नान्यस्य ॥

## सुसर्वार्धाज्जनपदस्य। (१२/१३९८)

सु सर्व अर्ध इत्येतेभ्यः उत्तरस्य जनपदवाचिनः उत्तरपदस्य अचामादेरचः[9] वृद्धिर्भवति तद्धिते ञिति, णिति, किति च [10]परतः। [11]सुपाञ्चालकः। सर्वपाञ्चालकः। [12]अर्धपाञ्चालकः। 'जनपदतदवध्योश्च' (४.२.१२४/१२४८), 'अवृद्धादपि बहुवचनविषयात्' (४.२.१२५/१३४९) इति वुञ्। सुसर्वार्धदिक्शब्देभ्यो जनपदस्य इति तदन्तविधिः ॥

## दिशोऽमद्राणाम्। (१३/१३९९)

दिग्वाचिनः उत्तरस्य जनपदवाचिनो मद्रवर्जितस्य अचामादेरचः[13] वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। पूर्वपाञ्चालकः। [14]अपरपाञ्चालकः। दक्षिणपाञ्चालकः। पूर्ववत् तदन्तविधिः प्रत्ययश्च। दिशः इति किम्? पूर्वः पञ्चालानाम् पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणाम् इति किम्? पौर्वमद्रः। आपरमद्रः। 'मद्रेभ्योऽञ्' (४.२.१०८/१३२९) इति अञ्प्रत्ययः ॥

## प्राचां ग्रामनगराणाम्। (१४/१४००)

प्राचां देशे[15] ग्रामनगराणां दिश उत्तरेषाम् अचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। ग्रामाणाम्—पूर्वैषुकामशम्यां भवः पूर्वैषुकामशमः। अपरैषुकामशमः। पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः।

---

1. अपरहैमनम् नास्ति इ. 2. च इत्यधिकम् क. 3. इत्यत्र इ.ड.ह. 4. च एषा अ.ब. 5. शब्दात् इत्यधिकम् क. इ. 6. स्थाने इत्यधिकम् इ. ह. 7. प्रत्यये इत्यधिकम् क. 8. प्रत्ययः नास्ति क. 9. स्थाने इत्यधिकम् क. 10. प्रत्यये इत्यधिकम् क. 11. सुपञ्चालेषु भवः इत्यधिकम् क. 12. अर्धपाञ्चालकः नास्ति क. 13. स्थाने इत्यधिकम् क. इ. 14. उत्तरपाञ्चालकः इ. ह. 15. ग्रामाणां नगराणां च क.

नगराणाम् – पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः। अपरपाटलिपुत्रकः। पूर्वकान्यकुब्जः। अपरकान्यकुब्जः।

ग्रामत्वादेव नगराणामपि [1]ग्रहणे सिद्धे [2]भेदेन यदुभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थम्। दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादिः ग्रामनामधेयम्। पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह। तत्र ग्रामवाचिनामङ्गानामवयवस्य दिक्शब्दादुत्तरस्य नगरवाचिनामुत्तरपदानामवयवस्य च वृद्धिर्भवति इत्येवमभिसम्बन्धः क्रियते। इतरत्र तु दिश उत्तरेषां नगराणाम् इत्येव। पूर्वैषुकामशमः इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवति इति ज्ञापित 'नेन्द्रस्य परस्य' (७.३.२२/१२४०) इति प्रतिषेधेन ॥

## सङ्ख्यायाः संवत्सरसङ्ख्यस्य च। (१५/१७५२)

सङ्ख्याया [3]उत्तरपदस्य संवत्सरशब्दस्य सङ्ख्यायाश्च अचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः[4]। सङ्ख्यायाः – द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः[5]। द्विसाप्ततिकः[6]। द्विषष्टयादिशब्दो वर्षेषु संख्येयेषु वर्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति। 'परिमाणान्तस्यासञ्ज्ञाशाणयोः' (७.३.१७/१६८३) इत्येव सिद्धे संवत्सरग्रहणं [7]परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन द्वैसमिकः, त्रैसमिकः इति उत्तरपदवृद्धिर्न भवति। द्विवर्षा, त्रिवर्षा माणविका इति अपरिमाणबिस्ताचित (४.१.२२/४८०) इति पर्युदासो न भवति ॥

## वर्षस्याभविष्यति। (१६/१७५४)

सङ्ख्याया [8]उत्तरस्य वर्षशब्दस्य अचामादेरचः वृद्धिर्भवति तद्धिते ञिति, णिति, किति च[9] परतः, स चेत् तद्धितो[10] भविष्यत्यर्थे न भवति। द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः। त्रिवार्षिकः। अभविष्यति इति किम्? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये, अधिकं वापि विद्येत, स सोमं पातुमर्हति। त्रीणि वर्षाणि भावी इति त्रैवर्षिकम्। अधीष्टभृतयोरभविष्यति इति प्रतिषेधो न [11]भवति। गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति इति द्विवार्षिको मनुष्यः ॥

## परिमाणान्तस्यासञ्ज्ञाशाणयोः। (१७/१६८३)

परिमाणान्तस्याङ्गस्य सङ्ख्यायाः परं [12]यदुत्तरपदं तस्याचामादेरचः वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः, सञ्ज्ञायां विषये शाणे चोत्तरपदे[13] न भवति। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। 'विभाषा कार्षापणसहस्राभ्याम्' (५.१.२९/१६९४) इत्यत्र 'सुवर्णशतमानयोरुपसङ्ख्यानम्' (वा. ५०५) इति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतम् 'द्वित्रिपूर्वान् निष्कात्' (५.१.३०/१६९५) द्विनैष्किकम्[14]। असञ्ज्ञाशाणयो इति किम्? [15]पाञ्चलोहितिकम्। पाञ्चकलापिकम्। पञ्च

---

1. ग्रहणे नास्ति क. 2. भेदेन नास्ति क. 3. उत्तरस्य क. 4. त्रिसांवत्सरिकः इत्यधिकम् इ. ह. 5. त्रिषाष्टिकः इत्यधिकम् क.इ. 6. त्रिसाप्ततिकः इत्यधिकम् क.इ. 7. अन्यत्र इत्यधिकम् क. 8. उत्तरपदस्य ह. 9. प्रत्यये इत्यधिकम् क. 10. भविष्यति इत्यर्थे ह. 11. भविष्यति क.इ. 12. उत्तरपदस्य क. 13. परतः इत्यधिकम् क. 14. त्रिनैष्किकम् इत्यधिकम् इ.ड. 15. पाञ्चलौहितकम् क.

लोहित्यः परिमाणमस्य, पञ्च कलापाः परिमाणमस्य इति विगृह्य 'तदस्य परिमाणम्' (५. १. ५७/१७२३) इति योगविभागात् प्रत्ययः, तद्धितान्तश्चायं समुदायः सञ्ज्ञा। द्वाभ्यां शाणाभ्यां क्रीतम् द्वैशाणम्। त्रैशाणम्। 'शाणाद् वा' (५. १. ३५/१७००), 'द्वित्रिपूर्वादण् च' (५. १. ३६/१७०१) इत्यण् प्रत्ययः। 'असञ्ज्ञाशाण-कुलिजानाम्' इति केचित् पठन्ति। द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः॥

## जे प्रोष्ठपदानाम्। (१८/१४०९)

ज इति जातार्थो [1]निर्दिश्यते। तत्र यः तद्धितो विहितः तस्मिन्[2] ञिति, णिति, किति च परतः प्रोष्ठपदा-नामुत्तरस्याचामादेः अचः वृद्धिर्भवति। प्रोष्ठपदा नाम नक्षत्रम्, [3]ताभिः युक्तः कालः (४. २. ३/१२०४) इत्यण्। तस्य 'लुबविशेषे' (४. २. ४/१२०५) इति लुप्। प्रोष्ठपदासु जातः, ऋतुनक्षत्रेभ्योऽण् (४. ३. १६/१३८७) इत्यण्, प्रोष्ठपादः माणवकः। जे इति किम्? यदा प्रोष्ठपदो मेघो धरणीमभिवर्षति, प्रोष्ठपदासु भवः प्रौष्ठपदः। प्रोष्ठपदानाम् इति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते भद्रपादः [4]इति॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च। (१९/११३३)

हृद् भग सिन्धु इत्येवमन्तेऽङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति [5]च परतः। सुहृदयस्य इदम् सौहार्दम्। सुहृदयस्य भावः सौहार्द्यम्। सुभगस्य भावः सौभाग्यम्। [6]दौर्भाग्यम्। सुभगायाः अपत्यम् सौभागिनेयः। दौर्भागिनेयः। कल्याण्यादिषु (५. १. १२६/११३१) सुभगदुर्भगेति पठ्यते। सुभग मन्त्रे इत्युद्गात्रादिषु (५.१.१२९/१७९४) पठ्यते। तत्रोत्तरपदवृद्धिर्नेष्यते। महते सौभगाय। छन्दसि [7]सर्वविधीनां विकल्पितत्वात् (पु. प. ३५)। सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तु-सैन्धवः। पानसैन्धवः। सिन्धुशब्दः कच्छादिषु (४. २. १३३/१३५७) पठ्यते, तेन तदन्तविधि[8]रिष्यते इति अण्प्रत्ययः॥

## अनुशतिकादीनां च। (२०/१४३८)

अनुशतिक इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। अनुशतिकस्य इदम् आनुशातिकम्। अनुहोडेन चरति आनुहौडिकः। [9]अनुसंवरणे दीयते आनुसांवरणम्। [10]अनुसंवत्सरे दीयते आनुसांवत्सरिकः। अङ्गारवेणुः नाम कश्चित्, तस्य अपत्यम् आङ्गारवैणवः। असिहत्य–तत्र भवम् आसिहात्यम्। अस्यहत्य इति केचित् पठन्ति, ततोऽपि विमुक्तादित्वादण् (५. २. ६१/१८६१)। अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति आस्यहात्यः। अस्यहेतिः [11]इत्येवमपरे पठन्ति। अस्यहेतिः प्रयोजनमस्य आस्य-हैतिकः। अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक्। वध्योग इति बिदादिः (४.१.१०४/११०६) अयम्, तस्यापत्यम् वाध्यौगः। पुष्करसद्, अनुहरत् इति [12]बाह्वादिषु (४.१.९६/१०९६) पठ्यते।

---

1. निर्देशः क. 2. तद्धिते इत्यधिकम् क. 3. नक्षत्रयुक्तकाले क. 4. इति सिध्यति क. 5. च नास्ति व. क. ड, प्रत्यये इत्यधिकम् इ. ह. 6. दौर्भाग्यम् नास्ति क. 7. सर्वे विधयः विकल्प्यन्ते क. 8. अत्र भवति क. 9. अनुसंवरणे दीयते नास्ति क. 10. अनुसंवत्सरे भवः क. 11. एवम् नास्ति इ. ह. 12. एतौ शब्दौ इत्यधिकम् क, शब्दौ इत्यधिकम् इ.

पौष्करसादिः। आनुहारतिः। कुरुकत गर्गादिः (४.१.१०५/११०७), [1]कौरुकात्यः। कुरुपञ्चाल – कुरुपञ्चालेषु भवः कौरुपाञ्चालः। जनपदसमुदायो [2]जनपदग्रहणेन न गृह्यते इति वुञ् [3]न भवति। उदकशुद्धस्य अपत्यम् औदकशौद्धिः। इहलोक, परलोक – तत्र भवः ऐहलौकिकः, पारलौकिकः। लोकोत्तरपदस्य इति ठञ् (वा. ४५९)। सर्वलोक – तत्र [4]विदितः सार्वलौकिकः। सर्वपुरुषस्य इदम् सार्वपौरुषम्। सर्वभूमेः निमित्तं संयोगः उत्पातो वा सार्वभौमः। प्रयोग – तत्र भवः प्रायौगिकः। परस्त्री – पारस्त्रैणेयः। 'कुलटाया वा' (४.१.१२७/११३२) इति इनङ्। 'राजपुरुषात् ष्यञि' (ग. सू. १७६)। राजपौरुष्यम्। ष्यञि इति किम्? राजपुरुषस्य अपत्यम् राजपुरुषायणिः। 'उदीचां वृद्धादगोत्रात्' (४.१.१५७/११८१) इति फिञ्। [5]शतकुम्भसुखशयनादयः– शतकुम्भे भवः शातकौम्भः। सौखशायनिकः। पारदारिकः। सूत्रनडस्य अपत्यम् सौत्रनाडिः। आकृतिगणश्चायमिष्यते। तेन इदमपि सिद्धं भवति, अभिगममर्हति आभिगामिकः। अधिदेवे भवम्[6]आधिदैविकम्। आधिभौतिकम्। चतस्र एव विद्याः चातुर्वैद्यम्। स्वार्थे ष्यञ्।

अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसद्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। 'राजपुरुषात् ष्यञि' (ग. सू. १७६)। सूत्रनड। अनुशतिकादिः॥

## देवताद्वन्द्वे च। (२१/१२३९)

देवताद्वन्द्वे च पूर्वपदस्य उत्तरपदस्य च अचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। [7]'आग्निमारुतीं [8]पृश्निमालभेत' (मै. २.५.७)। आग्निमारुतं कर्म[9]। यो देवताद्वन्द्वः सूक्तहविःसम्बन्धी, तत्रायं विधिः[10]। इह तु न भवति, स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः। ब्रह्मप्रजापती – ब्राह्मप्रजापत्यम्॥

## नेन्द्रस्य परस्य। (२२/१२४०)

इन्द्रशब्दस्य परस्य यदुक्तं तन् न भवति। सौमेन्द्रः। आग्नेन्द्रः। परस्य इति किम्? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत्। इन्द्रशब्दे द्वावचौ, तत्र तद्धिते[11] एकस्य 'यस्येति च' (६.४.१४८/३११) इति लोपः, अपरस्य पूर्वेण सह एकादेशः इत्यप्राप्तिरेव वृद्धेः, तदेदं प्रतिषेधवचनं ज्ञापकम्, बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेशः इति। तेन पूर्वेषुकामशमः इत्यादि [12]सिद्धं भवति॥

## दीर्घाच्च वरुणस्य। (२३/१२४१)

दीर्घादुत्तरस्य वरुणस्य[13] यदुक्तं तन्न भवति[14]। ऐन्द्रावरुणम्। मैत्रावरुणम् (मै. २.१.७)। दीर्घात्

---

1. कौरकात्यः क. 2. जनपदेन क. इ. 3. न नास्ति क. 4. भवः इ. 5. शतकुम्भ – पारदारिकः नास्ति क. 6. आधिदैविकः आधिभौतिकः क. 7. आग्निवारुणीम् ब. 8. गृष्टिम् क, अनड्वाहीम् मुद्रितः पाठः 9. क्रियते। सा अस्य देवता इत्यण् प्रत्ययः इत्यधिकम् क. इ. 10. इति इत्यधिकम् इ. 11. कृते इत्यधिकम् ब. क. इ. 12. सिद्धिः इ. 13. देवताद्वन्द्वे इत्यधिकम् क. इ. 14. ञिति णिति किति च प्रत्यये परतः इत्यधिकम् इ.

इति किम् ? [1]'आग्निवारुणीमनड्वाहीमालभेत' (काठ. १३.६)। अग्नेः 'ईदग्नेः सोमवरुणयोः' (६.३.२७/९२३) इत्यस्य अनङपवादस्य 'इद्वृद्धौ' (६.३.२८/९२५) [2]इति प्रतिषेधो विधीयते, तेन दीर्घात् परो न भवति ॥

## प्राचां नगरान्ते। (२४/१४३१)

प्राचां देशे [3]नगरान्तेऽङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेरचः वृद्धिर्भवति तद्धिते ञिति, णिति, किति [4]च परतः। सुह्मनगरे भवः [5]सौह्मनागरः। पौण्ड्रनागरः। प्राचाम् इति किम् ? मद्रनगरमुदक्षु, तत्र भवः [6]माद्रनगरः ॥

## जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्। (२५/१४३२)

जङ्गल धेनु वलज इत्येवमन्तस्य अङ्गस्य पूर्वपदस्य अचामादेरचो वृद्धिर्भवति, विभाषितमुत्तरम् उत्तरपदस्य विभाषा भवति तद्धिते ञिति, णिति, किति [7]च परतः। [8]कुरुजङ्गलेषु भवम् कौरुजङ्गलम्, कौरुजाङ्गलम्। [9]वैश्वधेनवम्, वैश्वधैनवम्। सौवर्णवलजः, सौवर्णवालजः ॥

## अर्धात् परिमाणस्य पूर्वस्य तु वा। (२६/१६८४)

अर्धशब्दात् [10]परस्य परिमाणवाचिनः उत्तरस्य अचामादेरचः स्थाने वृद्धिर्भवति, पूर्वस्य [11]तु वा भवति तद्धिते ञिति, णिति, किति च[12] परतः। अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम्, अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्। परिमाणस्य इति किम् ? अर्धक्रोशः प्रयोजनमस्य आर्धक्रोशिकम् ॥

## नातः परस्य। (२७/१६८८)

अर्धात् [13]परस्य परिमाणाकारस्य[14] वृद्धिर्न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति [15]च परतः। [16]अर्धप्रस्थिकः, आर्धप्रस्थिकः। अर्धकंसिकः, आर्धकंसिकः। अतः इति किम् ? आर्धकौडविकः। तपरकरणं किम् ? इह मा भूत्, अर्धखार्यां भवा अर्धखारी। किं च स्यात् ? अर्धखारी भार्या यस्य अर्धखारी-भार्यः, 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६.३.३९/८४०) इति पुंवद्भावप्रतिषेधो न स्यात्। यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते, स वृद्धिनिमित्तं न भवति इति पुंवद्भावो न प्रतिषिध्यते, यथा वैयाकरणी भार्या अस्य वैयाकरण-भार्यः इति ॥

---

1. अग्निवारुणीम् ब. 2. इत्यस्य प्रसङ्गे इ. 3. नगरशब्दान्ते इ. ह. 4. वा ब. 5. सुह्मनागरः इत्यधिकम् ब. इ. 6. मद्रनागरः इ. 7. वा ब. ह. 8. कुरुषु जङ्गलम् इत्यधिकम् क. ड. इ. 9. विश्वधेनोः प्रत्यये इत्यधिकम् क, विश्वधेनुषु भवम् इत्यधिकम् ह. 10. उत्तरस्य क. इ. 11. तु नास्ति इ. 12. प्रत्यये इत्यधिकम् क. 13. उत्तरस्य क. 14. चादेः अचः स्थाने इत्यधिकम् क. इ, परिमाणवाचिनः उत्तरपदस्य इत्यधिकम् ह. 15. तु प्रत्यये क. 16. अर्धप्रस्थिकम्, आर्धप्रस्थिकम् ह.

## प्रवाहणस्य ढे । (२८/११२९)

[1]प्रवाहणस्य ढे परतः उत्तरपदस्याचामादेरचः [2]वृद्धिर्भवति, पूर्वपदस्य वा भवति[3] । प्रवाहणस्य अपत्यम् प्रावाहणेयः, प्रवाहणेयः । 'शुभ्रादिभ्यश्च' (४.१.१२३/११२६) इति ढक् प्रत्ययः ॥

## तत्प्रत्ययस्य च । (२९/११२८)

[4]ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परतः उत्तरपदस्याचामादेरचः[5] वृद्धिर्भवति, पूर्वस्य तु वा । प्रवाहणेयस्य अपत्यम् प्रावाहणेयिः, प्रवाहणेयिः । [6]प्रावाहणेयकम्, प्रवाहणेयकम् । बाह्यतद्धितनिमित्ता वृद्धिः ढाश्रयेण विकल्पेन बाधितुमशक्या इति सूत्रारम्भः ॥

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । (३०/१४६०)

नञः उत्तरेषां शुचि ईश्वर क्षेत्रज्ञ कुशल निपुण इत्येतेषामचामादेरचः[7] वृद्धिर्भवति, पूर्वपदस्य वा भवति तद्धिते ञिति, णिति, किति च परतः । शुचि[8] – अशौचम्, आशौचम् । ईश्वर – अनैश्वर्यम्, आनैश्वर्यम् । क्षेत्रज्ञ – अक्षैत्रज्ञ्यम्, आक्षैत्रज्ञ्यम् । कुशल – अकौशलम्, आकौशलम् । निपुण – अनैपुणम्, आनैपुणम् ।

अत्र केचिदाहुः इयं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते । न नञ्पूर्वात् तत्पुरुषात् (५.१.१२१/१७८३) इत्युत्तरो भावप्रत्ययः प्रतिषिध्यते । तत्र शुच्यादिभ्यः एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनात् भवति इति । तदपरे न मृष्यन्ते । भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्तमपत्यादिषु अर्थेषु नञ्समासादेव विद्यते । बहुव्रीहेश्च नञ्समासात् भाववचनोऽपि अस्ति, तत्राङ्गाधिकारोपमर्दनं न युज्यते इति । अक्षेत्रज्ञानीश्वरौ तत्पुरुषौ एव ब्राह्मणादिषु (५.१.१२४/१७८८) पठ्येते, ततः ताभ्यां भावे ष्यञ् भवति ॥

## यथातथयथापुरयोः पर्यायेण । (३१/१७८९)

यथातथ यथापुर इत्येतयोः नञः [9]उत्तरयोः पर्यायेण अचामादेरचः[10] वृद्धिर्भवति तद्धिते ञिति, णिति, किति [11]च परतः । आयथातथ्यम्, अयाथातथ्यम् । आयथापुर्यम्, अयाथापुर्यम् । अयथातथ अयथापुर इति ब्राह्मणादिषु नञ्समासौ एतौ द्रष्टव्यौ । सूत्रे यथातथयथापुरशब्दौ तु 'यथाऽसादृश्ये' (२.१.७/६६१) इति अव्ययीभावसमासौ । तथा [12]नपुंसकाश्रयं ह्रस्वत्वं कृतम् । भाष्ये तु यथादर्शितं अयथातथाभावः (म. भा. ३.३२२) इति तथा सुप्सुपेति समासो लक्ष्यते ॥

---

1. प्रवाहणशब्दस्य क.इ.ह. 2. स्थाने इत्यधिकम् इ.ह. 3. तद्धिते ञिति णिति किति प्रत्यये परतः इत्यधिकम् क. 4. प्रवाहणस्य इति वर्तते । तदिति ठञ्प्रत्ययस्य इत्यर्थः इत्यधिकम् ब. क. इ. 5. स्थाने इत्यधिकम् क.इ.ह. 6. प्रवाहणस्य इदं इत्यधिकम् क.इ. 7. स्थाने इत्यधिकम् क.इ. 8. इति इत्यधिकम् क. 9. पूर्वोत्तरपदयोः ब. 10. स्थाने इत्यधिकम् क.इ.ह. 11. प्रत्यये इत्यधिकम् क. 12. च इत्यधिकम् ब.ड.

## हनस्तोऽचिण्णलोः । (३२/२६७४)

तद्धितेषु इति निवृत्तम्, तत्सम्बद्धं[1] किति इत्यपि । ञ्णिति इति वर्तते । हनः तकारोदेशो भवति ञिति, णिति प्रत्यये परतः चिण्णलौ वर्जयित्वा । घातयति । घातकः । साधुघाती । घातंघातम् । घातो वर्तते । अचिण्णलोः इति किम् ? अघानि । जघान[2] । धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते । इह न भवति, वार्त्रघ्नम् (म.भा. ३.३२२) इतरत् इति ॥

## आतो युक् चिण्कृतोः। (३३/२७६१)

आकारान्तस्य अङ्गस्य चिणि कृति ञ्णिति [3]युगागमो भवति । अदायि । अधायि । कृति[4] – दायः । दायकः । धायः । धायकः । चिण्कृतोः इति किम् ? ददौ । दधौ । चौडिः, बालाकिः, [5]बाह्वादित्वात् (४.१.९६/१०९६) इञ् । ज्ञा देवता अस्य ज्ञः ॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः । (३४/२७६३)

उदात्तोपदेशस्य मान्तस्याङ्गस्य आचमिवर्जितस्य चिणि कृति च ञ्णिति[6] यदुक्तं तन्न भवति । किं च [7]उक्तम्? 'अत उपधायाः' (७ २.११६/२२८२) इति वृद्धिः । अशमि । अतमि । अदमि । कृति [8]खल्वपि – शमकः । तमकः । दमकः । शमः । तमः । दमः । उदात्तोपदेशस्य इति किम् ? यामकः । रामकः । कथम् उद्यमोपरमौ ? 'अड उद्यमे' (धा. पा. ३५८), 'यम उपरमे' (धा. पा. ९८५) इति निपातनादनुगन्तव्यौ । उपदेशग्रहणम् किम् ? शमी, दमी, तमी [9]इत्यत्र यथा स्यात्, इह [10]मा भूत्, यामकः, रामकः इति । मान्तस्य इति किम् ? चारकः । पाठकः । अनाचमेः इति किम् ? आचामकः ।

[८४४] अनाचमिकमिवमीनामिति वक्तव्यम् ।

आचामः । कामः । वामः । [11]आमः इति चौरादिकस्य णिचि वृद्धौ सत्यां भवति । तत्र हि मित्त्वं नास्ति 'नान्ये मितोऽहेतौ' (ग.सू. १७७) इति । [12]सूर्यविश्रामा भूमिः इत्येवमा[13]दिकं प्रयोगमन्याय्यमेव मन्यन्ते । चिण्कृतोः इत्येव, शशाम । ततास ॥

## जनिवध्योश्च । (३५/२५१२)

जनि वधि इत्येतयोः चिणि कृति च ञ्णिति यदुक्तं तन् न भवति । अजनि । जनकः । [14]प्रजनः । अवधि । वधकः । वधः । वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति, तस्यायं प्रतिषेधो [15]विधीयते । भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते इति हि प्रयोगो दृश्यते । वधादेशस्य अदन्तत्वादेव वृद्धेरभावः । चिण्कृतोः इत्येव, 'जजान गर्भं महिमानमिन्द्रम्' (अ.वे. ३.१०.१२) ॥

---

1. ञिति णिति प्रत्यये इत्यनुवर्तते इत्यधिकम् इ. 2. कंसं किल वासुदेवः इत्यधिकम् क. 3. च प्रत्यये परतः इत्यधिकम् इ. 4. प्रत्यये इत्यधिकम् क. 5. बाह्वादित्वादिञ् नास्ति क.इ.ह. 6. प्रत्यये इत्यधिकम् क. 7. उक्तम् नास्ति इ. 8. खल्वपि नास्ति इ. 9. इत्यपि क. 10. च इत्यधिकम् ब. 11. कथं इत्यधिकम् ब.क. 12. सूर्यविश्रमभूमिः क.इ, सूर्यविश्रामभूः ड. 13. आदिकं प्रयोगं नास्ति क. 14. प्रजनः नास्ति क. 15. क्रियते क.

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ । (३६/२८७०)

[1]सर्वं निवृत्तम्, अङ्गस्य इति वर्तते । अर्ति ह्री व्ली री क्नूयी क्ष्मायी इत्येतेषामङ्गानाम् आकारान्तानां च पुगागमो भवति णौ परतः । अर्ति – अर्पयति । ह्री – ह्रेपयति । व्ली – व्लेपयति । री – रेपयति । क्नूयी– क्नोपयति । क्ष्मायी – क्ष्मापयति । आकारान्तानाम् – दापयति । [2]धापयति । अर्ति इति 'ऋ गतिप्रापणयोः' (धा. पा. ९३७), 'ऋ गतौ' (धा. पा. १०९९) इति द्वयोरपि [3]धात्वोर्ग्रहणम् । री इत्यपि 'री गतिरेषणयोः' (धा. पा. १५०१), 'रीङ [4]श्रवणे' (धा. पा. ११३९) [5]इति । पुकः पूर्वान्तिकरणम् अदीदपत् इत्यत्र उपधाह्रस्वो यथा स्यात् इति ॥

## शाच्छासाह्वाव्यावेपां युक् । (३७/२८८८)

शा छा सा ह्वा व्या वे पा इत्येतेषाम् अङ्गानां युगागमो भवति णौ परतः । शा – निशाययति । छा – अवच्छाययति । सा – अवसाययति । ह्वा – [6]ह्वाययति । व्या – संव्याययति । वे – वाययति । पा – पाययति । पाग्रहणे 'पै ओवै शोषणे' (धा. पा. ९२१, ९२२) इत्यस्यापीह ग्रहणमिच्छन्ति । 'पा रक्षणे' (धा. पा. १०५७) इत्यस्य लुग्विकरणत्वान् न भवति ।

[८४५] लुगागमस्तु तस्य वक्तव्यः । (म. भा. ३. ३२३)

पालयति ।

[८४६] धूञ्प्रीञोर्नुग्वक्तव्यः । (म. भा. ३. ३२३)

[7]धूनयति । प्रीणयति । एतेऽपि पूर्वान्ता एव क्रियन्ते, तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणत् इति उपधाह्रस्वत्वं भवति ।

शाछासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम् । किमेतस्य आख्याने प्रयोजनम् ? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा (व्या.प. १३) नास्ति [8]इत्युपदिश्यते । तेन अध्यापयति, [9]जापयति इत्येवमादि सिद्धं भवति ॥

## वो विधूनने जुक् । (३८/२८९०)

वा इत्येतस्य विधूननेऽर्थे [10]वर्तमानस्य जुगागमो भवति णौ परतः । [11]पक्षेणोपवाजयति । विधूनने इति किम्? आवापयति केशान् । किमर्थं सूत्रम्, 'वज गतौ' (धा. पा. २५२) ण्यन्तस्य सिद्धत्वात् ? वातेः पुक् मा भूत् इत्येवमर्थम् । 'पै ओवै शोषणे' (धा. पा. ९२१, ९२२) इत्येतस्य एतद् रूपम् ॥

---

1. सर्वं नास्ति क. 2. वापयति क, नास्ति इ. 3. धात्वोः नास्ति क. इ. 4. प्रस्रवणे ब. 5. च इत्यधिकम् इ. 6. अपह्वाययति ब. 7. विधूनयति क. ह. 8. इति प्रदर्श्यते क. 9. ज्ञापयति ह. 10. वर्तमानस्य नास्ति क. इ. 11. वाजयति ड, पक्षेणैव वाजयति ह.

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने । (३९/२५९१)

ली ला इत्येतयोरङ्गयोः अन्यतरस्यां नुक् लुक् इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे । घृतं विलीनयति, घृतं विलाययति । [1]विलालयति, [2]विलापयति । ली ई इति ईकारः प्रश्लिष्यते, ततः ईकारान्तस्यैव नुक् भवति, न तु कृतात्वस्य 'विभाषा लीयतेः' (६.१.५१/२५०९) इति । स्नेहविपातने इति किम् ? जतु विलापयति । जटाभिरालापयते । ली इति लीलीङोर्ग्रहणम् । ला इति लातेः[3], कृतात्वस्य च लीयतेः ॥

## भियो हेतुभये षुक् । (४०/२५९६)

भी इत्येतस्य [4]हेतुभयेऽर्थे षुगागमो भवति णौ परतः । मुण्डो भीषयते । जटिलो भीषयते । अत्रापि भी ई इति [5]ईकारप्रश्लेषः कृतात्वस्य[6] पुग्निवृत्त्यर्थः[7] । मुण्डो [8]भापयते इत्येवं[9] हि तत्र भवति । हेतुभये इति किम् ? कुञ्चिकया एनं भाययति[10] । नात्र हेतुः प्रयोजको [11]भयकारणम्, किं तर्हि, कुञ्चिका ॥

## स्फायो वः । (४१/२५९७)

[12]स्फाय् इत्येतस्य अङ्गस्य [13]वकारादेशो भवति णौ परतः । [14]स्फावयति ॥

## शदेरगतौ तः । (४२/२५९८)

शदेः अङ्गस्य अगतौ अर्थे [15]वर्तमानस्य [16]तकारादेशो भवति णौ परतः । पुष्पाणि [17]शातयति । अगतौ इति किम् ? गाः[18] शादयति [19]गोपालकः ॥

## रुहः पोऽन्यतरस्याम् । (४३/२५९९)

[20]रुहेः अङ्गस्य अन्यतरस्यां पकारादेशो भवति णौ परतः । [21]व्रीहीन् रोपयति, [22]व्रीहीन् रोहयति ॥

## प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । (४४/४६३)

प्रत्ययस्थात् [23]ककारात् पूर्वस्य [24]अकारस्य इकारादेशो भवति आपि परतः, स चेद् आप् सुपः परो न भवति । जटिलिका । मुण्डिका । कारिका । हारिका । [25]एतिकाश्चरन्ति । प्रत्ययग्रहणं किम् ?

---

1. विषं विलालयति क. 2. उदाहरणमिदं नास्ति क. 3. च इत्यधिकम् इ. 4. अङ्गस्य इत्यधिकम् ह. क. ड. 5. इकारप्रश्लेषः ब. 6. च इत्यधिकम् ब. 7. द्रष्टव्यः इत्यधिकम् ब. 8. भाययते ड. 9. पुग् इत्यधिकम् क. 10. शरैः भीरुम् अभाययत इत्यधिकम् इ. 11. भयस्य कारणम् क. 12. स्फायी क. 13. वकारोऽन्तादेशः इ. 14. स्फावयतः स्फावयन्ति इत्यधिकम् ह. 15. वर्तमानस्य नास्ति क. 16. तकारोऽन्तादेशः ह. 17. फलानि इत्यधिकम् ब. क. इ. 18. दण्डेन इत्यधिकम् क, यष्टया इत्यधिकम् ह. 19. गोपालः ड. ब. 20. रुह इत्येतस्य क. इ. ह. 21-22. व्रीहीन् नास्ति क. 23. कात् इ. ह. 24. अतः ह. 25. एतीकाः क, एनिकाः इ.

शक्नोति [1]इति शका । स्थग्रहणं विस्पष्टार्थम् । ककारमात्रं [2]प्रत्ययो नास्ति इति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम् । कात् इति किम् ? मण्डना । रमणा । पूर्वस्य इति किम् ? परस्य मा भूत्, पटुका । मृदुका । अतः इति किम् ? गोका । नौका । तपरकरणं किम् ? राका । धाका । आपि इति किम् ? कारकः । [3]धारकः । अथ आपि इत्यनेन किं [4]विशिष्यते ? ककारः । यद्येवम्, कारिका इत्यत्रापि न प्राप्नोति, अकारेण व्यवहितत्वात् ? एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवति इति व्यवधानमेव ? वचनाद् व्यवधानमीदृशं यत् स्थानिवद्भावकृतम् एकेन वर्णेन तदाश्रीयते[5] । रथकटचादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानम् इति इत्वं न भवति । असुपः इति किम् ? बहवः परिव्राजका अस्यां मथुरायाम् बहुपरिव्राजका मथुरा । सुबन्तादयं बहुपरिव्राजकशब्दात् परः आप् इति प्रतिषेधो [6]भवति । प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः । पर्युदासे हि [7]सति समुदायादसुबन्तात् परः आप् इति इत्वमत्र स्यादेव । अविद्यमानः सुप् यस्मिन् सोऽयम् असुप् इति ? एवमपि नाश्रीयते । तथा हि सति [8]बहुचर्मिका इत्यत्रापि न स्यात् ।

[८४७] मामकनरकयोरुपसङ्ख्यानं कर्तव्यमप्रत्ययस्थत्वात् । (म. भा. ३.३२४)

मम इयं मामिका । [9]नरिका । अणि ममकादेशः । केवलमामक (४.१.३०/४८८) इति नियमात् सञ्ज्ञाछन्दसोः ईकारो नास्त्यत्र, तेन अण्प्रत्ययान्तादपि टाप् भवति, नरान् कायति इति नरिका । '[10]आतोऽनुपसर्गे कः' (३.२.३/२९१५) इति कः प्रत्ययः ।

[८४८] [11]प्रत्ययनिषेधे त्यक्त्यपोश्चोपसङ्ख्यानम् । (म. भा. ३.३२४)

'उदीचामातः स्थाने यकपूर्वायाः' (७.३.४६/४६५) इति विकल्पो मा भूत् इति । दाक्षिणात्यिका । इहत्यिका ॥

## न यासयोः । (४५/४६४)

या सा इत्येतयोः[12] इकारादेशो न भवति । यका । सका । या सा इति निर्देशोऽतन्त्रम्, यत्तदोरुपलक्षणमेतत् । इहापि प्रतिषेध इष्यते, यकां यकामधीमहे तकां तकां पचामहे (म. भा. ३.३२५) इति ।

[८४९] यासयोरित्त्वप्रतिषेधे त्यकन उपसङ्ख्यानम् । (म. भा. ३.३२५)

उपत्यका । अधित्यका ।

[८५०] पावकादीनां छन्दस्युपसङ्ख्यानम् । (म. भा. ३.३२५)

'हि॑र॑ण्यव॒र्णाः शुच॑यः पा॒व॒काः' (अ. वे. १.३३.१) । यासु अलोमकाः । छन्दसीति किम् ? पाविका ।

[८५१] आशिषि चोपसङ्ख्यानम्[13] । (म. भा. ३.३२५)

जीवतात् जीवका । नन्दतात् नन्दका । भवतात् भवका ।

---

1. इति नास्ति इ. 2. हि इत्यधिकम् ड. इ. ह. 3. हारकः इ. 4. विशेष्यते इ. 5. पुत्रकाम इत्यादिषु इत्यधिकम् इ. 6. भवति नास्ति क. 7. सति नास्ति इ. 8. बहुवर्मिका ब. 9. नरिका नास्ति ब. 10. वाक्यमिदं नास्ति ब. 11. प्रत्यय–इहत्यिका नास्ति क. 12. कात्पूर्वस्य इत्यधिकम् क. 13. कर्तव्यम् इत्यधिकम् क. इ.

[८५२] उत्तरपदलोपे चोपसङ्ख्यानम्[1] । (म. भा. ३.३२५)

देवदत्तिका, देवका । यज्ञदत्तिका, यज्ञका ।

[८५३] क्षिपकादीनां चोपसङ्ख्यानम् । (म. भा. ३.३२५)

क्षिपका । [2]ध्रुवका ।

[८५४] तारका ज्योतिष्युपसङ्ख्यानम् । (म. भा. ३.३२५)

तारका । ज्योतिषि इति किम् ? तारिका दासी ।

[८५५] वर्णका तान्तव उपसङ्ख्यानम् । (म. भा. ३.३२५)

वर्णका प्रावरणभेदः । तान्तवे इति किम् ? वर्णिका भागुरी लौकायते ।

[७५६] वर्तका शकुनौ प्राचामुपसङ्ख्यानम् । (म. भा. ३.३२६)

वर्तका शकुनिः । [3]प्राचामन्यत्र उदीचां तु वर्तिका । शकुनौ इति किम् ? वर्तिका भागुरी लौकायतस्य ।

[८५७] अष्टका पितृदैवत्ये[4] । (म. भा. ३.३२६)

अष्टका । पितृदैवत्ये इति किम् ? अष्टिका खारी ।

[८५८] वा सुतकापुत्रकावृन्दारकाणामुपसङ्ख्यानम् । (म. भा. ३.३२६)

सुतिका, सुतका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका ॥

## उदीचामातः स्थाने यकपूर्वायाः । (४६/४६७)

उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्च आतः स्थाने योऽकारः, तस्यातः स्थाने इकारादेशो भवति । उदीचां ग्रहणं विकल्पार्थम् । इभ्यिका, इभ्यका । क्षत्रियिका, क्षत्रियका । ककारपूर्वायाः – चटकिका, चटकका । मूषिकिका, मूषिकका । आतः इति किम् ? साङ्काश्ये भवा साङ्काश्यिका । स्थानग्रहणमनुवादेऽपि स्थानसम्बन्धप्रतिपत्त्यर्थम् । आतः इत्यनेन ह्यातः इति स्थानी विशिष्यते । यकपूर्वायाः इति किम् ? अश्वा – [5]अश्विका । यकपूर्वायाः इति स्त्रीलिङ्गनिर्देशः आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम् । इह [6]न भवति, शुभं याति इति शुभंयाः – शुभंयिका । भद्रं याति इति भद्रंया – भद्रंयिका ।

---

1. कर्तव्यम् इत्यधिकम् क. इ. 2. धूसरका क. 3. प्राचाम् नास्ति 4. उपसङ्ख्यानम् इत्यधिकम् क, उपसङ्ख्यातव्यम् इत्यधिकम् ह. 5. अश्वका क. 6. मा भूत् ब. क. इ.

[८५९] यकपूर्वाया धात्वन्तप्रतिषेधः। (म. भा. ३. ३२६)

धात्वन्तयोः यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः। सुनयिका। सुशयिका। सुपाकिका। अशोकिका॥

## भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि। (४७/४६६)

एषाम् आतः स्थाने योऽकारस्तस्य इत्वं न भवति उदीचामाचार्याणां मतेन। भस्त्रा – भस्त्रका, भस्त्रिका। अभस्त्रका, अभस्त्रिका। एषा – एषका, एषिका। अजा – अजका, अजिका। अनजका, अनजिका। ज्ञा – ज्ञका, ज्ञिका। अज्ञका, अज्ञिका। द्वा – द्वके, द्विके। स्वा – स्वका, स्विका। अस्वका, अस्विका।

एषाद्वे नञ्पूर्वे न प्रयोजयतः। किं कारणम्? तत्र हि सति यदि साकच्काभ्यां नञ्समासः, अथापि कृते [2]नञ्समासे पश्चादकच्, उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां सत्यां त्यदाद्यत्वे सति टापा भवितव्यम्, सोऽन्तर्वर्तिन्या विभक्त्या सुबन्तात् परः इति इत्वस्य प्राप्तिरेव नास्ति। तेन अनेषका, अद्वके इत्येव नित्यं भवितव्यम्। स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति। भस्त्रा इत्ययम् अभाषितपुंस्कः, तस्य 'अभाषितपुंस्काच्च' (७. ३. ४८/४६७) इत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम्। अविद्यमाना भस्त्रा यस्याः अभस्त्रा। साल्पा अभस्त्रका, अभस्त्रिका। अत्र उपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद् यः टाप् उत्पद्यते तस्य 'केऽणः' (७. ४. १३/८३४) इति यो ह्रस्वः, नासौ अभाषितपुंस्काद् [3]विहितस्य अतः स्थाने भवति। नञ्पूर्वाणामपि इत्यपिशब्दाद् अन्यपूर्वाणां केवलानां च विधिरयमिष्यते। निर्भस्त्रका, निर्भस्त्रिका, बहुभस्त्रका, बहुभस्त्रिका, इत्येवमनयोरपि इष्यते। अत्र नञ्पूर्वाणाम् इति वचनमनुवाद एव [4]मन्दबुद्धिप्रतिपत्त्यर्थः॥

## अभाषितपुंस्काच्च। (४८/४६७)

[5]अभाषितपुंस्काद् [6]विहितस्य आतः स्थाने योऽकारः तस्य उदीचामाचार्याणां मतेन इकारादेशो न भवति। खट्वका, खट्विका[7]। अखट्वका, अखट्विका। परमखट्वका, परमखट्विका। बहुव्रीहौ यदा कपि [8]ह्रस्वः क्रियते तदा भवितव्यमनेन [9]विधिना। अत्रापि अभाषितपुंस्काद् विहितस्यातः स्थाने भवत्यकारः[10] इति। यदा तु अविद्यमाना खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विका इति तदा न भवति। तथा अतिक्रान्ता खट्वाम् अतिखट्वा, अल्पा अतिखट्वा अतिखट्विका॥

## आदाचार्याणाम्। (४९/४६८)

अभाषितपुंस्कात् आतः स्थाने योऽकारः तस्य आचार्याणाम्[11] आकारादेशो भवति। खट्वाका[12]। अखट्वाका। परमखट्वाका[13]॥

---

1. भस्त्रा एषा अजा ज्ञा द्वा स्वा इत्येतेषां नञ्पूर्वाणामनञ्पूर्वाणामपि इत्यधिकम् ड. 2. नञ् नास्ति ब. 3. विहितस्य नास्ति क. 4. मन्दबुद्धिप्रतिपत्त्यर्थः नास्ति क, मन्दबुद्धेः इ. 5. उदीचाम् इति वर्तते इत्यधिकम् ह. 6. नञ्पूर्वात् अनञ्पूर्वात् इत्यधिकम् ह. 7. अल्पाख्या इत्यधिकम् क. 8. वा ह्रस्वत्वं क. 9. विधिना नास्ति इ. 10. अखट्विका, अखट्वका इत्यधिकम् इ. 11. मतेन इत्यधिकम् क. 12. खट्वाका इत्वापवादो योगः। न कपा इति ह्रस्वापवादश्च। मालाका वीणाका इत्यधिकम् इ. 13. आचार्यग्रहणं विकल्पार्थम् इत्यधिकम् ह.

## ठस्येकः । (५०/११७०)

अङ्गस्य निमित्तं यः [1]ठः, कश्च अङ्गस्य निमित्तम्, प्रत्ययः, तस्य [2]प्रत्ययठस्य इकः इत्ययमादेशो भवति । 'प्राग्वहतेष्ठक्' (४.४.१/१५४८) – आक्षिकः । शालाकिकः । 'लवणाट् ठञ्' (४.४.५२/१५०१) लावणिकः। ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः, तदा इहापि अकार उच्चारणार्थः[3], वर्णमात्रं तु स्थानित्वेनोपादीयते । सङ्घातग्रहणे [4]तु प्रत्ययेऽत्रापि सङ्घातग्रहणमेव । तत्र 'कणेष्ठः' (उ. १०८) कण्ठः इत्येवमादीनामुणादीनाम् 'उणादयो बहुलम्' (३.३.१/३१६९) इति [5]न भवति । मथितं पण्यमस्य माथितिकः (म. भा. ३. ३२८) इत्यत्र तु 'यस्येति च' (६.४.१४८/३११) इति लोपे कृते 'इसुसुक्तान्तात् कः' (७.३.५१/१२२१) इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति न भवति । यस्येति च इति लोपस्य स्थानिवद्भावाद्वा । पूर्वस्मादपि हि विधौ स्थानिवद्भावः ॥

## इसुसुक्तान्तात् कः । (५१/१२२१)

इस् उस् इत्येवमन्तानाम् उगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य कः इत्ययमादेशो भवति । इस् – सार्पिष्कः[6] । उस् – धानुष्कः । याजुष्कः । उक् – [7]नैषादकर्षुकः । शाबरजम्बुकः । [8]मातृकम् । पैतृकम् । तान्तात् – औदश्वित्कः । शाकृत्कः । [9]याकृत्कः । इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति, आशिषा चरति आशिषिकः । उषा चरति औषिकः ।

[८६०] दोष उपसङ्ख्यानम् ।

दोर्भ्यां तरति दौष्कः ॥

## चजोः कु घिण्ण्यतोः । (५२/२८६३)

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः । घिति – पाकः । त्यागः । रागः । ण्यति – पाक्यम् । वाक्यम् । [10]रेक्यम्[11] ॥

## न्यङ्क्वादीनां च । (५३/२८६४)

न्यङ्कु इत्येवमादीनां [12]कवर्गादेशो भवति । न्यङ्कुः – 'नावञ्चेः' (उ. १७) इति [13]उप्रत्ययः[14] । मद्गुः – मिमस्जिभ्य उः (उ. ७) इति मस्जेः उप्रत्ययः । भृगुः – 'प्रथिमदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ. २८) इति उप्रत्ययः । दूरेपाकः, फलेपाकः – दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव । पचाद्यच् (३.१.१३४/२८९६) । निपातनाद् वृद्धिः । 'तत्पुरुषे कृति बहुलम्' (६.३.१४/९७२) इति [15]सप्तम्या अलुक् । क्षणेपाकः इत्यपि हि केचित् पठन्ति । दूरेपाका, फलेपाका इति [16]टाबन्तमपरेऽधीयते । उकारान्तावपरे

---

1. ठकारः क. 2. ठस्य क. ह. 3. एव इत्यधिकम् क. इ. 4. हि क. 5. बहुलवचनात् इत्यधिकम् क. 6. बार्हिष्कः इत्यधिकम् क. इ. 7. नैषाहकर्षुकः इ. 8. मातृकः पैतृकः इ. 9. याकृत्कः नास्ति ह. 10. रेक्यम् नास्ति क. इ. 11. यथासङ्ख्यम् अत्र न भवति तेन रक्तं रागात् इति लिङ्गात् इत्यधिकम् इ. ड. 12. च इत्यधिकम् क. 13. उक् प्रत्ययः ह. 14. न्यङ्कुः मृगजातिः इत्यधिकम् क. 15. सप्तम्या अलुक् नास्ति इ. 16. टाबन्तौ इ.

दूरेपाकुः फलेपाकुः इति । तेषाम् उप्रत्ययः निपातनादेव । तकम् वकम् इति तञ्चतेर्वञ्चतेश्च स्फायितञ्चिवञ्चि (उ. १७८) इत्यादिना सूत्रेण रक् । व्यतिषङ्गः – व्यतिषजति इति पचाद्यच् (३.१.१३४/२८९६)। [1]अनुषङ्गः । [2]अवसर्गः । उपसर्गः[3] । श्वपाकः, मांसपाकः, कपोतपाकः,[4] उलूकपाकः इति कर्मोपपदादण् (३.२.१/२९१३) प्रत्ययः । सञ्ज्ञायाम् – मेघः । अवदाघः । निदाघः । अर्हतेर्घञ्, अर्घः । अवपूर्वस्य निपूर्वस्य च दहेरवदाघः, निदाघः । सञ्ज्ञाया अन्यत्र अर्हः, अवदाहः, निदाहः । न्यग्रोधः, वीरुद् इत्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि, विपूर्वस्य [5]क्विपि धकारो विधीयते । [6]न्यग्रोहयति न्यग्रोधः । विरोहयति इति वीरुत् ॥

## हो हन्तेर्ञ्णिन्नेषु । (५४/३५८)

हन्तेः हकारस्य कवर्गादेशो भवति ञिति णिति [7]प्रत्यये परतः नकारे च[8] । घातयति । घातकः । साधुघाती । घातंघातम् । घातो वर्तते । नकारे – घ्नन्ति । घ्नन्तु । अघ्नन् । हः इति किम् ? अलोऽन्त्यस्य मा भूत् । हन्तेः इति किम् ? प्रहारः । प्रहारकः । ञ्णित्प्रत्ययो हन्तेर्विशेषणम्, नकारो हकारस्य, नकारेऽनन्तरस्य हन्तिहकारस्य इति । तच्चानन्तर्यं [9]श्रुतिकृतं सन्निपातकृतमाश्रीयते । [10]स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्, वचनसामर्थ्यात् । यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते तथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' (व्या. प. ४६) इति ञ्णिति [11]धात्ववयवेन व्यवहितेऽपि सति भवति । इह तु न भवति, हननमिच्छति हननीयति, [12]हननीयतेर्ण्वुल् हननीयकः इति ॥

## अभ्यासाच्च । (५५/२४३०)

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति । जिघांसति । जङ्घन्यते । [13]अहं जघन । अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासः तस्मादेवैतत् कुत्वम् । [14]इह न भवति, हननीयितुम् इच्छति जिहननीयिषति ॥

## हेरचङि । (५६/२५३१)

हिनोतेर्हकारस्य अभ्यासादुत्तरस्य कवर्गादेशो भवति [15]अचङि । प्रजिघीषति । प्रजेघीयते । प्रजिघाय । अचङि इति किम् ? प्राजीहयत् [16]दूतम् । अचङि इति शक्यमकर्तुम् । कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्य इति विज्ञायमाने प्राप्तिरेव नास्ति ? तत् क्रियते ज्ञापकार्थम् । एतत् [17]ज्ञाप्यते, हेरचङि इति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवति इति । तेन प्रजिघाययिषति इति सिद्धं भवति ॥

## सन्लिटोर्जेः । (५७/२३३१)

सनि लिटि च प्रत्यये[18] जेः अङ्गस्य योऽभ्यासः तस्मादुत्तरस्य कवर्गादेशो भवति । जिगीषति । जिगाय । सन्लिटोः इति किम् ? जेजीयते । जिनातेः [19]सम्प्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात् तस्य ग्रहणं न भवति, जिज्यतुः, जिज्युः [20]इत्येव भवति ॥

---

1. अनुषङ्गः नास्ति क. 2. सृजति इति सर्गः अवसृजति इति अवसर्गः क.ड. 3. मेघः इत्यधिकम् अ. ह.ड. 4. पिण्डपाकः इत्यधिकम् ह. 5. हकारस्य इत्यधिकम् क. 6. न्यग्रोहति क. 7. प्रत्यये नास्ति क. 8. परतः इत्यधिकम् क. 9. श्रुतिकृतं नास्ति ड. 10. स्थानिवद्भावकृते क, स्थानिवद्भावात् ड. 11. इत्य-वयवेन क. 12. एतन्नास्ति क. 13. अहं किल जघान ड, जघान ह. 14. इह नास्ति क. 15. चङं वर्जयित्वा ड.क.ड, अचङि प्रत्यये ब. 16. दूतम् नास्ति क.ड. 17. ज्ञापयति क. 18. परतः इत्यधिकम् ड. 19. लिटि किति इत्यधिकम् ड. 20. इति च क.

## विभाषा चेः । (५८/२५२५)

चिनोतेः अङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति । चिचीषति, चिकीषति । चिकाय, चिचाय । सन्लिटोः इत्येव, चेचीयते ॥

## न क्वादेः । (५९/२८७७)

कवर्गादेः धातोः चजोः कवर्गादेशो न भवति । कूजो वर्तते । खर्जः । गर्जः । कूज्यम् भवता । [1]खर्ज्यम्, गर्ज्यम् भवता ॥

## अजिव्रज्योश्च । (६०/२८७६)

अजि व्रजि इत्येतयोश्च कवर्गादेशो न भवति । समाजः । उदाजः । व्रजि – परिव्राजः । परिव्राज्यम् । अजेस्तु 'अजेर्व्यघञपोः' (२.४.५६/२२९२) इति वीभावस्य विधानात् ण्यति नास्ति उदाहरणम्[2] ॥

## भुजन्युब्जौ पाण्युपतापयोः । (६१/२८७७)

भुज न्युब्ज इत्येतौ शब्दौ निपात्येते पाणौ उपतापे च । भुज्यते अनेन इति भुजः पाणिः । 'हलश्च' (३.३.१२१/३३००) इति घञ् । तत्र कुत्वाभावो गुणाभावश्च निपात्यते । 'उब्ज आर्जवे' (धा.पा. १३०४) । न्युब्जिताः शेरतेऽस्मिन्निति न्युब्जः उपतापः, रोगः । तथैव घञि कुत्वाभावो निपात्यते । पाण्युपतापयोः इति किम् ? भोगः । समुद्गः ॥

## प्रयाजानुयाजौ यज्ञाङ्गे । (६२/२८७८)

प्रयाज अनुयाज इत्येतौ[3] निपात्येते यज्ञाङ्गे[4] । पञ्च प्रयाजाः (आश्व. श्रौ. १.४.२) पञ्च अनुयाजाः । त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात् । यज्ञाङ्गे इति किम् ? प्रयागः । अनुयागः । प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्, अन्यत्राप्येवंप्रकारे कुत्वं न भवति । एकादशोपयाजाः (ऐ.ब्रा. २.१.८), उपांशुयाजमन्तरा यजति अष्टौ पत्नीसंयाजा भवन्ति (ऐ. ब्रा. २.३.२), ऋतुयाजैश्चरन्ति (ऐ.ब्रा. २.९.९) इत्येवमादि सिद्धं भवति ॥

## वञ्चेर्गतौ । (६३/२८७९)

वञ्चेः अङ्गस्य गतौ वर्तमानस्य कवर्गादेशो न भवति । वञ्च्यं वञ्चन्ति वणिजः[5] । गतौ इति किम् ? वङ्कं काष्ठम् । कुटिलम् इत्यर्थः[6] ॥

---

1. खर्ज्यम् नास्ति ब. 2. चकारोऽनुक्तसमुच्चयार्थः इत्यधिकम् क. ड. 3. शब्दौ इत्यधिकम् क. इ. 4. अभिधेये इत्यधिकम् क, प्रपूर्वस्य अनुपूर्वस्य च यजधातोः इत्यधिकम् फ.ह. 5. वञ्च्यं गन्तव्यं गच्छन्ति इत्यर्थः इत्यधिकम् इ.ड. 6. कौटिल्यम् इह वञ्चेरर्थः इत्यधिकम् क, ननु च वञ्चिर्गतावेव पठ्यते । सत्यमेव तत् । अनेकार्थाश्च धातवः इति इत्यधिकम् इ.ड.ह.

## ओक उचः के । (६४/२८८०)

उचेर्धातोः के प्रत्यये[1] ओकः इति निपात्यते । किं [2]पुनरत्र निपात्यते ? कुत्वं गुणश्च । न्योकः शकुन्तः । न्योको गृहम् । कर्तरि इगुपधलक्षणः कः प्रत्ययः । अधिकरणादौ तु कारकान्तरे 'घञर्थे कविधानम्' (वा. ३०६) इति । किमर्थं पुनरयं घञ्येव न व्युत्पाद्यते ? स्वरार्थमन्तोदात्तोऽयम् इष्यते, घञि सति आद्युदात्तः स्यात् । दिवौकसः, जलौकसः इत्येवमादावप्यसुनि प्रत्यये 'उणादयो बहुलम्' (३.३.१/३१६९) इति कुत्वं द्रष्टव्यम् ॥

## ण्य आवश्यके । (६५/२८८१)

ण्ये परतः आवश्यकेऽर्थे कवर्गो न भवति । अवश्यपाच्यम् । अवश्यवाच्यम् । अवश्यरेच्यम् । आवश्यके इति किम् ? पाक्यम् । वाक्यम् । रेक्यम् ॥

## यजयाचरुचप्रवचर्चश्च । (६६/२८८२)

यज याच रुच प्रवच ऋच इत्येतेषां ण्ये[3] परतः कवर्गादेशो न भवति । यज – याज्यम् । याच – याच्यम् । रुच – रोच्यम् । प्रवच – प्रवाच्यम् । ऋच – अर्च्यम् । ऋदुपधादपि ऋचेरत एव निपातनात् ण्यत् भवति । प्रवचग्रहणं शब्दसञ्ज्ञार्थम् । प्रवाच्यो [4]नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति । अपरे पुनराहुः, उपसर्गपूर्वस्य नियमार्थम्, प्रपूर्वस्यैव वचेरशब्दसञ्ज्ञायां कुत्वप्रतिषेधो यथा स्यात्, अन्योपसर्गपूर्वस्य मा भूत् इति (म.भा.३.३३२) । अविवाक्यमहः इति पठन्ति । एतत् तु विशेष एवेष्यते, दशरात्रस्य यद् दशममहः । अन्यत्र अविवाच्यमेव भवति ।

[८६१] ण्यति प्रतिषेधे त्यजेरुपसङ्ख्यानम् । (म. भा. ३.३३२)

त्याज्यम् ॥

## वचोऽशब्दसञ्ज्ञायाम् । (६७/२८८३)

वचोऽशब्दसञ्ज्ञायां [5]ण्यति परतः कुत्वं न भवति । वाच्यमाह । अवाच्यमाह । अशब्दसञ्ज्ञायाम् इति किम् ? अवघुषितं वाक्यमाह ॥

## प्रयोज्यनियोज्यौ शक्यार्थे । (६८/२८८४)

प्रयोज्य नियोज्य इत्येतौ [6]शब्दौ [7]शक्यार्थे निपात्येते । शक्यः प्रयोक्तुम् प्रयोज्यः । शक्यो नियोक्तुम् नियोज्यः । शक्यार्थे इति किम् ? प्रयोग्यः । नियोग्यः ॥

---

1. परतः इत्यधिकम् क, अके प्रत्यये ह. 2. अत्र नास्ति क. 3. प्रत्यये इत्यधिकम् इ. 4. नाम नास्ति क. 5. ण्ये प्रत्यये परतः क. 6. शब्दौ नास्ति ब. इ. 7. ण्ये प्रत्यये परतः इत्यधिकम् क, ण्ये शक्यार्थेऽभिधेये ह.

## भोज्यं भक्ष्ये । (६९/२८८७)

भोज्यम् निपात्यते [1]भक्ष्येऽभिधेये । भोज्यः ओदनः । भोज्या यवागूः । इह भक्ष्यम् अभ्यवहार्यमात्रम्[2] । भक्ष्ये इति किम् ? भोग्यः कम्बलः[3] ॥

## घोर्लोपो लेटि वा । (७०/३५८४)

घुसञ्ज्ञकानां [4]लेटि परतो वा लोपो भवति[5] । 'दधद्रत्नानि दाशुषे' (ऋ.४.१५.३) । 'सोमो ददद् गन्धर्वाय' (ऋ. १०.८५.४१) । न च भवति । यदग्निरग्नये ददात् । आडागमे [6]सति लोपेऽपि ददात् इति [7]सिद्धं भवति । तत्र वावचनं विस्पष्टार्थम्, एषा हि कस्यचिदाशङ्का स्यात्, ददात् इत्येव नित्ये प्राप्ते लोपः आरभ्यमाणो बाधते एव एतद् रूपम् इति ॥

## ओतः श्यनि । (७१/२५१०)

[8]ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति । शो – निश्यति । छो – अवछ्यति । द्यो – अवद्यति । सो – अवस्यति[9] ॥

## क्सस्याचि । (७२/२३३७)

क्सस्य अजादौ प्रत्यये लोपो भवति । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि । अचि इति किम् ? अधुक्षत् । अधुक्षताम् । [10]ककारवतः उपादानं किम् ? इह मा भूत्, उत्सौ । उत्साः । वत्सौ । वत्साः ॥

## लुग् वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । (७३/२३३८)

[11]दुह दिह लिह गुह इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग् भवति । अदुग्ध, अधुक्षत । अधुग्धाः, अधुक्षथाः । अदुग्ध्वम्, अधुक्षध्वम् । अदुह्वहि, अधुक्षावहि । दिह – अदिग्ध, अधिक्षत । लिह – अलीढ, अलिक्षत । गुह – न्यगूढ, न्यघुक्षत[12] । दुहादीनाम् इति किम् ? व्यत्यपुक्षत । आत्मनेपदे इति किम्? अधुक्षत् । दन्त्ये इति किम्? अधुक्षामहि । लोप इति [13]वर्तमाने लुग्ग्रहणं [14]सर्वादेशार्थम् । तच्च वह्यर्थम् । अन्यत्र तु अन्त्यस्यैव लोपे कृते 'झलो झलि' (८.२.२६/२२८१) इति सकारलोपेन सिध्यति । स्थानिवद्भावोऽपि अकारलोपस्य नास्ति, '[15]पूर्वत्रासिद्धे न स्थानिवत्' (पु.वृ.११२) इति । दन्त्योष्ठो[16]ऽपि वकारो [17]दन्त्य इति गृह्यते । यदि स न गृह्येत ततः [18]तौग्रहणमेवात्र कृतं स्यात् ॥

---

1. भक्ष्यं चेत् तद्भवति क. 2. गृह्यते इत्यधिकम् क. 3. आलम्बनीयः इत्यर्थः इत्यधिकम् इ. ह भोग्या स्त्री भोग्यं सुखम् इत्यधिकम् ह. 4. णिचि क. 5. ददाति ददति । दधाति दधति इत्यधिकम् क. 6. कृते' नित्ये लोपे क. 7. सिध्यति क.इ. 8. लोप इति वर्तते इत्यधिकम् इ.ह. 9. तपरकरणं मुखसुखार्थम् इत्यधिकम् इ, तपरकरणमुच्चारणार्थम् इत्यधिकम् ह. 10. ककारवतः – वत्साः नास्ति इ.क.ह. 11. क्स इति वर्तते इत्यधिकम् क.इ.ह. 12. अगूढाः अघुक्षथाः । अगूढ्वम् अघुक्षध्वम् अगुह्वहि अघुक्षावहि इत्यधिकम् क. 13. वर्तते ह. 14. सर्वलोपार्थम् क.इ. 15. पुर्वत्रासिद्धेन ब, पूर्वत्रासिद्धये क. 16. अपि नास्ति क. 17. दन्त्यग्रहणे न क. 18. तौ इत्येव ब्रूयात् ह.

## शमामष्टानां दीर्घः श्यनि । (७४/२५१९)

शमादीनामष्टानां[1] दीर्घो भवति श्यनि परतः । शम्–शाम्यति । तम् – ताम्यति । दम् – दाम्यति । [2]श्रम् – श्राम्यति । [3]क्षम् – क्षाम्यति । [4]क्लम् – क्लाम्यति । मदी – माद्यति । अष्टानाम् इति किम् ? अस्यति[5] । श्यनि इति किम् ? भ्रमति । [6]वा भ्राश (३.१.७०/२३२१) इति श्यनो विकल्पः । बभ्राम ॥

## ष्ठिवुक्लम्याचमां शिति । (७५/२३२०)

ष्ठिवु क्लमि आचम् इत्येतेषां [7]दीर्घो भवति शिति परतः । [8]ष्ठीवति । क्लमु – क्लामति । आचम्–आचामति । क्लमिग्रहणं शबर्थम् । चमेराङ्पूर्वस्य ग्रहणम् । इह मा भूत्, [9]चमति । विचमति ॥

## क्रमः परस्मैपदेषु । (७६/२३२२)

क्रमः [10]परस्मैपदपरे शिति परतो दीर्घो भवति । क्रामति,[11] क्रामतः, क्रामन्ति । परस्मैपदेषु इति किम् ? [12]आक्रमते आदित्यः । इह उत्क्राम, सङ्क्राम इति हेर्लुकि कृते 'न लुमताङ्गस्य' (१.१.६६/२६३) इति प्रत्ययलक्षणप्रतिषेधात् [13]दीर्घो न प्राप्नोति ? नैष दोषः । लुमता[14]शब्देन लुप्ते यदङ्गं तस्य कार्ये [15]स प्रतिषेधः । न च हौ क्रमिरङ्गम्, किं तर्हि, शपि ॥

## इषुगमियमां छः । (७७/२४००)

इषु गमि यम इत्येतेषां[16] शिति परतः छकारादेशो भवति । इच्छति । गच्छति । [17]यच्छति । इषेरुदितो ग्रहणम् । इह मा भूत्, इष्यति, इष्णाति इति । ये तु इषिमुदितं नाधीयते ते इह च सूत्रे अचि इति अनुवर्तयन्ति । तच्च प्रधानमज्ग्रहणं शिति इत्यनेन विशेष्यते इति वर्णयन्ति । तथा च सति तदादिविधिर्न भवति । 'यस्मिन् विधिस्तदादावल्ग्रहणे' (व्या. प. १२७) इत्येतदपि[18] विशेषणेनैव इष्यते, तेन इषाण इत्यत्र छत्वं न भवति । न ह्ययमजेव शित् इति ॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । (७८/२३६०)

पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां[19] पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशा भवन्ति[20] शिति परतः । पा – पिबति । घ्रा – जिघ्रति । ध्मा – धमति । स्था – तिष्ठति । म्ना – मनति । दाण् – यच्छति । दृशि – पश्यति । अर्ति – ऋच्छति । सर्ति – धावति । शद – शीयते । सद–सीदति । पिबतेर्लघूपधगुणः प्राप्नोति, सः 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (व्या. प. ३८)

---

1. धातूनाम् इत्यधिकम् ह. 2. यमु – याम्यति क. 3. क्षमु ब. 4. क्लमु ब. 5. यस्यति इत्यधिकम् क. 6. वा – बभ्राम नास्ति क. 7. अङ्गानाम् इत्यधिकम् क. 8. ष्ठीव्यति क. 9. उच्चमति ह. 10. परस्मैपदे इ. 11. क्रामन् इत्यधिकम् इ. 12. आक्रमाणः सूर्यः चन्द्रमाः क. 13. दीर्घत्वं भवति क. 14. शब्देन नास्ति इ. क. 15. सः नास्ति क, सति इत्यधिकम् इ. 16. अङ्गानाम् इत्यधिकम् क. 17. यच्छति नास्ति ब. 18. हि इत्यधिकम् ब. 19. अङ्गानाम् इत्यधिकम् क. ह. 20. यथासङ्ख्यम् इत्यधिकम् क. ह.

इति न भवति। अथ वा अकारान्तोऽयमादेशः आद्युदात्तो निपात्यते। सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति। अन्यत्र[1] सरति, अनुसरति [2]इत्येव भवति ॥

## ज्ञाजनोर्जा। (७९/२५११)

ज्ञ जन इत्येतयोः जादेशो भवति शिति[3] परतः। जानाति। जायते। जने[4]र्दैवादिकस्य ग्रहणम्[5] ॥

## प्वादीनां ह्रस्वः। (८०/२५५८)

पू इत्येवमादीनां ह्रस्वो भवति शिति [6]परतः। प्वादयः क्र्यादिषु पठ्यन्ते। 'पूञ् पवने' (धा. पा. १४८३) इत्यतः प्रभृति 'प्ली गतौ' (धा. पा. १५०४) वृत् इति यावत् केचित् इच्छन्ति, वृत्करणमेतत् ल्वादीनां प्वादीनां च [7]परिसमाप्त्यर्थम् इति। अपरे तु ल्वादीनामेव [8]परिसमाप्त्यर्थं वृत्करणमेतदिच्छन्ति, आगणान्ताः प्वादयः इति। पूञ् – पुनाति। लूञ् – लुनाति। स्तॄञ् – स्तृणाति। येषामागणान्ताः प्वादयः तेषां जानाति इत्यत्र ह्रस्वः प्राप्नोति, 'ज्ञाजनोर्जा' (७.३.७९/२५११) इति दीर्घकरणसामर्थ्यान्न [9]भवति। जनेरपि हि जादेशे सति 'अतो दीर्घो यञि' (७.३.१०१/२१७०) इति दीर्घत्वेन जायते इति सिध्यति ॥

## मीनातेर्निगमे। (८१/३५८७)

मीनातेरङ्गस्य शिति [10]प्रत्यये परतो ह्रस्वो भवति निगमविषये। प्रमिणन्ति व्रतानि। निगमे इति किम्? प्रमीणाति ॥

## मिदेर्गुणः। (८२/२३४६)

मिदेरङ्गस्य [11]इको गुणो भवति शिति प्रत्यये परतः। मेद्यति, मेद्यतः, मेद्यन्ति। शिति इत्येव, मिद्यते[12] ॥

## जुसि च। (८३/२४८१)

जुसि [13]च प्रत्यये [14]परतः इगन्तस्याङ्गस्य गुणो भवति। अजुहवुः। [15]अबिभयुः। अबिभरुः। अथ [16]चिनुयुः, सुनुयुः इत्यत्र कस्मान्न भवति? अत्र हि द्वे ङित्त्वे, सार्वधातुकाश्रयम्[17], यासुडाश्रयं च। तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि[18] गुणः आरभ्यमाणः[19] तमेव बाधते। यासुडाश्रयङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते च आरभ्यते [20]इति ॥

---

1. प्रसरति इ. ह. 2. इत्येवं क. 3. प्रत्यये इत्यधिकम् क. 4. दिवादिकस्य क. 5. जनी प्रादुर्भावे इति,न तु जनी जनने इति जुहोत्यादिकस्य इत्यधिकम् इ. 6. प्रत्यये इत्यधिकम् क. 7–8. परिग्रहार्थम् ब. 9. भविष्यति इ. 10. प्रत्यये नास्ति क. 11. इकः नास्ति क. 12. मिदेः इति किम्? खिद्यति। लघूपधगुणस्य ङित्त्वात् प्रतिषेधे प्राप्ते वचनमिदमारभ्यते। इत्यधिकम् क. 13. च नास्ति क. 14. परतः नास्ति ब. 15. अबिभयुः नास्ति इ. 16. चिनुमः ब. 17. कार्यं इत्यधिकम् क. 18. च इति इत्यधिकम् क. 19. तन्निमित्तं प्रतिषेधमेव क. 20. इति नास्ति क.

## सार्वधातुकार्धधातुकयोः । (८४/२१६८)

सार्वधातुके आर्धधातुके च [1]प्रत्यये परतः इगन्तस्याङ्गस्य गुणो भवति । [2]तरति । नयति । भवति । आर्धधातुके – कर्ता । चेता । स्तोता । सार्वधातुकार्धधातुकयोः इति किम् ? अग्नित्वम्[3] । अग्निकाम्यति । यदि हि प्रत्यये [4]सङि इति वा उच्येत, इहापि[5] स्यात् ॥

## जाग्रोऽविचिण्णल्ङित्सु । (८५/२४८०)

जागृ इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः । जागरयति । जागरकः । साधुजागरी । जागरंजागरम् । जागरो वर्तते । जागरितः । जागरितवान् ।

वृद्धिविषये प्रतिषेधविषये च यथा स्यात् इति जागर्तेरयं गुणः आरभ्यते । [6]तस्मिन् कृते या 'अत उपधायाः' (७.२.११६/२२८२) [7]वृद्धिः प्राप्नोति [8]सा न भवति । यदि हि स्यात् अनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमनर्थकम् । अविचिण्णल्ङित्सु इति किम् ? 'जॄशॄस्तॄजागृभ्यः क्विन्' (उ. ५०३) जागृविः । चिण् – अजागारि । णल् – जजागार । ङित् – जागृतः । जागृथः ।

वि इति केचिदिकारमुच्चारणार्थं वर्णयन्ति, क्वसावपि वकारादौ गुणो न भवति । जजागृवान् । [9]अजागरुः, अहं जजागर इत्यत्र प्रतिषेधः प्राप्नोति ? न, अप्रतिषेधात् । अविचिण्णल्ङित्सु इति पर्युदासोऽयम्[10], अथवा जाग्रः इति[11] प्राप्तिरसावानन्तर्याद् विचिण्णल्ङित्सु प्रतिषिध्यते । या तु 'जुसि च' (७.३.८३/२४८१), 'सार्वधातुकार्धधातुकयोः' (७.३.८४/२१६८) इति च [12]प्राप्तिः, सा न प्रतिषिध्यते ॥

## पुगन्तलघूपधस्य च । (८६/२१८९)

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयो[13]र्गुणो भवति । पुगन्तस्य – क्लेपयति । ह्रेपयति । क्नोपयति । लघूपधस्य – भेदनम् । छेदनम् । भेत्ता । छेत्ता । प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न [14]व्यावर्त्यते इति ज्ञापितम् एतत् [15]क्नुसनोः कित्करणेन, 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३.२.१४०/३१२०), 'हलन्ताच्च' (१.२.१०/२६१३) इति ।

संयोगे गुरुसञ्ज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥

धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥

अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ (म.भा. ३.३३८)

---

1. प्रत्यये नास्ति इ. 2. तरति नास्ति क. 3. अग्निना इत्यधिकम् ब. 4. गुणो भवति इत्यधिकम् क. 5. गुणः इत्यधिकम् इ.ह. 6. अस्मिन् क. 7. इति इत्यधिकम् ब.क.इ. 8. सा अपि क. 9. अजागरुः नास्ति क. 10. न प्रसज्यप्रतिषेधः इत्यधिकम् क. 11. या इत्यधिकम् ड. 12. वा इ, प्राप्तिः नास्ति क. 13. परतः इत्यधिकम् क.इ. 14. व्यावर्तते ब. 15. क्वसनोः ब.

[1]उपधा चात्र इगेव गृह्यते, ततो भिनत्ति इति गुणो न भवति। अपरे पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम् इति सूत्रार्थं वर्णयन्ति ॥

## नाभ्यस्तस्याचि पिति सार्वधातुके। (८७/२५०३)

[2]अभ्यस्तसञ्ज्ञकस्य अङ्गस्य लघूपधस्य [3]अजादौ पिति सार्वधातुके गुणो न भवति। नेनिजानि। वेविजानि। परिवेविषाणि। अनेनिजम्। अवेविजम्। पर्यवेविषम्। अभ्यस्तस्य इति किम्? वेदानि[4]। अचि इति किम्? नेनेक्ति[5]। पिद्ग्रहणमुत्तरार्थम्। सार्वधातुके इति किम्? निनेज। लघूपधस्य इत्येव, जुहवानि। अजुहवम्।

[८६२] बहुलं छन्दसीति वक्तव्यम्। (म. भा. ३.३३८)

[6]जुजोषत् इति यथा स्यात्। पस्पशाते। चाकशीति। वावशीति[7]। यङ्लुकि [8]छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम्। पस्पशाते इत्यत्र अभ्यासह्रस्वत्वं च। प्रकृत्यन्तराणां वा स्पशिकशिवशीनामेतानि रूपाणि ॥

## भूसुवोस्तिङि। (८८/२२२४)

भू सू इत्येतयोः तिङि सार्वधातुके गुणो न भवति। अभूत्। अभूः। [9]अभूवम्। सुवै, सुवावहै, [10]सुवामहै। सूतेर्लुग्विकरणस्येदं ग्रहणम्। सुवतिसूयत्योर्विकरणेन तिङो व्यवधानम्। विकरणस्यैव ङित्वाद् गुणाभावः सिद्धः। तिङि इति किम्? भवति। सार्वधातुके इत्येव, व्यतिभविषीष्ट। अथ बोभवीति इति यङ्लुकि [11]गुणप्रतिषेधः कस्मान्न भवति? ज्ञापकात्, यदयं बोभूतु इति [12]गुणाभावार्थे निपातनं करोति ॥

## उतो वृद्धिर्लुकि हलि। (८९/२४४३)

[13]सार्वधातुके पिति इति वर्तते[14]। उकारान्तस्य अङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके[15]। यौति। यौषि। यौमि। नौति। नौषि। नौमि। स्तौति। स्तौषि। स्तौमि। उतः इति किम्? एति। एषि। एमि। लुकि इति किम्? सुनोति। सुनोषि। सुनोमि। हलि इति किम्? यवानि। रवाणि। पिति इत्येव, युतः। रुतः। अपि स्तुयाद् राजानम् इत्यत्र हि ङिच्च पिन्न भवति इति पित्त्वप्रतिषेधाद् [16]वृद्धेरभावः। नाभ्यस्तस्य (७.३.८७/२५०३) इत्येतदिहानुवर्तते, योयोति, रोरोति इत्येवमाद्यर्थम् ॥

## ऊर्णोतेर्विभाषा। (९०/२५४५)

ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके[17]। प्रोर्णौति, प्रोर्णोति। प्रोर्णौषि, प्रोर्णोषि। प्रोर्णौमि, प्रोर्णोमि। हलि इत्येव, प्रोर्णवानि ॥

---

1. उपधा तु ब. 2. अभ्यस्तस्याङ्गस्य क.इ. 3. अचि ब. 4. अवेदम् इत्यधिकम् क. 5. वेवेक्ति इत्यधिकम् क. ह, वेवेष्टि इत्यधिकम् ह. 6. जुजुषत् ब. क. इ. ह. 7. इति इत्यधिकम् ड. 8. छन्दसि उपसङ्ख्यानं वाङ्गस्य क. 9. अभूवम् नास्ति क, अभूः नास्ति क. इ. 10. सुवामहै नास्ति इ. 11. प्रतिषेधः क. इ. 12. झेर्गुणाभावार्थम् यङ्लुकि क. 13. वाक्यमिदं नास्ति ह. 14. एव इत्यधिकम् क. 15. परतः। रौति रौषि रौमि इत्यधिकम् क. इ. 16. वृद्धेः गुणभावः क. 17. परतः इत्यधिकम् क. इ.

## गुणोऽपृक्ते । (९१/२४४८)

[1]ऊर्णोते[2]र्धातोः अपृक्ते हलि पिति सार्वधातुके गुणो भवति । प्रोर्णोत् । प्रोर्णोः । हलि इति वर्तमाने यदपृक्तग्रहणं [3]क्रियते, [4]तेनैव ज्ञाप्यते भवत्येषा परिभाषा 'यस्मिन् विधिस्तदादावल्ग्रहणे' (व्या.प. १२७) इति ॥

## तृणह इम् । (९२/२५४५)

तृणह इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके[5] । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् । वर्णाश्रयेऽपि [6]अत्र प्रत्ययलक्षणमिष्यते । हलि [7]इति किम् ? तृणहानि । पिति इत्येव, तृण्ढः । तृणह इति आगतश्नम्को गृह्यते, श्नमि कृते इमागमो यथा स्यात् इति ॥

## ब्रुव ईट् । (९३/२४५२)

ब्रू इत्येतस्मादुत्तरस्य हलादेः [8]पितः सार्वधातुकस्य ईडागमो भवति । ब्रवीति । ब्रवीषि । ब्रवीमि । [9]अब्रवीत् । हलि इत्येव, [10]ब्रवाणि । पिति इत्येव, ब्रूतः ॥

## यङो वा । (९४/२६५१)

यङः उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा । शाकुनिको लालपीति । दुन्दुभिर्वावदीति । 'त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश' (ऋ. ४.५८.३) । न च भवति । वर्वर्ति, चर्कर्ति चक्रम् । हलादेः पितः सार्वधातुकस्य यङन्तादभावः इति यङ्लुगन्तस्य [11]उदाहरणम् ॥

## तुरुस्तुशम्यमः सार्वधातुके । (९५/२४४४)

[12]तु इति सौत्रोऽयं धातुः, 'रु शब्दे' (धा.पा. १०३५), 'ष्टुञ् स्तुतौ' (धा.पा. १०४४), 'शमु उपशमे' (धा.पा. १२०२), 'अम गत्यादिषु' (धा.पा. ४६५) इत्येतेभ्यः [13]परस्य सार्वधातुकस्य [14]हलादेर्वा ईडागमो भवति । उत्तौति, उत्तवीति । [15]उपरौति, उपरवीति । उपस्तौति, उपस्तवीति । शाम्यध्वम्, शमीध्वम् । अभ्यमति, अभ्यमीति । शम्यमोः '[16]बहुलं छन्दसि' (२.४.७३/३४००) इति विकरणलुकि सति हलादिसार्वधातुकमनन्तरं [17]सम्भवति । आपिशलाः 'तुरुस्तुशम्यमः [18]सार्वधातुकासुच्छन्दसि' इति पठन्ति । तत्र सर्वेषामेव छन्दसि विषये विधिरयं [19]भवति । सार्वधातुके इति अनुवर्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम्, [20]स्तुवीत, शमीध्वम् इत्यत्रापि यथा स्यात् इति ॥

---

1. विभाषा इति निवृत्तम् इत्यधिकम् क. 2. धातोः नास्ति इ, अङ्गस्य इत्यधिकम् क. 3. करोति ह. 4. तेन ह. 5. परतः इत्यधिकम् क. 6. प्रत्ययलोपलक्षणम् क, प्रत्ययलक्षणपरिभाषा इ. 7. इत्येव क. 8. पिति सार्वधातुके परतः क. 9. अब्रवीत् नास्ति इ. 10. प्रब्रवाणि ब. 11. ग्रहणम् क.इ.ह. 12. वाक्यमिदं नास्ति इ. 13. परस्य नास्ति इ. 14. हलादौ क. 15. विरौति क, अपरौति, अपरवीति ब. 16. बहुलं नास्ति क. 17. भवति क. 18. सार्वधातुके छन्दसि इ. 19. भवति नास्ति ब. 20. स्तुवीत नास्ति क.

## अस्तिसिचोऽपृक्ते । (९६/२२२५)

अस्तेरङ्गात् सिजन्ताच्च [1]परस्य अपृक्तस्य सार्वधातुकस्य ईडागमो भवति । अस्तेः – आसीत् । आसीः । सिजन्तात् – अकार्षीत् । असावीत् । अलावीत् । अपावीत् । अपृक्ते इति किम् ? अस्ति । [2]अकार्षम् । आहिभुवोरीटि प्रतिषेधः[3] इति स्थानिवद्भाव[4]प्रतिषेधः, तेनेह [5]न भवति, आत्थ, अभूत् इति ॥

## बहुलं छन्दसि । (९७/३५८६)

अस्तिसिचोरपृक्तस्य[6] सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये । [7]आप एवेदं सलिलं सर्वमाः । आसीदिति स्थाने आः क्रियापदम् । 'अहर्वाव तर्ह्यासीन्न रात्रिः' (मै. १.५.१२) । सिचः खल्वपि – 'गोभिरक्षाः' (ऋ. ९.१०७.९) । 'प्रत्यञ्चमत्साः' (ऋ. १०.२८.४) । अभैषीर्मा पुत्रक इति च भवति, छान्दसत्वात् । माङ्योगेऽपि अडागमो[8] भवति, अक्षाः, अत्साः इति, सिच [9]इडभावश्च ॥

## रुदश्च पञ्चभ्यः । (९८/२४७७)

रुदादिभ्यः[10] परस्य [11]सार्वधातुकस्य हलादेः अपृक्तस्य ईडागमो भवपि । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । प्राणीः । अजक्षीत् । अजक्षीः । पञ्चभ्यः इति किम् ? अजागर्भवान् । अपृक्तस्य इत्येव, रोदिति[12] ॥

## अड् गार्ग्यगालवयोः । (९९/२४७६)

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्य अडागमो भवति गार्ग्यगालवयो[13]र्मतेन । अरोदत् । अरोदः । अस्वपत् । अस्वपः । अश्वसत् । अश्वसः । प्राणत् । प्राणः । अजक्षत् । अजक्षः । गार्ग्य–गालवयोर्ग्रहणं पूजार्थम् ॥

## अदः सर्वेषाम् । (१००/२४२६)

'[14]अद भक्षणे' (धा.पा. १०१२), अस्मादुत्तरस्य अपृक्तस्य सार्वधातुकस्य अडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आदः । अपृक्तस्य इत्येव, अत्ति । अत्सि[15] ॥

---

1. परस्य नास्ति क. 2. अकार्ष्टम् क. 3. वक्तव्यः इत्यधिकम् क. 4. निषेधात् क. 5. इट् न भवति क. 6. हलः इत्यधिकम् क. 7. आप एवेदं सर्वमाहरेत्येवमासीत् क. 8. भवति नास्ति क. 9. इडागमाभावः क. 10. पञ्चभ्यः इत्यधिकम् क. ड. इ. ह. 11. सार्वधातुकस्य नास्ति क. 12. स्वपिति इत्यधिकम् ह. 13. आचार्ययोः इत्यधिकम् क. इ. ह. 14. अदोऽङ्गात् इ. 15. सर्वेषां ग्रहणं विकल्पशङ्का–निवृत्त्यर्थम् इत्यधिकम् क.

## अतो दीर्घो यञि। (१०१/२१७०)

अकारान्तस्य अङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः। पचामि, पचावः, पचामः। पक्ष्यामि, पक्ष्यावः, पक्ष्यामः। अतः इति किम्? चिनुवः। चिनुमः। यञि इति किम्? पचतः। पचथः। सार्वधातुक इत्येव, अङ्गना। केशवः। केचिदत्र तिङि इत्यनुवर्तयन्ति, तेषां [1]भववान् इति क्वसौ [2]सार्वधातुकदीर्घो न भवति ॥

## सुपि च। (१०२/२०२)

'अतो दीर्घो यञि' (७.३.१०१/२१७०) इत्यनुवर्तते। सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति। वृक्षाय। प्लक्षाय। वृक्षाभ्याम्। प्लक्षाभ्याम्। अतः इत्येव, अग्निभ्याम्[3]। यञि इत्येव, वृक्षस्य। प्लक्षस्य ॥

## बहुवचने झल्येत्। (१०३/२०६)

[4]बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षेभ्यः। प्लक्षेभ्यः। वृक्षेषु। प्लक्षेषु। बहुवचने इति किम्? वृक्षाभ्याम्। प्लक्षाभ्याम्। झलि इति किम्? वृक्षाणाम्। सुपि इत्येव, यजध्वम्। [5]पचध्वम्[6] ॥

## ओसि च। (१०४/२०७)

ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षयोः स्वम्। प्लक्षयोः [7]स्वम्। वृक्षयोर्निधेहि। प्लक्षयोर्निधेहि[8] ॥

## आङि चापः। (१०५/२८९)

आङः इति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते। तस्मिन्नाङि परतः, चकाराद् ओसि च, आबन्ताङ्गस्य एकारादेशो भवति। खट्वया। मालया। खट्वयोः। मालयोः। बहुराजया। कारीषगन्ध्यया। बहुराजयोः। कारीषगन्ध्ययोः। आपः इति पितो ग्रहणं किम्? कीलालपा[9] ब्राह्मणेन। कीलालपोः ब्राह्मणकुलयोः। ङ्याब्ग्रहणेऽदीर्घग्रहणम् इति वचनात् इह न भवति, अतिखट्वेन [10]ब्राह्मणकुलेन ॥

## सम्बुद्धौ च। (१०६/२८८)

आपः इति वर्तते। सम्बुद्धौ च परतः [11]आबन्तस्य अङ्गस्य एत्वं भवति। हे खट्वे। हे बहुराजे। हे कारीषगन्ध्ये ॥

---

1. प्रभववान् ह. 2. सार्वधातुके क, सार्वधातुकदीर्घेण न भवितव्यम् ह. 3. वायुभ्याम् इत्यधिकम् ब. ह. 4. सुपि इति वर्तते इत्यधिकम् क. ह. 5. विजयध्वम् इ. 6. अत इत्येव, खट्वाभ्यः इत्यधिकम् इ. 7. स्वम् नास्ति क. 8. अत इत्येव, वाय्वोः इत्यधिकम् इ. 9. ब्राह्मणकुलेन ब. 10. ब्राह्मणेन इति इ. 11. आपः एकारादेशो भवति इ.

## अम्बार्थनद्योर्ह्रस्वः । (१०७/२६७)

सम्बुद्धौ इति वर्तते । अम्बार्थानामङ्गानां [1]नद्यन्तानां ह्रस्वो भवति सम्बुद्धौ परतः । हे अम्ब । हे अक्क । हे अल्ल । नद्याः खल्वपि – हे कुमारि । [2]हे शार्ङ्गरवि । हे ब्रह्मबन्धु । हे वीरबन्धु ।

[८६३] डलकवतीनां प्रतिषेधो वक्तव्यः । (म.भा.३.३४०)

हे अम्बाडे । हे अम्बाले । हे अम्बिके ।

[८६४] छन्दसि वेति वक्तव्यम् ।

हे अम्बाड, हे अम्बाडे । हे अम्बाल, हे अम्बाले । [3]हे अम्बिक, हे अम्बिके ।

[८६५] तलो ह्रस्वो वा ङिसम्बुद्ध्योरिति वक्तव्यम् ।

देवते भक्तिः, देवतायां भक्तिः । हे देवत, हे देवते । छन्दस्येव ह्रस्वत्वमिष्यते ।

[८६६] मातॄणां मातच् पुत्रार्थमर्हते । (म. भा. ३. ३४०)

मातॄणां मातजादेशो वक्तव्यः सम्बुद्धौ, पुत्राय पुत्रमभिधातुम् । कीदृशाय ? अर्हते । मात्रा व्यपदेशमर्हति श्लाघनीयत्वाद् यः पुत्रस्तदर्थम् । हे गार्गीमात । 'नद्यृतश्च' (५.४.१५३/८३३) इति समासान्तापवादो मातजादेशः । चित्करणमन्तोदात्तार्थम् ॥

## ह्रस्वस्य गुणः । (१०८/२४२)

सम्बुद्धौ इति वर्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति सम्बुद्धौ परतः । हे अग्ने । [4]हे वायो । [5]हे पटो । हे कुमारि, हे ब्रह्मबन्धु इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति । यदि गुणः [6]इष्टः स्यात्, 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येवं ब्रूयात् ॥

## जसि च । (१०९/२४१)

जसि परतो [7]ह्रस्वान्तस्याङ्गस्य गुणो भवति । अग्नयः । वायवः । [8]पटवः । धेनवः । बुद्धयः[9] ।

[८६७] जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया ह्रस्व[10] इत्येतस्मात् । (म. भा. ३. ३४१)

इतः प्रकरणात् प्रभृति छन्दसि वा इति वक्तव्यम् । किं प्रयोजनम् ? अम्बे, दर्वि, शतक्रत्वः, पश्वे नृभ्यः, किकिदीव्या । अम्बे, अम्ब । पूर्णा दर्वि, पूर्णा दर्वी । अधा शतक्रत्वः, शतक्रतवः । पश्वे नृभ्यः, पशवे । किकिदीव्या, किकिदीविना ॥

---

1. नद्याश्च क. 3. हे गौरि ब. क. ड, किशोरि ह. 3. हे अम्बे, हे अम्ब ह. 4–5. नास्ति इ. 6. अभीष्टः ह. 7. ह्रस्वान्तस्याङ्गस्य नास्ति ब. 8. पटवः नास्ति ब. 9. ह्रस्वस्य इत्येव, ग्रामण्यः इत्यधिकम् क. 10. इत्येतस्मात् नास्ति ब.

## ऋतो ङिसर्वनामस्थानयोः । (११०/२७७)

गुणः इति वर्तते । ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति । ङौ – मातरि । [1]पितरि । भ्रातरि । कर्तरि । सर्वनामस्थाने – कर्तारौ । कर्तारः । मातरौ । पितरौ । भ्रातरौ । तपरकरणं मुखसुखार्थम् ॥

## घेर्ङिति । (१११/२४७)

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति । अग्नये । वायवे । अग्नेरागच्छति । वायोरागच्छति । अग्नेः स्वम् । वायोः स्वम् । घेः इति किम् ? सख्ये । पत्ये । ङिति इति किम् ? [2]अग्निभ्याम् । सुपि इत्येव, पट्वी । कुरुतः ॥

## आण्नद्याः । (११२/२६८)

नद्यन्ता[3]दङ्गादुत्तरस्य ङितः प्रत्ययस्य आडागमो भवति । कुमार्यै । ब्रह्मबन्ध्वै । कुमार्याः । ब्रह्मबन्ध्वाः ॥

## याडापः । (११३/२९०)

आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति । खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः । अतिखट्वाय इत्यत्र अकृते दीर्घे ङ्याब्ग्रहणे अदीर्घः इति वचनाद याडागमो न भवति, कृते तु लाक्षणिकत्वात् ॥

## सर्वनाम्नः स्याड्ढ्रस्वश्च । (११४/२९१)

सर्वनाम्नः आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याट् आगमो[4] ह्रस्वश्च भवति[5] । सर्वस्यै । विश्वस्यै । [6]यस्यै । तस्यै । कस्यै । अन्यस्यै । सर्वस्याः । विश्वस्याः । यस्याः । तस्याः । कस्याः । अन्यस्याः । आपः इत्येव, भवति । भवते[7] ॥

## विभाषा द्वितीयातृतीयाभ्याम् । (११५/२९३)

द्वितीया तृतीया इत्येताभ्यामुत्तरस्य ङितः [8]प्रत्ययस्य विभाषा स्याट् [9]आगमो भवति, द्वितीयातृतीययोश्च ह्रस्वो[10] भवति । द्वितीयस्यै, द्वितीयायै । तृतीयस्यै, तृतीयायै ॥

## ङेराम् नद्याम्नीभ्यः । (११६/२७०)

नद्यन्तात् आबन्तात् नी इत्येतस्माच्चोत्तरस्य ङेः आम् [11]आदेशो भवति । [12]कुमार्याम् । गौर्याम् । ब्रह्मबन्ध्वाम् । धीबन्ध्वाम् । आपः – खट्वायाम् । बहुराजायाम् । कारीषगन्ध्यायाम् । नी – राजन्याम् । सेनान्याम् ॥

---

1. पितरि नास्ति इ. 2. अग्निना वायुना ह. 3. अङ्गात् नास्ति इ. 4. भवति इत्यधिकम् ब.ड.इ. 5. सर्वनाम्नः इत्यधिकम् ड. ई. 6. अमुष्यै इत्यधिकम् ई. 7. भवत्यै भवत्याः इत्यधिकम् इ. 8. प्रत्ययस्य नास्ति क. ई. 9. आगमो नास्ति ई. 10. अपि इत्यधिकम् इ. 11. प्रत्ययः ब. 12. किशोर्याम् शार्ङ्गरव्याम् इत्यधिकम् ई.

## इदुद्भ्याम् । (११७/२९७)

[1]इकारोकाराभ्यां नदीसञ्ज्ञकाभ्याम् उत्तरस्य ङेः आम् आदेशो भवति । [2]कृत्याम् । धेन्वाम् ॥

## औत् । (११८/२८६)

इदुद्भ्यामुत्तरस्य ङेः औकारादेशो भवति । यन् न नदीसञ्ज्ञं नापि घिसञ्ज्ञम् इकारान्तम्, तदिहोदाहरणम् । सख्यौ । पत्यौ ॥

## अच्च घेः । (११९/२४७)

[3]औत् इति वर्तते । [4]घिसञ्ज्ञकादुत्तरस्य ङेः औकारादेशो भवति, तस्य च घेः अकारादेशो भवति । अग्नौ । वायौ कृतौ । धेनौ । पटौ । अत् इति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम् । 'औदच्च घेः' इति येषामेकमेवेदं सूत्रम्, ते प्रधानशिष्टम् इदुद्भ्याम् औत्त्वं वर्णयन्ति, अन्वाचयशिष्टं घेः अकारम् इति ॥

## आङो नाऽस्त्रियाम् । (१२०/२४४)

घेः उत्तरस्य आङः [5]नाभावो भवति [6]अस्त्रियाम् । अग्निना । वायुना । पटुना । पुंसि इति नोक्तम्, अमुना ब्राह्मणकुलेन । अस्त्रियाम् इति किम् ? कृत्या । धेन्वा ॥

इति काशिकायां वृत्तौ
सप्तमाध्यायस्य तृतीयः पादः ॥

----(०)----

---

1. नदीग्रहणमतुवर्तते इत्यधिकम् ब. ई. 2. गत्याम् ई. 3. वाक्यमिदं नास्ति इ. ह. 4. घेरुत्तरस्य ब. 5. ना इत्ययमादेशः इ. ह. 6. अस्त्रियाम् नास्ति ह.

## सप्तमाध्यायस्य
## चतुर्थः पादः

### णौ चङ्युपधाया ह्रस्वः। (१/२३१४)

[1]अङ्गस्य (६.४.१/२००) इति वर्तते। चङ्परे णौ [2]यदङ्गम्, तस्य उपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। [3]अपीपवत्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम्। इह [4]तु मा भवानटिटत् इति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्य अकारस्य उपधात्वं [5]विहितम् इति ह्रस्वो न स्यात्? नैष दोषः। ओणेः ऋदित्करणं ज्ञापकं नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यते इति। णौ इति किम्? चङ्युपधाया ह्रस्वः इत्युच्यमाने [6]अलीलवत् इत्यत्र वचनसामर्थ्यात् अन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात्। अदीदपत् इत्यत्र ह्रस्वत्वेन [7]पुको बाधः स्यात्। अपीपचत् [8]इत्येवमादौ तु नैव [9]स्यात्। चङि इति किम्? कारयति। हारयति। उपधाया इति किम्? अचकाङ्क्षत्। अववाञ्छत्। तदेतदुपधाग्रहणमुत्तरार्थमवश्यं कर्तव्यं तदिहापि ह्रस्वत्वं निवर्तयति इत्येवमर्थं येन नाव्यवधानम् (व्या.प. ४६) इत्येतन्नाश्रयितव्यम् [10]इति।

[८६८] उपधाह्रस्वत्वे [11]णेर्णिच्युपसङ्ख्यानम्। (म.भा. ३.३४५)

वादितवन्तं प्रयोजितवान् अवीवदत् वीणां परिवादकेन (म. भा. ३.३४५)। योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेन अग्लोपित्वात् [12]अङ्गस्य ह्रस्वो न प्राप्नोति। ण्याकृतिनिर्देशात् सिद्धम्॥

### नाग्लोपिशास्वृदिताम्। (२/२५७२)

अग्लोपिनामङ्गानां शासेः ऋदितां च णौ चङि उपधाया ह्रस्वो न भवति। अग्लोपिनां तावत् – मालामाख्यत् अममालत्। मातरमाख्यत् [13]अममातरत्। राजानमतिक्रान्तवान् अत्यरराजत्। लोमान्यनुमृष्टवान् [14]अन्वलुलोमत्। अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्, हलचोरादेशे तु न सिध्यति इति तदर्थमेतद् वचनम्। शासेः – [15]अशशासत्। ऋदिताम् – बाधृ – अबबाधत्। [16]याचृ – अययाचत्। ढौकृ – अडुढौकत्॥

### भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। (३/२५६७)

भ्राज भास भाष दीप जीव मील पीड इत्येतेषाम् अङ्गानां णौ चङि उपधाया ह्रस्वो भवति अन्यतरस्याम्। भ्राज – [17]अबिभ्रजत्, अबभ्राजत्। भास – अबीभसत्, अबभासत्। भाष – अबीभषत्, अबभाषत्। दीप – अदीदिपत्, अदिदीपत्। जीव – अजीजिवत्, अजिजीवत्। मील – अमीमिलत्, अमिमीलत्। पीड – अपीपिडत्, अपिपीडत्। भ्राजभासोर्ऋदित्करणमपाणिनीयम्।

---

1. वाक्यमिदं नास्ति ब.इ. 2. यदन्तस्य क. 3. अदीददत् क. ड, अपीपतत् ड. 4. च क. इ. 5. विहतम् क. 6. अचीचरत् ह. 7. पुको वा क, पुके ब. 8. इत्येवमर्थं क. 9. ह्रस्वत्वं इत्यधिकम् ब. 10. भवति ह. 11. णौ णिचि उपसङ्ख्यानम् इति पाठान्तरम्। णौ परतो यो णिः तस्मिन्नित्यर्थः ड. 12. अस्य ब. 13. अवमातत् क.ड.ह, अममानत् इ. 14. अनुलुलोमवत् क, अनुलुलोमत् ब. 15. अन्वशशासत् ह. 16. चायृ – अचचायत् ब. 17. अबभ्रजत् ब.

[८६९] काण्यादीनां चेति वक्तव्यम् । (म.भा. ३.३४६)

कण – अचीकणत्, अचकाणत्[1] । वण – अवीवणत्, अववाणत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य । (४/२५८७)

पिबतेः अङ्गस्य णौ चङि उपधायाः लोपो भवति, अभ्यासस्य [2]ईकारादेशो भवति । अपीप्यत्, अपीप्यताम्, अपीप्यन् । उपधालोपे कृते ओः पुयण्[3]वचनं (७.४.८०/२५७७) ज्ञापकं णौ स्थानिवद्भावस्य इति स्थानिवद्भावाद् द्विर्वचनम् ॥

## तिष्ठतेरित् । (५/२५८८)

तिष्ठतेरङ्गस्य णौ चङि उपधायाः इकारादेशो भवति । अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन् ॥

## जिघ्रतेर्वा । (६/२५८९)

जिघ्रतेः अङ्गस्य णौ चङि उपधाया इकारादेशो वा भवति । अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन् । [4]अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन् ॥

## उर्ऋत् । (७/२५६७)

णौ चङि उपधायाः ऋवर्णस्य स्थाने वा ऋकारादेशो भवति । [5]इरराराामपवादः । इर् – अचिकीर्तत्, अचीकृतत् । अर्[6] – अववर्तत्, अवीवृतत् । आर्[7] – अममार्जत्, अमीमृजत् । वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते । तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्, अचीकृतत् इति । न चायं [8]भाव्यमानः, [9]किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतद[10]भ्यनुज्ञायते ॥

## नित्यं छन्दसि । (८/३५६८)

छन्दसि विषये णौ चङि उपधाया ऋवर्णस्य स्थाने ऋकारादेशो भवति नित्यम्[11] । अवीवृधत् पुरोडाशेन । अवीवृधताम् । अवीवृधन् ॥

---

1. कण । रण । भण । श्रण । लुप । हेठ । हायि । वाणि (चाणि)। लोटि (लोठि)। लोपि– कणादिः इत्यधिकम् ड, रण – अरराणत् । अरीरणत् । भण् – अबभाणत् । अबीभणत् । श्रण – अशश्राणत् । अशिश्रणत् । लुप – अलुलोपत् । अलूलुपत् । हेठ – अजिहेठत् । अजिहीठत् । हायि – अजहायत् । अजीहयत् । वाणि – अववाणत् । अवीवणत् । लुटि – अलुलोटत् । अलूलुटत् । इत्यधिकम् ह. 2. ईकारः ह. 3. वावचनम् ब. 4. न च भवति इत्यधिकम् ब. इ, अजिघ्रपत् नास्ति क. 5. इररामपवादः क. 6. वृतु वर्तते इत्यधिकम् क. 7. मृज शुद्धौ इत्यधिकम् इ. 8. भाष्यमाणः क. 9. किन्तु नास्ति क. 10. अभ्यनुज्ञायेत ब. 11. पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् इत्यधिकम् ह.

## दयतेर्दिगि लिटि । (९/२३८८)

दयतेरङ्गस्य लिटि परतो दिगि इत्ययमादेशो भवति । अवदिग्ये, अवदिग्याते, अवदिग्यिरे । दयतेः इति दीङो (धा. पा. ११३५) ग्रहणं न तु 'दय दाने' (धा. पा. ४८१) इत्यस्य । तस्य हि लिटि [1]आम् विहितः । दिग्यादेशेन [2]द्विर्वचनस्य बाधनमिष्यते ॥

## ऋतश्च संयोगादेर्गुणः । (१०/२३७९)

[3]ऋकारान्तस्य अङ्गस्य संयोगादेः गुणो भवति लिटि परतः । स्वृ – सस्वरतुः । सस्वरुः । ध्वृ – दध्वरतुः । दध्वरुः । [4]स्मृ – सस्मरतुः । सस्मरुः । ऋतः इति किम् ? [5]चिक्षियतुः । चिक्षियुः । संयोगादेः इति किम् ? चक्रतुः । चक्रुः । प्रतिषेधविषयेऽपि गुणो यथा स्यात् इत्ययमारम्भः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । सस्वार । सस्मार[6] । लिटि इत्येव, स्मृतः । स्मृतवान् ।

[८७०] संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्तव्यम् । (म. भा. ३ . ३४७)

सञ्चस्करतुः, सञ्चस्करुः इति । अत्र हि 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' (सी. प. १२८) इत्यत्र दर्शने लिटि कृते, तदाश्रये च द्विर्वचने, पश्चादुपसर्गयोगे सति, [7] 'अडभ्यासव्यवायेऽपि' (६ . १ . १३६/२५३९) इति सुट् क्रियते । एवं च कृत्वा संस्क्रृषीष्ट, उपस्क्रृषीष्ट इत्यत्र सुटो बहिरङ्गलक्षणस्य असिद्धत्वात् ऋतश्च संयोगादेः इति इडागमो न भवति ॥

## ऋच्छत्यॄताम् । (११/२३८३)

ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ॠकारान्तानां च लिटि परतो गुणो न भवति । [8]ऋच्छ – आनर्च्छ, [9]आनर्च्छतुः, आनर्च्छुः । [10]ऋ – आरतुः, आरुः । ॠकारान्तानाम् – [11]निचकरतुः, [12]निचकरुः । निजगरतुः, निजगरुः । ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ॠतां तु प्रतिषिद्धः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । निचकार । निजगार ॥

## शॄदॄप्रां ह्रस्वो वा । (१२/२४९७)

शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति । शॄ – विशश्रतुः, विशश्रुः । विशशरतुः, विशशरुः । दॄ – विदद्रतुः, विदद्रुः । विददरतुः, विददरुः । पॄ – निपप्रतुः, निपप्रुः । निपपरतुः, निपपरुः । ह्रस्ववचनम् इत्वोत्वनिवृत्त्यर्थम् ।

केचिदेतत् सूत्रं प्रत्याचक्षते । 'श्रा पाके' (धा. पा. १०५४), 'द्रा कुत्सायां गतौ' (धा. पा. १०५५), 'प्रा पूरणे' (धा. पा. १०६२) इत्येतेषाम् अनेकार्था[13] धातवः इति शॄदॄप्रामर्थे वर्तमानानां विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः इत्येतानि रूपाणि साधयन्ति । तथा च सति क्वसौ विशशृवान् इत्येतद्रूपं न स्यात् ॥

---

1. अमादेशेन भवितव्यम् ह. 2. द्विर्वचनबाधनम् क. 3. लिटि इति वर्तते इत्यधिकम् ह, ऋकारान्ताङ्गस्य इ. 4. स्मृ चिन्तायाम् ब. 5. विचिक्षिपतुः विचिक्षिपुः क. 6. दध्वार इत्यधिकम् ब. इ. 7. अभ्यासव्यवायेऽपि ब. 8. ऋच्छतेः क. 9. आनर्च्छतुः नास्ति ड. 10. ऋकारस्य ब, ऋकारस्य तु क. 11. नास्ति ड. 12. नास्ति ब. 13. हि इत्यधिकम् ब.

## केऽणः । (१३/८३४)

के प्रत्यये परतो[1]ऽणो ह्रस्वो भवति । ज्ञका । कुमारिका । [2]किशोरिका[3] । अणः इति किम् ? गोका । नौका । राका, धाका (म.भा.३.३४८) इत्यत्र 'उणादयो बहुलम्' (३.३. १/२१६९) इति ह्रस्वो न भवति । 'न कपि' (७. ४. १४/८३५) इति प्रतिषेधसामर्थ्यात् कनोऽपि सानुबन्धकस्य ग्रहणमिह[4] भवति ॥

## न कपि । (१४/८३५)

कपि प्रत्यये परतोऽणो ह्रस्वो न भवति[5] । [6]बहुकुमारीकः । [7]बहुवधूकः । बहुलक्ष्मीकः । 'गोस्त्रियो-रुपसर्जनस्य' (१.२.४८/३५६) इत्ययमपि [8]ह्रस्वः कपि न भवति । [9]समासार्थे हि उत्तरपदे कपि कृते, पश्चात् कबन्तेन सह समासेन भवितव्यम् इति [10]स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ॥

## आपोऽन्यतरस्याम् । (१५/८९२)

आबन्तस्याङ्गस्य कपि ह्रस्वः [11]न भवत्यन्यतरस्याम्[12] । बहुखट्वाकः, बहुखट्वकः । बहुमालाकः, बहुमालकः ॥

## ऋदृशोऽङि गुणः । (१६/२४०६)

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः – अदर्शत्, अदर्शताम्, अदर्शन् ॥

## अस्यतेस्थुक् । (१७/२५७०)

अस्यतेरङ्गस्य थुगागमो भवति अङि परतः । आस्थत्, आस्थताम्, आस्थन् ॥

## श्वयतेरः । (१८/२४२१)

श्वयतेः अङ्गस्य अकारादेशो भवति अङि परतः । अश्वत्, अश्वताम्, अश्वन् ॥

## पतः पुम् । (१९/२३५५)

पतेरङ्गस्य पुमागमो भवति अङि परतः । अपप्तत्, अपप्तताम्, अपप्तन् ॥

---

1. अणन्तस्याङ्गस्य ब. 2. नास्ति क. 3. ब्रह्मबन्धुका, जीवबन्धुका इत्यधिकम् ह. 4. न इत्यधिकम् क. 5. पूर्वेण प्राप्तः प्रतिषिध्यते इत्यधिकम् ब. ह. 6. बहु नास्ति क. 7. बहुब्रह्मबन्धुकः बहुयवागुकः ह. इ. 8. ह्रस्वः नास्ति ब. 9. ससामर्थ्ये ड, सामर्थ्ये हि क, समासार्थे च पदे ब. 10. स्त्रीप्रत्ययान्तम् ड. इ. ह. 11. न नास्ति ब. 12. न कपि इति प्रतिषेधे प्राप्ते विकल्पः क्रियते इत्यधिकम् ब.

## वच उम्। (२०/२४८४)

वचेः अङ्गस्य अङि परतः उमागमो भवति। अवोचत्, अवोचताम्, अवोचन् ॥

## शीङः सार्वधातुके गुणः। (२१/२४४१)

शीङः अङ्गस्य सार्वधातुके परतः गुणो भवति। शेते, शयाते, शेरते। सार्वधातुके इति किम्? शिश्ये ॥

## अयङ् यि क्ङिति। (२२/२६४९)

[1]यकारादौ क्ङिति प्रत्यये परतः शीङः अङ्गस्य अयङ इत्ययमादेशो भवति। शय्यते। [2]शाशय्यते। प्रशय्य[3]। उपशय्य[4]। यि इति किम्? शिश्ये। क्ङिति इति किम्? शेयम् ॥

## उपसर्गाद्ध्रस्व ऊहतेः। (२३/२७०२)

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः। समुह्यते। समुह्य गतः। अभ्युह्यते। अभ्युह्य गतः। उपसर्गात् इति किम्। ऊह्यते। ऊहतेः [5]इति किम्? समीह्यते। यि इत्येव, समूहितम्। क्ङिति इत्येव, [6]समूह्योऽयमर्थः। अणः इत्येव, आ ऊह्यते ओह्यते। समोह्यते ॥

## एतेर्लिङि। (२४/२४८७)

एतेरङ्गस्य उपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति। उदियात्। समियात्। अन्वियात्। आशिषि लिङि अकृत्सार्वधातुकयोः (७.४.२५/२२९८) इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति। उपसर्गात् इत्येव, ईयात्। अणः इत्येव, आ ईयात् एयात्। समेयात् ॥

## अकृत्सार्वधातुकयोर्दीर्घः। (२५/२२९८)

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति। भृशायते। सुखायते। [7]दुःखायते। चीयते। [8]चेचीयते। स्तूयते। तोष्टूयते। चीयात्। स्तूयात्। अकृत् इति किम्। प्रकृत्य। प्रहृत्य। परत्वात् दीर्घत्वेन तुको [9]बाधः स्यात्। असार्वधातुके इति किम्? चिनुयात्। [10]सुनुयात्। क्ङिति इत्येव, उरुया। धृष्णुया ॥

## च्वौ च। (२६/२१२०)

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति। शुचीकरोति। शुचीभवति। शुचीस्यात्। पटूकरोति। पटूभवति। पटूस्यात् ॥

---

1. शीङ् इति वर्तते इत्यधिकम् ब. 2. उपशय्यते ह. 3–4. गतः इत्यधिकम् ब. 5. इत्येव ब. 6. अभ्यूह्योऽयमर्थ ग. 7. नास्ति इ ह. 8. नास्ति ब. 9. बाधा ब.इ. 10. तनुयात् ह.

## रीङ् ऋतः । (२७/१२३४)

ऋकारान्तस्य अङ्गस्य अकृद्यकारे असार्वधातुके यकारे च्वौ च परतो रीङ इत्ययमादेशो भवति । मात्रीयति । मात्रीयते । [1]पित्रीयति । पित्रीयते । चेक्रीयते । मात्रीभूतः । क्ङिति इत्येतन्निवृत्तम्, तेनेहापि भवति, पितुरागतं पित्र्यम् । ऋत इति तपरकरणं किम् ? चेकीर्यते । निजेगिल्यते ॥

## रिङ् शयग्लिङ्क्षु । (२८/२३६७)

ऋकारान्तस्याङ्गस्य श यक् इत्येतयोः लिङि च यकारादौ असार्वधातुके परतो रिङ् इत्ययमादेशो भवति[2] । श – आद्रियते । आध्रियते । यक् – क्रियते । ह्रियते । लिङ – क्रियात्[3] । [4]ह्रियात् । रिङवचनं दीर्घनिवृत्त्यर्थम् । असार्वधातुके इत्येव, बिभृयात् । यि इत्येव, कृषीष्ट । हृषीष्ट ॥

## गुणोऽर्तिसंयोगाद्योः । (२९/२३८०)

ऋतः यकि लिङि इति वर्तते । श इत्यसम्भवात् निवृत्तम् । गुणो भवति अर्तेः संयोगादीनाम् ऋकारान्तानां[5] यकि परतो लिङि च यकारादौ असार्वधातुके । अर्यते । अर्यात् । [6]स्मर्यते । स्मर्यात् । इह संस्क्रियते, संस्क्रियात् इति सुटो बहिरङ्गलक्षणस्य असिद्धत्वात् अभक्तत्वात् वा संयोगादित्वम् अङ्गस्य नास्ति इति गुणो न प्रवर्तते । यि इत्येव, स्वृषीष्ट । ध्वृषीष्ट । असार्वधातुके इत्येव, इयृयात् ॥

## यङि च । (३०/२६३३)

यङि च परतः अर्तेः संयोगादेश्च ऋतः गुणो भवति । अरार्यते । सास्वर्यते । दाध्वर्यते । सास्मर्यते । अर्तेः ‘अटचर्त्यशूर्णोतीनामुपसंख्यानम्’ (७.४.८२/२६३० वा.) इति यङ । ‘न न्द्राः संयोगादयः’ (६.१.३/२४४६) इति द्विर्वचनप्रतिषेधः यकारस्य नेष्यते ।

[८७१] हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः । (म.भा. ३.३४९)

जेघ्नीयते । हिंसायाम् इति किम् ? जङ्घन्यते ॥

## ई घ्राध्मोः । (३१/२६४८)

घ्रा ध्मा इत्येतयोः यङि परतः ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ॥

---

1. पित्रीयति नास्ति इ. ह. 2. लिङ्विशेषणार्थ , असार्वधातुकग्रहणम् इहानुवर्तते इत्यधिकम् ब. 3. क्रियास्तां क्रियासुः इत्यधिकम् ह. 4. नास्ति ह. 5. च अङ्गानाम् इत्यधिकम् इ. 6. ध्वर्यते ध्वर्यात् ह.

## अस्य च्वौ । (३२/२११८)

[1]ई इति वर्तते । अवर्णान्तस्याङ्गस्य च्वौ परतः ईकारादेशो भवति[2] । [3]शुक्लीभवति । शुक्लीस्यात् । खट्वीकरोति । [4]खट्वीस्यात् ॥

## क्यचि च । (३३/२६५८)

अस्य (७.४. ३२/२११८) इति वर्तते । क्यचि[5] परतः अवर्णान्तस्य अङ्गस्य ईकारादेशो भवति । पुत्रीयति । [6]घटीयति । [7]खट्वीयति । मालीयति । '[8]अकृत्सार्वधातुकयोर्दीर्घः' (७.४. २५/२२९८) इत्यस्यापवादः । पृथग्योगकरणमुत्तरार्थम् ॥

## अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । (३४/२६६१)

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते[9] बुभुक्षा पिपासा गर्ध इत्येतेषु अर्थेषु । अशनाय इत्यशनशब्दस्य आत्वं क्यचि निपात्यते । अशनायति इति भवति बुभुक्षा चेत् । अशनीयति [10]इत्येवान्यत्र । उदन्य इति उदक–शब्दस्य उदन्नादेशो निपात्यते । उदन्यति इति भवति पिपासा चेत् । उदकीयति [11]इत्येवान्यत्र । धनाय इति धनशब्दस्य आत्वं निपात्यते । धनायति इति भवति गर्धः चेत् । धनीयति [12]इत्येवान्यत्र ॥

## न च्छन्दस्यपुत्रस्य । (३५/३५८८)

छन्दसि विषये पुत्रवर्जितस्य अवर्णान्तस्य अङ्गस्य क्यचि[13] यदुक्तं तन्न भवति । किं चोक्तम्? दीर्घत्वम् ईत्वं च[14] । 'मित्रयुः' (मै. २. ६. १२)[15] । '[16]संस्वेदयुः' (मै. ४.१२.२) । 'देवाञ् जिगाति सुम्नयुः' (ऋ. ३. २७. १) । अपुत्रस्य इति किम् ? 'पुत्रीयन्तः सुदानवः' (ऋ. ७.९६.४) ।

[८७२] अपुत्रादीनामिति वक्तव्यम् । (म. भा. ३. ३४९)

'जनीयन्तोऽन्वग्रवः[17]' (ऋ. ७. ९६. ४) ॥

## दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति । (३६/३६८९)

[18]दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति इत्येतानि छन्दसि[19] निपात्यन्ते । दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते । [20]अवियोना दुरस्युः । दुष्टीयति इति प्राप्ते । द्रविणशब्दस्य द्रविणस्भावो निपात्यते । 'द्रविणस्यु-र्विपन्यया' (ऋ. ६. १६. ३४) । द्रविणीयति इति प्राप्ते । वृषशब्दस्य वृषण्भावो निपात्यते । 'वृषण्यति' (ऋ. ९.५. ६) । वृषीयति इति प्राप्ते । रिष्टशब्दस्य रिषण्भावो निपात्यते । 'रिषण्यति' (ऋ. २.२३.१२) । रिष्टीयति इति प्राप्ते ॥

---

1. वाक्यमिदं नास्ति इ. 2. च्वौ च इति दीर्घस्यापवादः इत्यधिकम् इ. 3. शुक्लीकरोति क. इ. 4. खट्वीभवति क. इ. ह. 5. च प्रत्यये इत्यधिकम् इ. 6. पटीयति इ. 7. नास्ति ब. 8. वाक्यमिदं नास्ति ब. 9. यथासङ्ख्यम् इत्यधिकम् ब. इ. ह. 10–12. इत्यन्यत्र इ. 13 प्रत्यये इत्यधिकम् ह. 14. तद् द्वयमपि प्रतिषिध्यते इत्यधिकम् ब. 15. सनाशंसभिक्ष उः इत्यधिकृत्य क्याच्छन्दसि इति ताच्छीलिक उप्रत्यय इत्यधिकम् इ. 16. नास्ति ह. 17. इति इत्यधिकम् ह. 18. छन्दसि इति वर्तते इत्यधिकम् इ. 19. विषये इत्यधिकम् ह. 20. अहिर्योना दुरस्युः अतियोन्यो इ, अनयोना दुरस्युः ह, अवबाढो दुरस्युः काठ. 2. 11.

## अश्वाघस्यात्। (३७/३५९०)

अश्व अघ इत्येतयोः क्यचि [1]परतः छन्दसि विषये आकारादेशो भवति। 'अश्वायन्तो [2]मघवन्' (ऋ. ७.३२.२३)। 'मा त्वा वृका अघायवो विदन्' (काठ. २.७.३९)। एतदेव आत्ववचनं ज्ञापकं 'न च्छन्दस्यपुत्रस्य' (७.४.३५/३५८८) इति [3]दीर्घप्रतिषेधो भवति इति॥

## देवसुम्नयोर्यजुषि काठके। (३८/३५९१)

देव सुम्न इत्येतयोः क्यचि परतः आकारादेशो भवति काठके यजुषि। '[4]देवायते यजमानाय' (काठ. २.९)। '[5]सुम्नायन्तो हवामहे' (काठ. ८.१७.७६)। यजुषि इति किम्? 'देवाञ् जिगाति सुम्नयुः' (ऋ. ३.२७.१)। काठके इति किम्? '[6]सुम्नयुरिदमसीदमसि' (तै. २.५.७.४)॥

## कव्यध्वरपृतनस्यर्चि लोपः। (३९/३५९२)

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचि परतो लोपो भवति [7]ऋचि विषये। कव्यन्तः सुमनसः। अध्वर – 'अध्वर्यन्तः[8]' (तै. ४.६.३.३)। पृतना – [9]पृतन्यन्तः (पै. २.८९.४) तिष्ठन्ति॥

## द्यतिस्यतिमास्थामित्ति किति। (४०/३०७४)

द्यति स्यति मा स्था इत्येतेषामङ्गानाम् इकारादेशो भवति तकारादौ किति प्रत्यये परतः। द्यति – निर्दितः। निर्दितवान्। स्यति – अवसितः। अवसितवान्। मा – मितः। मितवान्। स्था – स्थितः। स्थितवान्। ति इति किम्? अवदाय। किति इति किम्? अवदाता॥

## शाछोरन्यतरस्याम्। (४१/३०७८)

शा छा इत्येतयोः अन्यतरस्याम् इकारादेशो भवति तकारादौ किति। शा – निशितम्, निशातम्। निशितवान्, निशातवान्। छा – अवच्छितम्, अवच्छातम्। अवच्छितवान्, अवच्छातवान्।

[८७३] श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम्। (म. भा. ३.३५०)

संशितो ब्राह्मणः। संशितव्रतः इत्यर्थः। व्यवस्थितविभाषाविज्ञानात् सिद्धम्।

देवत्रातो गलो ग्राह इति योगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥ (म. भा. ३.३५०)

---

1. च इत्यधिकम् क. 2. मघवान् इ, इन्द्रवाजिनः ह. 3. द्वयोरपीकारदीर्घयोः प्रतिषेधोऽपि भवति क. ड. 4. देवायन्तो मुद्रितः पाठः ड. 5. सुम्नायते इ. 6. सुम्नयोः इ. ड. 7. ऋग्विषये ई. 8. स्रष्टुः इत्यधिकम् क, तस्थुः इत्यधिकम् ह. 9. पृतन्यवः ब.

## दधातेर्हिः । (४२/३०७६)

[1]दधातेरङ्गस्य हि इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । हितः । हितवान् । हित्वा ॥

## जहातेश्च क्त्वि । (४३/३३३१)

जहातेरङ्गस्य हि इत्ययमादेशो भवति क्त्वाप्रत्यये परतः । हित्वा राज्यं वनं गतः । हित्वा गच्छति । जहातेर्निर्देशात् जिहीतेर्न भवति । हात्वा ॥

## विभाषा छन्दसि । (४४/३६९३)

[2]जहातेरङ्गस्य विभाषा हि इत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः । हित्वा शरीरं (तै.ब्रा. २.५.६.५) यातव्यम् । हात्वा ॥

## सुधितवसुधितनेमधितधिष्वधिषीय च । (४५/३६९४)

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते । तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधातेः [3]क्तप्रत्यय इत्त्वम् इडागमो वा प्रत्ययस्य निपात्यते । 'गर्भं माता सुधितम्' । (ऋ. १०.२७.१६) । सुहितम् इति प्राप्ते । वसुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते । नेमधिता (ऋ. १०.९३. १३) बाधन्ते । नेमहिता इति प्राप्ते । धिष्व इति लोण्मध्यमैकवचने दधातेः [4]इत्त्वम् इडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते । 'धिष्व स्तोमम्' (ऋ. ८.३३.१५) । धत्स्व इति प्राप्ते । धिषीय इति आशीर्लिङि आत्मनेपदोत्तमैकवचने दधातेः इत्त्वम्, इडागमो वा [5]प्रत्ययस्य निपात्यते । 'धिषीय' (तै. १.६.४.४) । धासीय इति प्राप्ते ॥

## दो दद् घोः । (४६/३०७७)

[6]दा इत्येतस्य घुसञ्ज्ञकस्य दद् इत्ययमादेशो भवति तकारादौ किति प्रत्यय परतः । दत्तः । दत्तवान्[7] । दत्तिः । दः इति किम् ? धीतः । धीतवान् । धेटः एतद् रूपम् । घोः इति किम् ? 'दाप् लवने' (धा. पा. १०६०) – दातं बर्हिः । 'दैप् शोधने' (धा.पा. ९२५) – अवदातम् [8]मुखम् । अयमादेशः थान्तः इष्यते । एवं ह्युक्तम् –

तान्ते दोषो दीर्घत्वं स्याद् दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात् थान्तम् ॥ (म.भा. ३.३५०–३५१)

यदि तु दस्ति इति तकारादौ दीर्घत्वं तदा तान्तेऽपि अदोषः । दान्तधान्तयोरपि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या.प. १२) इति नत्वधत्वे न भविष्यतः इति [9]न दोषः ।

---

1. किति इति वर्तते इत्यधिकम् इ. 2. घुमास्थागापाजहातिसां हलि इति इत्वे प्राप्ते सूत्रमिदम् इत्यधिकम् ह. 3. क्त नास्ति क, क्तप्रत्ययस्य ड. 4. द्विर्वचनाभावः इत्वं च ड. 5. सीयुट् इत्यधिकम् ड. 6. ति इति किति इति च वर्तते इत्यधिकम् ह. 7. दत्त्वा इत्यधिकम् इ. 8. बुसम् इ. 9. अदोषः क.

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ।। (म. भा. ३. ३५१)

'अच उपसर्गात्तः' (७.४.४७/३०७८) इति [1]प्राप्ते निपात्यन्ते। अनुपसर्गा वा एते अवादयः [2]क्रियान्तर-विषया वेदितव्याः ।।

## अच उपसर्गात्तः । (४७/३०७८)

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति[3]। प्रत्तम्। अवत्तम्। नीत्तम्। परीत्तम्। अचः इति किम्? निर्दत्तम्। दुर्दत्तम्। उपसर्गात् इति किम्? दधि दत्तम्। मधु दत्तम्। घोः इत्येव, अवदातम् मुखम्।

उपसर्गात् इति पञ्चमीनिर्देशाद् आदेरलः प्राप्नोति? तत्र समाधिमाहुः। अचः इत्येतद् द्वि[4]रावर्तयितव्यम्, तत्र एकं पञ्चम्यन्तं उपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने तकारो [5]भवति। द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात् [6]सर्वस्य भविष्यति। 'अपो भि' (७. ४. ४८/४४२) इत्यत्र पञ्चम्यन्तमचः इत्यनुवर्तते। तेन पकारमात्रस्य भविष्यति।

[८७४] द्यतेरित्त्वादचस्त इत्येतद् भवति विप्रतिषेधेन। (म. भा. ३. ३५१)

[7]अवत्तम्। प्रत्तं (मै. १. ६. ९) जुहोति ।।

## अपो भि । (४८/४४२)

अप् इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतः त इत्ययमादेशो भवति। अद्भिः। अद्भ्यः। भि इति किम्? अप्सु।

[८७५] स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ। (म.भा. ३. ३५२)

स्ववद्भिः। [8]स्वतवद्भिः। [9]माद्भिरिष्ट्वा इन्द्रो वृत्रहा। 'समुषद्भिरजायथाः' (ऋ. १. ६. ३) ।।

## सः स्यार्धधातुके । (४९/२३४२)

[10]सकारान्तस्य अङ्गस्य सकारादौ आर्धधातुके परतः तकारादेशो भवति। वत्स्यति। अवत्स्यत्। विवत्सति। जिघत्सति। सः इति किम्? वक्ष्यति। सि इति किम्? [11]घासः। वासः। आर्धधातुके इति किम्? [12]आस्से। वस्से ।।

---

1. तकारे इत्यधिकम् ह. 2. क्रियाविशेषाः क, क्रियान्तरविषये इ. 3. प्रत्यये इत्यधिकम् इ. 4. आवर्तते ब. 5. विधीयते ह. 6. समग्रस्य ब. 7. चतुरवत्तं जुहोति ह. 8. स्वतवद्भ्यः (मै. 1. 10. 6.) 9. माद्भिरिष्टः क, माद्भिस्त्वा चन्द्रो वृत्रहा शौ. 19. 2. परिवाम् इन्द्रो वृत्रहा पै. 20. 61. 10. त इति वर्तते इत्यधिकम् इ. ह. 11. प्रघासः ह. 12. आस्व वस्व इ.

## तासस्त्योर्लोपः । (५०/२१९१)

[1]तासेः अस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति । तासेः – कर्तासि । कर्तासे । अस्तेः – त्वमसि । व्यतिसे । अस्तेः अकारसकारयोः लुप्तयोः से इति प्रत्यय[2]मात्रमेतत् पदम्, [3]तेन 'सात् पदाद्योः' (८.३.१११/२१२३) इति [4]षत्वं न भवति ॥

## रि च । (५१/२१९२)

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति । कर्तारौ । कर्तारः । अध्येतारौ । अध्येतारः ॥

## ह एति । (५२/२२५०)

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । कर्ताहे[5] । अस्तेः – व्यतिहे[6] ॥

## यीवर्णयोर्दीधीवेव्योः । (५३/२४८८)

यकारादौ इवर्णादौ च परतो दीधीवेव्योः लोपो भवति । यकारादौ – आदीध्य गतः । आवेव्य गतः आदीध्यते । आवेव्यते । इवर्णादौ – आदीधिता । आवेविता । [7]लिङि – आदीधीत । आवेवीत । यीवर्णयोः इति किम् ? [8]आदीध्यनम् । [9]आवेव्यनम् ॥

## सनि मीमाघुरभलभशकपतपदामच इस् । (५४/२६२३)

सनि प्रत्यये सकारादौ परतः मी मा घु रभ लभ शक पत पद इत्येतेषाम् अङ्गानाम् अचः स्थाने इस् इत्ययमादेशो भवति । मी इति मीनातिमिनोत्योः [10]द्वयोरपि[11]ग्रहणमिष्यते । [12]मित्सति । प्रमित्सति । मा इति गामादाग्रहणेषु अविशेषः । [13]मित्सते । अपमित्सते । घु – [14]दित्सति । धित्सति । रभ – आरिप्सते । लभ – आलिप्सते । शक – शिक्षति । पत् – पित्सति । पद – प्रपित्सते[15] । सनि इति किम् ? दास्यति[16] । सि इत्येव, पिपतिषति । 'तनिपतिदरिद्राणामुपसङ्ख्यानम्' (कात्या. वा. ५०५९) इति पतेः इडागमविकल्पः ।

[८७६] सनि राधो हिंसायामच इस् वक्तव्यः ।

प्रतिरित्सति । हिंसायाम् इति किम् ? [17]आरिरात्सति ॥

---

1. सः सि इति वर्तते इत्यधिकम् ह. 2. मात्रमेवेदम् ब. 3. तेन नास्ति ब, वाक्यमिदं नास्ति क.ब.ह. 4. षत्वप्रतिषेधः इ. 5. हर्ताहे इत्यधिकम् क. 6. आत्मनेपदोत्तमैकवचने रूपम् इत्यधिकम् ह. 7. लिङि-आवेव्यनम् नास्ति ब. 8. आदीध्यकः इ. 9. आवेव्यकः इ. 10. उभयोरपि ह. 11. इष्यते नास्ति इ. 12. निमित्सति ह. 13. प्रमित्सते ह. 14. दित्सति नास्ति ह. 15. अत्र लोपोऽभ्यासस्य इति अभ्यासलोपः इत्यधिकम् ह. 16. धास्यति इत्यधिकम् इ. 17. आरिस्यति इ, रात्सति ह.

## आप्ज्ञप्यृधामीत्। (५५/२६१९)

आप् ज्ञपि ऋध इत्येतेषामङ्गानाम् [1]अच ईकारादेशो भवति सनि सकारादौ परतः। आप्–ईप्सति। ज्ञपि–ज्ञीप्सति। ऋध् – ईर्त्सति। ज्ञपेः द्वावचौ, तत्र [2]णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य तु ईत्वम्। सनि इत्येव, [3]प्राप्स्यति। सि इत्येव, [4]जिज्ञपयिषति। अर्दिधिषति। सनीवन्तर्ध (७.२.४९/२६१८) इति ज्ञपेः ऋधेश्च इटो विकल्पः॥

## दम्भ इच्च। (५६/२६२१)

दम्भेः [5]अच इकारादेशो भवति, चकारात् ईत् च सनि सकारादौ परतः। धिप्सति, धीप्सति। सि इत्येव, दिदम्भिषति[6]॥

## मुचोऽकर्मकस्य गुणो वा। (५७/२६२४)

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः। 'हलन्ताच्च' (१.२.१०/२६१३) इति किर्त्वप्रतिषेधो विकल्प्यते। [7]मोक्षते वत्सः स्वयमेव, [8]मुमुक्षते वत्सः स्वयमेव। अकर्मकस्य इति किम्? मुमुक्षति वत्सं देवदत्तः। कर्मकर्तरि मुचिरकर्मको भवति, कर्मविशेषस्य [9]अविवक्षिताद्वा॥

## अत्र लोपोऽभ्यासस्य। (५८/२६२०)

यदेतत् प्रक्रान्तं सनि मीमा (७.४.५४/२६२३) इत्यादि मुचोऽकर्मकस्य (७.४.५७/२६२४) इति यावत्, अत्र [10]अभ्यासलोपो भवति। तथैव उदाहृतम्। अभ्यासस्य इत्येतच्च अधिकृतं वेदितव्यम् आ अध्यायपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामः अभ्यासस्य इत्येवं तद् वेदितव्यम्। वक्ष्यति, 'ह्रस्वः' (७.४.५९/२१८०)–डुढौकिषते[11]। तुत्रौकिषते[12]। [13]सनि मीमाघुरभलभशकपतपदामच इस्, अभ्यासलोपश्च, इत्येवं सिद्धे यदत्रग्रहणमिह क्रियते, तद् विषयावधारणार्थम्, अत्रैव अभ्यासलोपो भवति, सन्वद्भावविषये न भवति। [14]अमीमपत्। अदीदपत्। 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (७.४.९३/२३१६) इति सन्वद्भावात् प्राप्नोति। सर्वस्य अभ्यासस्यायं लोपः इष्यते, तदर्थमेव केचित् अत्रग्रहणं वर्णयन्ति। 'नानर्थकेऽलोऽन्त्यविधिः' (व्या.प. ६२) इत्यपरे सर्वस्य कुर्वन्ति॥

## ह्रस्वः। (५९/२१८०)

ह्रस्वो भवति अभ्यासस्य। डुढौकिषते। तुत्रौकिषते। डुढौके। तुत्रौके। अडुढौकत्। अतुत्रौकत्।

[८७७] अभ्यासस्यानचि। (म.भा. ३.३५२)

अभ्यासस्य यदुच्यते अनचि तद् भवति इति वक्तव्यम्। चराचरः। चलाचलः। पतापतः। वदावदः। हलादिः शेषो (७.४.६०/२१७९) न भवति॥

---

1. अचः स्थाने इ. ह. 2. पूर्वविप्रतिषेधेन णेः लोपः इ. 3. आप्स्यति इ. 4. जिज्ञापयिषति इ. ह. 5. अचः स्थाने इ. 6. इटो विकल्पः पूर्ववत् इत्यधिकम् इ.ह. 7. मोक्ष्यते क. 8. मुमुक्ष्यते क. 9. अविवक्षायाम् ब 10. अभ्यासस्य लोपो ड. 11. डुढौके अडुढौकत इत्यधिकम् क. 12. तुत्रौके अतुत्रौकत इत्यधिकम् क. 13. सनि नास्ति क. 14. अमीमदत ड.

## हलादिः शेषः। (६०/२१७९)

अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते। जग्लौ। [1]मम्लौ। पपाच। पपाठ। [2]आट, आटतुः, आटुः। आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, तत्राभ्यासजातेः आश्रयणात् क्वचिदपि वर्तमानो हलादिः अनादेः सर्वत्र निवृत्तिं करोति। अपरे तु ब्रुवते, शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह। तदवस्थानम् [3]उक्तितो यद्यपि प्रधानम्, अविधेयत्वात् तु तदप्रधानम्। निवृत्तिरेव तु विधेयत्वात् प्रधानम्। तत्रायमर्थोऽस्य जायते, अभ्यासस्य अनादेर्हलो निवृत्तिः भवति इति। सा किमिति आदेरविधेयां सतीमनिवृत्तिमपेक्षिष्यते इति॥

## शर्पूर्वाः खयः। (६१/२२६९)

[4]अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये [5]हलो लुप्यन्ते। [6]चुश्च्योतिषति। तिष्ठासति। पिस्पन्दिषते। शर्पूर्वाः इति किम्? पपाच[7]। खयः इति किम्? सस्नौ।

[८७८] खर्पूर्वाः [8]खय इति[9] वक्तव्यम्। (म.भा.३.३५३)

उचिच्छिषति इत्यत्र उच्छेः अन्तरङ्गत्वात् तुकि कृते द्विर्वचनम्, [10]तत्र हलादिः शेषे (७.४.६०/२१७९) सति अभ्यासे तकारः [11]श्रूयेत॥

## कुहोश्चुः। (६२/२२४७)

[12]अभ्यासस्य कवर्गहकारयोः चवर्गादेशो भवति। चकार। चखान। जगाम। [13]जघान। [14]हकारस्य – जहार। जिहीर्षति। जह्रौ॥

## न कवतेर्यङि। (६३/२६४१)

कवतेः अभ्यासस्य यङि परतः [15]चुः न भवति। कोकूयते उष्ट्रः। कोकूयते स्वरः। कवतेः इति विकरणनिर्देशः कौतेः[16] कुवतेश्च[17] निवृत्त्यर्थः। तयोः चुत्वमेव भवति। चोकूयते[18]। यङि इति किम्? चुकुवे॥

## कृषेश्छन्दसि। (६४/३५९९)

कृषेः छन्दसि विषये यङि परतः अभ्यासस्य चुः न भवति। करीकृष्यते [19]यज्ञकुणपः। छन्दसि इति किम्? चरीकृष्यते [20]कृषीवलः॥

---

1. उदाहरणमिदं नास्ति क. इ. 2. उदाहरणमिदं नास्ति ह. 3. उक्तितो नास्ति ब, 4. शेषे इति वर्तते इत्यधिकम् ह. 5. हलो नास्ति ब. 6. च्युतिर् क्षरणे इत्यधिकम् ह. 7. पपाठ इत्यधिकम् ब. 8. खयः नास्ति ब. 9. च इत्यधिकम् ब. 10. तत्र नास्ति क. इ. 11. श्रूयते क. इ. 12. अभ्यासे क. 13. जघास ब. ड, नास्ति इ. 14. हकारस्य नास्ति ब. 15. चवर्गादेशः इ. 16. अदादिकस्य इत्यधिकम् इ. 17. तौदादिकस्य त्यधिकम् इ. 18. यङलुकि चोकवीति इत्यधिकम् इ. 19. यज्ञकुणपः नास्ति इ. 20. कृषीवलः नास्ति ब.

**दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदत्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च। (६७/३६९६)**

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते अलर्षि आपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतः दविद्युतत् तरित्रतः सरीसृपतम् वरीवृजत् मर्मृज्य आगनीगन्ति इत्येतानि [1]अष्टादश छन्दसि विषये निपात्यन्ते[2]।

दाधर्ति दर्धर्ति दर्धर्षि इति धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च। दाधर्ति। एवं [3]दर्धर्ति (ऋ. ५.८४.३)। श्लौ रुक् अभ्यासस्य निपात्यते। तथा दर्धर्षि इति। अत्र च 'यल्लक्षणेन अनुपपन्नं तत् सर्वं निपातनात् सिद्धम्' (भा.का.प. ३१)।

[4]बोभूतु इति – भवतेः यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्, अत्र 'भूसुवोस्तिङि' (७.३.८८/२२२४) इति गुणाभावः सिद्धः? ज्ञापनार्थं तर्हि निपातनमेतत्। ज्ञापयति, अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवति इति। बोभोति, बोभवीति (ऋ. ३.५३.८)।

तेतिक्ते (ऋ. ४.२३.७) – तिजेः यङ्लुगन्तस्य आत्मनेपदं निपात्यते। यङो ङित्त्वात् प्रत्ययलक्षणेन आत्मनेपदं सिद्धमेव? ज्ञापनार्थं तु आत्मनेपदनिपातनम्, अन्यत्र [5]यङ्लुगन्तादात्मनेपदं न भवति[6]।

अलर्षि इति – इयर्तेः लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते 'अलर्ति दक्षः' (ऋ. ८.४८.८)।

आपनीफणत् (ऋ. ४.४०.४) इति – फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि [7]अभ्यासस्य [8]नीक् निपात्यते।

संसनिष्यदत् (मै. १.११.२) इति – स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येव अभ्यासस्य [9]निक्, धातुसकारस्य [10]षत्वं निपात्यते। न चास्य [11]सम्पूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते, आसनिष्यदत् इति।

करिक्रत् (ऋ. १.१३१.३) इति – करोतेः यङ्लुगन्तस्य शतरि चुत्वाभावः, अभ्यासककारस्य रिगागमो निपात्यते।

कनिक्रदत् (ऋ. १.१२८.३) इति–क्रन्देः लुङि च्लेः अङादेशः, द्विर्वचनमभ्यासस्य, चुत्वाभावः, निगागमश्च निपात्यते। तथा चास्य हि विवरणं कृतम्। अक्रन्दीत् इति भाषायाम्।

भरिभ्रत् (ऋ. १०.४५.७) इति – बिभर्तेः यङ्लुगन्तस्य शतरि 'भृञामित्' (७.४.७६/२४९६) इति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमः निपात्यते।

दविध्वतः इति – ध्वरतेः यङ्लुगन्तस्य शतरि जसि रूपमेतत्। अत्र अभ्यासस्य विगागमः ऋकारलोपश्च निपात्यते। 'दविध्वतो रश्मयः सूर्यस्य' (ऋ. ४.१३.४)।

---

1. अष्टादश नास्ति क, शब्दरूपाणि इत्यधिकम् ब, रूपाणि इत्यधिकम् ह. 2. छन्दसि इति चकारेण अनुकृष्यते इत्यधिकम् ब. 3. दर्धर्ति दर्धर्षि तस्यैव धारयतेः अभ्यासस्य रुगागमो निपात्यते इ. 4. बोभूतु इति नास्ति ब. 5. यङ्लुगन्तो न भवति इ. 6. इत्येतदेव ज्ञापकम् इत्यधिकम् ह. 7. एव इत्यधिकम् ङ. 8. निगागमो निपात्यते ब. 9. निगागमो निपात्यते इ. 10. च इत्यधिकम् ई. सम्पूर्वतन्त्रम् क.

दविद्युतत् (ऋ. ६.१६.४५) इति – द्युतेः यङलुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावः, अत्त्वम्, विगागमश्च निपात्यते ।

तरित्रतः इति – तरतेः शतरि श्लौ षष्ठ्येकवचने अभ्यासस्य रिगागमः निपात्यते ।

सरीसृपतम् इति – सृपेः शतरि श्लौ द्वितीयैकवचने अभ्यासस्य रीगागमः निपात्यते ।

वरीवृजत् (ऋ. ७.२४.४) इति – वृजेः शतरि श्लौ रीगागमः निपात्यते अभ्यासस्य ।

मर्मृज्य इति – मृजेः लिटि णलि अभ्यासस्य रुगागमः धातोश्च युगागमो निपात्यते । ततो 'मृजेर्वृद्धिः' (७.२.११४/२४७३) न भवति, अलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते ।

आगनीगन्ति इति – आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावः नीगागमश्च निपात्यते । '[1]वक्ष्यन्ती वेदागनीगन्ति कर्णम्' (ऋ. ६.७५.३) । इतिकरणमेवंप्रकाराणामन्येषामप्युपसङ्ग्रहार्थम् ॥

## उरत् । (६६/२२४४)

ऋवर्णान्तस्य अभ्यासस्य [2]अकारादेशो भवति । ववृते । ववृधे । शशृधे । नर्नर्ति, नरिर्नर्ति, नरीर्नर्ति इत्येवमादौ 'अभ्यासविकारेषु [3]अपवादो नोत्सर्गान् विधीन् बाधते' (व्या.प. २३) इति उः अदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

## द्युतिस्वाप्योः सम्प्रसारणम् । (६७/२३४४)

द्युति स्वापि इत्येतयोः अभ्यासस्य सम्प्रसारणं भवति । [4]विदिद्युते । व्यदिद्युतत् । विदिद्योतिषते । विदिद्युतिषते । विदेद्युत्यते । स्वापेः – सुष्वापयिषति । स्वापिः ण्यन्तो गृह्यते, तस्य अभ्यासनिमित्तेन प्रत्ययेन आनन्तर्ये सति सम्प्रसारणमिष्यते । इह न भवति, स्वापयतेर्ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयतेः सन्–सिष्वापकीयिषति ॥

## व्यथो लिटि । (६८/२३६३)

व्यथेर्लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति । विव्यथे, विव्यथाते, विव्यथिरे । हलादिः शेषेण (७.४.६०/२१७९) यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, वकारस्य[5] 'न संप्रसारणे संप्रसारणम्' (६.१.३७/३६३) इति प्रतिषिध्यते । लिटि इति किम् ? वाव्यथ्यते ॥

---

1. वक्ष्यते ड. 2. अदादेशो इ. 3. अपवादाः नोत्सर्गविधीन् बाधन्ते ड.क.इ. 4. विदिद्युते नास्ति इ. 5. तु इत्यधिकम् क.

## दीर्घ इणः किति। (६९/२४५६)

इणो[1]ऽङ्गस्य योऽभ्यासः तस्य दीर्घो भवति किति लिटि परतः। ईयतुः, ईयुः। 'इणो यण्' (६. ४. ८१/२४५५) इति यणादेशे कृते स्थानिवद्भावाद् द्विर्वचनम्। किति इति किम्? इयाय। इययिथ॥

## अत आदेः। (७०/२२४८)

अभ्यासस्य आदेः अकारस्य दीर्घो भवति लिटि परतः। [2]अतो गुणे (६. १. ९७/१९१) पररूपत्वस्यापवादः। आट, आटतुः, आटुः। आदेः इति किम्? पपाच। पपाठ॥

## तस्मान्नुड् द्विहलः। (७१/२२८८)

तस्मादतोऽभ्यासाद् दीर्घीभूतादुत्तरस्य द्विहलो[3]ऽङ्गस्य नुडागमो भवति[4]। आनङ्ग, आनङ्गतुः, आनङ्गुः। आनञ्ज, आनञ्जतुः, आनञ्जुः। द्विहलः इति किम्? आट, आटतुः, आटुः। ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते, तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति, आनृधतुः, आनृधुः॥

## अश्नोतेश्च। (७२/२५३३)

[5]अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति[6]। व्यानशे, व्यानशाते, व्यानशिरे। अश्नोतेः इति विकरणनिर्देशः अश्नातेर्मा भूत् इति। आश, आशतुः, आशुः॥

## भवतेरः। (७३/२१८१)

भवतेरभ्यासस्य अकारादेशो भवति [7]लिटि परतः। बभूव, बभूवतुः, बभूवुः। [8]भवतेः इति कृतविकरणनिर्देशादिह न भवति, अनुबभूवे कम्बलो देवदत्तेन। [9]लिटि इत्येव, बुभूषति। बोभूयते॥

## ससूवेति निगमे। (७४/३५१७)

ससूव इति[10] निपात्यते। सूतेर्लिटि परस्मैपदं वुगागमः अभ्यासस्य च अत्वं निपात्यते। [11]ससूव स्थविरं (ऋ. ४. १८. १०) विपश्चिताम्। [12]सुषुवे इति भाषायाम्॥

---

1. अङ्गस्य नास्ति क. ब. इ, इणोऽभ्यासस्य ब. ह. 2. वाक्यमिदं नास्ति ब. 3. अङ्गस्य नास्ति क. 4. लिटि परतः इत्यधिकम् ड. 5. अश्नोतेश्च नास्ति ह, अद्विहलार्थ आरम्भः इत्यधिकम् इ. 6. लिटि परतः इत्यधिकम् ह. 7. लिटि परतः नास्ति ब. 8–9. वाक्यमिदं नास्ति ब. 10. निगमे इत्यधिकम् ब.क, निगमविषये इत्यधिकम् इ. 11. गृष्टिः ससूव स्थविरं तवागाम् ऋ. 4. 18. 10. 12. निगमे इति किम् सुषुवे गर्भम् ब.

## णिजां त्रयाणां गुणः श्लौ । (७५/२५०२)

निजादीनां त्रयाणां अभ्यासस्य गुणो भवति श्लौ सति । णिजिर् – नेनेक्ति । विजिर् – वेवेक्ति । विष्लृ – वेवेष्टि । त्रिग्रहणमुत्तरार्थम्, एषां हि वृत्करणं समाप्त्यर्थं पठ्यते एव इति । श्लौ इति किम् ? निनेज ॥

## भृञामित् । (७६/२४८६)

भृञादीनां त्रयाणामभ्यासस्य इकारादेशो भवति श्लौ सति । [1]भृञ् – बिभर्ति । [2]माङ – मिमीते । [3]ओहाङ – जिहीते । त्रयाणाम् इत्येव, [4]जहाति । श्लौ इत्येव, बभार ॥

## अर्तिपिपर्त्योश्च । (७७/२४९३)

[5]अर्ति पिपर्ति इत्येतयोः अभ्यासस्य इकारादेशो भवति श्लौ । इयर्ति [6]धूमम् । पिपर्ति सोमम् ॥

## बहुलं छन्दसि । (७८/३५९८)

छन्दसि विषये अभ्यासस्य श्लौ बहुलमिकारादेशो भवति । 'पूर्णां विवष्टि' (ऋ. ७.१६.११) । वशेरेतद् रूपम् । तथा वचेः – 'जनिमा विवक्ति' (ऋ.१.९७.७) । [7]सचेः – 'वत्सं न माता सिषक्ति' (ऋ. १. ३८.८) । [8]जिघर्ति सोमम् । न च भवति । [9]ददातीत्येवं ब्रूयात् । [10]'जजनदिन्द्रम्' (मै. १.९.१) । 'माता यद्वीरं दधनद्धनिष्ठा' (ऋ. १०.७३.१)[11] ॥

## सन्यतः । (७९/२३१७)

सनि परतोऽकारान्ताभ्यासस्य इकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । [12]पिपासति । सनि इति किम् ? पपाच[13] । अतः इति किम् ? लुलूषति । [14]तपरकरणं किम् ? पापचिषते ॥

## ओः पुयण्ज्यपरे । (८०/२५७७)

[15]सनि इति वर्तते, इत् इति च । उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे च अवर्णपरे परतः इकारादेशो भवति सनि प्रत्यये परतः । पवर्गे [16]अपरे – पिपविषते । पिपावयिषति । [17]बिभावयिषति । यण्यपरे – यियविषति । यियावयिषति । [18]रिरावयिषति । [19]लिलावयिषति ।

---

1. डुभृञ् धारणपोषणयोः इ. 2. माङ् माने इ. 3. ओहाङ् गतौ इ. 4. ओहाक् त्यागे इत्यधिकम इ. 5. इत् इति वर्तते इत्यधिकम् इ. 6. धूमम् नास्ति इ. 7. सचेः नास्ति क. 8. गॄ इत्येतस्यायं जिगर्ति क, जिघृ सेचने इ, गॄ घृ इत्येतयोः यङ्लुकि – जिगर्ति जिघर्ति इ. 9. वत्सं न ददाति क. 10. जजनदिन्द्रमाता इ, जजानम् इन्द्रम् ड, जजान गर्भं महिमानमिन्द्रः ह. 11. जुहोत्यादिषु एते त्रयोऽपि पठ्यन्ते इत्यधिकम् ई. 12. पिपासति नास्ति ड. 13. पपाठ इत्यधिकम् इ. 14–15. वाक्यमिदं नास्ति क.इ. 16. अवर्णपरे तावत् ई. 17. उदाहरणमिदं नास्ति क. 18. रिरविषति ब. 19. लिलविषति ब.

ज्यपरे – [1]जु इति सौत्रोऽयं धातुः। [2]जिजावयिषति। [3]एतदेव [4]पुयण्ज्यपरे इति वचनं ज्ञापकम्, अद्विर्वचननिमित्तेऽपि णौ [5]स्थानिवद् भवति इति। ओः इति किम्? पापचयतेः सन् – पापचिषते। पुयण्जि इति किम्? अवतुतावयिषति। जुहावयिषति। अपरे। इति किम्? बुभूषति॥

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। (८१/२६७८)

स्रवति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषाम्[6] अभ्यासस्य [7]ओः अवर्णपरे यणि वा इकारादेशो भवति सनि परतः। सिस्रावयिषति, सुस्रावयिषति। शृणोति – शिश्रावयिषति, शुश्रावयिषति। द्रवति – दिद्रावयिषति, दुद्रावयिषति। प्रवति – पिप्रावयिषति, पुप्रावयिषति। प्लवति – पिप्लावयिषति, पुप्लावयिषति। च्यवति – चिच्यावयिषति, चुच्यावयिषति। वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रेण तु अनन्तर एव यणि भवितव्यम् इति अप्राप्तविभाषेयम्। अपरे इत्येव, सुस्रूषति। [8]शुश्रूषते॥

## गुणो यङ्लुकोः। (८२/२६३०)

यङि यङ्लुकि च इगन्तस्य अभ्यासस्य गुणो भवति। चेचीयते। लोलूयते[9]। यङ्लुकि – [10]जोहवीति। [11]यङो वा इति इड्विकल्पः। चोकुशीति॥

## दीर्घोऽकितः। (८३/२६३२)

अकितोऽभ्यासस्य [12]दीर्घो भवति यङि यङ्लुकि च[13]। पापचयते। पापचीति। [14]यायज्यते। यायजीति। अकितः इति किम्? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। ननु चात्र अपवादत्वान्[15] नुकि कृते अभ्यासस्य अनजन्तत्वादेव दीर्घत्वं न[16] भविष्यति? एवं तर्हि अकितः इत्यनेन[17] एतज् ज्ञाप्यते, 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' (व्या. प. २३) इति। किमेतस्य ज्ञापने प्रयोजनम्? डोढौक्यते इत्यत्र 'दीर्घोऽकितः' इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते, अचीकरत् इत्यत्र 'दीर्घो लघोः' (७.४.९४/२३१८) इत्यनेन सन्वदित्वं न बाध्यते, मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते – मीमांसते, 'ई च गणः' (७.४.९७/२५७३) इतीत्वेन हलादिशेषो न बाध्यते – अजीगणत्॥

## नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्। (८४/२६४२)

वञ्चु स्रंसु ध्वंसु भ्रंसु कस पत पद स्कन्द इत्येतेषाम् अभ्यासस्य नीगागमो भवति यङि यङ्लुकि च[18]। वञ्चु–वनीवच्यते। वनीवञ्चीति। स्रंसु – सनीस्रस्यते। सनीस्रंसीति। ध्वंसु – दनीध्वस्यते। दनीध्वंसीति। भ्रंसु – [19]बनीभ्रस्यते। [20]बनीभ्रंसीति। कस – चनीकस्यते। चनीकसीति। [21]पत – पनीपत्यते। पनीपतीति। पद – पनीपद्यते। पनीपदीति। स्कन्द – चनीस्कद्यते। चनीस्कन्दीति॥

---

1. वाक्यमिदं नास्ति इ. 2. जिजविषति ब. 3. एतदेव–जुहावयिषति नास्ति क. 4. ओः इत्यधिकम् ब. ड. 5. कृतम् इत्यधिकम् ड. 6. अङ्गानाम् इत्यधिकम् इ.ह. 7. ओः अवर्णपरे यणि वा नास्ति क, ओः अवर्णपरभूते इ. 8. नास्ति ब. 9. पोपूयते इ. ह, नेनीयते नोनूयते ड. 10. बोभवीति ह. 11. वाक्यमिदं नास्ति ब.ड.ह. 12. दीर्घ आदेशः इ. 13. परतः इत्यधिकम् ब. 14. पापठ्यते पापठीति ब. 15. तथा च इत्यधिकम् ह. 16. भवति क. 17. एवम् क. 18. परतः इत्यधिकम् इ. ह. 19. बनीभ्रश्यते इ. 20. बनीभ्रंशीति इ. 21. पत नास्ति इ.

## नुगतोऽनुनासिकान्तस्य । (८५/२६४३)

अनुनासिकान्तस्य अङ्गस्य योऽभ्यासः तस्य अकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः । तन्तन्यते । तन्तनीति । जङ्गम्यते । जङ्गमीति । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति । नुक् इत्येतद् अनुस्वारोपलक्षणार्थं द्रष्टव्यम् । स्थानिना हि आदेशो लक्ष्यते । तेन यंयम्यते इत्येवमादौ अझलपरत्वेऽपि अनुस्वारो भवति ।

[८७९] पदान्तवच्चेति वक्तव्यम् । (म.भा. ३. ३५९)

'वा पदान्तस्य' (८.४. ५९/१२५) इति परसवर्णविकल्पो यथा स्यात् इति । अतः इति किम् ? तेतिम्यते । तपरकरणं [1]तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्, [2]बाभाम्यते । अनुनासिकान्तस्य इति किम् ? पापच्यते ॥

## जपजभदहदशभञ्जपशां च । (८६/२६३८)

जप जभ दह दश भञ्ज पश इत्येतेषाम् अभ्यासस्य नुगागमो भवति [3]यङ्यङ्लुकोः परतः । जञ्जप्यते जञ्जपीति । जभ – जञ्जभ्यते । जञ्जभीति । दह – दन्दह्यते । दन्दहीति । दश – दन्दश्यते । दन्दशीति दश इति दंशिः अयं नकारलोपार्थमेव निर्दिष्टः । तेन यङ्लुक्यपि नकारलोपो भवति । भञ्ज – बम्भज्यते । बम्भञ्जीति । पश इति सौत्रो धातुः – पम्पश्यते । पम्पशीति ॥

## चरफलोश्च । (८७/२६३६)

चर फल इत्येतयोः अभ्यासस्य नुगागमो भवति [4]यङ्यङ्लुकोः परतः । चञ्चूर्यते । [5]चञ्चूरीति । [6]पम्फुल्यते । पम्फुलीति ॥

## उत्परस्यातः । (८८/२६३७)

चरफलोः अभ्यासात् परस्य अतः [7]उकारादेशो भवति [8]यङ्यङ्लुकोः परतः । चञ्चूर्यते । [9]चञ्चूरीति । [10]पम्फुल्यते । पम्फुलीति । परस्य इति किम् ? [11]अभ्यासस्य मा भूत् । अतः इति किम् ? अलोऽन्त्यस्य मा भूत् । उदिति तपरकरणं चञ्चूर्ति, पम्फुलीति इत्यत्र [12]लघूपधगुणनिवृत्त्यर्थम् । [13]दीर्घस्यासिद्धत्वात् इह लघुत्वं न निवर्तते ॥

---

1. तु नास्ति ब, किम् ह. 2. भाम क्रोधे इत्यधिकम् ह. 3. यङि यङलुकि च ब. ह. 4. यङि यङलुकि च इ. 5. चञ्चुरीति क. इ. ड. 6. नास्ति क. 7. नुकारादेशः क. 8. यङि यङ्लुकि च इ. ह. 9. चञ्चुरीति क. इ. ड. 10. नास्ति क. 11. अभ्यासस्य इति क. 12. लघूपधलक्षण° क. इ. 13. न तु दीर्घत्वम् गुणं निवर्तयति, गुणे कर्तव्ये दीर्घत्वमसिद्धम् । तेन न निवर्तयति इ. ह. दीर्घत्वं तु तपरकरणेन व्यावर्त्यते असिद्धत्वात् ड.

## ति च। (८९/३०३७)

तकारादौ प्रत्यये परतः चरफलोः अकारस्य उकारादेशो भवति। चरणं चूर्तिः। [1]ब्रह्मणः चूर्तिः। [2]प्रफुल्तिः। प्रफुल्ताः सुमनसः। 'यङ्यङ्लुकोः', 'अभ्यासस्य' इति चानुवर्तमानमपि वचनसामर्थ्यादिह नाभिसम्बध्यते[3]॥

## रीगृदुपधस्य च। (९०/२६४४)

ऋदुपधस्याङ्गस्य योऽभ्यासः तस्य रीगागमो भवति [4]यङ्यङ्लुकोः परतः। वरीवृत्यते। वरीवृतीति। वरीवृध्यते। वरीवृधीति। नरीनृत्यते। नरीनृतीति।

[८८०] रीगृत्वत इति वक्तव्यम्। (म.भा. ३.३५९)

इहापि यथा स्यात्, वरीवृश्च्यते। वरीवृश्चीति। परीपृच्छ्यते। परीपृच्छीति॥

## रुग्रिकौ च लुकि। (९१/२६५२)

यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकौ आगमौ भवतः, चकाराद् रीक् च। नर्नर्ति, नरिनर्ति, नरीनर्ति। वर्वर्ति, वरिवर्ति, वरीवर्ति। [5]उकारः उच्चारणार्थः।

[८८१] मर्मृज्यते मर्मृज्यमानास इत्युपसङ्ख्यानम्। (म.भा. ३.३५९)

मर्मृज्यते। मर्मृज्यमानासः॥

## ऋतश्च। (९२/२६५३)

ऋकारान्तस्य अङ्गस्य योऽभ्यासः तस्य रुग्रिकौ आगमौ भवतः रीक् च यङ्लुकि। चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति। जरिहर्ति। जरीहर्ति।

तपरकरणम् किम्? किरतेश्चाकर्ति।

किर्तिं चर्करीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः॥ (म.भा. ३.३५९)

तत्रेयं प्राप्तिः तपरकरणसामर्थ्याद् अङ्गविशेषणम् ऋतः इत्येतत्, तया चाप्राप्तिः किरतेरुगादीनाम् इति॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे। (९३/२३१६)

लघुनि धात्वक्षरे परतो योऽभ्यासः तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। 'सन्यतः'

---

1. ब्रह्मचूर्तिः इ.ह. 2. नास्ति इ. 3. उत्तरार्थं तु अनुवर्तत एव इत्यधिकम् इ.ह. 4. यङि यङ्लुकि च इ.ह. 5. रुगागमे इत्यधिकम् इ.ह.

(७.४.७९/२३१७) इत्युक्तम्, चङ्परेऽपि तथा। [1]अचीकरत्। [2]अपीपचत्। 'ओः पुयण्ज्यपरे' (७.४.८०/२५७७) इत्युक्तम्, चङ्परेऽपि तथा। अपीपवत्। अलीलवत्। अजीजवत्। 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' (७.४.८१/२५७८) इत्युक्तम्, चङ्परेऽपि तथा। असिस्रवत्, असुस्रवत्। अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्। लघुनि इति किम्? अततक्षत्। अररक्षत्। जागरयतेः अजजागरत्[3]। अत्र केचिद् गशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यम[4]भ्यासेन नास्ति इति व्यवधानेऽपि [5]वचनप्रामाण्याद् भवितव्यम्[6], तदसत्। 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' (व्या.प. ४६) इत्येकेन व्यवधानमाश्रीयते, न पुनर[7]नेकेन। यद्येवम्, कथम् अचिक्षणत् इति? आचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामित्वम् इति। यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं [8]विदधाति। चङ्परे इति किम्? [9]अहं पपच। परग्रहणं किम्? चङि एव केवले मा भूत्, अचकमत[10]। अनग्लोपे इति किम्? अचकथत्। दृषदमाख्यातवान् अददृषत्। वादितवन्तं प्रयोजितवान् [11]अवीवदत् इत्यत्र योऽसौ णौ णेर्लोपो नासावग्लोप इत्याश्रीयते। किं कारणम्? चङ्परे इति णिजातेर्निमित्तत्वेन [12]आक्षेपात्, ततोऽन्यस्य अको लोपः परिगृह्यते। मीमादीनामत्र ग्रहणात् सन्वद्भावेन अभ्यासलोपो न भवति इत्युक्तम्। किं च सन्वत् इति [13]सनाश्रयं कार्यमतिदिश्यते, न च [14]लोपः सनमेवापेक्षते, किं तर्हि, इस्भावाद्यपि। तदभावात् अमीमपत् इत्यादौ अभ्यासलोपो न [15]भविष्यति॥

## दीर्घो लघोः। (९४/२३१८)

[16]दीर्घो भवति लघोः अभ्यासस्य लघुनि णौ चङ्परे अनग्लोपे। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्। लघोः इति किम्? अबिभ्रजत्। लघुनि इत्येव, अततक्षत्। [17]अररक्षत्। चङि इत्यव, अहं पपच। परे इत्येव, अचकमत। अनग्लोपे इत्येव, अचकथत्॥

## अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्। (९५/२५६६)

स्मृ दृ त्वर प्रथ म्रद स्तृ स्पश इत्येतेषामभ्यासस्य अत् इत्ययमादेशो भवति चङ्परे णौ परतः। स्मृ – असस्मरत्। दृ – अददरत्। त्वर – अतत्वरत्। प्रथ – अपप्रथत्। म्रद – अमम्रदत्। स्तृ – अतस्तरत्। स्पश – अपस्पशत्। सन्वद्भावात् इत्वं प्राप्तमनेन बाध्यते। तपरकरणसामर्थ्यात् अति कृते 'दीर्घो लघोः'(७.४.९४/२३१८) इत्येतदपि न भवति, अददरत्॥

## विभाषा वेष्टिचेष्ट्योः। (९६/२५८३)

वेष्टि चेष्टि इत्येतयोः अभ्यासस्य विभाषा अत् इत्ययमादेशो भवति चङ्परे णौ परतः। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। अभ्यासह्रस्वत्वे कृते अत्वं पक्षे भवति॥

---

1. अबीभवत् क.ह.ड. 2. अपीपठत् ह. 3. लुङि चङि जाग्रोऽविचिण्णल्ङित्सु इति गुणः इत्यधिकम् इ. 4. अभ्यासे इ.ह. 5. वचनप्रामाण्यात् नास्ति इ. 6. इति इत्यधिकम् ब. 7. सङ्घातेन क. ड. ह, वर्ण--सङ्घातेन इ. 8. शास्ति ह. 9. अहम् पपठ इ. 10. अमो हि कमेः प्रकृत्यन्तत्वात् एव लुङि चङ उपसंख्यानम् इत्यधिकम् इ. 11. वीणां परिवादकेन इत्यधिकम् ह. 12. आश्रयणात् इ.ह. 13. समाश्रयम् क. 14. अभ्यासलोपः इ. 15. भवति क. 16. लघुनि चङ्परे अनग्लोपे इति वर्तते इत्यधिकम् ह. 17. नास्ति इ.

ई च गणः । (९७/२८७३)

गणेः अभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारात् अत् च । अजीगणत्, अजगणत् ॥

इति श्रीवामनविरचितायां काशिकायां वृत्तौ
सप्तमाध्यायस्य चतुर्थः पादः ।

———o———

# का शि का

## अष्टमोऽध्यायः

### प्रथमः पादः

**सर्वस्य द्वे । (१/२१३९)**

सर्वस्य इति च द्वे इति चैतधिकृतं वेदितव्यम् । इत उत्तरं यद् वक्ष्यामः 'पदस्य' (८. १. १६/४०१) इत्यतः प्राक्, सर्वस्य द्वे भवतः इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'नित्यवीप्सयोः' (८. १. ४/२१४०) इति, तत्र सर्वस्य स्थाने द्वे भवतः । के द्वे भवतः ? ये शब्दतश्चार्थतश्च [1]उभयथान्तरतमे । एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः । पचति पचति । ग्रामो ग्रामो रमणीयः । यदा तु द्विः प्रयोगो द्विर्वचनम् तदा स एव [2]पचतिशब्दो द्विरावर्तते, तस्य द्वे आवृत्ती भवतः । सर्वस्य इति किम् ? विस्पष्टार्थम् । अथ पदस्य इत्येव कस्मान् नोच्यते ? नैवं शक्यम्, इह हि न स्यात् प्रपचति प्रपचति इति । इह द्रोग्धा, द्रोढा इति घत्वढत्वयोः असिद्धत्वादकृतयोरेव तयोर्द्विवचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात् द्रोग्धा द्रोढा, द्रोढा द्रोग्धा इति । तस्माद् वक्तव्यमेतत् 'पूर्वत्रासिद्धीयमद्विर्वचने' (पु. प. ९२) इति । सर्वस्य इत्येतदेव वा कृतं सर्वकार्य-प्रतिपत्त्यर्थं द्रष्टव्यम् ॥

**तस्य परमाम्रेडितम् । (२/८३)**

तस्य द्विरुक्तस्य यत् परं [3]शब्दरूपं तद् आम्रेडितसञ्ज्ञं भवति । चौर चौर ३, वृषल वृषल ३, दस्यो दस्यो ३ [4]घातयिष्यामि त्वा, [5]बन्धयिष्यामि त्वा । आम्रेडितप्रदेशाः – 'आम्रेडितं भर्त्सने' (८. २. ९५/३६१४) इत्येवमादयः ॥

**अनुदात्तं च । (३/३६७०)**

अनुदात्तं च तद् भवति यदाम्रेडितसञ्ज्ञम् । भुङ्क्ते भुङ्क्ते । पशून् पशून् ॥

**नित्यवीप्सयोः । (४/२१४०)**

नित्ये चार्थे वीप्सायां [6]च यद् वर्तते तस्य द्वे भवतः । [7]केषु नित्यता ? तिङक्षु नित्यता अव्ययकृत्सु च । कुत एतत्? आभीक्ष्ण्यमिह नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्ता प्राधान्येनानुपरमन् करोति तन् नित्यम् । पचति पचति । जल्पति जल्पति । भुक्त्वा भुक्त्वा व्रजति । भोजं भोजं व्रजति । लुनीहि लुनीहि इत्येवायं लुनाति ।

---

1. उभयथा नास्ति इ.ह. 2. पचति नास्ति इ. 3. रूपं इ. 4. ताडयिष्यामि ह. 5. बन्धयिष्यामि त्वा नास्ति इ. 6. चार्थे ड. 7. अथ इत्यधिकम् ह.

क्त्वाणमुलोर्लोटश्च [1]द्विर्वचनापेक्षायामेव पौनःपुन्यप्रकाशने शक्तिः। यङ् तु [2]तन्निरपेक्षः प्रकाशयति, पुनः पुनः पचति पापच्यते इति। यदा तु तत्र द्विर्वचनं तदा [3]क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यम् पापच्यते पापच्यते इति। अथ केषु वीप्सा? सुप्सु वीप्सा। का पुनर्वीप्सा? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा। का पुनः सा? नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा। नानाभूतार्थवाचिनां शब्दानां [4]यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत् प्रयोक्तुमिच्छा वीप्सा। ग्रामो ग्रामो रमणीयः। जनपदो जनपदो रमणीयः। पुरुषः पुरुषो निधनमुपैति। यत् तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते पचति पचतितराम् इति। इह तु आढ्यतरमाढ्यतरमानय इति प्रकर्षयुक्तस्य वीप्सायोग इष्यते॥

## परेर्वर्जने। (५/२१४१)

परि इत्येतस्य वर्जनेऽर्थे द्वे भवतः। परि परि त्रिगर्तेभ्यो वृष्टो देवः। परि परि सौवीरेभ्यः। परि परि [5]सर्वसेनेभ्यः। वर्जनं परिहारः। वर्जने इति किम्? ओदनं परिषिञ्चति।

[८८२] परेर्वर्जनेऽसमासे वेति वक्तव्यम्। (म. भा. ३.३६७)

परि परि त्रिगर्तेभ्यो वृष्टो देवः, परि त्रिगर्तेभ्यः[6]। समासे तु तेनैवोक्तत्वाद् वर्जनस्य नैव भवति, परित्रिगर्तं वृष्टो देवः इति[7]॥

## प्रसमुपोदः पादपूरणे। (६/३५९९)

प्र सम् उप उत् इत्येतेषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत् पादः पूर्यते[8]। 'प्रप्रायमग्निर्भरतस्य शृण्वे' (ऋ. ७.८.४)। 'संसमिद्युवसे वृषन्' (ऋ. १०.१९१.१)। 'उपोप मे परा मृश' (ऋ. १.१२६.७)। 'किं नोदुदु हर्षसे दातवा उ' (ऋ. ४.२१.९)। पादपूरणे इति किम्? 'प्र देवं देव्या धिया' (ऋ. १०.१७६.२)। सामर्थ्याच् छन्दस्येवैतद्विधानम्। भाषायाम[9]नर्थकं स्यात्, प्रयोगाभावात्॥

## उपर्यध्यधसः सामीप्ये। (७/२१४२)

उपरि अधि अधस् इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते। सामीप्यं प्रत्यासत्तिः कालकृता देशकृता [10]च। उपर्युपरि दुःखम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोऽधो नगरम्। सामीप्ये इति किम्? उपरि [11]चन्द्रमाः। इह कस्मान् न भवति, उपरि शिरसो घटं धारयति? [12]औत्तराधर्यमेव[13] विवक्षितं न सामीप्यम् इति द्विर्वचनं न भवति॥

---

1. द्विर्वचनापेक्षाणामेव ब. 2. निरपेक्षमेव पौनःपुन्यं प्रकाशयति ह. 3. भृशार्थे क्रियासमभिहारे पौनःपुन्ययुक्ते द्विर्वचने ह. 4. अधिकरणद्रव्यानि ड. 5. सार्वसैनिभ्यः ड. इ. क. 6. वृष्टो देवः इत्यधिकम् इ. 7. तान् परिहृत्य वृष्टो देवः इत्यर्थः इत्यधिकम् क. इ. ड. 8. पादपूरणे विधानलक्षणा सप्तमी। पादपूरणभावेन द्विर्वचनस्य भावो लक्ष्यते इत्यधिकम् इ. 9. आनर्थक्यं इ. 10. वा ड. 11. दुःखम् इ. ड. 12. कैश्चित् इत्यधिकम् क. ड. इ. 13. केवलम् इत्यधिकम् ड. क. इ.

## वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु । (८/२१४३)

एकार्थः पदसमूहो वाक्यम् । वाक्यादेरामन्त्रितस्य द्वे भवतः असूयासम्मतिकोपकुत्सनभर्त्सनेषु[1] यदि तद् वाक्यं[2] भवति । तत्र परगुणानामसहनम् असूया । [3]पूजा सम्मतिः । कोपः क्रोधः । [4]निन्दनं कुत्सनम् । अपकारशब्दैर्भयोत्पादनं भर्त्सनम् । एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः । असूयायाम् तावत् – माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, रिक्तं ते आभिरूप्यम् । सम्मतौ – माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, शोभनः खल्वसि । कोपे – माणवक ३ माणवक, अविनीतक ३ अविनीतक, इदानीं ज्ञास्यसि जाल्म । कुत्सने – शक्तिके ३ शक्तिके, [5]यष्टिके ३ यष्टिके, रिक्ता ते शक्तिः । भर्त्सने –चौर चौर ३, [6]वृषल वृषल ३, घातयिष्यमि त्वां बन्धयिष्यामि त्वाम् । असूयादिषु 'स्वरिताम्रेडितेऽसूयासंमतिकोपकुत्सनेषु' (८.२.१०३/३६२२) इति पूर्वपदस्य प्लुतः । भर्त्सने तु 'आम्रेडितं भर्त्सने' (८.२.९५/३६१४) इत्याम्रेडितस्यैव प्लुतः । वाक्यादेः इति किम् ? अन्तस्य मध्यमस्य [7]च मा भूत्, शोभनः खल्वसि माणवक । आमन्त्रितस्य इति किम् ? उदारो देवदत्तः । असूयादिषु इति किम् ? देवदत्त गामभ्याज शुक्लाम्[8] ॥

## एकं बहुव्रीहिवत् । (९/२१४४)

एकम् इत्येतच्छब्दरूपं[9] द्विरुक्तं बहुव्रीहिवद् भवति । [10]बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ[11] । एकैकमक्षरं पठति । एकैकया आहुत्या जुहोति । सर्वनामसञ्ज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते । तेनातिदेशिके बहुव्रीहौ न भवन्ति । एकैकस्मै[12] । 'न बहुव्रीहौ' (१.१.२९/२२२) इति [13]प्रतिषेधो न भवति, बहुव्रीहिरेव यो बहुव्रीहिः इति [14]विज्ञानात् । नन, सुसु, 'नञ्सुभ्याम्' (६.२.१७२/३९०६) इत्यन्तोदात्तत्वं न भवति । ऋक् ऋक्, पूः पूः, ऋक् पूः (५.४.७४/९४०) इति समासान्तो न भवति ॥

## आबाधे च । (१०/२१४५)

आबाधनमाबाधः, पीडा प्रयोक्तृधर्मः, नाभिधेयधर्मः । तत्र वर्तमानस्य[15] द्वे भवतः, बहुव्रीहिवच्चास्य कार्यं भवति । गतगतः । [16]नष्टनष्टः । पतितपतितः । गतगता । नष्टनष्टा । पतितपतिता । प्रियस्य चिरगमनादिना पीड्यमानः [17]कश्चिदेवं प्रयुङ्क्ते प्रयोक्ता ॥

---

1. अर्थेषु इत्यधिकम् क. ड. ह. 2. एव इत्यधिकम् ब. 3. पूजनं ब. ड. इ. 4. निन्दा इ. 5. पशुके पशुके ड, नास्ति ब. 6. दस्यो दस्यो ड. इ. ह. 7. वा ड. 8. दण्डेन इत्यधिकम् क. ड. इ. ब, उपाध्यायस्ते पयः पास्यति इत्यधिकम् ह. 9. पूर्वेणैव इत्यधिकम् क. 10. द्विर्वचनमत्र नित्यवीप्सयोः इत्यनेन क. ड 11. यद्यपि बहुव्रीहौ इति नोच्यते तथापि तत्र दृष्टौ इत्यतिदिश्यते इत्यधिकम् क. ब. ड. 12. ददाति इत्यधिकम् क. ब. ड. 13. सर्वनामसञ्ज्ञा इत्यधिकम् क. इ. ड. 14. विज्ञापयति ड, ज्ञापकात् क. 15. द्वयमनेन वधीयते द्विर्वचनं बहुव्रीहिवद्भावः च क. 16. नष्टनष्टः नास्ति इ. 17. कश्चिदेवं नास्ति ह.

## कर्मधारयवदुत्तरेषु। (११/२१४६)

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं भवति [1]इत्येतद्वेदितव्यम्। कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि (म.भा. ३.३६८)। सुब्लोपः – पटुपटुः। मृदुमृदुः। [2]पण्डितपण्डितः। पुंवद्भावः – पटुपट्वी। मृदुमृद्वी। कालककालिका। कोपधाया अपि हि कर्मधारयवद्भावात् पुंवत्कर्मधारयः (६.३.४२/७४६) [3]इति पुंवद्भावो भवति। अन्तोदात्तत्वम् – पटुपटुः। पटुपट्वी। समासान्तोदात्तत्वमनेनैव[4] विधीयते इति परत्वादाम्रेडितानुदात्तत्वं बाध्यते। अधिकारेणैव सिद्धे यत् उत्तरेषु इति वचनं तद्विस्पष्टार्थम्[5]॥

## प्रकारे गुणवचनस्य। (१२/२१४७)

प्रकारो भेदः सादृश्यं च। तदिह सादृश्यं प्रकारो गृह्यते। प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः। [6]पटुपटुः। [7]मृदुमृदुः। पण्डितपण्डितः। [8]अपरिपूर्णगुणः इत्यर्थः। परिपूर्णगुणेन न्यूनगुणस्यो[9]पमाने सत्येवं प्रयुज्यते। जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते। [10]पटुजातीयः, मृदुजातीयः इत्यपि [11]हि भवति। [12]तत् कथम्? वक्ष्यमाणम् अन्यतरस्यां-ग्रहणमुभयोः शेषो विज्ञायते। प्रकारे इति किम्? पटुर्देवदत्तः। गुणवचनस्य इति किम्? अग्निर्माणवकः। गौर्वाहीकः। यद्यप्यत्राग्निशब्दो गोशब्दश्च [13]मुख्यार्थसम्बन्धादवभूतभेदं तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितुं प्रवृत्तः, तथापि सर्वदा गुणवचनो न भवति इति न द्विरुच्यते।

[८८३] आनुपूर्व्ये द्वे भवत इति वक्तव्यम्। (म.भा. ३.३६९)

मूले मूले स्थूलाः। अग्रेऽग्रे सूक्ष्माः। ज्येष्ठं ज्येष्ठं [14]प्रवेशय।

[८८४] स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम्। (म.भा. ३.३६९)

अस्मात् कार्षापणादिह भवद्भ्यां माषं [15]माषं देहि। [16]स्वार्थे एतद् द्विर्वचनम्, न वीप्सायाम्। अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसम्बन्धिनो माषाः, तेन [17]वीप्सा न विद्यते। अवधार्यमाणे इति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन् वा माषान् देहि। अनेकस्मिन् इति किम्? अस्मात् कार्षापणाद् इह भवद्भ्यां माषमेकं देहि[18]।

[८८५] चापले द्वे भवत इति वक्तव्यम्। (म.भा. ३.३६९)

सम्भ्रमेण प्रवृत्तिश्चापलम्। अहिरहिः, बुध्यस्व बुध्यस्व। नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किं तर्हि, यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः। अहिरहिरहिः, बुध्यस्व बुध्यस्व बुध्यस्व इति।

[८८६] क्रियासमभिहारे द्वे भवत इति वक्तव्यम्। (म.भा. ३.३६९)

[19]स भवान् लुनीहि लुनीहि इत्येवायं लुनाति।

---

1. एतद् नास्ति ड.इ. 2. पण्डितपण्डितः नास्ति इ. 3. इति कार्यं भवति इ. 4. एव नास्ति इ. 5. ज्ञापकार्थम् वा इत्यधिकम् क.इ. 6. पटुपटु मृदुमृदु क.इ. 7, मृदुमृदुः नास्ति ह. 8. अपरिपूर्णगुणः इत्यर्थः नास्ति क. 9. उपमानभावे ह. 10. तेन इत्यधिकम् ह. 11. हि नास्ति इ.ह. 12 तत्–देवदत्तः नास्ति क.इ.ह.ड. 13. मुख्यार्थसम्बन्धेन क ह. 14. अनुप्रवेशय क.इ.ड. 15. माषं नास्ति ह. 16. स्वार्थं इति स्वार्थे एव क.इ. 17. वीप्सायोगः क.इ.ड. 18. एकमेव देहि इत्यर्थः इत्यधिकम् ह. 19. सभवान् नास्ति क.ब.

[८८७] आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् । (म. भा. ३. ३७०)

भुक्त्वा भुक्त्वा व्रजति । [1]भोजं भोजं व्रजति । [2]नित्य (८.१.४/२१४०) इत्येव [3]सिद्धम् इति [4]तत्रोक्तम् ।

[८८८] डाचि द्वे भवत इति वक्तव्यम् । (म. भा. ३. ३७०)

पटपटाकरोति । पटपटायते[5] । अव्यक्तानुकरणे डाजन्तस्य द्विर्वचनमिष्यते । इह न भवति, द्वितीयाकरोति, तृतीयाकरोति । तदर्थं केचित् 'डाचि बहुलम्' इति पठन्ति ।

[८८९] पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् । (म. भा. ३. ३७०)

पूर्वं पूर्वं पुष्प्यन्ति । प्रथमं प्रथमं पच्यन्ते । [6]आतिशयिकोऽपि दृश्यते, पूर्वतरं पुष्प्यन्ति, प्रथमतरं पच्यन्ते इति ।

[८९०] डतरडतमयोः समसम्प्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम् । (म. भा. ३. ३७०)

उभाविमावाढ्यौ । [7]कतरा कतरा अनयोराढ्यता । सर्व इमे आढ्याः । [8]कतमा कतमा एषामाढ्यता । डतरडतमाभ्यामन्यत्रापि हि दृश्यते । उभाविमौ आढ्यौ । कीदृशी कीदृशी अनयोराढ्यता । तथा स्त्रीनिगदाद्भावात् [9]अन्यत्रापि हि दृश्यते, उभाविमावाढ्यौ, कतरः कतरोऽनयोर्विभवः इति ।

[८९१] कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम् । (म. भा. ३. ३७०)

यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य (म. भा. ३. ३७०)

[10]अन्यमन्यमिमे ब्राह्मणा भोजयन्ति, [11]अन्योन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य ब्राह्मणा भोजयन्ति । इतरेतरं भोजयन्ति । इतरेतरस्य भोजयन्ति ।

[८९२] स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः । (म. भा. ३. ३७०)

अन्योऽन्यामिमे ब्राह्मण्यौ भोजयतः । अन्योन्यं भोजयतः । इतरेतरां भोजयतः । इतरेतरं भोजयतः । अन्योन्यामिमे ब्राह्मणकुले भोजयतः । इतरेतरामिमे ब्राह्मणकुले भोजयतः । इतरेतरमिमे ब्राह्मणकुले भोजयतः ।।

---

1. उदाहरणमिदं नास्ति इ. 2. नित्यम् इत्येवासिद्धम् इ. 3. तु इत्यधिकम् ह. 4. अत्रोक्तम् क. इ, पूर्वं नोक्तम् ह, नोक्तम् ब. 5. दमदमाकरोति दमदमायते इत्यधिकम् क. इ. ब. ड. 6. अतिशायिकोऽपि क, ड. ब. ह, अतिशायनिको इ. 7. कतरा क. 8. कतरकतमा ह. 9. अन्यत्र दृश्यते ब. 10. उदाहरणमिदं नास्ति क. इ. 11. अन्योन्यमेव इ.

## अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । (१३/२१४८)

प्रिय सुख इत्येतयोः अन्यतरस्यां द्वे भवतः अकृच्छ्रे [1]द्योत्ये । [2]कृच्छ्रं दुःखम्, तदभावः अकृच्छ्रम् । प्रियप्रियेण ददाति । सुखसुखेन ददाति । [3]प्रियेण ददाति । सुखेन ददाति । अखिद्यमानो ददाति इत्यर्थः । अकृच्छ्रे इति किम् ? प्रियः पुत्रः । सुखो रथः ॥

## यथास्वे यथायथम् । (१४/२१४९)

[4]यो य आत्मा, यद् यदात्मीयम्, तत्तद् यथास्वम्, तस्मिन् यथायथम् इति निपात्यते । यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते । ज्ञाताः सर्वे पदार्थाः यथायथम् । यथास्वभावम् इत्यर्थः । सर्वेषां तु यथायथं यथात्मीयमित्यर्थः ॥

## द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । (१५/२१५०)

द्वन्द्वम् इति द्विशब्दस्य द्विर्वचनम्,[5] पूर्व[6]पदस्याम्भावः, अत्वं चोत्तरपदस्य [7]निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेषु अर्थेषु । तत्र रहस्यं [8]द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः । द्वन्द्वं मन्त्रयते[9] । मर्यादावचने – मर्यादा स्थित्यनतिक्रमः । आचतुरं ह्यीमे पशवो द्वन्द्वं [10]मिथुनीयन्ति । माता पुत्रेण[11] मिथुनं गच्छति, [12]पौत्रेण, तत्पुत्रेणापि इति मर्यादार्थः[13] । व्युत्क्रमणे – द्वन्द्वं व्युत्क्रान्ताः । व्युत्क्रमणं भेदः, पृथगवस्थानम् । द्विवर्गसम्बन्धनेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते । यज्ञपात्रप्रयोगे – द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः । अभिव्यक्तौ – द्वन्द्वं नारदपर्वतौ । द्वन्द्वं सङ्कर्षणवासुदेवौ । द्वावप्यभिव्यक्तौ साहचर्येण इत्यर्थः । अन्यत्रापि द्वन्द्वम् इत्येतद् दृश्यते, तदर्थं योगविभागः कर्तव्यः, द्वन्द्वं युद्धं वर्तते[14], द्वन्द्वानि [15]सहते धीरः, 'चार्थे द्वन्द्वः' (२.२.२९/९०१) इति ॥

## पदस्य । (१६/४०१)

पदस्य इत्ययमधिकारः प्रागपदान्ताधिकारात् (८.३.५५/२१०) । यद् इत ऊर्ध्वमनुक्रमिष्यामः पदस्य इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'संयोगान्तस्य लोपः' (८.२.२३/५४) । पचन् । यजन् । पदस्य इति किम् ? पचन्तौ । यजन्तौ । वक्ष्यमाणवाक्यापेक्षया पदस्य[16] अधिकृतस्य [17]षष्ठ्यर्थव्यवस्था द्रष्टव्या, क्वचित् स्थानषष्ठी, [18]क्वचिदवयवषष्ठी[19] ॥

---

1. अर्थे क. इ. ह. 2. वाक्यमिदं नास्ति ड. 3. उदाहरणमिदं नास्ति ह. 4. यथास्वमित्यव्ययीभावो वीप्सायाम् । स्वशब्दः आत्मवचनः आत्मीयवचनश्च इत्यधिकम् क.इ.ड. 5. निपात्यते नपुंसकलिङ्गं च इत्यधिकम् क. ड. इ. 6. पद नास्ति इ. 7. निपात्यते नास्ति इ. 8. द्वन्द्वशब्दस्य इ. 9. द्वौ द्वौ भूत्वा रहस्यं मन्त्रयन्ते इत्यर्थः इत्यधिकम् क. ड. इ. 10. मिथुनाभवन्ति क.इ, मिथुनायन्ते क. ह. फ. 11. समं मैथुनं गच्छति ब. इ. 12. पुत्रेण पौत्रेण तत्पुत्रेणापि मर्यादा भवति ब. क. इ. 13. आचतुरम् इति मर्यादार्थे समासः समासान्तः शरत्प्रभृतिषु प्रक्षेपणात् इत्यधिकम् क. ड. फ. ह. 14. द्वयोः द्वयोः युद्धं वर्तते इत्यर्थः इत्यधिकम् क. ड. इ. 15. सहन्ते धीराः इ, शीतोष्णानि इत्यधिकम् ह, सुखदुःखे इत्यधिकम् ब, क्षुट्तृष्णे इत्यधिकम् ड. 16. इति इत्यधिकम् ब. क. इ. ह. 17. षष्ठ्यर्थे व्यवस्था क. 18. क्वचित् नास्ति इ. 19. इति इत्यधिकम् क. ड.

## पदात्। (१७/४०२)

पदात् इत्ययमधिकारः प्राक् 'कुत्सने च सुप्यगोत्रादौ' (८.१.६९/३९७६) इत्येतस्मात्[1]। यद् इत ऊर्ध्वमनुक्रमिष्यामः पदात् इत्येवं [2]तद् वेदितव्यम्। [3]वक्ष्यति – 'आमन्त्रितस्य च' (८.१.१९/३६५४)। आमन्त्रितस्य पदात् परस्य अनुदात्तादेशो भवति इति। पचसि देवदत्त। पदात् इति किम्? देवदत्त पचसि॥

## अनुदात्तं सर्वमपादादौ। (१८/४०३)

अनुदात्तम् इति च, सर्वम् इति च, अपादादौ इति च एतत् त्रयमधिकृतं वेदितव्यम् आ पादपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामः अनुदात्तं सर्वम् अपादादौ इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'आमन्त्रितस्य च' (८.१.१९/३६५४) इति। पचसि देवदत्त। अपादादौ इति किम्? 'यत् ते [4]नियानं रजसं मृत्यो [5]अनवधर्ष्यम्' (अ.वे. ८.२.१०)। 'बहुवचनस्य वस्नसौ' (८.१.२१/४०५)। ग्रामो वः स्वम्, जनपदो नः स्वम्। [6]अपादादौ इति किम्?

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।
स एव नाथो भगवानस्माकं [7]शत्रुमर्दनः॥

[8]पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते। सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं [9]चानुदात्तं यथा स्यात् इति। तेन युष्मदस्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते। युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः, यत्रापि स्वादिपदं पदसञ्ज्ञं भवति। ग्रामो वां दीयते। [10]जनपदो नौ दीयते[11]॥

## आमन्त्रितस्य च। (१९/३६५४)

[12]आमन्त्रितस्य पदस्य पदात् परस्य अपादादौ वर्तमानस्य [13]सर्वमनुदात्तं भवति। पचसि देवदत्त। पचसि यज्ञदत्त। आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम्[14]।

[८९३] समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः। (म.भा. ३.३७२)

इह मा [15]भूवन्, अयं दण्डो हर अनेन, ओदनं पच तव भविष्यति, ओदनं पच मम भविष्यति। इह च यथा स्यात्, इह देवदत्त माता ते कथयति, नद्यास्तिष्ठति कूले, शालीनां ते ओदनं दास्यामि इति। आमन्त्रितान्तं तिङन्तं [16]युष्मदस्मदादेशाश्च यस्मात् [17]पराणि न[18] तेषां सामर्थ्यम् इति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, '[19]समर्थः पदविधिः' (२.१.१/६४७) इति वचनात्॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। (२०/४०४)

युष्मद् अस्मद् इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यं वाम् नौ इत्येतावादेशौ भवतः, तौ चानुदात्तौ[20]। पदस्य, पदात्[21], अनुदात्तं सर्वमपादादौ इति सर्वमिह सम्बध्यते। ग्रामो वां स्वम्। जनपदो नौ

---

1. सूत्रावधेः इत्यधिकम् क.ड.ह, सूत्रात् इत्यधिकम् इ. 2. तद्देशे क. 3. आदिरुदात्तो भवति इत्यधिकम् ह. 4. नियतं मुद्रितः पाठः ड.ब. 5. अनवधृष्यम् मुद्रितः पाठः, यदनवधृष्यः ह. 6. अपदादौ क.इ. 7. शत्रुसूदनः क, मधुसूदनः ड. 8. पादः इत्यत्र ब. 9. वानुदात्तं क. 10. ग्रामो क.ड. 11. इति इत्यधिकम् ह. 12. आमन्त्रितान्तस्य ड. 13. च इत्यधिकम् क. 14. इदं इत्यधिकम् क.इ. 15. भूत् ड. 16. युष्मदस्मच्छब्दाश्च क.ह, युष्मदस्मच्छब्दौ च ब.ड. 17. पदात् इत्यधिकम् ब क.इ ह. 18. तेन इत्यधिकम् क. इ. 19. समर्थः – वचनात् नास्ति ब. 20. भवत इत्यधिकम् ब.क.इ. 21. उत्तरस्य इत्यधिकम् क.

स्वम्। ग्रामो वां दीयते। जनपदो नौ दीयते। ग्रामो वां पश्यति। जनपदो नौ पश्यति। एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोः [1]एतावादेशौ[2] विज्ञायेते। षष्ठीचतुर्थीद्वितीयास्थयोः इति किम्? [3]ग्रामे युवाभ्यां कृतम्। स्थग्रहणं श्रूयमाणविभक्त्यर्थम्। इह मा भूत्, [4]अयं युष्मत्पुत्रः अयमस्मत्पुत्रः इति॥

## बहुवचनस्य वस्नसौ। (२१/४०५)

बहुवचनान्तयोः युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यम् वस् नस् इत्येतावादेशौ भवतः[5]। ग्रामो वः स्वम्। जनपदो नः स्वम्। ग्रामो वो दीयते। जनपदो नो दीयते। ग्रामो वः पश्यति। जनपदो नः पश्यति[6]॥

## तेमयावेकवचनस्य। (२२/४०६)

युष्मदस्मदोः एकवचनान्तयोः षष्ठीचतुर्थीस्थयोः यथासङ्ख्यं ते मे इत्येतौ आदेशौ भवतः[7]। ग्रामस्ते स्वम्। ग्रामो मे स्वम्। ग्रामस्ते दीयते। ग्रामो मे दीयते। द्वितीयान्तस्या[8]देशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योः [9]एवायं योगः॥

## त्वामौ द्वितीयायाः। (२३/४०७)

एकवचनस्य इति वर्तते। द्वितीयाया यदेकवचनं तदन्तयोः युष्मदस्मदोः यथासङ्ख्यम् त्वा मा इत्येतौ आदेशौ भवतः[10]। ग्रामस्त्वा पश्यति। [11]ग्रामो मा पश्यति॥

## न चवाहाहैवयुक्ते। (२४/४०८)

च वा ह अह एव एभि[12]र्युक्ते युष्मदस्मदोः वान्नावादयो न भवन्ति। [13]पूर्वेण प्रकारेण प्राप्ताः प्रतिषिध्यन्ते। ग्रामस्तव च स्वम्, ग्रामो मम च स्वम्, युवयोश्च स्वम्, आवयोश्च स्वम्, युष्माकं च स्वम्, अस्माकं च स्वम्। ग्रामस्तुभ्यं च दीयते, ग्रामो मह्यं च दीयते, युवाभ्यां च दीयते, आवाभ्यां च दीयते, युष्मभ्यं च दीयते, अस्मभ्यं च दीयते। ग्रामस्त्वां च पश्यति, ग्रामो मां च पश्यति, युवां च पश्यति, आवां च पश्यति, युष्मांश्च पश्यति, अस्मांश्च पश्यति।

वा – ग्रामस्तव वा स्वम्, ग्रामो मम वा स्वम्, युवयोर्वा स्वम्, आवयोर्वा स्वम्, युष्माकं वा स्वम्, अस्माकं वा स्वम्। ग्रामस्तुभ्यं वा दीयते, ग्रामो मह्यं वा दीयते, युवाभ्यां वा दीयते, आवाभ्यां वा दीयते, युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते। ग्रामस्त्वां वा पश्यति, ग्रामो मां वा पश्यति, युवां वा पश्यति, आवां वा पश्यति, युष्मान् वा पश्यति, अस्मान् वा पश्यति।

---

1. एव इत्यधिकम् ब. क. इ. 2. इति विज्ञायते ब. क. इ. 3. ग्रामो युवाभ्याम् कृतः ब. ड. इ, जनपदो युवाभ्यां कृतः इत्यधिकम् ह. 4. इति युष्मत्पुत्रः प. मं. 5. तौ च अनुदात्तौ इत्यधिकम् ब.क.इ. 6. पदात् परयोः इति किम्? युष्मान् रक्षतु, अस्मान् रक्षतु शिवः इत्यधिकम् क. इ. 7. तौ च अनुदात्तौ इत्यधिकम् ब. क. ड. 8. आदेशविधानात् ह. 9. एव नास्ति इ. 10. तौ च अनुदात्तौ इत्यधिकम् ब क. इ. 11. जनपदो ह. 12. योगे ड. 13. पूर्वेण नास्ति ब, पूर्वप्रकारेण क.

ह – ग्रामस्तव ह स्वम्, ग्रामो मम ह स्वम्, युवयोर्ह स्वम्, आवयोर्ह स्वम्, युष्माकं ह स्वम्, अस्माकं ह स्वम् । ग्रामस्तुभ्यं ह दीयते, ग्रामो मह्यं ह दीयते, युवाभ्यां ह दीयते, आवाभ्यां ह दीयते, युष्मभ्यां ह दीयते, अस्मभ्यं ह दीयते । ग्रामस्त्वां ह पश्यति, ग्रामो मां ह पश्यति, युवां ह पश्यति, आवां ह पश्यति, युष्मान् ह पश्यति, अस्मान् ह पश्यति ।

अह – ग्रामस्तवाह स्वम्, ग्रामो ममाह स्वम्, युवयोरह स्वम्, आवयोरह स्वम्, युष्माकमह स्वम्, अस्माकमह स्वम् । ग्रामस्तुभ्यमह दीयते, ग्रामो मह्यमह दीयते, युवाभ्यामह दीयते, आवाभ्यामह दीयते, युष्मभ्यमह दीयते, अस्मभ्यमह दीयते । ग्रामस्त्वामह पश्यति, ग्रामो मामह पश्यति, युवामह पश्यति, आवामह पश्यति, युष्मानह पश्यति, अस्मानह पश्यति ।

एव – ग्रामस्तवैव स्वम्, ग्रामो ममैव स्वम्, युवयोरेव स्वम्, आवयोरेव समम्, युष्माकमेव स्वम् अस्माकमेव स्वम् । ग्रामस्तुभ्यमेव दीयते, ग्रामो मह्यमेव दीयते, युवाभ्यामेव दीयते, आवाभ्यामेव दीयते, युष्मभ्यमेव दीयते, अस्मभ्यमेव दीयते । ग्रामस्त्वामेव पश्यति, ग्रामो मामेव पश्यति, युवामेव पश्यति, आवामेव पश्यति, युष्मानेव पश्यति, अस्मानेव पश्यति ।

युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् । युक्तयुक्ते [1]प्रतिषेधो न भवति । ग्रामश्च ते स्वम्, नगरं च मे स्वम् ॥

## पश्यार्थैश्चानालोचने । (२७/४०९)

पश्यार्थाः दर्शनार्थाः । [2]दर्शनं ज्ञानम्, आलोचनम्, चक्षुर्विज्ञानम् । तैः पश्यार्थैरनालोचने [3]वर्तमानैर्युक्ते युष्मदस्मदोः वान्नावादयो न भवन्ति । ग्रामस्तव स्वं [4]समीक्ष्यागतः । ग्रामो मम स्वं समीक्ष्यागतः । ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः । ग्रामो मह्यं दीयमानं समीक्ष्यागतः । ग्रामस्त्वां समीक्ष्यागतः । ग्रामो मां समीक्ष्यागतः । अनालोचने इति किम् ? ग्रामस्त्वा [5]पश्यति । ग्रामो मा पश्यति । पश्यार्थैर्युक्तयुक्ते[6]ऽपि च [7]प्रतिषेध इष्यते । तथा चैवोदाहृतम् ॥

## सपूर्वायाः प्रथमाया विभाषा । (२८/४१०)

विद्यमानपूर्वात् प्रथमान्तात् पदात् उत्तरयोः युष्मदस्मदोः विभाषा वान्नावादयो [8]न भवन्ति । ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम् । ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलस्तुभ्यं दीयते । ग्रामे कम्बलो मे दीयते, ग्रामे कम्बलो मह्यं दीयते । [9]ग्रामे छात्रास्त्वा पश्यन्ति, ग्रामे छात्रास्त्वां पश्यन्ति । ग्रामे छात्रा मा पश्यन्ति, ग्रामे छात्रा मां पश्यन्ति । सपूर्वायाः इति किम् ? कम्बलस्ते स्वम् । कम्बलो मे स्वम् । प्रथमायाः इति किम् ? कम्बलो ग्रामे ते स्वम् । कम्बलो ग्रामे मे स्वम् ।

---

1. तु इत्यधिकम् ब. क. ड. इ, विप्रतिषेधो ह. 2. वाक्यमिदं नास्ति ह. 3. वर्तमानैः नास्ति इ. 4. संदृश्य इ. 5. आलोचयति क. 6. अपि नास्ति ब.क. 7. विप्रतिषेधः ह. 8. न नास्ति क. 9. ग्रामे छात्रः त्वां पश्यति ब.

[८९४] युष्मदस्मदोर्विभाषा अनन्वादेशे[1] इति वक्तव्यम् । (म. भा. ३.३७३)

इह मा भूत्, अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलो मे स्वम् । अपर आह –

[८९५] सर्व एव वान्नावादयोऽनन्वादेशे[2] विभाषा वक्तव्याः ।

कम्बलस्ते स्वम्, कम्बलस्तव स्वम् । [3]कम्बलो मे स्वम्, कम्बलो मम स्वम् । अनन्वादेशे इति किम् ? अथो [4]कम्बलस्ते स्वम् । अथो[5] कम्बलो मे स्वम् । न तर्हि इदानीमिदं वक्तव्यम् 'सपूर्वायाः प्रथमाया विभाषा' इति ? वक्तव्यं च । किं प्रयोजनम् ? अन्वादेशार्थम् । अन्वादेशे [6]हि विभाषा यथा स्यात्[7] । अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्तव स्वम् । अथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम् ॥

## तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः । (२७/३९३४)

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे [8]वर्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम् । जल्पति गोत्रम् । आभीक्ष्ण्ये – पचति पचति गोत्रम् । जल्पति जल्पति गोत्रम् । ब्रुवः – पचति ब्रुवम् । जल्पति ब्रुवम् । पचति पचति ब्रुवम् । जल्पति जल्पति ब्रुवम् । [9]ब्रुवः इति ब्रुवः कन्निपातनाद् वच्या-देशाभावश्च ।

गोत्र । ब्रुव । प्रवचन[10] । प्रहसन । प्रकथन । [11]प्रत्ययन । प्रचक्षण । प्राय । विचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ । 'वा नाम' (ग. सू. १७८) ।

नाम इत्येतद्वा निहन्यते । पक्षे [12]आद्युदात्तमेव भवति । पचति नाम । पठति नाम । तिङः इति किम् ? कुत्सितं गोत्रम् । गोत्रादीनि इति किम् ? पचति पापम् । कुत्सनाभीक्ष्ण्ययोः इति किम् ? खनति गोत्रं समेत्य कूपम् । कुत्सनाभीक्ष्ण्यग्रहणं च [13]पाठविशेषणं द्रष्टव्यम् । तेनान्यत्रापि गोत्रादि[14]ग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति (म. भा. ३.३७४) ॥

## तिङ्ङतिङः । (२८/३९३५)

तिङन्तं पदम् अतिङन्तात् [15]पदात् परम् अनुदात्तं भवति । देवदत्तः पचति । यज्ञदत्तः पचति । तिङः इति किम् ? नीलम् उत्पलम् । [16]शुक्लं वस्त्रम् । अतिङः इति किम् ? भवति पचति ॥

---

1. इष्यते इत्यधिकम् इ. 2. विषये इत्यधिकम् ह. 3. कम्बलो – न तर्हि नास्ति ड. 4–5. ग्रामे इत्यधिकम् क. 6. हि नास्ति ड. 7. अनन्वादेशे सर्वत्र विकल्पः । अन्वादेशे नित्यं वांनावादयः । सपूर्वायाः प्रथमायाः अन्वादेशविकल्पः इति इत्यधिकम् क. 8. वर्तमानानि नास्ति ह. 9. ब्रुवेः क. 10. प्रचन इत्यधिकम् ड. 11. अन्याय इत्यधिकम् क. 12. आद्युदात्तत्वम् ड. 13. एतत् गोत्रादीनां पाठविशेषणार्थं द्रष्टव्यम् क. ड. ह. 14. ग्रहणे ड. 15. पदात् नास्ति क. इ. 16. उदाहरणमिदं नास्ति ड. इ. ह.

## न लुट्। (२९/३०३६)

[1]पूर्वेण अतिप्रसक्ते प्रतिषेध आरभ्यते। [2]लुडन्तं [3]नानुदात्तं भवति। श्वः कर्ता। श्वः कर्तारौ[4]। मासेन कर्तारः। [5]तासेः परस्य लसार्वधातुकस्य अनुदात्तत्वे सति सर्व[6]तासिरेव उदात्तः। [7]यत्र तु टिलोपः, तत्र उदात्तनिवृत्तिस्वरो भवति॥

## निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्। (३०/३०३७)

न इति वर्तते। यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं भवति। यत्–यत् करोति। यत् पचति। यदि–यदि करोति। यदि पचति। हन्त–हन्त करोति। नेत्–'नेज् [8]जिह्मायन्त्यो नरकं पताम' (ऋ. खि. ३.२२)। चेत्–स चेद् भुङ्क्ते। स चेद् अधीते। चण्–णिद्विशिष्टोऽयं चेदर्थे वर्तते। अयं च मरिष्यति। अयं चेन्मरिष्यति इत्यर्थः। समुच्चयादिषु तु यः चशब्दः, तेन योगेन विधिरयं न भवति। कच्चित्–कच्चिद् भुङ्क्ते। कच्चिद् अधीते। यत्र–यत्र भुङ्क्ते। यत्र अधीते। निपातैः इति किम्? यत् कूजति शकटम्। गच्छत् कूजति शकटम् इत्यर्थः। इणः शतरि रूपमेतत्। युक्तम् इति किम्? 'यत्र क्व च ते मनो दक्षं दधस उत्तरम्' (ऋ. ६. १६. १७)॥

## नह प्रत्यारम्भे। (३१/३०३८)

नह इत्येतेन युक्ते प्रत्यारम्भे[9] तिङन्तं नानुदात्तं भवति। चोदितस्या[10]वधीरणे उपालिप्सया प्रतिषेधयुक्तः [11]प्रत्यारम्भः क्रियते। नह भोक्ष्यसे। नह अध्येष्यसे। प्रत्यारम्भे इति किम्? नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति॥

## सत्यं प्रश्ने। (३२/३०३९)

सत्यम् इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने[12]। सत्यं भोक्ष्यसे। सत्यम् अध्येष्यसे। प्रश्ने इति किम्? 'सत्यं वक्ष्यामि नानृतम्' (अ. वे. ४. ९. ७)॥

## अङ्गाप्रातिलोम्ये। (३३/३०४०)

अङ्ग इत्यनेन युक्तं तिङन्तं अप्रातिलोम्ये गम्यमाने नानुदात्तं भवति। अङ्ग कुरु। [13]अङ्ग पच। अङ्ग पठ। अप्रातिलोम्ये इति किम्? अङ्ग कूज ३ वृषल, इदानीं ज्ञास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन् प्रतिलोमो भवति[14]॥

---

1. पूर्वेण नास्ति इ. ह. 2. अतिङन्तात् इत्यधिकम् क. 3. तिङन्तम् इत्यधिकम् इ. ह. 4. श्वः कर्तारः इत्यधिकम् क. इ. ड. 5. तासः इ. 6. तासेः एव पूर्वं उदात्तः क, तासेरेव उदात्तत्वं भवति इ. 7. यत्र लुडन्ते टिलोपो नास्ति तत्र ड. इ. 8. जिह्मायन्तो मुद्रितः पाठः. 9. विषये इत्यधिकम् ब. क. इ. 10. अवधारणे क. ड. 11. आरम्भः इत्यधिकम् क. ड़. इ. 12. अर्थे इत्यधिकम् ह, स चेत् सत्यशब्दः वर्तते इत्यधिकम् ब. क. ड. इ. 13. अङ्ग पच नास्ति ड. 14. प्रातिलोम्यं प्रतिकूलकारित्वम् इत्यधिकम् ड.

## हि च। (३४/३०४१)

हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति। स हि कुरु। स हि पच। स हि पठ। अप्रातिलोम्ये इत्येव, स हि कूज वृषल, इदानीं ज्ञास्यसि जाल्म॥

## छन्दस्यनेकमपि साकाङ्क्षम्। (३५/३०४२)

हि च इति [1]वर्तते। छन्दसि विषये [2]हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति, एकमपि। कदाचिदेकं कदाचिदनेकम् इत्यर्थः। तत्र अनेकं तावत् – अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति (म. भा. ३. ३७५)। तिङन्तद्वयमप्येतन् न निहन्यते। एकं खल्वपि – अग्निर्हि पूर्वमुदजयत् तमिन्द्रोऽनूदजयत् (म. भा. ३. ३७५) तिङन्तद्वयमपि हिशब्दयुक्तमेतत्। तत्र एकमुदजयत् इत्याद्युदात्तम्, अपरमनुदात्तम्। '[3]अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज् जनितारमग्ने' (तै. ४.२.१०.४)। अजनिष्ट इत्याद्युदात्तम्, [4]अपश्यत् इत्यनुदात्तम्॥

## यावद्यथाभ्याम्। (३६/३०४३)

यावत् यथा इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति। यावद् भुङ्क्ते। यथा भुङ्क्ते। यावद् अधीते। यथा अधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। परेणापि योगे भवति [5]प्रतिषेधः॥

## पूजायां नानन्तरम्। (३७/३०४४)

यावद् यथा इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति, किं तर्हि, अनुदात्तमेव[6]। यावत् पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु। पूजायाम् इति किम्? यावद् भुङ्क्ते। यथा भुङ्क्ते। अनन्तरम् इति किम्। यावद् देवदत्तः पचति शोभनम्। यथा [7]देवदत्तः करोति चारु। पूर्वेणात्र निघातः प्रतिषिध्यते॥

## उपसर्गव्यपेतं च। (३८/३०४५)

यावद्यथाभ्यां युक्तं उपसर्गव्यपेतं [8]च पूजायां विषये नानुदात्तं न भवति, किं तर्हि, अनुदात्तमेव [9]भवति। पूर्वमनन्तरं इत्युक्तम्, उपसर्गव्यवधानार्थो[10]ऽयमारम्भः। यावत् प्रपचति शोभनम्। यथा प्रपचति[11]शोभनम्। यावत् प्रकरोति चारु। यथा प्रकरोति चारु[11]। अनन्तरमित्येव, यावद् देवदत्तः प्रपचति[12]। यथा विष्णुमित्रः प्रकरोति चारु॥

---

1. वर्तते नास्ति ह. 2. इत्यनेन इत्यधिकम् क.ह. 3. अजो क. 4. अपरम् ड. 5. प्रतिषेधः नास्ति ड. 6. पूर्वेण प्राप्नोति निघातप्रतिषेधः इत्यधिकम् क. 7. विष्णुदत्तः ई. 8. च नास्ति ड. 9. भवति नास्ति ब.ड. 10. वचनारम्भः ब.ह. 11. चारु क. 12. चारु इत्यधिकम् ड, शोभनम् इत्यधिकम् ब.

## तुपश्यपश्यताहैः पूजायाम् । (३९/३०४६)

तु पश्य पश्यत अह इत्येतैर्युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । तु – [1]माणवकस्तु भुङ्क्ते शोभनम् । पश्य – पश्य माणवको भुङ्क्ते शोभनम् । पश्यत – पश्यत माणवको भुङ्क्ते शोभनम् । अह – अह माणवको भुङ्क्ते शोभनम् । पूजायाम् इति किम् ? पश्य मृगो धावति । पूजायाम् इति वर्तमाने पुनः पूजायाम् इत्युच्यते निघातप्रतिषेधार्थम् । तद्धि [2]प्रतिषेधस्य प्रतिषेधेन सम्बद्धम् [3]इति ॥

## अहो च । (४०/३०४७)

अहो इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । अहो देवदत्तः पचति शोभनम् । अहो विष्णुमित्रः करोति चारु । पृथग्योगकरण[4]मुत्तरार्थम् ॥

## शेषे विभाषा । (४१/३०८२)

अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति । कश्च शेषः ? यदन्यत् पूजायाः । कटमहो करिष्यसि । [5]मम गेहम् एष्यसि । [6]असूयावचनमेतत्[7] । पूजायाम् इत्यस्य पूर्वत्र [8]चानुकृष्टत्वादन[9]धिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ॥

## पुरा च परीप्सायाम् । (४२/३०४९)

पुरा इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे[10] विभाषा नानुदात्तं भवति । परीप्सा त्वरा । अधीष्व माणवक, पुरा विद्योतते विद्युत् । पुरा स्तनयति [11]स्तनयित्नुः । पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति । परीप्सायाम् इति किम् ? [12]नडेन स्म पुरा अधीयते[13] । [14]अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति । ऊर्णया स्म पुरा अधीयते ॥

## नन्वित्यनुज्ञैषणायाम् । (४३/३०५०)

ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये । अनुज्ञाया एषणा प्रार्थना अनुज्ञैषणा[15] । [16]अनुज्ञाप्रार्थना इत्यर्थः । ननु [17]करोमि भोः । [18]अनुजानीष्व मां करणं प्रति इत्यर्थः । अनुज्ञैषणायाम् इति किम् ? अकार्षीः कटं देवदत्त ? ननु करोमि भोः । पृष्टप्रतिवचनमेतत्, [19]नानुज्ञैषणा ॥

---

1. यस्तु माणवकः ड. 2. निघातस्य ब. क. इ, तच्च निघातस्य ड. 3. इति नास्ति ड. 4. उत्तरत्र अहोशब्दमात्रस्य अनुवृत्त्यर्थम् इ. ड. 5. अहो ग्रामं गमिष्यति ब.इ, ग्राममहो करिष्यसि क. 6. असूयाप्रतिवचनम् ह. 7. न पूजा इत्यधिकम् ड. 8. चानुक्तत्वात् क. 9. अनधिकारेणैव क.ड.इ. 10. विषये ह. 11. पुनः इत्यधिकम् ह. 12. नटेन इ. 13. पुरा होतारोऽभूवन् (तै. 2.5.11.2) इत्यधिकम् ब. क. 14. अत्र हि भूतविप्रकर्षेषु, भूतिविप्रकृष्टः ह. 15. अनुज्ञा इति किंचित् कर्तुं स्वयमेवोद्युक्तस्यैवं क्रियताम् इत्येवंरूपोऽभ्युपगमोऽनुज्ञा इत्यधिकम् ड. 16. अनुज्ञा नास्ति ड. 17. गच्छामि ब. क. ड. इ. 18. अनुजानीहि क, अनुजानीहि मां गच्छन्तम् इ. 19. एषणा नास्ति इ.

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् । (४४/३९५१)

किम् इत्येतत् क्रियाप्रश्ने यदा वर्तते [1]तदानेन युक्तं तिङन्तं [2]अनुपसर्गम् अप्रतिषिद्धं नानुदात्तं भवति । किं देवदत्तः पचति, आहोस्विद् भुङ्क्ते । किं[3] देवदत्तः शेते, आहोस्विद् अधीते । अत्र केचिदाहुः, पूर्वं कियुक्तम् इति तन्न निहन्यते, उत्तरं तु न कियुक्तम् इति तन्निहन्यत एव इति । अपरे [4]त्वाहुः, यद्यप्येकस्य आख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योगः इति उभयत्र प्रतिषेधेन भवितव्यम् इति । क्रियाग्रहणं किम् ? साधनप्रश्ने मा भूत्, किं देवदत्तः ओदनं पचति, आहोस्विच्छाकम् इति । प्रश्न इति किम् ? किम् अधीते देवदत्तः । क्षेपे किंशब्दोऽयम्, न प्रश्ने । अनुपसर्गम् इति किम् ? किं देवदत्तः प्रपचति, आहोस्वित् प्रकरोति । अप्रतिषिद्धम् इति किम् ? किं देवदत्तो न [5]पठति, आहोस्विन्न करोति ॥

## लोपे विभाषा । (४५/३९५२)

किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गम् अप्रतिषिद्धं विभाषा नानुदात्तं भवति । क्व चास्य लोपः ? यत्र गम्यते चार्थः, न च प्रयुज्यते किंशब्दः । देवदत्तः पचति, आहोस्वित् पठति । विनैव किमा प्रश्नोऽवगम्यते । प्राप्तविभाषेयम् किमर्थेन योगात् । पूर्ववत् प्रत्युदाहरणानि ॥

## एहि मन्ये प्रहासे लृट् । (४६/३९५३)

एहि मन्ये इत्यनेन युक्तं [6]लृडन्तं नानुदात्तं भवति प्रहासे । [7]प्रकृष्टो हासः प्रहासः, क्रीडा । [8]एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । प्रहासे इति किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति । सुष्ठु मन्यसे । साधु मन्यसे । गत्यर्थलोटा लृट् (८.१.५१/३९५८) इत्येव सिद्धे सत्यारम्भो [9]नियमार्थः, एहिमन्येयुक्ते प्रहासे एव यथा स्यात्, अन्यत्र मा भूत् इति, एहि मन्यसे ओदनं भोक्ष्ये इति । एहि मन्ये इत्युत्तमोपादानमतन्त्रम् । प्रहासे एव हि मन्यतेरुत्तमो विहितः, ततोऽन्यत्र मध्यम एव भवति । तत्रानेन नियमेन निवृत्तिः क्रियते, एहि मन्यसे ओदनं भोक्ष्ये इति ॥

## जात्वपूर्वम् । (४७/३९५४)

जातु इत्येतदविद्यमान[10]पूर्वम्, तेन युक्तं तिङन्तं[11] नानुदात्तं भवति । जातु भोक्ष्यसे । जातु [12]करिष्यामि । अपूर्वम् इति किम् ? कटं जातु करिष्यति ॥

---

1. तेन क.ड.इ. 2. अनुपसर्गप्रतिषिद्धं क. 3. यज्ञदत्तो यजति क, कं देवदत्तो यजति ड. 4. पुनराहुः ब. 5. पचति क. ड. इ. 6. तिङन्तं क. इ. 7. प्रकृष्टो हासः नास्ति इ. 8. प्रहासे इत्यधिकम् इ. 9. नियमाय ह. 10. °पूर्वे नियमप्रतिषेधवारणं इ, °पूर्वे निघातप्रतिषेधवारणं क. 11. लृडन्तं इत्यधिकम् इ. तत् इत्यधिकम् क. 12. करिष्यसि ब. इ.

## किंवृत्तं च चिदुत्तरम्। (४८/३९५५)

किमो वृत्तं किंवृत्तम्। [1]किंवृत्तग्रहणेन तद्विभक्त्यन्तं [2]प्रतीयात्, डतरडतमौ च [3]प्रत्ययौ। तत् किंवृत्तं चिदुत्तरमविद्यमानपूर्वं [4]यत् तेन युक्तं तिङन्तं [5]नानुदात्तम् भवति। कश्चिद् भुङ्क्ते। कश्चिद् भोजयति। [6]कश्चिद् अधीते[7]। केनचित् करोति। कस्मैचिद् ददाति। कतरश्चित् करोति। [8]कतमश्चिद् भुङ्क्ते। चिदुत्तरम् इति किम्? को भुङ्क्ते। अपूर्वम् इत्येव, देवदत्तः किञ्चित् पठति॥

## आहो उताहो चानन्तरम्। (४९/३९५६)

[9]निघातप्रतिषेधोऽनुवर्तते, अपूर्वम् इति च। आहो उताहो इत्येताभ्याम् अपूर्वाभ्यां युक्तम् अनन्तरं तिङन्तं नानुदात्तं भवति। आहो [10]भुङ्क्ते[11]। उताहो भुङ्क्ते[12]। आहो [13]पठति। उताहो पठति। [14]अनन्तरम् इति किम्? शेषे विभाषां (८.१.५०/३९५७) वक्ष्यति। अपूर्वम् इत्येव, देवदत्त आहो भुङ्क्ते। देवदत्त उताहो भुङ्क्ते॥

## शेषे विभाषा। (५०/३९५७)

आहो उताहो इत्येताभ्यां युक्तं तिङन्तं नानुदात्तम् शेषे विभाषा भवति। कश्च शेषः? यदन्यदनन्तरात्। आहो देवदत्तः पचति, [15]पचति। उताहो देवदत्तः पचति, [16]पचति। आहो देवदत्तः पठति, पठति। [17]उताहो देवदत्तः पठति, पठति॥

## गत्यर्थलोटा लृण् न चेत् कारकं सर्वान्यत्। (५१/३९५८)

गमिना समानार्था गत्यर्थाः। गत्यर्थानां[18] लोट् [19]गत्यर्थलोट्। तेन [20]गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति, न चेत् कारकं [21]सर्वान्यद् भवति। यत्रैव कारके कर्तरि कर्मणि वा लोट्, तत्रैव यदि लृडपि भवति इत्यर्थः। कर्तृकर्मणी एवात्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते, न करणादि कारकान्तरम्। आगच्छ देवदत्त ग्रामम्, द्रक्ष्यसि एनम्। आगच्छ देवदत्त ग्रामम्, ओदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन [22]भोक्ष्यन्ते।

गत्यर्थग्रहणं किम्? पच देवदत्त ओदनम्, भोक्ष्यसे एनम्। लोटा इति किम्? आगच्छेः देवदत्त ग्रामम्, द्रक्ष्यसि एनम्। लृट् इति किम्? आगच्छ देवदत्त ग्रामम्, पश्यसि एनम्। न चेत् कारकं सर्वान्यत्

---

1. किं नास्ति ब. 2. प्रतीयते इ. 3. प्रत्ययौ नास्ति इ.ह. 4. जात्वनुयुक्ते मिघातप्रतिषेधकारणं इत्यधिकम् क. 5. च इत्यधिकम् क. 6. किंचिदधीते ब. क. 7. कश्चित् कूजति, किंचित् करोति इत्यधिकम् ह. 8. उदाहरणमिदं नास्ति क. 9. वाक्यमिदं नास्ति इ. 10. अधीते ब.क. 11. देवदत्तः इत्यधिकम् क. 12. उताहो अधीते इत्यधिकम् इ.ड.ह. 13. अधीते ब.इ. 14. अनन्तरम् – वक्ष्यति नास्ति क. 15 – 16. नास्ति ब.क.इ. 17. वाक्यमिदं नास्ति ड. 18. धातूनां इत्यधिकम् ब. ड .इ. 19. गत्यर्थलोट् नास्ति ब. 20. गत्यर्थलोटा नास्ति क. 21. सर्वमन्यत् ड. 22. एव इत्यधिकम् क.

इति किम् ? आगच्छ देवदत्त ग्रामम्, पिता ते ओदनं भोक्ष्यते । उह्यन्तां देवदत्तेन शालयः, सक्तवः तेन पास्यन्ते। सर्वग्रहणं किम् ? आगच्छ देवदत्त ग्रामम्, त्वं चाहं च द्रक्ष्यावः एनम् इत्यत्रापि निघातप्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन् कारके अन्यस्मिन् न भवितव्यम्, इह तु यत् लोडन्तस्य कारकं तच्चान्यच्च [1]लृडन्तेन उच्यते इति ।।

## लोट् च । (५२/३९५९)

लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति । लोडन्तयोरेकं [2]कारकं यदि भवति इत्यर्थः । आगच्छ देवदत्त, ग्रामं पश्य[3] । आगच्छ [4]विष्णुमित्र, ग्रामं शाधि । आगम्यतां देवदत्तेन, ग्रामो दृश्यतां यज्ञदत्तेन । [5]गत्यर्थानाम् इत्येव, पच देवदत्तौदनम्, भुङक्ष्व एनम् । [6]लोटा इत्येव, आगच्छेः देवदत्त ग्रामम्, पश्य एनम् । न चेत् कारकं सर्वान्यत् इत्येव, आगच्छ देवदत्त ग्रामम्, पश्यतु एनम् यज्ञदत्तः । सर्वग्रहणानुवृत्तेस्तु इह भवत्येव, आगच्छ देवदत्त ग्रामम्, त्वं चाहं च पश्याव[7] । पृथग्योगकरणमुत्तरार्थम् ।।

## विभाषितं सोपसर्गमनुत्तमम् । (५३/३९६०)

[8]पूर्वं सर्वमनुवर्तते । प्राप्तविभाषा इयम् । लोडन्तं सोपसर्गम् उत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्तं विभाषितं नानुदात्तम् भवति, न चेत् कारकं सर्वान्यद् भवति । आगच्छ देवदत्त, ग्रामं प्रविश, प्रविश । आगच्छ देवदत्त, ग्रामं प्रशाधि, [9]प्रशाधि । सोपसर्गम् इति किम् ? आगच्छ देवदत्त, ग्रामं पश्य । अनुत्तमम् इति किम् ? [10]आगच्छानि देवदत्त, ग्रामं प्रविशानि ।।

## हन्त च । (५४/३९६१)

[11]पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा । हन्त इत्यनेन युक्तं लोडन्तं [12]सोपसर्गम् [13]उत्तमवर्जितं विभाषितं नानुदात्तम् भवति । हन्त प्रविश, [14]प्रविश । हन्त प्रशाधि, [15]प्रशाधि । सोपसर्गम् इत्येव, हन्त कुरु । निपातैर्यद्यदिहन्त (८. १. ३०/३९३७) इति नित्यमत्र निघातप्रतिषेधो भवति । अनुत्तमम् इत्येव, हन्त प्रभुनजावहै । हन्त प्रभुनजामहै ।।

## आम एकान्तरमामन्त्रितमनन्तिके । (५५/३९६२)

आमः उत्तरम् [16]एकपदान्तरम् आमन्त्रितान्तम् अनन्तिके नानुदात्तं भवति । आम् पचसि देवदत्त३ । आम् भो देवदत्त३ । भो इत्यामन्त्रितान्तमपि, नामन्त्रिते समानाधिकरणे सामान्यवचनम् इति नाविद्यमानवद् भवति । आमः इति किम् ? शाकं पचसि देवदत्त३ । [17]एकान्तरम् इति किम् ? आम् प्रपचसि देवदत्त३ । आमन्त्रितम् इति किम् ? आम् पचति देवदत्तः । [18]अनन्तिके इति किम् ? आम् [19]देवदत्त ।

---

1. कारकम् इत्यधिकम् ह. 2. कारकं नास्ति क. 3 एनम् इत्यधिकम् ड. 4. देवदत्त ब. क. इ. ड, व्रज विष्णुमित्र न ग्रामं प्रशाधि ह. 5. गत्यर्थानाम्—एनम् यज्ञदत्तः नास्ति ब. क. 6. लोट् ड. 7. एनम् इत्यधिकम् ड. इ. 8. वाक्यमिदं नास्ति ब.क.इ. 9. प्रशाधि नास्ति ब.क. 10. आगच्छ ब. 11. वाक्यमिदं नास्ति ब.क.ड.इ.ह. 12. तिङन्त इत्यधिकम् क.ड.ह. 13. अनुत्तमम् क. 14–15. नास्ति क.इ. 16. एकपदान्तरितम् ब.क.इ. 17. एकोत्तरम् क. 18. अनन्त इति इ. 19. पचसि इत्यधिकम् ड.

आम एकान्तरमामन्त्रितं यत् तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते (म. भा. ३. ३७७)। तदुभयमनेन क्रियते इति केचिदाहुः। प्लुतोदात्तः पुनरसिद्धत्वान् न प्रतिषिध्यते। अपरेषां दर्शनम्, अनन्तिके इत्यनेन यन् न दूरं न सन्निकृष्टं तत् परिगृह्यते, तेन अस्मिन्नेकश्रुतेः प्राप्तिरेव[1] नास्ति, [2]प्लुतोदात्तोऽपि नोदाहर्तव्यः इति ॥

## यद्धितुपरं छन्दसि। (५६/३९६३)

आमन्त्रितम् इत्येतदस्वरितत्वान् नानुवर्तते। तिङ इति वर्तते एव। यत्परं, हिपरं, तुपरं च तिङन्तं छन्दसि नानुदात्तं भवति। यत्परं तावत् – 'गवां गोत्रमुदसृजो यदङ्गिरः' (ऋ. २.२३.१८)। हिपरम् – 'इन्दवो वामुशन्ति हि' (तै. सं. १. ४. ४. १) तुपरम् – आख्यास्यामि तु ते। निपातैर्यद्यदिहन्त (८.१.३०/३९३७) इति, 'हि च' (८. १. ३४ / ३९४१) इति, तुपश्यपश्यताहैः (८. १ .३९/३९४६) इति च निघातप्रतिषेधे सिद्धे वचनमिदं नियमार्थम्, [3]एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैः इति। इह न भवति, [4]जाये स्वो रोहावैहि। एहि इत्यनेन गत्यर्थलोटा युक्तस्य रोहाव इत्यस्य लोडन्तस्य निघातो भवत्येव ॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः। (५७/३९६४)

चन चिद् इव गोत्रादि तद्धित आम्रेडित इत्येतेषु परतः अगतेः उत्तरं तिङन्तं नानुदात्तं भवति। चन–देवदत्तः पचति चन। चित् – देवदत्तः पचति चित्। इव–देवदत्तः पचतीव। गोत्रादि – देवदत्तः पचति गोत्रम्। देवदत्तः पचति ब्रुवम्। देवदत्तः पचति प्रवचनम्। इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोः एव गृह्यन्ते। तद्धित – देवदत्तः पचतिकल्पम्। देवदत्तः पचतिरूपम्। अनुदात्तः तद्धित इह उदाहरणम्, अन्यत्र तद्धितस्वरेण[5] तिङ्स्वरो बाध्यते, पचतिदेश्यः[6]। आम्रेडित – देवदत्तः पचति पचति। अगतेः इति किम्? देवदत्तः प्रपचति चन। अत्र [7]अगतिग्रहणे, सगतिरपि तिङ् इत्यत्र च उपसर्गग्रहणं द्रष्टव्यम्। इह मा भूत्, शुक्लीकरोति चन। यत् काष्ठं शुक्लीकरोति। यत् काष्ठं कृष्णीकरोति[8] ॥

## चादिषु च। (५८/३९६५)

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति। चादयः 'न चवाहाहैवयुक्ते' (८. १. २४/४०८) [9]इत्यत्र ये निर्दिष्टाः, ते [10]इह परिगृह्यन्ते। चशब्दे तावत् – देवदत्तः पचति च खादति च। वा – देवदत्तः पचति वा खादति वा। ह – देवदत्तः पचति ह खादति ह। अह – देवदत्तः पचत्यह खादत्यह। एव – देवदत्तः पचत्येव खादत्येव। अगतेरित्येव, देवदत्तः प्रपचति च प्रखादति च। प्रथमस्यात्र तिङन्तस्य 'चवायोगे प्रथमा' (८.१.५९) इति निघातः प्रतिषिध्यते एव, परं तु निहन्यते[11] ॥

---

एव नास्ति इ. 2. प्लुतोऽपि ड. 3. एतैरेव इ. 4. जाय एहि सुवो रोहाव रोहाव (तै.सं. 1.7.9.1) क. 5. देश्यस्वरो क. 6. देवदत्तः इत्यधिकम् क. 7. अगतिग्रहणेन ब. इ, गतिग्रहणेन ड. 8. चित् इत्यधिकम् ब, चन इत्यधिकम् क. ड. ह. 9. इत्यस्मिन् सूत्रे ब. क. ह. 10. एव ड. 11. एव इत्यधिकम् क.

## चवायोगे प्रथमा । (५९/३९६६)

अगतेः इति पूर्वसूत्रे च अनुकृष्टम् इत्यत्र नानुवर्तते । [1]च, वा इत्येताभ्यां योगे प्रथमा तिङविभक्तिर्नानुदात्ता भवति । [2]गर्दभांश्च कालयति, वीणां च वादयति । [3]गर्दभान् वा कालयति, वीणां वा वादयति । योगग्रहणं [4]पूर्वाभ्यामपि योगे [5]निघातप्रतिषेधो यथा स्यात् इति । प्रथमाग्रहणं द्वितीयादेः तिङन्तस्य मा भूत् इति[6] । चवायोगो हि [7]द्विसमुच्चये विकल्पे [8]च सति भवति, स च अनेकस्य धर्म [9]इति ॥

## हेति क्षियायाम् । (६०/३९६७)

[10]ह इत्यनेन युक्ता प्रथमा तिङविभक्तिः नानुदात्ता भवति क्षियायां गम्यमानायाम् । [11]क्षिया धर्मव्यतिक्रमः, आचारभेदः । स्वयं ह रथेन याति३, उपाध्यायं पदातिं गमयति । स्वयं ह ओदनं भुङ्क्ते३, उपाध्यायं सक्तून् पाययति । [12]प्रथमस्य तिङन्तस्यात्र निघातः प्रतिषिध्यते । 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' (८.२.१०४/३६२३) इति च प्लुतो [13]भवति ॥

## अहेति विनियोगे च । (६१/३९६८)

अह इत्यनेन युक्ता प्रथमा तिङविभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने, चशब्दाद् क्षियायां च । नानाप्रयोजनो नियोगो विनियोगः । त्वमह ग्रामं गच्छ । त्वमह अरण्यं गच्छ । क्षियायाम् – स्वयमह रथेन याति३, उपाध्यायं पदातिं गमयति । स्वयमह ओदनं भुङ्क्ते३, उपाध्यायं सक्तून् पाययति । पूर्ववन्निघातप्रतिषेधः, प्लुतश्च ॥

## चाहलोप एवेत्यवधारणम् । (६२/३९६९)

चलोपे अहलोपे[14] प्रथमा तिङविभक्तिः नानुदात्ता भवति । एव इति एतच्चेदवधारणार्थं प्रयुज्यते, क्व [15]चास्य लोपः ? यत्र गम्यते चार्थः, न च प्रयुज्यते,[16] तत्र लोपः । तत्र चशब्दः समुच्चयार्थः, अहशब्दः केवलार्थः इति समानकर्तृके चलोपः, नानाकर्तृके अहलोपः । चलोपे–देवदत्त एव ग्रामं गच्छतु, स देवदत्त एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छतु इत्यर्थः । अहलोपे – देवदत्त एव ग्रामं गच्छतु, यज्ञदत्त एवारण्यं गच्छतु । ग्रामं केवलम्, अरण्यं केवलमित्यर्थः । अवधारणम् इति किम् ? [17]देवदत्तः क्वेव भोक्ष्यते । अनवक्लृप्तावयमेवशब्दः । न क्व चिद् भोक्ष्यते इत्यर्थः[18] । 'एवे चानियोगे' (वा. ६८६) इति [19]पररूपम् ॥

## चादिलोपे विभाषा । (६३/३९७०)

चादयः, 'न चवाहाहैवयुक्ते' (८.१.२४/४०८) इति [20]सूत्रनिर्दिष्टा गृह्यन्ते । तेषां लोपे प्रथमा तिङविभक्तिः नानुदात्ता

1. चवाभ्याम् योगे इ. 2. च – इत्यधिकम् इ. 3. वा – इत्यधिकम् इ. 4. पूर्वसूत्राभ्यामपि क, पूर्वभूताभ्याम् इ. 5. निघात नास्ति इ. 6. तस्यापि योग इत्येव इत्यधिकम् ड. 7. द्वि नास्ति क. इ. ड. 8. वा ब.ड. 9. इति नास्ति ब. क. इ. ड. 10. प्रथमा इति वर्तते इत्यधिकम् ब. 11. वाक्यमिदं नास्ति ह. 12. प्रथमान्तस्य ह. 13. भवति नास्ति ह. 14. चशब्दः इत्यधिकम् ब. 15. चानयोः ह. 16 चशब्दः इत्यधिकम् ह. 17. देवदत्त क्वेव भोक्ष्यसे ब. 18. न किञ्चिदध्येष्यते इत्यधिकम् ड. 19. पररूपत्वम् ब. 20. सूत्रे ये निर्दिष्टा ते एव क.इ, अत्र ये निर्दिष्टा ह.

भवति विभाषा । चलोपे[1]–शुक्ला व्रीहयो भवन्ति, भवन्ति, श्वेता गा आज्याय दुहन्ति । भवन्ति इत्येतद् [3]विकल्पेन न निहन्यते । वालोपे – व्रीहिभिर्यजेत, यजेत, यवैर्यजेत । एवं [3]शेषेष्वपि यथादर्शनमुदाहार्यम् ॥

## वैवावेति च च्छन्दसि । (६४/३०७१)

वै वाव इत्येताभ्यां युक्ता प्रथमा तिङ्[4]विभक्तिः विभाषा नानुदात्ता भवति छन्दसि विषये । 'अहर्वै देवानामासीद् रात्रिरसुराणाम्' (तै सं. १.५.९.२) । 'बृहस्पतिर्वै देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम्' (तै. ६.४.१०.१) । वाव – अयं वाव हस्त आसीत्, नेतर आसीत् ॥

## एकान्याभ्यां समर्थाभ्याम् । (६५/३०७२)

एक अन्य इत्येताभ्यां समर्थाभ्यां [5]युक्ता प्रथमा तिङ्[6]विभक्तिः विभाषा नानुदात्ता भवति छन्दसि विषये । [7]'प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम्' (अ.वे. ८.९.१३) । जिन्वति इत्येतत्पक्षे न निहन्यते । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति' (ऋ. १. १६४. २०) । अत्ति इत्येतत्पक्षे न निहन्यते । समर्थाभ्यामिति किम् ? एको देवानुपातिष्ठत् । एक इति सङ्ख्यापदमेतत्, [8]अन्यार्थे न वर्तते । एकशब्दस्य व्यवस्थार्थं च समर्थग्रहणम्, व्यभिचारित्वात् तस्य ॥

## यद्वृत्तान्नित्यम् । (६६/३०७३)

प्रथमा, छन्दसि इति निवृत्तम् । निघातप्रतिषेध [9]इत्येव । यदो वृत्तं यद्वृत्तम् । यत्र पदे यच्छब्दो वर्तते तत्सर्वं यद्वृत्तम्[10] । इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरडतमौ च प्रत्ययौ इत्येतन्नाश्रीयते । तस्माद् यद्[11]वृत्तादुत्तरं तिङन्तं नानुदात्तं भवति नित्यम् । यो भुङ्क्ते । यं भोजयति । येन भुङ्क्ते । यस्मै ददाति । 'यत्कामास्ते जुहुमः'[12] (ऋ. १०.१२१.१०) । 'यद्रियङ् वायुर्वाति' (तै. ५.५.१.१) [13]यद् वायुः पवते । पञ्चमीनिर्देशेऽप्यत्र व्यवहिते कार्यमिष्यते ।

[८९६] याथाकाम्ये वेति वक्तव्यम् । (म. भा. ३.३७९)

यत्र क्वचन यजन्ते ॥

---

1. तावत् इत्यधिकम् ह. 2. पक्षे ब. क. ड. इ. 3. शेषेऽपि ड. 4. विभक्तिः नास्ति ब. 5. युक्ता नास्ति क. इ. 6. विभक्तिः नास्ति क. 7. अजामेकां क. 8. अन्यार्थेन ब. क. इ. 9. एवानुवर्तते ब. क, नास्ति ड. इ. 10. गृह्यते इत्यधिकम् क. 11. वृत्तादनन्तरं इ. 12. तन्नोऽस्तु इत्यधिकम् ह. 13. यदयं वायुः पवते (मै.3.4.3), यद् यद् ब, यद्रचङ् वायुः पवते ड.

## पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः। (६७/३९७४)

पूजनेभ्यः काष्ठादिभ्यः [1]उत्तरपदं पूजितमनुदात्तं भवति। काष्ठ – [2]काष्ठाध्यापकः। [3]काष्ठाभिरूपकः[4]। दारुण – दारुणाध्यापकः। [5]दारुणाभिरूपकः। अमातापुत्र – अमातापुत्राध्यापकः[6]। अयुत – अयुताभिरूपकः। अयुताध्यापकः। अद्भुत – अद्भुताध्यापकः। अनुक्त – [7]अनुक्ताध्यापकः। भृश – भृशाध्यापकः। घोर – घोराध्यापकः। परम – परमाध्यापकः। सु – [8]स्वध्यापकः। अति – अत्यध्यापकः[9]।

[८९७] मलोपश्च। (म. भा. ३.३७९)

इति वार्तिककारमतम्। मयूरव्यंसकादित्वात् समासः। समासे चैतदनुदात्तत्वम्। [10]समासान्तोदात्तत्वापवाद इष्यते। दारुणमध्यापकः इत्येवमादिषु न भवति। 'मलोपश्च' इत्यनेनाप्ययमेव[11] विषय आख्यायते, यत्र विभक्तेरभावात् मकारो न श्रूयते तत्रानुदात्तत्वम् इति। असमासे हि मलोपो नैवेष्यते। दारुणम[12]धीते दारुणमध्यायकः इति।

पूजनात् इत्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितप्रतिपत्त्यर्थम्। एतदेव[13] ज्ञापकमिह प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति। तथा च 'यद्वृत्तान् नित्यम्' (८.१.६६/३९७३) इत्यत्र उदाहृतम्। [14]अनुदात्तमिति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम्[15]॥

## सगतिरपि तिङ्। (६८/३९७५)

[16]सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्यः [17]परं पूजितं तिङन्तमनुदात्तम् भवति। [18]यत्काष्ठं पचति। यत्काष्ठं प्रपचति। यद्दारुणं पचति। [19]यद् दारुणं प्रपचति। 'तिङ्ङतिङः'। (८.१.२८/३९३५) इति निघातस्य, निपातैर्यद्यदिहन्त (८.१.३०/३९३७) इति [20]प्रतिषेधे प्राप्ते [21]पुनर्विधानम्। सगतिग्रहणाच्च गतिरपि [22]निहन्यते। गतिग्रहणे चात्र उपसर्गग्रहणमिष्यते। इह न भवति, यत् काष्ठं शुक्लीकरोति। यत् काष्ठं कृष्णीकरोति॥

## कुत्सने च सुप्यगोत्रादौ। (६९/३९७६)

पदात् इति निवृत्तम्। [23]सगतिरपि तिङः इति वर्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङः अगतिरपि अनुदात्तो भवति। पचति पूति। प्रपचति पूति। पचति मिथ्या। [24]प्रपचति मिथ्या। कुत्सने इति किम्? पचति शोभनम्[25]। सुपि इति किम्? पचति क्लिश्नाति। अगोत्रादौ इति किम्? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्।

[८९८] क्रियाकुत्सन इति वक्तव्यम्। (म.भा. ३.३८०)

कर्तुः कुत्सने मा भूत्, पचति पूतिर्देवदत्तः। प्रपचति पूतिः।

[८९९] पूतिश्चानुबन्धो भवतीति वक्तव्यम्। (म.भा. ३.३८०)

तेनायं चकारानुबन्धकत्वादन्तोदात्तो भवति।

---

1. उत्तरं ह. 2. काष्ठाध्यायकः ह. 3. काष्ठाभिरूपकः नास्ति ड. 4. स्वाध्यायकः इत्यधिकम् ह. 5. नास्ति ड. 6. अनुज्ञात–अनुज्ञाताध्यापकः इत्यधिकम् ब.क, अनुज्ञाताभिरूपकः इत्यधिकम् क. 7. अनुक्ताध्यापकः नास्ति ड. 8. स्वाध्यापकः इ. 9. कल्याण-कल्याणाध्यापकः, वेश–वेशाध्यापकः इत्यधिकम् ब.ड.इ, सुभगवचनो वेशशब्दः इत्यधिकम् ह.ड. 10. समासान्तो – तत्रानुदात्तत्वम् नास्ति ह. 11. समासविषयः क. 12. अचति ब.क.ड.इ.ह. 13. वचनं इत्यधिकम् ड.इ. 14. अनुदात्तग्रहणम् ब, अनुदात्तमिति वर्तमानम् इ. 15. काष्ठ दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अयुक्त अयुत अद्भुत अनुक्त भृश घोर सुख परम सु अति अभि इति काष्ठादिः इत्यधिकम् ड.ह. 16 पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः इति वर्तते इत्यधिकम् क. इ. ड. 17. परः पूजितः अनुदात्तो भवति ब. क.ड. 18. यत् काष्ठा पचति, यत्काष्ठा प्रपचति ब. 19. यत् नास्ति इ. 20. निषेधे इ. 21. अयमारम्भः ह. 22. हन्यते इ. 23. वाक्यमिदं नास्ति ब. इ. ह. 24. उदाहरणमिदं नास्ति क. 25. प्रपचति शोभनम् इत्यधिकम् ब.क.इ.

[९००] विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वक्तव्यम् । (म. भा. ३. ३८०)

पचन्ति पूतिः, पचन्ति पूतिः । प्रपचन्ति पूतिः, प्रपचन्ति पूतिः ।

सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थम् ।

पूतिश्च चानुबन्धो [1]विभाषितं चापि बह्वर्थम् ।। (म.भा. ३. ३८०)

## गतिर्गतौ । (७०/३९७७)

गतिः गतौ परतः अनुदात्तो भवति । अभ्युद्धरति । [2]समुदानयति । अभिसम्पर्याहरति । गतिः इति किम्? देवदत्तः प्रपचति । गतौ इति किम्? 'आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः' (ऋ. ३. ४५. १)। याहि इत्येतत् प्रति क्रियायोगादाङित्येष गतिः, तस्य गतौ इत्येतस्मिन्नसति गतिः [3]इत्यनाश्रित-परनिमित्तकमनुदात्तत्वं स्यात् ।।

## तिङि चोदात्तवति । (७१/३९७८)

[4]गतिः इति[5] वर्तते । [6]तिङन्ते उदात्तवति परतो गतिरनुदात्तो भवति । यत् प्रपचति । यत् प्रकरोति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् (म. भा. ३. ३८२) । अन्यथा हि यं प्रति गतिः, [7]तत्रानुदात्तो भवति इति धातौ एव उदात्तवति स्यात्, प्रत्यये न स्यात् [8]यत् प्रकरोति इति । 'यत्क्रियाप्रयुक्ताः [9]प्रादयस्तेषां तं प्रति गत्युप-सर्गसञ्ज्ञे भवतः' (जै. प. ९९) [10]इति [11]तिङन्ते धातुमेव प्रति गतिसञ्ज्ञा । आमन्ते तर्हि न प्राप्नोति, प्रपचतितराम्, प्रपचतितमाम् इति? अत्र केचिदामन्तेन गतेः समासं कुर्वन्ति । तेषा[12]मव्ययपूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणेऽपि तिङ्-ग्रहणे परमनुदात्तवद् भवतिइति [13]गतिनिघातो नैव सिध्यति । अथ [14]तरबन्तस्य गतिसमासः? एवमपि सतिशिष्टत्वादाम एव स्वरे सति गतेः 'अनुदात्तं पदमेकवर्जम्' (६. १. १५८/३६५०) इत्येवानुदात्तत्वं सिद्धम् । येषां 'गतिकार-कोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' (पु. प. ६२) इत्यनेन [15]वचनेन कृदन्तेनैव प्राक् सुबुत्पत्तेः समासो भवति, नान्येन[16], इति दर्शनम्, तेषामे[17]वंविधे विषये[18]समासेन नैव भवितव्यम् इति । पृथक् स्वरप्रवृत्तौ सत्यामनेन [19]निघातेन प्रयोजनमस्ति । तदर्थं यत्नः कर्तव्यः । उदात्तवति इति किम्? प्रपचति । प्रकरोति ।।

## आमन्त्रितं पूर्वमविद्यमानवत् । (७२/४१२)

[20]आमन्त्रितं पूर्वमविद्यमानवद् भवति, तस्मिन् सति यत्कार्यं तन्न भवति, असति यत्[21] तद् भवति । कानि पुनरविद्यमानवत्त्वे प्रयोजनानि । आमन्त्रिततिङ्निघातयुष्मदस्मदादेशाभावाः । देवदत्त, यज्ञदत्त [22]इत्यत्र आमन्त्रि-तस्य पदात् परस्य (८. १. १९/३६५४) इति निघातो न भवति । षाष्ठिकामन्त्रिताद्युदात्तत्वं (६. १. १९८/ ३६५३) भवति । देवदत्त पचसि इत्यत्र 'तिङ्ङतिङः' (८. १. २८/३९३५) इति निघातो न भवति । देवदत्त

---

1. विभाषितश्च क. 2. समुदा नास्ति ब, समुदाहरति क. ड. इ, उदानयति तै. ब्रा. 1. 6. 5. 3. 3. इत्यवाश्रितं इ, असत्याश्रित ह. 4. वाक्यमिदं नास्ति इ. 5. च इत्यधिकम् ह. 6. तिङन्ते नास्ति ह. 7. तत्र उदात्तो भवति क, उदात्तवति गतिर्भवति ड. इ, गतिसूत्रोदात्तवति ह. 8. यत् प्रपचति । प्रत्ययेऽनुदात्तं प्रति न प्राप्नोति क. 9. प्रादयः नास्ति इ. 10. वाक्यमिदं नास्ति ब. 11. तिङन्ते नास्ति क. 12. अपूर्वपद ह. 13. गतिनिघाते क. 14. तरबन्तेन क.ड. 15. वचनेन नास्ति ह. 16. भवति इत्यधिकम् ह. 17. तिङविषये क. 18. समासेनैव क. इ. ह. 19. गतिविधानेन भवितव्यम् ब. क, गतिनिघातेन इ. 20. आमन्त्रितान्तं ब. क. इ. 21. कार्यम् इत्यधिकम् ब. क. इ. 22. अत्र नास्ति ब.

तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वम् इत्येवमादिषु युष्मदस्मदादेशा न भवन्ति । पूजायामनन्तरप्रतिषेधः प्रयोजनम् । यावद् देवदत्त पचसि इत्यत्रापि पूजायां नानन्तरम् (८.१.३७/३९४४) [1]इत्येव प्रतिषेधो भवति । 'जात्वपूर्वम्' (८.१.४७/३९५४) इत्येतत्, देवदत्त जातु पचसि [2]इत्यत्रापि भवति । 'आहो उताहो चानन्तरम्' (८.१.४९/३९५६) इति, आहो देवदत्त पचसि, उताहो देवदत्त पचसि इत्यत्रापि भवति । 'आम एकान्तरमामन्त्रितमनन्तिके' (८.१.५५/३९६२) इति, आम् [3]भो पचसि देवदत्त इत्यत्रापि भवति । [4]आमन्त्रितम् इति किम् ? देवदत्तः पचति ।

पूर्वम् इति किम् ? देवदत्त इत्येतस्य आमन्त्रिताद्युदात्तत्वे कर्तव्ये नाविद्यमानवद् भवति । पूर्वत्वं च परापेक्षं भवति इति परस्यैव कार्ये[5] स्वनिमित्तेऽन्यनिमित्ते वा तदविद्यमानवद् भवति, न [6]तु स्वकार्ये । देवदत्त पचसि इत्यत्रापि हि आमन्त्रिताद्युदात्तत्वं भवत्येव । इह 'इमं मे गङ्गे यमुने सरस्वति' (ऋ. १०.७५.५) इति गङ्गेशब्दः पूर्वमामन्त्रितम्, ततः परस्य यमुनेशब्दस्य अनुदात्तत्वे कर्तव्ये स्वयमविद्यमानवत्त्वात् निमित्तं [7]न भवति । मेशब्दस्य निमित्तभावं न प्रतिबध्नाति ॥

## नामन्त्रिते समानाधिकरणे सामान्यवचनम् । (७३/४१३)

[8]अविद्यमानवत्त्वस्य प्रतिषेधः । आमन्त्रितान्ते समानाधिकरणे परतः पूर्वम् आमन्त्रितान्तं सामान्यवचनं न अविद्यमानवद् भवति । किं तर्हि ? विद्यमानवदेव । 'अग्ने गृहपते' (तै. २.४.५.२)। माणवक जटिलकाध्यापक। पूर्वस्य [9]विद्यमानवत्त्वात् परमनुदात्तमेव भवति । आमन्त्रिते इति किम् । देवदत्त पचसि । समानाधिकरणे इति किम् ? देवदत्त पण्डित यज्ञदत्त । अत्र [10]यज्ञदत्तविशेषणं पण्डितशब्दः, न पूर्वेण समानाधिकरणः । सामान्यवचनम् इति किम् ? पर्यायेषु मा भूत्, [11]अघ्न्ये, देवि, सरस्वति, [12]ईडे, काव्ये, विहव्ये । पर्यायशब्दा एते । एवं हि उक्तम्, 'एता ते अघ्न्ये नामानि' (वा. सं. ८.४३) इति ॥

## विभाषितं विशेषवचने बहुवचनम् । (७४/३७८८)

पूर्वेण अविद्यमानवत्त्वे प्रतिषिद्धे विकल्प उच्यते । विशेषवचने समानाधिकरणे आमन्त्रितान्ते परतः पूर्वमा[13]मन्त्रितं बहुवचनान्तं [14]विभाषितमविद्यमानवद् भवति । देवाः शरण्याः, देवाः शरण्याः । ब्राह्मणा वैयाकरणाः, ब्राह्मणाः वैयाकरणाः । [15]सामान्यवचनाधिकारादेव विशेषवचने इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम् । बहुवचनम् इति किम् ? माणवक जटिलक[16] । नित्यमेतदविद्यमानवदेव[17] ॥

इति वामनकाशिकायां वृत्तौ अष्टमस्य
अध्यायस्य प्रथमः पादः ॥

---

1. इत्येष ब. 2. तत्रापि ब. 3. भो नास्ति क. 4. आमन्त्रिते क. 5. कर्तव्ये इत्यधिकम् ब. क. इ. ह. 6. हि अकार्ये ब. 7. न नास्ति ब. 8. वाक्यमिदं नास्ति ब. इ. क. 9. विद्यमानत्वात् ब. 10. यज्ञदत्त नास्ति ब, वाक्यमिदं नास्ति ह. 11. हे इत्यधिकम् ब, इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति (वा. सं. 8.43). 12. इडे ब, इडे काम्ये इ. क. ड, ईडचे काम्ये ह. 13. आमन्त्रितानाम् क. इ. 14. पूर्वं इत्यधिकम् क. इ. 15. सामान्यवचनादेव इ. 16. अध्यापक इत्यधिकम् ब. क. इ. ड. 17. भवति इत्यधिकम् ड.

# अष्टमाध्यायस्य
# द्वितीयः पादः

## पूर्वत्रासिद्धम् । (१/१२)

पूर्वत्रासिद्धम् इत्यधिकारोऽयम् आ अध्यायपरिसमाप्तेः । [1]यद् इत ऊर्ध्वमनुक्रमिष्यामः पूर्वत्रासिद्धम् इत्येवं तद् वेदितव्यम् । तत्र येयं [2]सपादसप्ताध्यायी अनुक्रान्ता, एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति । इत उत्तरं च उत्तर उत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति [3]असिद्धवद् भवति । सिद्धकार्यं न करोति इत्यर्थः । तदेत[4]दसिद्धत्ववचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च । अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्यः इत्यत्र [5]य्वलोपस्यासिद्धत्वात्, 'आद् गुणः' (६.१.८७/६९) इति, 'अकः सवर्णे दीर्घः' (६.१.१०१/८५) इति[6] च न भवति । अमुष्मै, अमुष्मात्, अमुष्मिन् इति उत्वस्य असिद्धत्वात् स्मायादयो भवन्ति ।

शुष्किका शुष्कजङ्घा च क्षामिमा[7]नौजढत्तथा ।
मतोर्वत्वे झलां जश्त्वे गुडलिण्मान् निदर्शनम् ॥

शुष्किका इत्यत्र 'शुषः कः' (८.२.५१/३०३०) इत्य[8]स्यासिद्धत्वाद् 'उदीचामातः स्थाने यकपूर्वायाः' (७.३.४६/४६५) इत्येतन्न भवति । शुष्कजङ्घा इति 'न कोपधायाः' (६.३.३७/८३८) इति पुंवद्भावप्रतिषेधो न भवति । क्षामिमान् इति क्षामस्य अपत्यं क्षामिः, [9]क्षामो वा अस्य अस्ति इति क्षामी, क्षामिः क्षामी वा यस्य अस्ति इति क्षामिमान् । [10]क्षायो मः (८.२.५३/३०३२) इत्यस्यासिद्धत्वान् मादुपधायाश्च (८.२.९/१८९७) इति वत्वं न भवति । [11]औजढत् इति वहेर्निष्ठायामूढः, तमाख्यत् इति णिच्, तदन्ताल् [12]लुङः, 'चङि' (६.१.११/२३१५) इति [13]द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्व[14]ढलोपानामसिद्धत्वाण् णौ च यः टिलोपः, तस्य स्थानिवद्भावात् ह्त [15]इत्येतद् द्विरुच्यते । अनग्लोपे (७.४.९३/२३१६) इति [16]प्रतिषेधात् सन्वदित्वं नास्ति, तेन औजढत् इति भवति । [17]औजिढत् इत्येतत् तु क्तिन्नन्तस्य उढिशब्दस्य भवति । गुडलिण्मान् इति गुडलिहोऽस्य सन्ति इति मतुप्, तत्र ढत्वजश्त्वयोरसिद्धत्वात् 'झयः' (८.२.१०/१८९८) इति वत्वं न भवति ।

---

1. यान् ब. 2. सपादा ह. 3. असिद्धवद् भवति नास्ति ब. 4. असिद्धवचनम् क. ह. 5. यवलोपस्य ब. क. 6. दीर्घवचनम् इत्यधिकम् क. 7. औनडादयः क. 8. अत्र क. 9. ततो मतुप् ह. 10. वाक्यमिदं नास्ति क. 11. आजढत् ब, नास्ति क. 12. लुङि चङि ब, ण्यन्ताल् लुङ् ई. 13. द्वित्वे ब. 14. ढलोपादीनाम् इ. क. 15. इति द्विरुच्यते ब. 16. च इत्यधिकम् क.

[1]येऽत्र षष्ठीनिर्देशाः, सप्तमीनिर्देशाः, पञ्चमीनिर्देशाश्च, तेषां 'षष्ठी स्थानेयोगा' (१. १. ४९/३८), 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१. १. ६०/४०), 'तस्मादित्युत्तरस्य' (१. १. ६७/४१)इति[2] च कर्तव्ये नासिद्धत्व भवति, 'कार्यकालं हि सञ्ज्ञापरिभाषम्' (व्या. प. ५८) इति पूर्वत्वमासां परिभाषाणां नास्ति इति। विप्रतिषेधे परम् (१.४.२/१७५) [3]इत्येषा च परिभाषा येन पूर्वेण लक्षणेन सह स्पर्धते, परं लक्षणं तत्प्रति तस्यासिद्धत्वान्न प्रवर्तते। तथा च विस्फोर्यम्, [4]अगोर्यम् इति गुणः परेण 'हलि च' (८.२. ७७/३५४) इति दीर्घत्वेन न बाध्यते। अपवादस्य [5]तु परस्यापि उत्सर्गे कर्तव्ये वचनप्रामण्यादसिद्धत्वं न भवति। तेन [6]दोग्धा, दोग्धुम् इत्यत्र घत्वस्य असिद्धत्वाद् 'हो ढः' (८. २. ३१/३२४) इति [7]न भवति॥

## नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति। (२/३६३)

नलोपः पूर्वत्र असिद्धो भवति सुब्विधौ, स्वरविधौ, सञ्ज्ञाविधौ, तुग्विधौ च कृति। [8]विधिशब्दोऽयं प्रत्येकमभिसम्बध्यमानः [9]स्वरसञ्ज्ञातुकां विधेयत्वात् तैः [10]कर्मषष्ठीयुक्तैः भावसाधनोऽभिसम्बध्यते। सुपा तु सम्बन्ध[11]सामान्यवचनषष्ठ्यन्तेन [12]कर्मसाधनः। तेन सुपः स्थाने यो विधिः, सुपि च [13]परभूते, सर्वोऽसौ सुब्विधिः इति सर्वत्रासिद्धत्वं भवति। सुब्विधौ तावत् राजभिः, तक्षभिः इत्यत्र नलोपस्य असिद्धत्वात् 'अतो भिस ऐस्' (७. १. ९/२०३) इति न भवति। राजभ्याम्, तक्षभ्याम्, राजसु, तक्षसु इति 'सुपि च' (७.३. १०२/) इति, 'बहुवचने झल्येत्' (७. ३. १०३/२०५) इति [14]दीर्घत्वमेत्वं च न भवति।

स्वरविधौ – राजवती इत्यत्र नलोपस्य असिद्धत्वात् '[15]अन्तोऽवत्याः' (६. १.२२०/३७०६) इति[16] न भवति। [17]पञ्चार्मम्, दशार्मम्, इत्यत्र नलोपस्य असिद्धत्वात् 'अर्मे चावर्णं द्व्यच् त्र्यच्' (६. २. ९०/३८२४) इति [18]पूर्वपदस्य आद्युदात्तत्वं न भवति। पञ्चदण्डी इत्यत्र नलोपस्य असिद्धत्वाद् इगन्ते द्विगौ (६. २. २९/३७६३) इति पूर्वपदप्रकृतिस्वरो न भवति।

सञ्ज्ञाविधौ – पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः इति नलोपस्य असिद्धत्वात् 'ष्णान्ता षट्' (१. १. २४/३६९) इति षट्सञ्ज्ञा भवति, ततश्च 'न षट्स्वस्रादिभ्यः' (४. १. १०/३०८) इति टापः प्रतिषेधो भवति। तदेतत् प्रयोजनं कथं भवति? यदि प्रतिकार्यं सञ्ज्ञाप्रवृत्तिः इत्येतद् दर्शनम्। या हि जश्शसोर्लुगर्था षट्सञ्ज्ञा प्रवृत्ता, [19]तया [20]स्त्रीप्रत्ययप्रतिषेधो न क्रियते इति सा पुनः प्रवर्तयितव्या [21]इति।

तुग्विधौ – वृत्रहभ्याम्, वृत्रहभिः [22]इति नलोपस्य असिद्धत्वात् 'ह्रस्वस्य पिति कृति तुक्' (६. १. ७१/२८५८) इति तुग् न भवति। अत्र केचित् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या. प. १२) इति तुकं प्रति नलोपस्य [23]अनिमित्तत्वात्, बहिरङ्गलक्षणेन वा असिद्धत्वात्, तुग्विधिग्रहणमनर्थकम् इति प्रतिपन्नाः। तत् तु क्रियते परिभाषाद्वयस्य अनित्यत्वं ज्ञापयितुम्।

---

1. यत्र क. 2. परस्यापि इत्यधिकम् क. 3. इत्येव तु ब. 4. अवधार्यम् ब. 5. तु नास्ति ब. 6. दोग्धव्यम् क. 7. ढत्वम् इत्यधिकम् इ क. ह. 8. तत्र इत्यधिकम् क. 9. स्वरसंज्ञाविधौ इ. 10. कर्मणि षष्ठी क. 11. सामान्यवचनः ब. 12. कर्मसाधनेन क. 13 परभूतो यो विधिः इ. ह. 14. दीर्घत्वेत्वे न भवतः ब. 15. एतोवत्या ब. 16. उदात्तो इत्यधिकम् क. इ, स्वरो इत्यधिकम् ह. ड. 17. पञ्चानां दशानामित्यत्र ब. 18. पूर्ववत् इ. 19. तयोः ब. 20. स्त्रीप्रत्ययस्य ब. क. ह. 21. इति नास्ति ब. क. 22. इत्यत्र ब. 23. असिद्धत्वात् क. ह.

कृति इति किम्? वृत्रहच्छत्रम्, [1]वृत्रहच्छाया, 'छे च' (६.१.७३/१४६) इति तुग् भवति[2]। अत्र सिद्धे सत्यारम्भो नियमार्थः' (का.प. ६२), एतेष्वेव नलोपो असिद्धो भवति, नान्यत्र। तेन [3]राजीयति, राजायते, राजाश्वः इति ईत्वम्, दीर्घत्वम्, एकादेशश्च [4]सिद्धो भवति ॥

## न मु ने। (३/४३९)

[5]मुभावो नाभावे कर्तव्ये न असिद्धो भवति। किं तर्हि? सिद्ध एव[6]। अमुना। मुभावस्य असिद्धत्वात् [7]घिलक्षणो नाभावो न स्यात्। कृते तु नाभावे मुभावस्य असिद्धत्वात्, 'सुपि च' (७.३.१०२/२०२) इति दीर्घत्वं [8]यत् प्राप्नोति, तत् 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या.प. १२) इति न भवति। अथवा योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम्[9]। अथ वा ने परतो यत् प्राप्नोति तस्मिन् कर्तव्ये मुभावो [10]नासिद्धः इत्येष एवात्र[11] सूत्रार्थः। ने [12]तु कर्तव्ये मुभावस्य यत् सिद्धत्वं तदर्थात् सङ्गृहीतम्। तेनात्र मुभावस्य सिद्धत्वात् नाभावश्च भवति, दीर्घत्वं च न भवति। एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः। किं प्रयोजनम्? अयायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् (म. भा. ३. ३८९)। वृक्ष इदम्, प्लक्ष इदम्। [13]अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयो[14]रेकादेशः। स 'एकादेश उदात्तेनोदात्तः' (८.२.५/३६५८) [15]इत्युदात्तः। तस्य? सिद्धत्वं वक्तव्यम्। आन्तर्यतः अयादेशः उदात्तो यथा स्यात्। आय् – कुमार्या इदम्[16]। कथमिदमुदाहरणम् यदि 'उदात्तयणो हल्पूर्वात्' (६.१.१७४/३७२०) इत्युदात्तत्वे कृते विभक्तेः 'आटश्च' (६.१.९०/२६९) एकादेशः,[17] तदा भवतीदमुदाहरणम्। अथ तु [18]कृते एकादेशे 'उदात्तयणो हल्पूर्वात्' (६.१.१७४/३७२०) इति [19]स्वरः, तदा नैतदस्य प्रयोजनं भवति। आव् – वृक्षाविदम्। प्लक्षाविदम्। एकादेशः स्वरः – गाङ्गेऽनूप इति गाङ्गेशब्दे[20] एकारः[21] 'एकादेश उदात्तेनोदात्तः' (८.२.५/३६५८) इति उदात्तः। तस्य सिद्धत्वात् य पुनः 'एङः पदान्तादति' (६.१.१०९/८६) इति एकादेशः स 'एकादेश उदात्तेनोदात्तः' (८.२.५/३६५८) इति, अत 'स्वरितो वाऽनुदात्ते पदादौ' (८.२.६/३६५९) इत्येतद् भवति। शतृस्वरः – तुदती। [22]नुदती। अदुपदेशात् (६.१.१८६/३७३०) इति लसार्वधातुकानुदात्तत्वे कृते एकादेशः, तदुदात्तस्य सिद्धत्वात् 'शतुरनुमो नद्यजादी' (६.१.१७३/३७१९) अन्तोदात्तात् इत्येष स्वरो भवति। अनुम (६.१.१७३/३७१९) इति प्रतिषेधो [23]ज्ञापकः, एकादेशस्वरः शतृस्वरे सिद्धः इति। नहि [24]सनुम्कं शत्रन्तं किञ्चिद् एकादेशस्वरमन्तरेण अन्तोदात्तमस्ति। [25]एकाननुदात्तः – तुदन्ति। [26]लिखन्ति। एकादेशस्वरस्य सिद्धत्वात् तेन 'अनुदात्तं पदमेकवर्जम्' (६.१.१५८/३६५०) [27]इति वर्ज्यमानता भवति। [28]सर्वानुदात्तः – ब्राह्मणास्तुदन्ति। ब्राह्मणाः लिखन्ति। एकादेशस्वरस्य सिद्धत्वात् कृते तस्मिन् 'तिङङतिङः' (८.१.२७/३९३५) इति निघातो भवति। अन्तरङ्ग इति वचनाद् बहिरङ्गस्य असिद्धत्वमेव, पचतीति, प्रपचतीति।

---

1. बृहच्छाया ब.क. 2. एव इत्यधिकम् ब. 3. राज्ञीयति क. 4. प्रतिसिद्धो ह. 5. मुभावेन क. 6. भवति इत्यधिकम् क.इ. 7. विलक्षणो ब. 8. यत् नास्ति ब. 9. द्रष्टव्यम् इत्यधिकम् ब. क. इ. ह. ड. 10. असिद्धो न भवति ब. 11. अत्र नास्ति ब. 12. तु नास्ति ब, ननु कर्तव्ये क. 13. इत्यत्र ब. क. 14. यः एकदेशः ब.क. 15. इत्युदात्तः नास्ति क. 16. वदामि इत्यधिकम् क. 17. आद्युदात्तो वक्तव्यः इत्यधिकम् ब. 18. यदेकादेशे क. 19. एष इत्यधिकम् क. 20. यः इत्यधिकम् ब. 21. सः इत्यधिकम् ब. 22. तुदन्ती क ह. 23. ज्ञापकम् क, कथं अनुम इति नुम् प्रतिषेधे ज्ञापकम् इ.ह. 24. सनुकम् क. 25. एकाननुदात्तम् क.इ. 26. नुदन्ति ब.इ.ह.ड. 27. इत्यनेन ब. इति अनेकवर्जमनुदात्तं न भवति क. 28. सर्वानुदात्तम् क.इ.

[९०१] संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः। (म.भा. ३.३९१)

किं प्रयोजनम्? 'हरिवो मेदिनं त्वा' (तै. ४.७.१४.४)। हरिवः इति [1]मतुबन्तमेतत्, तत्र 'छन्दसीरः' (८.२.१५/३६००) इति [2]वत्वे, संयोगान्तस्य लोपे च कृते, 'मतुवसो रु सम्बुद्धौ छन्दसि' (८.३.१/३६२८) इति रुत्वम्, तस्य संयोगान्तस्य लोपस्य असिद्धत्वात् 'हशि च' (६.१.११४/१६६) इति उत्वं न प्राप्नोति।

[९०२] '[3]सिज्लोप एकादेशे सिद्धो वक्तव्यः। (म.भा. ३.३९१)

अलावीत्। [4]अपावीत्। 'इट ईटि' (८.२.२८/२२६६) इति [5]सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घत्व [6]भवति।

[९०३] निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः। (म.भा. ३.३९२)

[7]वृक्णः। वृक्णवान्। निष्ठादेशस्य सिद्धत्वात् झलि (८.२.३६/२९४) इति षत्वं न भवति। कुत्वं तु प्रति असिद्ध एव इति तद् भवति। स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते। तत्र [8]च निपातनमनेकधा [9]समाश्रीयते। यदा क्षीबेर्निष्ठायाम् इटि कृते इत्शब्दलोपो निपात्यते, तदा क्षीबः इति सञ्ज्ञायाम् इत्शब्दलोपस्य असिद्धत्वात् 'निष्ठा च द्व्यजनात्' (६.१.२०५/३६९३) इत्येष स्वरो न प्राप्नोति, क्षीबेन तरति क्षीबिकः इति द्व्यज्लक्षणष्ठन् न प्राप्नोति। [10]यदा तु तकारलोपो निपात्यते, तदा तस्यासिद्धत्वात् इडागमः प्राप्नोति।

[९०४] प्लुतविकारस्तुग्विधौ [11]छे सिद्धो वक्तव्यः। (म.भा. ३. ३९३)

अग्ना३इच्छत्रम्। पटा३उच्छत्रम्। प्लुतविकारस्य असिद्धत्वात् 'छे च' (६.१.७३/१४६) इति ह्रस्वलक्षणो नित्यस्तुग् न [12]प्राप्नोति[13]।

[९०५] श्चुत्वं धुटि सिद्धं वक्तव्यम्। (म.भा. ३.३९३)

'श्च्युतिर् क्षरणे' (धा.पा. ४१) [14]इत्ययं धातुः [15]सकारादिः पठ्यते, तस्य श्चुत्वस्य असिद्धत्वात् [16]अट् श्च्योतति, रट् श्च्योतति इति 'ङः सि धुट्' (८.३.२९/१३१) इति [17]प्राप्नोति। अटति इति अड्, रटति इति रड्, [18]क्विबन्तोऽयम्। किमर्थं [19]पुनः सकारादिः पठ्यते? [20]इह मधु श्च्योतति इति मधुश्च्युत्, [21]क्विबन्तः, मधुश्च्युतमाचष्टे इति णिच्, [22]मधुश्च्ययति, मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः, संयोगान्तत्वाद्

---

1. मतुबन्तम् आमन्त्रितान्तमेतत् क.इ. 2. वत्वं इ.ह. 3. सिलोपः क. 4. नास्ति ब. 5. सिलोपस्य क. 6. न प्राप्नोति ब.क.इ.ह.ड. 7. नास्ति क. 8. हि ब. 9. समाश्रितम् ब. 10. यदत्र नकारलोपो क. 11. छे नास्ति क. 12. स्यात् क. 13. तस्यासिद्धत्वात् न भवति इत्यधिकम् इ 14. इति नास्ति क. 15. शकारादिः क. 16. अति इङः च्योतति क. 17. धुट् इत्यधिकम् ब.क.ड. 18. क्विबन्तावेतौ ब.क.इ.ह.ड. 19. पुनरयं ब.क. 20. इह – क्विबन्तः नास्ति ब. 21. क्विबन्तम् क. 22. मधुश्च्युतयति. मधुश्च्युतयतेः क.

यलोपः, चकारस्य कुत्वम्, मधुग् इति [1]सिद्धम् । शकारादौ पुनरेतस्मिन् संयोगान्तलोपेन [2]यकारचकारयोः लुप्तयोः शकारस्य षत्वे सति मधुड् इति स्यात् ।

[९०६] अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये । (म. भा. ३. ३९३)

बभणतुः । बभणुः । [3]अभ्यासजश्त्वस्यासिद्धत्वात् अनादेशादेः इति एत्वं प्राप्नोति । [4]छिदेः विचिच्छित्सति, [5]उच्छेः उचिच्छिषति इति अभ्यासादेशस्य असिद्धत्वात् 'छे च' (६.१.७३/१४६) इति तुक् न प्राप्नोति ।

[९०७] द्विर्वचने [6]परसवर्णत्वं सिद्धं वक्तव्यम् । (म. भा. ३. ३९३)

सयँ् यँ् यन्ता, सवँ् वँ् वत्सरः, [7]यलँ् लँ् लोकम्, तलँ् लँ्लोकम् इति परसवर्णस्यासिद्धत्वाद् यरः (८. ४. ४७/४८ ) इति द्विर्वचनं न स्यात् ।

[९०८] [8]पदाधिकारश्चेल् लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि । (म. भा. ३. ३९३)

लत्वम् – गलो गलः, गरो गरः । घत्वम् – द्रोग्धा द्रोग्धा । ढत्वम् – द्रोढा द्रोढा । नत्वम् – नुन्नो नुन्नः, नुत्तो नुत्तः । रुत्वम् – अभिनोऽभिनः, अभिनदभिनत् । षत्वम् – मातुःष्वसा मातुःष्वसा, मातुःस्वसा मातुःस्वसा । पितुःष्वसा पितुःष्वसा, पितुःस्वसा पितुःस्वसा । णत्वम् – माषवापाणि माषवापाणि, माषवापानि माषवापानि । अनुनासिकम् – वाङ्नयनं वाङ्नयनम्, वाग्नयनं वाग्नयनम् । छत्वम् – वाक्च्छयनं वाक्च्छयनम्, वाक्शयनं वाक्शयनम् । लत्वादीनां [9]विकल्पितानामसिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टाद् [10]विकल्पे सति गरो गलः, गलो गरः इत्येवं रूपमपि द्विरुक्तं स्यात् । तदेतत् सर्वं न मु ने इति [11]योगविभागेन साध्यते । न इत्येतावदनिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम् । ततो मु ने इति । [12]नेत्येतदनुवर्तते ॥

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । (४/३६६७)

उदात्तयणः स्वरितयणश्च परस्या[13]नुदात्तस्य स्वरितः आदेशो भवति । उदात्तयणः – कुमार्यौ । कुमार्यः । उदात्तनिवृत्तिस्वरेण अयमीकारः उदात्तः, तस्य स्थाने यणादेशः [14]स उदात्तयण्[15], तस्मात् परस्य अनुदात्तस्य स्वरितः आदेशो भवति । स्वरितयणः – सकुल्ल्व्याशा । खलप्व्याशा । सकुल्लूः, खलपूः इति कृत्स्वरेण [16]अन्तोदात्तौ, तयोः 'रोः सुपि' (८. ३. १६/३३९) इति यणादेशः, स उदात्तयण्, ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य [17]यणादेशः स्वरितयण्, तस्मात् स्वरितयणः परस्य आशा[18]शब्दाकारस्य अनुदात्तस्य स्वरितो[19]

---

1. भवति क. 2. शकारचकारयोः ब. 3. अभ्यासादेशस्य ब. इ. 4. छिदेः नास्ति क. 5. उच्छेः नास्ति क. 6. परसवर्णः सिद्धो वक्तव्यः क. 7. नास्ति ब. 8. पदाधिकारस्य क. 9. विकल्पेनापि सिद्धत्वात् क. 10. अनिष्टो हि तद्विकल्पः प्राप्नोति ब. 11. योगविभागात् सिध्यति क. 12. तत्र न इत्यनुवर्तते फ. 13. स्वरस्य इत्यधिकम् क. 14. स नास्ति ब. इ. ह. 15. भवति इत्यधिकम् क. इ. 16. अन्तोदात्तः क. 17. यो अण् इ. ह. 18. शब्दस्य अकारस्य क. 19. आदेशो इत्यधिकम् क. ह.

भवति। ननु च सप्तम्येकवचनस्य यदुदात्तयणः इति स्वरितत्वम्, तदसिद्धं [1]यणादेशे, तत् कथमयं [2]स्वरितयण् भवति? आश्रयात् [3]सिद्धत्वं भविष्यति। यदि एवम्, 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६/३६६०) [4]इत्येतस्यापि आश्रयात् [5]सिद्धत्वं प्राप्नोति, ततश्च [6]दध्याशा इत्यत्रापि स्वरितः स्यात्? तस्माद् अयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः। केचित् तु ब्रुवते, उदात्तात् स्वरितयणोऽपि परस्य अनुदात्तस्य स्वरितत्वं दृश्यते। तथा [7]च तैत्तिरीयके शाखान्तरे पठ्यते—'यास्ते [8]विश्वाः समिधः सन्त्यग्ने' (तै. ३.५.५.३) [9]इति। अग्ने इत्ययमकारः स्वरितः पठ्यते। तथा [10]ब्राह्मणेऽपि 'दध्याशयति' (तै.ब्रा. १.७.६.५) इत्याकारः स्वरितः पठ्यते इति। यथा तु वार्तिकं भाष्यं च, तथा उदात्तात् स्वरितयणः परस्य [11]अनुदात्तस्य अनेन स्वरितत्वं न भवति इति स्थितम्। तथा च भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते। सकृल्ल्व्याशा [12]इत्येवमादौ उदात्तयणः इत्येव स्वरितस्य सिद्धत्वात्। स्वरित[13]यण्व्यवधानमव्यवधानमेव, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (व्या. प. ३७) इति। तत [14]तु क्रियते, पूर्वस्मादपि विधौ स्थानिवद्भावात् व्यवधानमस्ति[15], स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते इति। उदात्तस्वरितयोः इति किम्? बैदी आशा बैद्याशा। शार्ङ्गरव्याशा। [16]अनुदात्तयणादेशोऽयम्। अनुदात्तस्य इति किम्? कुमार्यत्र। किशोर्यत्र। अत्र इत्ययमाद्युदात्तो लित्स्वरेण॥

## एकादेश उदात्तेनोदात्तः। (५/३६५८)

उदात्तेन सह अनुदात्तस्य य एकादेशः स उदात्तो भवति। [17]अनुदात्तस्य इति [18]वर्तते। [19]अग्नी। वायू। वृक्षैः। प्लक्षैः। उदात्तेन इति किम्? पचन्ति। [20]यजन्ति। लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोः अयमेकादेशः[21], [22]पररूपे कर्तव्ये स्वरितस्यासिद्धत्वात्॥

## स्वरितो वाऽनुदात्ते पदादौ। (६/३६५९)

अनुदात्ते पदादौ[23] उदात्तेन सह य एकादेशः स स्वरितो [24]वा भवति उदात्तो वा। सु उत्थितः—सूत्थितः, सूत्थितः। वि ईक्षते—वीक्षते, वीक्षते। वसुकः असि—वसुकोऽसि, वसुकोऽसि। सूत्थितः इति सुशब्दः 'सुः पूजायाम्' (१.४.९४/५५५) इति [25]कर्मप्रवचनीयः, तस्य प्रादित्वात् समासे सति अव्ययपूर्वप्रकृति[26]स्वरत्वेन आद्युदात्तः, शेषमनुदात्तम् [27]इति च अनुदात्ते पदादौ एकादेशो भवति। वीक्षते, वसुकोऽसि इत्यत्रापि

---

1. यणादेशस्य ब. 2. स्वरितस्य यण क. 3. सिद्धम् क, आश्रयासिद्धत्वे ह. 4. इत्यस्यापि इ. ब. 5. सिद्धत्वं नास्ति क. 6. दध्याशयति क. 7. हि ब. 8. विशाखा ब, विश्वा समिधः क. 9. नास्ति क. 10. ब्राह्मणोऽपि इ. 11. अनुदात्तस्य नास्ति ब. 12. खलप्वाशा इत्यधिकम् क. 13. यणा च ब. 14. तु नास्ति ब, न क. 15. इति इत्यधिकम् क. इ. ह. 16. वाक्यमिदं नास्ति क. 17. वाक्यमिदं नास्ति ब. ह. 18. निवर्तते क. 19. अग्नि औ अग्नी। वायु औ वायू। वृक्षौ, प्लक्षौ। ड. 20. नास्ति ब. 21. स्वरितो वाऽनुदात्ते पदादौ इत्यधिकम् ब. 22. वाक्यमिदं नास्ति ब. इ. ड. ह. ह. 23. परतः इत्यधिकम् क. ब. ह. ड. 24. वा नास्ति ब. 25. कर्मप्रवचनीयसञ्ज्ञः ब. ह. 26. स्वरेण ब. 27. तेन क. ब, च नास्ति क.

'तिङ्ङतिङः' (८.१. २७/३९३५) इति निघाते कृतेऽनुदात्ते पदादावेकादेशः। स्वरितग्रहणं [1]विस्पष्टार्थम्। उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव स्वरितो भविष्यति इति। अनुदात्ते इति किम्? देवदत्तोऽत्र। पदादौ इति किम्? वृक्षौ। वृक्षाः[2]॥

## नलोपः प्रातिपदिकान्तस्य। (७/३८३)

[3]पदस्य इति वर्तते। प्रातिपदिकस्य पदस्य योऽन्त्यो नकारः तस्य लोपो भवति। राजा। राजभ्याम्। राजभिः। [4]राजता। राजतरः। राजतमः। [5]प्रातिपदिकग्रहणं किम्? अहन्नहिम्। अन्तग्रहणं किम्? राजानौ। राजानः। प्रातिपदिकग्रहणमसमस्तमेव सुपां सुलुक् (७.१.३९/३५२१) इति [6]षष्ठ्या लुका निर्दिष्टम्।

[९०९] अह्नो नलोपप्रतिषेधो वक्तव्यः। (म. भा. ३. ३९४)

अहः। अहोभ्याम्। अहोभिः। 'रोऽसुपि' (८. २. ६९/१७२), 'अहन्' (८. २. ६८/४४३) [7]इति रेफरुत्वयोरसिद्धत्वात् नलोपः प्राप्नोति, सावकाशं तदुभयं सम्बुद्धौ, हेऽहः, हे दीर्घाहो निदाघेति? [8]तत्र समाधिमाहुः। अहन् इति [9]रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतनलोपं तदावर्त्यते, तत्र एकया आवृत्त्या तदेवं रूपं नलोपाभावार्थम् अन्वाख्यायते, द्वितीययापि तस्य रुः विधीयते[10]॥

## न ङिसम्बुद्ध्योः। (८/३८२)

[11]ङौ परतः सम्बुद्धौ च नकारलोपो न भवति। '[12]आर्द्रे चर्मन्' (तै. ७. ५. ९३)। 'लोहिते चर्मन्' (काठ. २४. २)। सुपां लुक् (७.१.३९/३५६१) इति [13]ङेर्लुक्। सम्बुद्धौ – हे राजन्। हे तक्षन्। [14]एतस्मादेव नलोपप्रतिषेधवचनात् अप्रत्ययः (१. २. ४५/२७८) इति प्रत्ययलक्षणेन प्रातिपदिकसञ्ज्ञा न प्रतिषिध्यते इति ज्ञाप्यते, [15]भसञ्ज्ञा च न भवति इति। तथा च राज्ञः पुरुषः राजपुरुषः इत्यत्र नलोपश्च भवति, अल्लोपश्च न भवति।

[९१०] ङावुत्तरपदे [16]प्रतिषेधस्य प्रतिषेधो वक्तव्यः। (म.भा. ३. ३९४)

चर्मणि तिला अस्य चर्मतिलः[17]। हे राजन् वृन्दारक इत्यत्र [18]समुदायार्थसम्बोधनम्, न पूर्व[19]पदार्थसम्बोधनं प्रतीयते इति सम्बुद्ध्यन्तं पूर्वपदं नैव समस्यते।

[९११] वा नपुंसकानामिति वक्तव्यम्। (म. भा. ३. ३९५)

हे चर्मन्, हे चर्म॥

---

1. तु इत्यधिकम् इ. 2. वृक्षैः प्लक्षैः इत्यधिकम् ब. 3. वाक्यमिदं नास्ति ब.क.ह. 4. राजत्वम् ह. ड. 5. इमे द्वे वाक्ये न स्तः ह. 6. षष्ठीलुका ब, षष्ठ्या लुका निर्देशः क, षष्ठ्यालुकादिनिर्दिष्टम् ह. 7. इति नास्ति क. 8. केचिदाहुः क.ह. 9. रुविधौ नास्ति ब. 10. इति इत्यधिकम् ब.क.ह. 11. पूर्वेण प्रवृत्तो नलोपः अतिदिश्यते इत्यधिकम् ड. 12. ङौ इत्यधिकम् ड. 13. विभक्तेर्लुक् क. 14. अस्मादेव ब.ड. 15. पदसञ्ज्ञा ड. 16. प्रतिषेधस्य नास्ति ब. ह. 17. अध्वनि विद्धः अध्वविद्धः। सामनि शौण्डः सामशौण्डः इत्यधिकम् ड. 18. समुदायार्थः समुच्चयार्थः इ. 19. पूर्वपदार्थः क.ब.ड.

## मादुपधायाश्च मतोर्वोऽयवादिभ्यः । (९/१८९७)

मतोः इह कार्यित्वेन उपादानात् सामर्थ्यलब्धं [1]प्रातिपदिकं तत् मात् इति मकारावर्णाभ्यां [2]विशिष्यते । मकारावर्णविशिष्टया च उपधया इत्ययमर्थो भवति । मकारान्तात् मकारोपधात् अवर्णान्तादवर्णोपधात् च उत्तरस्य मतोः वः इत्ययमादेशो भवति, यवादिभ्यस्तु [3]परतो न भवति । मकारान्तात् तावत्–किंवान् । शंवान् । मकारोपधात् – शमीवान् । दाडिमीवान् । अवर्णान्तात् – वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । अवर्णोपधात् – पयस्वान् । यशस्वान् । भास्वान् । मादुपधायाश्च इति किम् ? अग्निमान् । [4]वायुमान् । अयवादिभ्यः इति किम् ? यवमान् । [5]दल्मिमान् । ऊर्मिमान् ।

यव । [6]दल्मि । ऊर्मि । [7]भूमि । [8]कृमि । क्रुञ्चा । [9]वशा । [10]द्राक्षा । एतेषां मादुपधायाश्च (८.२.९/१८९७) । इति प्राप्नोति । ध्रजि, ध्वजि, [11]सञ्जि इत्येतेषां 'छन्दसीरः' (८.२.१५/३६००) इति । हरित्, ककुत्, गरुत् इत्येतेषां 'झयः' (८.२.१०/१८९८) इति[12] । [13]इक्षु, मधु, द्रुम, मण्ड, धूम इत्येतेषां 'सञ्ज्ञायाम्' (८.२.११/१८९९) इति[14] । आकृतिगणश्च यवादिः ।

[15]अकृतवत्त्वो मतुब् यवादिषु द्रष्टव्यः । यस्य सति निमित्ते मतुपो वत्वं [16]न दृश्यते स [17]यवादिषु द्रष्टव्यः इह [18]नृमतः इदं नार्मतम् इति बहिरङ्गलक्षणत्वात् [19]अवर्णोपधस्य मतुपो वत्वं न भवति[20] ॥

## झयः । (१०/१८९८)

झयन्तादुत्तरस्य मतोः वः इत्ययमादेशो भवति । अग्निचित्वान् ग्रामः[21] । विद्युत्वान् बलाहकः । '[22]इन्द्रो मरुत्वान्' (आ.श्रौ. ८.१६.१) । दृषद्वान् [23]देशः ॥

## सञ्ज्ञायाम् । (११/१८९९)

सञ्ज्ञायां विषये मतोः वः इत्ययमादेशो भवति । अहीवती । कपीवती । ऋषीवती । [24]मुनीवती ॥

---

1. पूर्वप्रातिपदिकम् क. 2. विशेष्यते क. ड. 3. परस्य नास्ति क. 4. नास्ति ब. 5. रश्मिमान् क, नास्ति ड. 6. रश्मि ब, नास्ति ड. 7. जालिमः ड. 8. क्रिमिः ब, नास्ति ड. 9. चण्डा ब. 10. स्त्राक्षा ह. 11. सिञ्जि ब. 12. प्राप्नोति इत्यधिकम् ब. 13. ईकु इ. 14. प्राप्नोति इत्यधिकम् ब. 15. वाक्यमिदं नास्ति ब. 16. न नास्ति इ. 17. यवादिः ब. 18. तु इत्यधिकम् इ. 19. अवर्णोपधत्वस्य इ. 20. यव दल्भि ऊर्मि भूमि कृमि क्रुञ्चा वत्सा द्राक्षा व्रजि ध्वजि विजि मिनि सिजि सजि हरित् मरुवत् कुरुवत् कुरुत् नुरुत् मरुत् इक्षु द्रु मधु आकृतिगणोऽयम् इत्यधिकम् ड. 21. उदश्वित्वान् घोषः इत्यधिकम् क. 22. इन्द्रो मरुत्वान् सोमस्य पिबतु ह. 23. पर्वतः क. इ. ह. 24. नास्ति ह.

## आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । (१२/१०००)

आसन्दीवत् अष्ठीवत् चक्रीवत् कक्षीवत् रुमण्वत् [1]चर्मण्वती इत्येतानि सञ्ज्ञायां निपात्यन्ते । [2]वत्वं पूर्वेणैव सिद्धम्, आदेशार्थानि निपातनानि । आसन्दीवत् इति आसनशब्दस्य[3] आसन्दीभावो निपात्यते । आसन्दीवान् ग्रामः । आसन्दीवदहिस्थलम् । आसनवान् इत्येवान्यत्र । अपरे [4]तु आहुः, [5]आसन्दीशब्दो[6]ऽपि प्रकृत्यन्तरमेवास्ति, तथा चोक्तम्, [7]औदुम्बरी राजासन्दी भवति इति । [8]तस्य 'सञ्ज्ञायाम्' (८.२.११/१८९९) इति [9]वत्वेन सिद्धम् । आसन्दीवत् इत्येतत् प्रपञ्चार्थमिह पठ्यते[10] । अष्ठीवत् इति अस्थ्नोऽष्ठीभावः । अष्ठीवान् इति शरीरैकदेशसञ्ज्ञा । अस्थिमान् इत्येवान्यत्र । चक्रीवत् इति चक्रशब्दस्य चक्रीभावो निपात्यते । चक्रीवान् राजा । चक्रवान् इत्येवान्यत्र । '[11]चक्रीवन्ति सदो हविर्धानानि भवन्ति' (कात्या. श्रौ. सू. २४. ३. २६) इत्येतत् तु छान्दसत्वाद् अनुगन्तव्यम् । कक्षीवत् इति कक्ष्यायाः सम्प्रसारणं निपात्यते । कक्षीवान् नाम ऋषिः । कक्ष्यावान् इत्येवान्यत्र । रुमण्वत् इति लवणशब्दस्य रुमण्भावो निपात्यते[12] । लवणवान् इत्येवान्यत्र । अपरे तु आहुः, रुमन् इति प्रकृत्यन्तरमस्ति, तस्य एतन्निपातनं नकारलोपाभावार्थम्, णत्वार्थं च । मतोर्वा [13]नुडर्थम् इति । चर्मण्वती इति चर्मणो नलोपाभावो णत्वं च निपात्यते । मतोर्वा नुडागमः । चर्मण्वती नाम नदी । चर्मवती इत्येवान्यत्र ॥

## उदन्वानुदधौ च । (१३/१००१)

उदन्वान् इति उदकशब्दस्य मतावुदन्भावो निपात्यते उदधावर्थे, सञ्ज्ञायां विषये च । उदन्वान् नाम ऋषिः यस्य औदन्वतः पुत्रः । उदधौ उदन्वान् । यस्मिन्नुदकं धीयते स एवमुच्यते । उदधौ इति किम् ? उदकवान् घटः इत्यत्र तु [14]दधात्यर्थो न विवक्ष्यते । किं तर्हि ? [15]उदकसत्ता[16]सम्बन्धसामान्यम् ॥

## राजन्वान् सौराज्ये । (१४/१००२)

राजन्वान् इति निपात्यते सौराज्ये गम्यमाने । शोभनो राजा [17]यस्मिन्निति स राजन्वान् देशः । राजन्वती पृथ्वी । राजवान् इत्येवान्यत्र[18] ॥

## छन्दसीरः । (१५/३६००)

छन्दसि विषये इवर्णान्ताद् रेफान्ताच् चोत्तरस्य मतोर्वत्वं भवति । इवर्णान्तात् तावत् – 'त्रिवती याज्यानुवाक्या भवति' (काठ. ११.१) । 'हरिवो मेदिनं त्वा' (तै. सं. ४. ७. १४. ४) । '[20]अधिपतिवती जुहोति'

---

1. चर्मण्वत् क. 2. वाक्यमिदं नास्ति क. 3. केचिद् आसन्दीभावं निपातयन्ति क.इ. 4. पुनर् क.इ. 5. आसन्दीशब्दः प्रकृत्यन्तरं विद्यते इति क.इ, आसन्दीब्दः आसनपर्यायः प्रकृत्यन्तरं विद्यते ह. 6. अपि नास्ति इ. 7. औदुम्बर्यासन्दी इ.ड. 8. तस्यैव क.ह. 9. वचनसिद्धम् क. 10. इति इत्यधिकम् क.इ.ह. 11. चक्रीवन्तं शब्दो हविर्दानानि क. 12. रुमण्वान् नाम पर्वतः इत्यधिकम् क.इ. 13. नुडागमः क.इ. 14. धात्वर्थो क.इ. 15. उदकस्य सत्तासम्बन्धसामान्यम् ब. 16. सम्बन्धमात्रम् ड. 17. देशे इत्यधिकम् ह, यस्मिन्नस्ति क. 18. भवति इत्यधिकम् ब.क. 19. त्रिवतीर्याज्यानुवाक्या भवन्ति (का. 11. 1) 20. अधिपतिवतीर्भवन्ति (काठ. 21.3)

चरुरग्निवानिव । [1]आ रेवानेतु मा विशत् । रयेर्मतौ इति सम्प्रसारणम् । सरस्वतीवान् भारतीवान् (मै. ३.१०.६) । दधीवांश्चरुः । 'छन्दसि सर्वे विधयो विकल्प्यन्ते' (पु. प. ३५) इति इह न भवति, सर्पर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्य ते द्यावापृथिवीमन्तम् इति । रेफान्तात् – गीर्वान् । धूर्वान् । आशीर्वान् ॥

## अनो नुट् । (१६/३६०१)

[2]छन्दसि इति वर्तते । अनन्तादुत्तरस्य मतोः नुडागमो भवति छन्दसि विषये । 'अक्षण्वन्तः कर्णवन्तः सखायः' (ऋ. १०.७१.७) । 'अस्थन्वन्तं यदनस्था बिभर्ति' (ऋ. १.१६४.४) । अक्षण्वता लाङ्गलेन । 'शीर्षण्वती' (अ. वे. १०.१.२) । '[3]मूर्धन्वती' (तै. २.६.२.२) । नुटः असिद्धत्वात् तस्य च वत्वं न भवति, [4]ततः परस्य च भवति ॥

## नाद् घस्य । (१७/३६०२)

नकारान्तात् उत्तरस्य घसञ्ज्ञकस्य नुडागमो भवति छन्दसि विषये । [5]सुपथिन्तरः । [6]दस्युहन्तमः ।

[९१२] भूरिदाव्नस्तुड् वक्तव्यः । (म. भा. ३.३९८)

'भूरिदावत्तरः'[7] (ऋ. ८.५.३९) ।

[९१३] ईद् रथिनः । (म. भा. ३.३९८)

रथिनः ईकारान्तादेशो घे परतः । 'रथीतरः' (ऋ. १.८४.५) । रथशब्दादेव वा मत्वर्थीयोऽयमीकारः [8]छन्दसीवनिपौ इति ॥

## कृपो रो लः । (१८/२३५०)

[9]कृपेः धातोः रेफस्य लकारादेशो भवति । रः इति श्रुतिसामान्यमुपादीयते । तेन यः केवलो रेफो, यश्च ऋकारस्थः, तयोर्द्वयोरपि ग्रहणम्[10] । लः इत्यपि सामान्यमेव[11] । ततो[12]ऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते । ऋकारस्याप्येकदेशविकारद्वारेण लृकारः, [13]एवं च 'लुटि च क्लृपः' (१.३.९३/२३५१) इत्येवमादयो निर्देशा उपपद्यन्ते । कल्प्ता । कल्प्तारौ । कल्प्तारः । [14]चिक्लृप्सति । क्लृप्तः । क्लृप्तवान् । कृपा इत्येतत्[15] 'ऋपेः सम्प्रसारणं च' (ग. सू. ३६) इति भिदादिषु पाठाद् भवति । तस्य हि कृतसम्प्रसारणस्य लाक्षणिकत्वात् इह कृपः इति ग्रहणं नास्ति । कृपण[16]कृपीटकर्पूरादयोऽपि ऋपेरेव द्रष्टव्याः । 'उणादयो बहुलम्' (३.३.१/३१६९) इति वा कृपेरेव[17] लत्वाभावः ।

---

1. वैदर्भस्तवे आरेवान्येग्निनुमो विशन् क, आरेवानिन्द्र ब्राविशत् इ. 2. वाक्यमिदं नास्ति ह. ब. क. 3. मूर्धन्वतीरुपदधाति ह. 4. ततः नास्ति ड. 5. सुपथितरः सुपथितमः क. 6. दस्युहन्तमम् ऋ. 6-16-15 7. भूरिदावत्तमः इत्यधिकम् इ. क. 8. छन्दसि निपातितः ब. 9. छन्दसि इति निवृत्ताम् इत्यधिकम् ब. ह. 10. भविष्यति इत्यधिकम् इ, भवति इत्यधिकम् ह. 11. उपादीयते इत्यधिकम् क. ड. 12. विज्ञायते इत्यधिकम् ब. 13. तथा क. ड. 14. चिक्लप्सति क. ह. ड. 15. तु इत्यधिकम् क. 16. कृपाण इत्यधिकम् क. ड. 17. एव नास्ति इ.

[९१४] वालमूललघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम् । (म.भा. ३.३९८)

वालः, वारः । मूलम्, मूरम् । लघु, रघु । असुरः, असुलः । अलम्, अरम् । अङ्गुलिः, अङ्गुरिः ।

[९१५] [1]कपिलकादीनां सञ्ज्ञाछन्दसोर्वा रो लमापद्यत इति वक्तव्यम् । (म.भा. ३.३९८)

कपिरकः, कपिलकः । [2]तिल्पिलीकम्, तिर्पिरीकम् । लोमानि, रोमाणि । पांशुरम्, पांशुलम् । कर्म, कल्म । [3]शुक्रः, शुक्लः । रलयोरेकत्वस्मरणम् इति केचित् । किमिदमेकत्वस्मरणमिति ? समानविषयत्वमेव तयोः स्मर्यते इत्यर्थः ॥

## उपसर्गस्यायतौ । (१९/२३२६)

अयतौ परतः उपसर्गस्य यो रेफः तस्य लकारः आदेशो भवति । प्लायते । पलायते । अत्र [4]च योऽयमेकादेशः, तस्य स्थानिवद्भावाद् अयतेः उपसर्गस्य [5]च विभागे सति, यदि अयतिग्रहणं [6]रेफस्य विशेषणम्, तदा 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' (व्या. प. ४६ ) [7]इति एकेन वर्णेन व्यवधानेऽपि [8]लत्वं भवति । तथा च [9]पल्ययते इत्यत्रापि [10]भवति । उपसर्गविशेषणे तु अयतिग्रहणे सिद्धमेवैतत् सर्वम्, प्रतेरपि [11]तु व्यवहितेऽपि प्राप्नोति । तत्र केषांचिद् [12]दर्शनं भवितव्यमेव प्लत्ययते इति । प्रथमपक्षदर्शनाभिनिष्टास्तु प्रत्ययते इत्येव [13]भवति इति मन्यन्ते । अपरे [14]तु प्रतिशब्दोपसृष्टस्य अयतेः प्रयोगमेव नेच्छन्ति । निस् दुस् इत्येतयोस्तु रुत्वस्यासिद्धत्वाल् [15]लत्वेन नैव भवितव्यम् । [16]निरयणम् । दुरयणम् ॥

## ग्रो यङि । (२०/२६३९)

गॄ इत्येतस्य धातोः रेफस्य लकार आदेशो भवति यङि परतः । [17]निजेगिल्यते, निजेगिल्येते, [18]निजेगिल्यन्ते । भावगर्हायां [19]ग्रो यङ विहितः[20] । केचिद् ग्रः इति गिरतेः गृणातेश्च [21]सामान्येन ग्रहणम् इच्छन्ति । अपरे तु गिरतेरेव, [22]न गृणातेः । गृणातेर्हि यङेव नास्ति, अनभिधानाद् इति । यङि इति किम् ? निगीर्यते ॥

## अचि विभाषा । (२१/२८४१)

अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा [23]लकारादेशो भवति । निगिरति, निगिलति । [24]निगरणम्, निगलनम् । निगारकः, निगालकः । इयं तु व्यवस्थितविभाषा । तेन गलः इति प्राण्यङ्गे नित्यं लत्वं भवति,

---

1. कपिरकादीनाम् क. 2. तिल्पिलीकः, तिल्पिरीकः इ. 3. शुक्रः शुक्लः नास्ति क.इ. 4. च नास्ति क.इ.ब. 5. चाविभागे ब. 6. रेफविशेषणम् क. 7. इति नास्ति इ. 8. सति इत्यधिकम् क. 9. प्रत्ययते क. 10. प्रवर्तते क.इ, प्रवर्तयते ह. 11. तु नास्ति ब. 12. दर्शने क. 13. भवितव्यम् क.इ.ब.ह. 14. पुनः क. 15. लत्वं नैव भवति इति ह. 16. उदाहरणमिदं नास्ति क.ह. 17. निजेगल्यते इ. 18. नास्ति ह. 19. ग्रो नास्ति ह. 20. इत्वे कृत्वे रपरत्वे च दीर्घस्य असिद्धत्वात् नित्यत्वाच्च लत्वे कृते तन्निमित्तत्वाभावात् दीर्घत्वं न भवति इत्यधिकम् क. 21. सामान्येन नास्ति इ. 22. न गृणातेः नास्ति ब. 23. लकार आदेशः क. इ. 24. निगिरणं निगिलनम् ह.

गरः इति विषे नित्यं न भवति। निगार्यते, निगाल्यते इति णिलोपस्य स्थानिवद्भावात् 'अचि विभाषा' इति लत्वविकल्पः। 'पूर्वत्रासिद्धे न स्थानिवत्' (पु.वृ. ११२) इति एतदपि सापवादमेव, तस्य दोषः संयोगादिलोप[1]लत्वणत्वेषु इति[2]। अन्तरङ्गत्वाद् वा कृते लत्वविकल्पे णिलोपो भविष्यति। गिरौ, गिरः इत्यत्र धातोः स्वरूपग्रहणे तत्प्रत्यये [3]कार्यविज्ञानम् इति लत्वं न भवति। [4]गिरतिर्वा लत्वविधावधिकृतः, गृणातेरेतद् रूपम्॥

## परेश्च घाङ्कयोः। (२२/३२६२)

परि इत्येतस्य यो रेफः तस्य घशब्दे अङ्कशब्दे च परतो विभाषा लकार आदेशो भवति। परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः। घ इति स्वरूपग्रहणमत्रेष्यते, न तरप्तमपौ (१.१.२२/२००३) इति।

[९१६] योगे चेति वक्तव्यम्। (म. भा. ३.४००)

परियोगः, पलियोगः॥

## संयोगान्तस्य लोपः। (२३/५४)

संयोगान्तस्य पदस्य लोपो भवति। गोमान्। [5]यवमान्। कृतवान्। हतवान्। इह [6]श्रेयान्, भूयान् इति रुत्वम् परम् अपि असिद्धत्वात् [7]संयोगान्तस्य लोपं न बाधते। जश्त्वे तु नाप्राप्ते तदारभ्यते इति तस्य बाधकं [8]भवति, यशः, पयः इति। दध्यत्र, मध्वत्र, इत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् संयोगान्तलोपो न भवति[9]॥

## रात् सस्य। (२४/३८०)

[10]संयोगान्तपदस्य यो रेफः तस्मादुत्तरस्य [11]अन्तस्य सकारस्य लोपो भवति। गोभिरक्षाः। 'प्रत्यञ्चमत्साः' (ऋ. १०.२८.४)। क्षरतेः त्सरतेश्च लुङि सिचः छान्दसत्वाद् ईडभावः 'बहुलं छन्दसि' (७.३.९७/३५८६) इति वचनात्। [12]दीर्घे सति रूपमेतत्। मातुः, पितुः इति 'ऋत उत्' (६.१.१११/२७९) इति उत्वे कृते रपरत्वे च सति 'रात् सस्य' इति सलोपः[13]। सिद्धे सत्यारम्भो नियमार्थः, रात् सस्य एव लोपो भवति, नान्यस्य इति। ऊर्जेः [14]क्विप् – ऊर्क्। मृजेः लङि – अमार्ट्॥

## धि च (२५/२२४९)

[15]धकारादौ प्रत्यये परतः [16]सकारस्य लोपो भवति। अलविध्वम्, अलविढ्वम्। अपविध्वम्, अपविढ्वम्। यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च[17] 'विभाषेटः' (८.३.७९/२३२५) इति मूर्धन्याभावपक्षेऽपि न धकारः श्रूयेत।

इतः प्रभृति सिचः [18]सकारस्य लोप इष्यते। इह न भवति, चकाद्धि पलितं शिरः इति। तथा पयो धावति इत्येवमादावपि न भवति। सग्धिः (वा. सं. १९.९), बब्धाम् (नि. ५.१२) इति छान्दसो वर्ण लोपः। भाष्यकारस्त्वाह, चकाधि इत्येव भवितव्यम् इति। तेन पयो धावति इत्येवमादौ यत्नान्तरमास्थेयम्।

1. लक्षणत्वेषु इ. 2. कृत्वा इ यधिकम् क. ड. 3. कार्यविधानात् सिद्धम् इति क. इ. 4. वाक्यमिदं नास्ति क. 5. यावान् इ. 6. श्रेयान् नास्ति ब. 7. संयोगान्तलोपं इ. 8. भविष्यति ह. 9. पदस्य इति किम्? गोमन्तः इति इत्यधिकम् क. 10. संयोगान्तस्य पदान्तस्य रेफादुत्तारस्य इ. ड. ह, संयोगान्तस्य लोप. इति सर्वमनुवर्तते इत्यधिकम् ड. 11. अलोऽन्त्यस्य इ. क. ड. ह. 12. दीर्घरूपमेतत् क. 13. क्रियते इत्यधिकम इ. क. ह. 14. क्विपि ई. 15. सस्य इति वर्तते इत्यधिकम् ड. 16. सस्य इ. 17. सति इत्यधिकम् इ. 18 सकारलोपः इ.

धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति ॥

सर्वमेवं प्रसिद्धं स्याच् छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ॥

घसिभसोर्न सिध्येत तस्मात् सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे[1] ॥ (म. भा. ३. ४०३)

निष्कर्तारमध्वरस्य (तै. ४. २. ७. ३) इत्येवं प्राप्ते ॥

## झलो झलि । (२६/२२८१)

झलः उत्तरस्य सकारस्य झलि परतो लोपो भवति अभित्त । अभित्थाः । अच्छित्त । अच्छित्थाः । अवात्ताम्, अवात्त इत्यत्र वा सिचः [2]सकारलोपस्यासिद्धत्वात् 'सः स्यार्धधातुके' (७. ४. ४९/२३४२) इति सकारस्य तकारः । झलः इति किम् ? [3]अमंस्त । अमंस्थाः । झलि इति किम् ? अभित्साताम् । अभित्सत । अयमपि सिच एव लोपः, तेनेह न भवति, [4]सोमसुत् स्तोता, [5]दृषत्स्थानम् इति ॥

## ह्रस्वादङ्गात् । (२७/२३६९)

ह्रस्वान्तादङ्गादुत्तरस्य[6] लोपो भवति झलि परतः । अकृत । अकृथाः । अहृत । अहृथाः । ह्रस्वात् इति किम् ? अच्योष्ट । [7]अप्लोष्ट । अङ्गात् इति किम् ? [8]अलाविष्टाम् । अलाविषुः । झलि इत्येव, अकृषाताम् । अकृषत । अयमपि सिच एव लोपः, तेनेह न भवति, [9]द्विष्टराम्, द्विष्टमाम् इति । सुजन्ताद् द्विशब्दात्तरप्तमपौ[10], अद्रव्यप्रकर्षे [11]आतिशयिकः आम् प्रत्ययः ॥

## इट ईटि । (२८/२२६६)

इटः उत्तरस्य [12]सकारस्य लोपो भवति ईटि परतः । [13]अदावीत् । अलावीत् । असेवीत् । अकोषीत् । अमोषीत् । इटः इति किम् ? अकार्षीत् । अहार्षीत् । ईटि इति किम् ? अलाविष्टाम् । अलाविषुः ॥

---

1. इष्कर्तारमध्वरस्य ऋ. 10. 140. 5. 2. इति वसेः सकारस्य लोपस्य क. इ. ड. 3. अभैत्सुः इत्यधिकम् क. 4. सोमसुत् स्तोम ह. 5. दृषत्स्थानम् नास्ति इ. ब. 6. सकारस्य इत्यधिकम् ब. क, सस्य इत्यधिकम् ड. 7. नास्ति इ. 8. अपाविष्टाम् अपाविषुः ड. 9. द्विष्टराम् नास्ति क. 10. द्रष्टव्यौ इत्यधिकम् इ. क. 11. आतिशयिकः नास्ति इ. क. 12. सिचः इत्यधिकम् ब. ड. 13. अवैदीत् इ.

## स्कोः संयोगाद्योरन्ते च। (२९/३८०)

पदस्यान्ते यः संयोगः, झलि परतो वा यः संयोगः, तदाद्योः सकारककारयोर्लोपो भवति। लस्जेः – लग्नः। लग्नवान्। साधुलक्। मस्जेः – मग्नः[1]। ककारस्य – तक्षेः – तट्। तष्टः। तष्टवान्। काष्ठतट्।

[९१७] झलि सङीति वक्तव्यम्।

किमिदं सङि इति? सनः [2]सप्रभृति महिङो ङकारेण प्रत्याहारः। इह मा भूत्, काष्ठशक्स्थाता इति। थकारे झलि ककारस्य संयोगादेर्लोपः प्राप्नोति। तदत्र शकेः क्विबन्तस्य प्रयोग एव नास्ति [3]इत्याह – काष्ठशगेव नास्ति, कुतोऽयं काष्ठशकि तिष्ठेत् इति। वास्यर्थम्, काक्वर्थम् इत्यत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न भवति। स्कोः इति किम्? नर्नति। वर्वति। संयोगाद्योः इति किम्? [4]पयःशक्। अन्ते च इति किम्? [5]तक्षितः। तक्षकः॥

## चोः कुः। (३०/३७८)

चवर्गस्य कवर्गादेशो भवति झलि परतः, पदान्ते च। पक्ता। पक्तुम्। पक्तव्यम्। ओदनपक्। वक्ता। वक्तुम्। वक्तव्यम्। वाक्।

क्रुञ्चा इत्यत्र [6]सङि [7]इति वचनाद् ञकारस्य चकारे झलि[8] कुत्वं न भवति, युजिक्रुञ्चां च (३.२.५९/३७३) इति निपातनाद् वा। नकारोपधो वा धातुरयं रेफरहितश्च 'क्रुञ्च कौटिल्याल्पीभावयोः' (धा.पा. १८६) इति पठ्यते। नकारलोपे हि [9]निकुचितिः इति[10] दृश्यते। युजिक्रुञ्चां च (३.२.५९/३७३) इति तस्यैव रेफोऽधिको नकारस्य लोपाभावश्च इति निपात्यते। [11]तत्रानुस्वारस्य [12]परसवर्णस्य च असिद्धत्वात्[13] ञकार एव नास्ति इति कुत्वं न [14]भविष्यति॥

## हो ढः। (३१/३२४)

हकारस्य ढकारादेशो भवति झलि परतः पदान्ते च। सोढा। सोढुम्। सोढव्यम्। [15]जलाषाट्। वोढा। वोढुम्। वोढव्यम्। प्रष्ठवाट्। [16]दित्यवाट्॥

## दादेर्धातोर्घः। (३२/३२७)

दकारादेः धातोः हकारस्य घकारादेशो भवति झलि परतः पदान्ते च। दग्धा। दग्धुम्। दग्धव्यम्। काष्ठधक्। दोग्धा। दोग्धुम्। दोग्धव्यम्। गोधुक्। [17]दादेः इति किम्? लेढा। लेढुम्। लेढव्यम्।

---

1. मग्नवान्, साधुमक् इत्यधिकम् इ.क.ड.ब. 2. प्रभृति ड.ब. 3. अत एवाहुः ब.ड. 4. पयस्रक् इ. 5. अतक्षीत् इ.ह, तक्षिता क, रक्षितः ड. ब. 6. झलि इत्यधिकम् इ. ब. 7. इति नास्ति क. 8. परतः इत्यधिकम् क.इ.ब. 9. निकुचितम् इ. 10. प्रयोगो इत्यधिकम् क.ब. 11. अत्र क.इ. 12. ययि इत्यधिकम् क.इ.ह. 13. तत्र इत्यधिकम् ब. 14. भवति क. 15. तुराषाट् ड. 16. पर्ववाट् ब. ह. 17. दादेः –गुडलिट् नास्ति इ.ह.ड.ब.

गुडलिट्। धातोः इति दादिसमानाधिकरणमेतन् न[1], किं तर्हि, [2]तद्विशेषणमवयवषष्ठ्यन्तम्, धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्य [3]इति। किं [4]कृतं भवति? अधोक् इत्यत्रापि घकारः सिद्धो भवति। कथं [5]दोग्धा, दोग्धुम् इति[6]? व्यपदेशिवद्भावात्[7]। अथ वा धातूपदेशे यो दादिः इत्येवं विज्ञायते। तथा च दामलिहमिच्छति दामलिह्यति, दामलिह्यतेः क्विप् प्रत्ययः दामलिट् इत्यत्रापि न भवति॥

## वा द्रुहमुहष्णुहष्णिहाम्। (३३/३२७)

द्रुह मुह [8]ष्णुह ष्णिह इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः पदान्ते च। द्रुह—द्रोग्धा, द्रोढा[9]। मित्रध्रुक्, मित्रध्रुट्। मुह—उन्मोग्धा, उन्मोढा। उन्मुक्, उन्मुट्। ष्णुह—[10]उत्स्नोग्धा, उत्स्नोढा। उत्स्नुक्, उत्स्नुट्। ष्णिह—स्नेग्धा, स्नेढा। स्निक्, स्निट्। द्रुहेः दादित्वाद् घत्वं नित्यं प्राप्तम्, इतरेषामप्राप्तमेव घत्वं विकल्प्यते॥

## नहो धः। (३४/४४०)

नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च। [11]नद्धम्। नद्धुम्। नद्धव्यम्। उपानत्। परीणत्॥

## आहस्थः। (३५/२४५१)

आहो हकारस्य थकारादेशो भवति झलि परतः[12]। इदमात्थ। [13]किमात्थ। आदेशान्तरकरणं 'झषस्तथोर्धोऽधः' (८.२.४०/२२८०) इत्यस्य निवृत्त्यर्थम्। झलि [14]इत्येव, आह, आहतुः, आहुः।

[९१८] हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्। (म.भा.३.४०४)

'गर्दभेन सम्भरति' (तै.सं.५.१.५.५)। [15]ग्रभीता। जभ्रिरे। 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्' (तै.सं.१.१.१३.१)॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। (३६/२९४)

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज इत्येतेषाम्[16], छकारान्तानाम्, शकारान्तानां च षकारः आदेशो भवति झलि परतः पदान्ते च। व्रश्च—व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। मूलवृट्। भ्रस्ज—भ्रष्टा। भ्रष्टुम्। भ्रष्टव्यम्। धानाभृट्। सृज—स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। रज्जुसृट्। मृज—मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। [17]कंसपरिमृट्। यज—यष्टा। यष्टुम्। यष्टव्यम्। [18]उपयट्। राज—सम्राट्। [19]स्वराट्। विराट्। भ्राज—[20]विभ्राट्। राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिराभ्यामिटा पर्यवपद्यते। केचित् तु राष्टिः, भ्राष्टिः इति क्विन्नन्तमिच्छन्ति। छकारान्तानाम्—प्रच्छ—प्रष्टा। प्रष्टुम्। प्रष्टव्यम्। शब्दप्राट्। 'च्छ्वोः शूडनुनासिके च' (६.४.१९/२५६१) इत्यत्र क्ङिति इत्यनुवर्तते इति छग्रहणमिह क्रियते। शकारान्तानाम्—लिश्—लेष्टा। लेष्टुम्। लेष्टव्यम्। [21]लिट्। विश्—वेष्टा। वेष्टुम्। वेष्टव्यम्। विट्॥

---

1. भवति इत्यधिकम् क. इ. ह. ड. ब. 2. तद्विशेषमेव षष्ठ्यन्तं क. 3. एव ब. ड. 4. एवं इत्यधिकम् ब. ड. 5. दग्धा दग्धव्यं दग्धुम् इत्यधिकम् क. 6. अत्र इत्यधिकम् क. 7. भविष्यति इत्यधिकम् इ. क. 8. नास्ति क. 9. द्रोढुम् इत्यधिकम् क. इ. 10. स्नोग्धा स्नोढा स्नुक् स्नुट् क. 11. नद्धा इत्यधिकम् क, घत्वस्यापवादोऽयम् नद्धा इत्यधिकम् ड. 12. भुवः पञ्चानामादितः आहोब्रुवः इति पदान्ते सम्भवः इति झल्येव उदाह्रियते इत्यधिकम् ई. ह. 13. नास्ति क. 14. इति किम् क. 15 गृभीता क. 16. धातूनाम् इत्यधिकम् ह. 17. कंसपरीमृट् क. 18. उपेढ क. 19. नास्ति क. 20. सुभ्राट् क. 21. शब्दलिट् क, मधुलिट् ह.

## एकाचो बशो भष् झषन्तस्य स्ध्वोः। (३७/३२६)

धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च। अत्र चत्वारो बशः स्थानिनो भषादेशाश्चत्वार एव, तत्र सङ्ख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावात् ढकारादेशो न भवति? आन्तर्यतो व्यवस्था विज्ञास्यते। बुध – भोत्स्यन्ते। अभुद्ध्वम्। अर्थभुत्। गुह – निघोक्ष्यते। न्यघूढ्वम्। [1]पर्णघुट्। दुह – धोक्ष्यते। अधुग्ध्वम्। [2]गोधुक्। अजर्घाः – गृधेः यङ्लुगन्तस्य लङि सिपि लघूपधगुणे कृते[3] सिपो हल्ङ्यादिलोपे च धातोः अवयवस्य एकाचो बशः स्थाने भष्भावः, ततो धकारस्य जश्त्वम्, 'दश्च' (८.२.७५/२४६८) इति रुत्वम्, 'रो रि' (८.३.१४/१७३) इति [4]पूर्वरेफस्य लोपः, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६.३.१११/१७४) इति दीर्घत्वम्। गदर्भयतेः [5]अप्रत्ययः – गर्धप्। एकाचः इति किम्? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः, दामलिट्। असति ह्येकाज्ग्रहणे धातोः इत्येतद् बशो [6]विशेषणं स्यात्। बशः इति किम्? क्रुध – क्रोत्स्यति। झषन्तस्य इति किम्? दास्यति। स्ध्वोः इति किम्? बोद्धा। बोद्धुम्। बोद्धव्यम्। धकारस्य [7]बकारोपसृष्टस्य ग्रहणं किम्? [8]दादद्धि। 'दध धारणे' (धा पा. ८) इत्येतस्य यङ्लुकि लोटि 'हुझल्भ्यो हेर्धिः' (६.४.१०१/२४२५) इति धिभावे[9] सत्येतद्भवति॥

## दधस्तथोश्च। (३८/२५०१)

दध: इति दधातिः कृतद्विर्वचनो निर्दिश्यते। तस्य झलन्तस्य बशः स्थाने भष् आदेशो भवति तकारथकारयो: परतः, चकारात् स्ध्वोश्च परतः। धत्तः। धत्थः। धत्से। धत्स्व। धद्ध्वम्। वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति। अभ्यासजश्त्वस्य चासिद्धत्वम्। तथोः इति किम्? आनन्तर्यात् स्ध्वोरेव विज्ञायेत। चकारः तयोरनुवृत्त्यर्थः। झषन्तस्य इत्येव, दधाति॥

## झलां जशोऽन्ते। (३९/८४)

झलां जशः आदेशा भवन्ति पदस्यान्ते वर्तमानानाम्। वागत्र। [10]श्वलिडत्र। अग्निचिदत्र। त्रिष्टुबत्र। अन्तग्रहणं[11] झलि इत्येतस्य निवृत्त्यर्थम्। वस्ता। [12]वस्तव्यम्॥

## झषस्तथोर्धोऽधः। (४०/२२८०)

झष उत्तरयोः तकारथकारयोः स्थाने धकारः आदेशो भवति, [13]दधातिं वर्जयित्वा। लब्धा। लब्धुम्। लब्धव्यम्। अलब्ध। अलब्धाः। दुह – दोग्धा। दोग्धुम्। दोग्धव्यम्। अदुग्ध। अदुग्धाः। लिह – लेढा। लेढुम्। लेढव्यम्। अलीढ। अलीढाः। बुध – बोद्धा। बोद्धुम्। बोद्धव्यम्। अबुद्ध। अबुद्धाः। अधः इति किम्? धत्तः। धत्थः॥

---

1. वर्णधुट् इ. 2. धुक् इ. 3. सति इत्यधिकम् क. 4. पूर्वस्य रेफस्य क. 5. गर्दभयतेः क्विप् प्रत्ययः ड, गर्दभमाचष्टे इति णिच् इत्यधिकम् इ. क. 6. विशेषणार्थं इ. क. ह. ब. 7. च प्रश्लिष्टस्य ब, बकारस्य श्लिष्टस्य क, बकारे प्रश्लिष्टस्य ह. 8. ददद्धि ह. 9. कृते इत्यधिकम् ब. क. 10. लिडत्र क. 11. किम् इत्यधिकम् क. इ. 12. वस्तुम् क. इ. ड, वस्तव्यम् नास्ति ह. 13. अधः ह.

## षढोः कः सि । (४१/२९८)

षकारढकारयोः ककारादेशो भवति सकारे परतः । षकारस्य – पिष् – पेक्ष्यति अपेक्ष्यत् । पिपक्षति । ढकारस्य -- लिह् -- लेक्ष्यति । अलेक्ष्यत् । लिलिक्षति । सि इति किम् ? पिनष्टि । लेढि ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः । (४२/३०१६)

रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकारः आदेशो भवति [1]पूर्वस्य च दकारस्य । [2]रेफान्तात् तावत् – आस्तीर्णम् । [3]विस्तीर्णम् । [4]विशीर्णम् । निगीर्णम् । अवगूर्णम् । दकारात् – भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । रदाभ्याम् इति किम् ? कृतः । कृतवान् । रः इत्यत्र रश्रुतिसामान्यं नोपादीयते, किं तर्हि, [5]व्यञ्जनमात्रम् । [6]रेफसामान्यनिर्देशेऽपि सति रेफात् परा [7]याऽज्भक्तिस्तद्व्यवधानान्नत्वं न भवति । निष्ठा इति किम् ? कर्ता । हर्ता । तः इति किम् ? चरितम् । मुदितम् । पूर्वस्य इति किम् ? परस्य मा भूत्, भिन्नवद्भ्याम् । भिन्नवद्भिः । इह[8] कृतस्यापत्यं कार्तिः इति[9] वृद्धेः [10]बहिरङ्गलक्षणाया असिद्धत्वान्नत्वे कर्तव्ये रेफस्यासिद्धत्वम् ॥

## संयोगादेरातो धातोर्यण्वतः । (४३/३०१७)

संयोगादिः यो धातुराकारान्तो यण्वान्, तस्मादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । प्रद्राणः । प्रद्राणवान् । म्लानः । म्लानवान् । [11]संयोगादेः इति किम् ? यातः । यातवान् । आतः इति किम् ? च्युतः । च्युतवान् । प्लुतः । प्लुतवान् । धातोः इति किम् ? निर्यातः । [12]निर्वातः । यण्वतः इति किम् ? स्नातः । [13]स्नातवान् ॥

## ल्वादिभ्यः । (४४/३०१८)

'लूञ् छेदने' (धा.पा. १४८४) इत्येतत्प्रभृति 'वृञ् वरणे' (धा. पा. १४८७) इति यावत् वृत्करणेन [14]समापिता ल्वादयो गृह्यन्ते । तेभ्यः उत्तरस्य निष्ठातकारस्य नकारादेशो भवति । लूनः । लूनवान् । [15]धूनः । धूनवान्[16] । जीनः । जीनवान् ।

[९१९] ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम् । (म. भा. ३. ४०७)

कीर्णिः । गीर्णिः । शीर्णिः । लूनिः । पूनिः ।

---

1. पूर्वदकारस्य क. इ. 2. रेफात् क. 3. नास्ति इ. 4. विकीर्णम् ड. 5. व्यञ्जनमर्धमात्रकम् क. 6. सामान्यनिर्देशेऽपि क. 7. अज्विभक्तिः इ. 8. तु इत्यधिकम् ह. 9. लक्षणेऽपि इत्यधिकम् क. 10. बहिरङ्गत्वान्नत्वे कर्तव्ये रेफस्य असिद्धत्वम् क. इ. 11. संयोगात् क. 12. निर्यातवान् क. ब, निर्वातवान् ब. 13. नास्ति क. 14. परिमापिताः ड. 15. धूनिः इत्यधिकम् ड. 16. पूतः पूतवान इत्यधिकम ड.

[९२०] दुग्वोर्दीर्घश्चेति वक्तव्यम् । (म. भा. ३.४०७)

दु – आदूनः[1] । गु – [2]विगूनः ।

[९२१] पूञो विनाश इति वक्तव्यम् । (म. भा. ३.४०७)

पूना यवाः । विनष्टाः इत्यर्थः । विनाशे इति किम् ? पूतम् धान्यम् ।

[९२२] सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् । (म. भा. ३.४०७)

सिनो ग्रासः स्वयमेव । ग्रासकर्मकर्तृकस्य इति किम्? सिता पाशेन सूकरी । ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्ता, तदा न भवति, सितो [3]ग्रासो देवदत्तेन इति ॥

## ओदितश्च । (४५/३०१९)

ओकारेतो[4] धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । [5]ओलस्जी – लग्नः । लग्नवान् । ओविजी–उद्विग्नः । उद्विग्नवान् । 'ओप्यायी वृद्धौ' (धा. पा. ४८८)–आपीनः । आपीनवान् । स्वादय ओदितः । षूङ – सूनः । सूनवान् । [6]दूङ – दूनः । दूनवान् । दीङ् – दीनः । दीनवान् । डीङ – [7]डीनः । डीनवान् । धीङ् – धीनः । धीनवान् । मीङ् – मीनः । मीनवान् । रीङ् – रीणः । रीणवान् । लीङ् – लीनः । लीनवान् । व्रीङ – व्रीणः । व्रीणवान् ॥

## क्षियो दीर्घात् । (४६/३०२०)

क्षियो धातोः दीर्घादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति । क्षीणाः [8]क्लेशाः । क्षीणः [9]जाल्मः । क्षीणः [10]तपस्वी । क्षियः 'निष्ठायामण्यदर्थे' (६.४.६०/३०१४), 'वाऽऽक्रोशदैन्ययोः' (६.४.६१/३०८१) इति दीर्घत्वं भवति । दीर्घात् इति किम् ? अक्षितमसि मामेक्षेष्ठाः । अक्षितम् इति क्तप्रत्ययो भावे, भावश्च ण्यदर्थः इति [11]दीर्घाभावः । ह्रस्वस्यापि हि धात्वनुकरणस्य इह इयङा निर्देशः । क्षियः 'निष्ठायामण्यदर्थे' (६.४.६०/३०१४) [12]इत्यत्र दीर्घग्रहणं क्रियते । 'विपराभ्यां जेः' (१.३.१९/२३८५) इत्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वाद् जिरूपसामान्यानुकरणं द्रष्टव्यम् ॥

## श्योऽस्पर्शे । (४७/३०२१)

श्यायतेः उत्तरस्य निष्ठातकारस्य [13]अस्पर्शे नकारः आदेशो भवति । शीनं घृतम् । [14]शीनं मेदः । शीना वसा । अस्पर्शे इति किम् ? शीतं वर्तते । [15]शीतो वायुः । शीतमुदकम् इत्यत्र गुणभूतोऽपि स्पर्शः नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति । गुणे च स्पर्शे प्रतिषेधोऽयम्, न रोगे, तेन प्रतिशीनः इत्यत्र नत्वं भवत्येव ॥

---

1. आदूनवान् इत्यधिकम् इ. 2. आगूनः ड, आगूनः आगूनवान् ब. 3. ग्रामः इ. 4. च इत्यधिकम् 5. ओलजी ब. ड. 6. हीङ् हीनः हीनवान् इत्यधिकम् क. 7. उड्डीनः, उड्डीनवान् ब. 8. केशाः इ. क. 9. यज्वा क. 10. अयं तपस्वी क. 11. दीर्घत्वाभावः क. 12. इति तस्याम् ह. 13. अस्पर्शेऽर्थे क. इ. ह. ड. 14. शीनः स्वेदः ड. 15. शीतो नो वायुः इ.

## अञ्चोऽनपादाने । (४८/३०२४)

अञ्चतेः [1]उत्तरपदस्य निष्ठातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति । समक्नौ शकुनेः पादौ । [2]तस्मात् पशवो न्यक्नाः । अनपादाने इति किम् ? उदक्तम् उदकं कूपात्[3] । व्यक्तम् इत्येतद् अञ्जेः रूपम् ॥

## दिवोऽविजिगीषायाम् । (४९/३०२८)

दिवः उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे । आद्यूनः । परिद्यूनः । अविजिगीषायाम् इति किम् ? द्यूतं वर्तते । विजिगीषया हि तत्राक्षपातनादि क्रियते ॥

## निर्वाणोऽवाते । (५०/३०२९)

निर्वाणः इति निस्पूर्वाद् वातेरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते, न चेद् वाताधिकरणो [4]वात्यर्थो भवति । निर्वाणः अग्निः । निर्वाणः प्रदीपः । निर्वाणः भिक्षुः । अवाते इति किम् ? निर्वातः वातः । निर्वातं वातेन । निर्वाणः प्रदीपो वातेन इत्यत्र तु प्रदीपाधिकरणो [5]वात्यर्थः, वातस्तु तस्य करणम् इति भवत्येव [6]नत्वम् ॥

## शुषः कः । (५१/३०३०)

शुषेः धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति । शुष्कः । शुष्कवान् ॥

## पचो वः । (५२/३०३१)

पचेः धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति । पक्वः । पक्ववान् ॥

## क्षायो मः । (५३/३०३२)

[7]क्षैधातोः उत्तरस्य निष्ठातकारस्य मकारादेशो भवति । क्षामः । क्षामवान् ॥

---

1. उत्तरस्य इ. 2. तदनन्तरं कूपात् क. 3. उध्दृतम् इत्यर्थः क. 4. वाक्यार्थो ह. 5. वाक्यार्थः ह. 6. नत्वम् नास्ति क. 7. क्षै इत्येतस्य इ.क.ब.

## प्रस्त्योऽन्यतरस्याम् । (५४/३०३४)

प्रपूर्वात् स्त्यायतेः उत्तरस्य निष्ठातकारस्य अन्यतरस्यां मकारादेशो भवति । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् । यदा मत्वं नास्ति, तदा 'संयोगादेरातो धातोर्यण्वतः' (८. २. ४३/३०१७) इत्यस्य पूर्वत्रासिद्धत्वात् संप्रसारणं प्रथमं क्रियते, तत्र कृते निमित्तव्याघातान् नत्वं न भवति ॥

## अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः । (५५/३०३५)

फुल्ल क्षीब कृश उल्लाघ इत्येते[1] निपात्यन्ते, न चेदुपसर्गा[2]दुत्तरा भवन्ति । फुल्लः इति 'ञिफला विशरणे' (धा. पा. ५१६) इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते । उत्वमिडभावश्च सिद्ध एव । क्तवत्वन्तस्याप्येतल्लत्वमिष्यते, फुल्लः, फुल्लवान् इति । क्षीबकृशोल्लाघाः इति क्षीबिकृशिभ्यामुत्पूर्वाच्च लाघेः [3]क्त-प्रत्ययस्य तलोपः इडभावश्च निपात्यते । कृते वा इटि इच्छब्दलोपः । क्षीबः । कृशः । उल्लाघः । अनुप-सर्गात् इति किम् ? प्रफुल्ताः सुमनसः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । लाघेरुदो[4]ऽन्यः उपसर्गः प्रतिषिध्यते ।

[९२३] उत्फुल्लसम्फुल्लयोरिति [5]वक्तव्यम् । (म. भा. ३. ४०९)

उत्फुल्लः । सम्फुल्लः । परिकृशः इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव, परिगतः कृशः परिकृशः इति ॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । (५६/३०३८)

नुद विद उन्द त्रा घ्रा ह्री इत्येतेभ्यः उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम् । नुद -- नुन्नः, नुत्तः । विद -- विन्नः, वित्तः । उन्द -- समुन्नः, समुत्तः । त्रा -- त्राणः, त्रातः । घ्रा – घ्राणः, घ्रातः । ह्री -- ह्रीणः, ह्रीतः । ह्री इत्येतस्मादप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते । 'विद विचारणे' (धा. पा. १४५१) [6]इत्यस्य विदेरिह[7] ग्रहणमिष्यते । [8]एवं ह्युक्तम् –

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः ॥

इति ॥

## न ध्याख्यापॄमूर्च्छिमदाम् । (५७/३०४०)

ध्या ख्या पॄ मूर्च्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति । ध्यातः । ध्यातवान् । ख्यातः । ख्यातवान् । पूर्तः । पूर्तवान् । मूर्तः । मूर्तवान् । मत्तः । मत्तवान् । रदाभ्याम् (८.२.४२/३०१६), संयोगादेः (८. २. ४३/३०१७) इति च प्राप्तः प्रतिषिध्यते ॥

---

1. शब्दाः इत्यधिकम् क. इ. 2. उत्तरे क. इ. 3. क्तप्रत्यये ह. 4. अन्यत्र क. 5. उपसङ्ख्यानम क. इ 6. इत्येतस्य इ. 7. इह नास्ति इ. क. 8. एवमित्युक्तम् क, तर्हि उक्तम् ह.

## वित्तो भोगप्रत्यययोः। (५८/३०४१)

वित्तः इति विदेर्लाभार्थात् (धा.पा. १४३३) उत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये। [1]वित्तमस्य बहु। धनमस्य बहु इत्यर्थः। धनं हि भुज्यते इति [2]भोगोऽभिधीयते। प्रत्यये – वित्तोऽयं मनुष्यः। प्रतीतः इत्यर्थः। प्रतीयते इति प्रत्ययः। भोगप्रत्यययोः इति किम्? विन्नः॥

## भित्तं शकलम्। (५९/३०४२)

भित्तम् इति निपात्यते शकलं चेत् तद्भवति। भित्तं तिष्ठति। भित्तं प्रपतति। शकलपर्यायोऽयम्। अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम्। भिदिक्रियाविवक्षायां हि शकलविषये भिन्नम् भित्तम् इत्येव भवति॥

## ऋणमाधमर्ण्ये। (६०/३०४३)

ऋणम् इति ऋ इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते [3]आधमर्ण्यविषये[4]। अधमः ऋणे अधमर्णः, एतस्मादेव निपातनात् [5]सप्तम्यन्तेन उत्तरपदेन समासः, [6]तद्भावः आधमर्ण्यम्। यद्येवम्, [7]उत्तमर्णः इति न सिध्यति? नैष दोषः। कालान्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम्। तेन उत्तमर्णः इत्यपि[8] हि भवति। ऋणं ददाति। ऋणं धारयति। आधमर्ण्ये इति किम्? ऋतं वक्ष्यामि नानृतम्॥

## नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि। (६१/३६०३)

नसत्त निषत्त अनुत्त प्रतूर्त सूर्त गूर्त इत्येतानि छन्दसि विषये निपात्यन्ते। नसत्त, निषत्त इति सदेः नञ्पूर्वात् निपूर्वाच्च नत्वाभावो निपात्यते। नसत्तमञ्जसा। नसन्नम् इति भाषायाम्। '[9]निषत्तः' (ऋ. १.५८.३)। निषण्णः इति भाषायाम्। अनुत्तम् इति उन्देः नञ्पूर्वस्य निपातनम्। '[10]अनुत्तमा ते मघवन्' (ऋ. १.१६५.९)। अनुन्नम् इति भाषायाम्। प्रतूर्तम् इति त्वरतेः, तुर्वी इत्येतस्य वा निपातनम्। 'प्रतूर्तं वाजिन्' (तै. ४.१.२.१)। प्रतूर्णम् इति भाषायाम्। सूर्तम् इति सृ इत्येतस्य उत्वं निपात्यते। [11]सूर्ता गावः। सृता गावः इति भाषायाम्। गूर्तम् इति गूरी इत्येतस्य नत्वाभावो निपात्यते। [12]'गूर्ता अमृतस्य' (वा. सं. ६.३४)। गूर्णम् इति भाषायाम्॥

---

1. अपरिमितं वित्तमस्य ह. 2. प्रायोऽभिधीयते इ. 3. आधमर्ण्ये विषये ब. 4. परद्रव्यं यो वृद्धया गृह्णाति अधमर्णः इत्यधिकम् इ. 5. सप्तम्यन्तोत्तरपदसमासः ब.क.इ. 6. तस्य भावः ड. 7. उत्तमर्णविषये ड.ब 8. अपि नास्ति क. 9. रजस्या निषत्ताः (मै. 4.10.6). 10. अनुत्तमं ते नववनम क. 11. प्रसूर्ता वय इ.ब.ड.क. 12. गावो गूर्त्ता अमृतस्य पत्नी ड.

## क्विन्प्रत्ययस्य कुः । (६२/३७७)

[1]पदस्य (८.१.१६/४०१) इति वर्तते । [2]क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वम् इष्यते । क्विन् प्रत्ययो यस्माद् [3]धातोः स[4] क्विन्प्रत्ययः, तस्य पदस्यालोऽन्त्यस्य [5]कवर्गादेशो भवति । 'स्पृशोऽनुदके क्विन्' (३.२.५८/४३२) । घृतस्पृक् । [6]हलस्पृक् । मन्त्रस्पृक् । क्विनः कुः इति वक्तव्ये प्रत्ययग्रहणं [7]कृतं (म. भा. ३.४११) बहुव्रीहि[8]विज्ञानार्थम् । [9]क्विन् प्रत्ययो यस्माद् विहितस्तस्मादन्य[10]स्मिन्नपि प्रत्यये[11] कुत्वं यथा स्यात् । मा नो अस्राक् । मा नो अद्राक् । सृजिदृशिभ्यां हि क्विन् विहितः, तयोर्लुङि [12]कुत्वमेतत् । माङ्योगेऽपि छान्दसत्वादडागमः । ईट् च न भवति, 'बहुलं छन्दसि' (७.३.९७/३५८६) इति । तथा [13]दृग्भ्याम्, दृग्भिः इति क्विबन्तस्यापि दृशेः कुत्वं भवति । एवं [14]च सति रज्जुसृड्भ्याम् इत्यत्रापि [15]कुत्वं प्राप्नोति । अथ [16]तु नेष्यते, प्रतिविधानं कर्तव्यम् इति ॥

## नशेर्वा । (६३/४३१)

[17]पदस्य इति वर्तते । नशेः पदस्य वा कवर्गादेशो भवति । सा वै जीवनगाहुतिः । 'सा वै जीवनडाहुतिः' (मै. १.४.१३) । नशेरयं सम्पदादित्वाद् भावे क्विप् । जीवस्य नाशो जीवनक्, जीवनट् । षत्वे प्राप्ते कुत्वविकल्पः ॥

## मो नो धातोः । (६४/३४१)

मकारान्तस्य धातोः पदस्य नकारादेशो भवति । प्रशान् । प्रतान् । प्रदान् । [18]शमितमिदमादीनां क्विप्, 'अनुनासिकस्य क्विझलोः क्ङिति' (६.४.१५/२६६६) इति दीर्घत्वम् । नत्वस्यासिद्धत्वान्नलोपो न भवति । मः इति किम् ? भित् । छित् । धातोः इति किम् ? इदम् । किम् । पदस्य इत्येव, प्रतामौ । प्रतामः ॥

## म्वोश्च । (६५/२३०९)

मकारवकारयोश्च परतः मकारान्तस्य धातोः नकारादेशो भवति । 'अगन्म तमसः पारम्' । (वा. सं. १२.७३) । [19]अगन्व । गमेर्लङि 'बहुलं छन्दसि' (२.४.७३/३४००) इति शपो लुक् । [20]जगन्वान् । 'विभाषा गमहनजनविदविशाम्' (७.२.६८/३०९९) इति क्वसौ इडागमस्याभावः । अपदान्तार्थः आरम्भः ॥

---

1. इमे द्वे वाक्ये न स्तः ह. 2. वाक्यमिदं नास्ति क. 3. धातोः नास्ति ह. 4. धातुः इत्यधिकम् इ. क. 5. स्थाने इत्यधिकम् इ. 6. जलस्पृक् इ, दलस्पृक्, मधुस्पृक् ड. ब. 7. कृतं नास्ति इ. 8. विज्ञापनार्थं ह. 9. क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते क्विनः क्विः इति विज्ञानार्थम् ह. 10 परस्मिन्नपि क. 11. पदान्तस्य क. इ. 12. रूपम् ब. ड, कुत्वे रूपमेतत् ह. 13. देवदृग्भ्याम् देवदृग्भिः ड. 14. तु क. 15. कुत्वेन भवितव्यम् ब. 16. अत्र क, अन्यत्र इ. 17. वाक्यमिदं नास्ति ह. ब. 18. इमे द्वे वाक्ये न स्तः ब. इ. ड. 19. अगन्व तमसः पारम् ब. 20. वकारे इत्यधिकम् ह.

## ससजुषो रुः। (६६/१६२)

सकारान्तस्य पदस्य सजुष् इत्येतस्य च [1]रुः भवति। सकारान्तस्य – अग्निरत्र। वायुरत्र। सजुषः – '[2]सजूर्ऋतुभिः' (मै. २.८.१)। 'सजूर्देवेभिः' (ऋ. ७.३४.१५)। जुषेः क्विपि [3]सपूर्वस्य रूपमेतत्॥

## अवयाः श्वेतवाः पुरोडाश्च। (६७/३४१६)

अवयाः श्वेतवाः पुरोडाः इत्येते[4] निपात्यन्ते। अवपूर्वस्य यजेः, श्वेतपूर्वस्य वहेः, पुरस्पूर्वस्य [5]दाशतेः 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (३.२.७१/३४१४), 'अवे यजः' (३.२.७२/३४१५) इति ण्विनि कृते, 'श्वेतवहादीनां डस्पदस्य' (वा. २६३) इति[6] डस्प्रत्यये निपातनानि एतानि। [7]किमर्थं तर्हि निपातनं यावता पूर्वेणैव रुः सिद्धः, दीर्घत्वमपि 'अत्वसन्तस्य चाधातोः' (६.४.१४/४२५) इति? सम्बुद्धौ दीर्घार्थमेते निपात्यन्ते। 'अत्वसन्तस्य चाधातोः' (६.४.१४/४२५) इत्यत्र हि असम्बुद्धौ इति वर्तते। हे अवयाः (वा. सं. ३.४६)। हे श्वेतवाः। हे पुरोडाः (ऋ. ३.२८.२)। चकारोऽनुक्तसमुच्चयार्थः। हे उक्थशाः (तै. ३.२.९.१)॥

## अहन्। (६८/४४३)

अहन् इत्येतस्य पदस्य रुः भवति। अहोभ्याम्। अहोभिः। [8]नलोपमकृत्वा निर्देशो [9]ज्ञापकः [10]नलोपाभावो यथा स्यात् [11]इति। दीर्घाहा निदाघः, [12]हे दीर्घाहोऽत्र इति। [13]अहन् इत्यत्र तु लाक्षणिकत्वादहन्शब्दस्य [14]रुः न भवति।

[९२४] अह्नो रुविधौ रूपरात्रिरथन्तरेषू[15]पसङ्ख्यानं [16]कर्तव्यम्। (म. भा. ३.४११)

अहोरूपम्। अहोरात्रः। अहोरथन्तरम्। 'रोऽसुपि' (८.२.६९/१७२) इत्यस्यापवादो रुत्वमुपसङ्ख्यायते। अपर आह – सामान्येन रेफादौ रुत्वं भवति, अहोरम्यम्, अहोरत्नानि इति॥

## रोऽसुपि। (६९/१७२)

अहन् इत्येतस्य रेफादेशो भवति असुपि परतः। अहर्ददाति। अहर्भुङ्क्ते। असुपि इति किम्? अहोभ्याम्। अहोभिः। ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति, अहर्ददाति, अहर्भुङ्क्ते इति? नैतदस्ति। उक्तमेतत् – 'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवति' (म. भा. ३.४१२) इति। नायमहःशब्दः सुप्परो भवति। यत्र तु [17]लोपशब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव, यथा हे दीर्घाहोऽत्र, [18]दीर्घाहो निदाघ इति। अत्र हि हल्ङ्याब्भ्यः (६.१.६८/२५२) इति [19]लोपेन प्रत्ययस्य निवृत्तिः॥

---

1. रुः इत्ययमादेशो क. 2. सजूर्ऋषिभिः मुद्रितः पाठः ह. 3. सहपूर्वस्य ड. 4. शब्दाः इत्यधिकम् ड. 5. च दाशेः ब. 6. सम्बुद्धेरर्थमेते निपात्यन्ते क, डस्प्रत्यये नास्ति ड. 7. किमर्थं – निपात्यन्ते नास्ति क. 8. नकारलोपम् क. इ. 9. ज्ञापकम् क. इ. 10. लोपाभावस्य श्रूयमाणस्य ह. 11. इत्येवं क्रियते ह. 12. हे नास्ति क. 13. अहन्नहिम् इत्यत्र ड. 14. रुत्वं क. इ. 15. उपसङ्ख्यानं कर्तव्यम् नास्ति क. 16. कर्तव्यम् नास्ति ह. 17. लोप इति ब. 18. दीर्घाह् निदाघ क. 19. लोपेन नास्ति ब.

## अम्नरूधरवरित्युभयथा छन्दसि । (७०/३६०४)

अम्नस् ऊधस् अवस् इत्येतेषां छन्दसि विषये उभयथा भवति, रुर्वा रेफो वा । अम्नस् – 'अम्न एव' (मै. १. ६. १०), अम्नरेव । ऊधस् – '[2]ऊध एव' (काठ. ७. ५. २०), ऊधर् (ऋ.१०.१००.११) एव । अवस् - अवः (अ. वे. २०. २५. २) एव, अवरेव । यदा रुत्वं तदा 'भोभगोऽघोऽपूर्वस्य योऽशि' (८.३.१७/१६७) इति यकारः ।

[९२५] छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम् । (म. भा. ३. ४१२)

'प्रचेता राजन्' (ऋ. १. २४. १४), 'प्रचेतो राजन्' (तै. १. ५. ११. ३) ।

[९२६] अहरादीनां पत्यादिषूपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.४१२)

[3]अहर्पतिः, अहःपतिः । गीर्पतिः, गीःपतिः । धूर्पतिः, धूःपतिः । विसर्जनीयबाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते ॥

## भुवश्च महाव्याहृतेः । (७१/३६०७)

भुवस् इत्येतस्य महाव्याहृतेः छन्दसि विषये उभयथा भवति, रुर्वा रेफो वा । भुव इत्यन्तरिक्षम्, भुवरित्यन्तरिक्षम् । [4]महाव्याहृतेः इति किम् ? '[5]भुवो विश्वेषु सवनेषु यज्ञियः' (ऋ. १०. ५०. ४)[6] । भुवः इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥

## वसुस्रंसुध्वंस्वनडुहां दः । (७२/३३४)

'ससजुषो रुः' (८.२.६६/१६२) [7]इत्यतः सः इति वर्तते, तेन सम्भवात् व्यभिचाराच्च वसुरेव विशेष्यते, न स्रंसुध्वंसू[8], व्यभिचाराभावात्, असम्भवाच्च न अनडुह् शब्दः । वस्वन्तस्य पदस्य, सकारान्तस्य स्रंसु, ध्वंसु, अनडुह् इत्येतेषां च दकारादेशो भवति । वसु – विद्वद्भ्याम् । विद्वद्भिः । पपिवद्भ्याम् । पपिवद्भिः । स्रंसु – [9]उखास्रद्भ्याम् । उखास्रद्भिः । ध्वंसु – [10]पर्णध्वद्भ्याम् । पर्णध्वद्भिः । अनडुह् -- अनडुद्भ्याम् । अनडुद्भिः । सः इत्येव, विद्वान् । पपिवान् । नकारस्य न भवति । रुत्वे नाप्राप्ते इदमारभ्यते इति तद् बाध्यते । संयोगान्तलोपस्तु नैवम् इति तेन एतदेव दत्वं बाध्यते । अनडुहोऽपि ढत्वमनेन बाध्यते । नुमस्तु विधानसामर्थ्यान्न भवति, अनड्वान्, हे अनड्वन् इति । [11]पदस्य इत्येव, विद्वांसौ । विद्वांसः ॥

## तिप्यनस्तेः । (७३/२४८४)

तिपि परतः सकारान्तस्य पदस्य अनस्तेः दकार आदेशो भवति । अचकाद् भवान् । अन्वशाद् भवान् । तिपि इति किम् ? चकास्तेः क्विप्, चकाः । अनस्तेः इति किम् ? [12]आप एवेदं सलिलं [13]सर्वमाः । आः इत्यस्तेः लङि तिपि 'बहुलं छन्दसि' (७. ३. ९७/३५८६) इति ईड् न कृतः ॥

---

1. अम्नयेव ह. 2. ऊधयेव ह. 3. अहर्पतये मा. सं. 9.20. 4. महाव्याहृतिः ब. 5. भुवनेषु मुद्रितः पाठः 6. भुवो मध्यं भुव इदम् इत्यधिकम् ब. इ. ड. 7. इति नास्ति क. ब. 8. इत्येतयोः इत्यधिकम् इ. 9. उखास्रत् ड. 10. पर्णध्वत् ड. 11. वाक्यमिदं नास्ति क. ह. 12. अप्रकेतं सलिलं सर्वमा इदम् ऋ. 10. 129. 3. 13. सर्वमासीत् इ.

## सिपि धातो रुर्वा । (७५/२४८७)

सिपि परतः सकारान्तस्य पदस्य धातोः रुः इत्ययमादेशो भवति, दकारो वा । अचकाः त्वम्, अचकात् त्वम् । अन्वशाः त्वम्, अन्वशात् त्वम् । धातुग्रहणं चोत्तरार्थं रुग्रहणं च ॥

## दश्च । (७५/२४६८)

दकारान्तस्य धातोः [1]पदस्य सिपि परतो रुः भवति, दकारो वा । अभिनः त्वम्, अभिनत् त्वम् । [2]अच्छिनः त्वम्, अच्छिनत् त्वम् ॥

## र्वोरुपधाया दीर्घ इकः । (७६/४३३)

रेफवकारान्तस्य धातोः [3]पदस्य उपधायाः इकः दीर्घो भवति । गीः । धूः । [4]पूः । आशीः । [5]वकारग्रहणमुत्तरार्थम् । [6]उपधाग्रहणं किम् ? अबिभर् भवान् । अभ्यासेकारस्य मा भूत् । इकः इति किम् ? [7]अत्रैव प्रत्युदाहरणे [8]भशब्दाकारस्य मा भूत् । धातोः इत्येव, अग्निः । वायुः । पदस्य इत्येव, गिरौ । गिरः ॥

## हलि च । (७७/३५४)

हलि च परतो रेफवकारान्तस्य धातोः उपधायाः इकः दीर्घः भवति । आस्तीर्णम् । विस्तीर्णम् । विशीर्णम् । अवगूर्णम् । वकारान्तस्य – दीव्यति । [9]सीव्यति । धातोः इत्येव, दिवम् इच्छति दिव्यति । चतुरः इच्छति चतुर्यति । इकः इत्येव, [10]स्मर्यते । [11]भव्यम् । अपदान्तार्थोऽयमारम्भः ॥

## उपधायां च । (७८/२२६७)

हलि इति अनुवर्तते । धातोः उपधाभूतौ यौ रेफवकारौ हल्परौ तयोः उपधायाः इको दीर्घो भवति हुर्च्छा – [12]हूर्च्छिता । मुर्च्छा – मूर्छिता । [13]उर्वी – ऊर्विता । धुर्वी – धूर्विता । हलि इत्येव, [14]चिरि, जिरि – चिरिणोति । जिरिणोति । इह कस्मान्न भवति, 'री गतौ' (धा. पा. १५०१) रिर्यतुः, रिर्युः, 'वी गत्यादिषु' (धा. पा. १०४९) विव्यतुः, विव्युः इति ? यणादेशस्य स्थानिवत्त्वात् असिद्धत्वाच्च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः । [15]चतुर्यिता इत्यत्रापि बहिरङ्गलक्षणत्वात् अतो लोपस्य[16] (६.४.४८/२३०८) धातोः [17]उपधाभूतो रेफो न भवति । प्रतिदीव्ना [18]इत्यत्र तु 'हलि च' (८.२.७७/३५४) इति दीर्घत्वम्, दीर्घविधौ लोपाजादेशस्य स्थानिवद्[19]भावप्रतिषेधात् । 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या.प. ४२) इत्येतत् तु नाश्रयितव्यम् । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (है. प. १०३) इति जिव्रिः, किर्योः, गिर्योः इत्येवमादिषु दीर्घो न भवति ॥

---

1. परस्य इत्यधिकम् ब. 2. उदाहरणमिदं नास्ति इ. 3. परतः इत्यधिकम् क. 4. पूः नास्ति ड. 5. वकारस्य ग्रहणम् इ, वग्रहणम् ह. 6. उपधायाः इति किम् इ. 7. अत्रैव दकारस्य मा भूत् ह. 8. भकाराकारस्य ड. 9. नास्ति इ. क. 10. स्वर्यते ह. 11. हव्यम् क. 12. हूर्च्छेति क. 13. नास्ति क, तुर्वी, तूर्विता इत्यधिकम् ह. ड. ब. 14. चिरि जिरि नास्ति ह. 15. चतुर्यता ह. 16. असिद्धत्वात् इत्यधिकम् क. 17. उपधारेफो क. 18. इत्यत्रापि च क. 19. भावस्य ब.

## न भकुर्छुराम्। (७९/१६२९)

रेफवकारान्तस्य भस्य कुर् छुर् इत्येतयोश्च दीर्घो न भवति। [1]धुरं वहति धुर्यः। [2]धुरि साधुः धुर्यः। [3]दिव्यम्। कुर् – कुर्यात्। छुर् – छुर्यात्। [4]रेफवकाराभ्यां [5]भविशेषणं किम्? प्रतिदीव्ना। [6]प्रतिदीव्ने॥

## अदसोऽसेर्दादु दो मः। (८०/४०९)

अदसोऽसकारान्तस्य [7]वर्णस्य दात् परस्य उवर्णादेशो भवति, दकारस्य च मकारः। अमुम्, अमू, अमून्। अमुना, अमूभ्याम्। 'भाव्यमानेनाप्यु[8]कारेण सवर्णानां ग्रहणमिष्यते' (पु.प. २१) इति [9]एकमात्रिकस्य मात्रिकः, द्विमात्रिकस्य द्विमात्रिकः आदेशो भवति। असेः इति किम्? अदः इच्छति अदस्यति।

[९२७] अदसोऽनोस्त्र इति वक्तव्यम्। (म.भा. ३.४१४)

ओकाररेफयोरपि प्रतिषेधो यथा स्यात् इति। अदोऽत्र। [10]अदः। [11]तदर्थं केचित् [12]सूत्रं वर्णयन्ति, अः सेः यस्य सोऽयम् असिः, यत्र [13]सकारस्य अकारः [14]क्रियते इति, तेन [15]त्यदाद्यत्वविधाने एतदन्यत्र न भवितव्यम् एव इति। अद्र्यादेशे कथम्?

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥ (म.भा. ३.४१४)

इति। यैः असेः इति सकारस्य प्रतिषेधः क्रियते, [16]'अनन्त्यविकारे [17]अन्त्यसदेशस्य' (व्या.प. ६३) इति च परिभाषा नाश्रीयते, तेषामुभयोरपि मुत्वेन भवितव्यम्, अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्चः इति, यथा चलीक्लृप्यते इति लत्वम्। ये तु परिभाषामाश्रयन्ति तेषामन्त्यसदेशस्य एव भवितव्यम्, अदमुयङ्, अदमुयञ्चौ, अदमुयञ्चः इति। येषां तु त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम् इति दर्शनम्, तेषामत्र [18]न भवितव्यम्, अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्चः इति। दात् इति किम्? अलोऽन्त्यस्य मा भूत्, अमुया। अमुयोः॥

## एत ईद् बहुवचने। (८१/४३८)

अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारः, बहुवचने [19]बहूनामर्थानामुक्तौ। अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु। बहुवचने इत्यर्थनिर्देशोऽयम्, [20]पारिभाषिकस्य हि [21]बहुवचनस्य ग्रहणे अमी इत्यत्र न स्यात्॥

---

1. धुरं वहति नास्ति ह. 2. उदाहरणमिदं नास्ति इ. क. 3. नास्ति ड. 4. रेफवकारान्तस्य क. 5. भस्य इ, तस्य ह. 6. नास्ति फ.ब. 7. वर्णमात्रस्य ततः परस्य दकारात् परस्य वर्णस्य ह. 8. अकारेण इ. 9. मात्रिकस्य क.इ. 10. अदः कुलम् क.इ.ह. 11. अतः इ. 12. सूत्रं नास्ति इ. 13. सकारमात्रस्य इ. 14. कृतः इ. 15. त्यदाद्यत्वाभावे सर्वत्र न भवितव्यम् क. इ. 16. तैः इत्यधिकम् क. इ. 17. अन्तस्यैव भवितव्यम् इति परिभाषा क. 18. नैव क. 19. बहूनामर्थानामुक्तौ नास्ति इ. 20. परिभाषितस्य ह. 21. बहुवचने गृह्यमाणे इ.क.ब.

## वाक्यस्य टेः प्लुत उदात्तः । (८२/९३)

[1]अधिकारोऽयम् । वाक्यस्य टेः इति, प्लुतः इति च, उदात्तः इति च, एतत् त्रयमप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः । यत् इत ऊर्ध्वमनुक्रमिष्यामः वाक्यस्य टेः प्लुत उदात्तः इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'प्रत्यभिवादेऽशूद्रे' (८.२.८३/९४) । अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधि देवदत्त३ । [2]पदाधिकारोऽनुवर्तते एव । वाक्यग्रहणमनन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम् । टिग्रहणं व्यञ्जनान्त्यस्यापि टेरचः प्लुतो यथा स्यात्, [3]अग्निचि३त् इति ॥

## प्रत्यभिवादेऽशूद्रे । (८३/९४)

प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते, तत्र अशूद्रविषये[4] यद् वाक्यं वर्तते तस्य टेः प्लुत उदात्तो भवति । अभिवादये देवदत्तोऽहम्, भो आयुष्मानेधि देवदत्त३[5] । अशूद्रे इति किम् ? अभिवादये [6]तुषजकोऽहम्, भो आयुष्मानेधि तुषजक ।

[९२८] स्त्रियामपि प्रतिषेधो वक्तव्यः । (म.भा. ३. ४१६)

अभिवादये गार्ग्यहम्, भो आयुष्मती भव गार्गि । असूयकेऽपि केचित् प्रतिषेधमिच्छन्ति, अभिवादये स्थाल्यहं भोः, आयुष्मान् एधि स्थालिन् । [7]यावच्च तस्यासूयकत्वं न ज्ञायते तावदेव प्रत्यभिवादवाक्यम् । तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते [8]प्रत्यभिवादः एव नास्ति, कुतः प्लुतः । तथा [9]ह्युक्तम् – [10]असूयकस्त्वं जाल्म, न त्वं [11]प्रत्यभिवादनमर्हसि, भिद्यस्व वृषल [12]स्थालिन् (म. भा. ३. ४१६) इति । अभिवादनवाक्ये यत् सङ्कीर्तितं नाम गोत्रं वा, [13]तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र [14]प्लुतिः इष्यते । इह [15]न भवति, देवदत्त कुशल्यसि, देवदत्त आयुष्मानेधि इति ।

[९२९] भो राजन्यविशां वेति वक्तव्यम् । (म. भा. ३. ४१६)

भो अभिवादये देवदत्तोऽहम्, आयुष्मानेधि देवदत्त भोः३, आयुष्मानेधि देवदत्त भोः । राजन्य – अभिवादये इन्द्रवर्मा अहं भोः, आयुष्मानेधि इन्द्रवर्म३न्, आयुष्मानेधि इन्द्रवर्मन् । विश् – अभिवादये इन्द्रपालितोऽहम् भोः, आयुष्मानेधि इन्द्रपालित३, आयुष्मानेधि इन्द्रपालित ॥

## दूराद्धूते च । (८४/९५)

दूराद्धूते यद् वाक्यं वर्तते तस्य टेः [16]प्लुतो भवति, स चोदात्तः[17] । आह्वानं हूतम्, शब्देन सम्बोधनम् । आगच्छ भो माणवक देवदत्त३ । आगच्छ भो माणवक यज्ञदत्त३ । दूरं यद्यप्यपेक्षाभेदाद[18]नवस्थितम्, तथापि हूतापेक्षं यत् तदाश्रीयते इति यत्र प्राकृतात् प्रयत्नाद् [19]यत्नविशेषे आश्रीयमाणे शब्दः श्रूयते तद् दूरम् । हूतग्रहण च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम् । तेन यत्राप्याह्वानं नास्ति तत्रापि प्लुतिर्भवति, सक्तून् पिब देवदत्त३, पलायस्व देवदत्त३ इति । अस्याश्च प्लुतेरेकश्रुत्या समावेशः इष्यते । दूरात् इति किम् ? आगच्छ भो माणवक देवदत्त । दूरादाह्वाने वाक्यस्यान्ते यत्र सम्बोधनपदं भवति तत्रायं प्लुतः इष्यते, तेनेह न भवति, देवदत्त आगच्छ ॥

---

1. अधिकारोऽयम् नास्ति क. इ. ह. 2. पदाधिकारोऽनुवर्तते एव नास्ति ब. 3. अग्निचीदिति ब. ड, सोमसूदिति ड. 4. प्रत्यभिवादे इत्यधिकम् ड. 5. इति इत्यधिकम् इ. 6. तुपूजको क. इ. 7. यावच्च नास्ति क. इ. 8. अभिवाद एव क, नास्ति ह. 9. चोक्तम् क. 10. असूयकः नास्ति इ. 11. प्रत्यभिवादमर्हसि इ. ड. 12. स्थालिवत् क. इ. 13. तद् नास्ति क. 14. प्लुतिः नास्ति इ. 15. हि इत्यधिकम् ह. 16. प्लुतः उदात्तो भवति इ. 17. भवति इत्यधिकम् क. 18. अव्यवस्थितम् ड. 19. प्रयत्नाविशेषे इ.क.ह.ब.

## हैहेप्रयोगे हैहयोः । (८५/९६)

[1]हैहेप्रयोगे यद् वाक्यं वर्तते तत्र हैहयोः एव प्लुतो भवति । है३ देवदत्त । हे३ देवदत्त । देवदत्त है३ । देवदत्त हे३ । पुनर्हैहयोर्ग्रहणमन्त्ययोरपि यथा स्यात् ॥

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । (८६/९७)

'[2]प्रत्यभिवादेऽशूद्रे' (८.२.८३/९४) इत्येवमादिना यः प्लुतो विहितः, तस्यैवायं स्थानिविशेषः उच्यते । ऋकारवर्जितस्य गुरोः अनन्त्यस्य, अपिशब्दाद् अन्त्यस्यापि टेः [3]एकैकस्य सम्बोधने वर्तमानस्य प्लुतो भवति प्राचामाचार्याणां मतेन । दे३वदत्त, देवद३त्त, देवदत्त३ । य३ज्ञदत्त, यज्ञद३त्त, यज्ञदत्त३ । गुरोः इति किम् ? वकारात् परस्य मा भूत् । अनृतः इति किम् ? कृष्णमि३त्र, कृष्णमित्र३ । एकैकग्रहणं पर्यायार्थम् । प्राचाम् इति ग्रहणं विकल्पार्थम् । आयुष्मानेधि देवदत्त । तदनेन यदेतद् उच्यते, 'सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्तव्यः' (म. भा. ३.४२०) इति [4]तदुपपन्नं भवति ॥

## ओमभ्यादाने । (८७/३७०६)

अभ्यादानं प्रारम्भः, तत्र यः ओम्शब्दः तस्य प्लुतो भवति । ओ३म् 'अग्निमीळे पुरोहितम्' (ऋ. १.१.१.) । अभ्यादाने इति किम् ? 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छां. उ. १.१.१.) ॥

## ये यज्ञकर्मणि । (८८/३६०७)

ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति । ये३ यजामहे । यज्ञकर्मणि इति किम् ? 'ये यजामह इति पञ्चाक्षरम्' (तै. १.६.११.१) इति स्वाध्यायकाले मा भूत् । ये यजामहे इत्यत्रैवायं प्लुतः इष्यते । इह हि न भवति, 'ये [5]देवासो दिव्येकादश स्थ' (ऋ. १.१३९.११) इति ॥

## प्रणवष्टेः । (८९/३६०८)

[6]यज्ञकर्मणि इति वर्तते । यज्ञकर्मणि टेः प्रणवः आदेशो भवति[7] । क एष प्रणवो नाम ? पादस्य वा [8]अर्धर्चस्य वा अन्त्यमक्षरमुपसंगृह्य तदाद्यक्षरशेषस्य स्थाने [9]त्रिमात्रमोकारमोङ्कारं[10] वा विदधति [11]तं प्रणव इत्याचक्षते (म. भा. ३.४१९) । [12]'अपां रेतांसि जिन्वतो३म्' (ऋ. ८.४४.१६) । 'देवान् जिगाति सुम्नयो३म्' (ऋ. ३.२७.१) । [13]टिग्रहणं सर्वादेशार्थम् । ओकारः सर्वादेशो यथा स्यात्, व्यञ्जनान्ते अन्त्यस्य मा भूत् इति । [14]यज्ञकर्मणि इत्येव, 'अपां रेतांसि जिन्वति' (ऋ. ८.४४.१६) ॥

---

1. है हे इत्येतयोः क. इ. ह. ब. 2. वाक्यमिदं नास्ति ब. ड. ह. 3. एकैकस्य नास्ति इ. क. ह. ब. 4. तदुपपद्यते इ. क. ह. 5. देवासः मुद्रितः पाठः 6. वाक्यमिदं नास्ति इ. ह. ब. 7. स च प्लुतः इत्यधिकम् क. 8. अर्धस्य ह. 9. टेः इति यावत् इत्यधिकम् ह. 10. वायं विदधाति क. 11. प्रातिशाख्यविदः इत्यधिकम् इ. ब. ड. 12. अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयं इत्यधिकम् ब. 13. सर्वादेशो व्यञ्जनान्तेषु यथा स्यात् । अन्तस्य मा भूत् क. 14. वाक्यमिदं नास्ति इ. ह.

## याज्यान्तः । (९०/३६०९)

याज्या नाम ये याज्याकाण्डे पठचन्ते मन्त्राः, तेषामन्त्यो यः टिः स प्लवते यज्ञकर्मणि । 'स्तोमैर्विधेमाग्नये३'[1] (ऋ. ८.४३.११)[2] । [3]'जिह्वामग्ने चकृषे [4]हव्यवाह३म्' (तै. ४.४.४.१) । अन्तग्रहणं किम् ? याज्या नाम ऋचः काश्चिद्[5]वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि [6]तेषां सर्वेषां टेः प्लुतः प्राप्नोति । सर्वान्त्यस्यैव इष्यते, तदर्थमन्तग्रहणम् ॥

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः । (९१/३६१०)

ब्रूहि प्रेष्य श्रौषट् वौषट् आवह [7]इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि । 'अग्नयेऽनुब्रू३हि' (श. ब्रा. २.५.३.१२) । प्रेष्य – अग्नये गोमयान् प्रे३ष्य । श्रौषट् – 'अस्तु श्रौ३षट्' (तै. १.६.११.१) । वौषट् – 'सोमस्याग्ने वीहि वौ३षट्' (ऐ.ब्रा. ४.५.४.६) । आवह – 'अग्निमा३वह' (तै. ब्रा. ३.५.१.२) । 'आवह देवान् यजमानाय' (तै.ब्रा. ३.५.३.२) इत्येवमादावयं प्लुतो न भवति, 'सर्वे विधयः छन्दसि विकल्प्यन्ते' (पु.प. ३५) इति ॥

## अग्नीत्प्रेषणे परस्य च । (९२/३६११)

अग्नीधः प्रेषणम् अग्नीत्प्रेषणम् । [8]तत्रादेः प्लुतो भवति परस्य च । आ३ श्रा३वय (तै. १.६.११.२) । ओ३ श्रा३वय । अत्रैवायं प्लुत इष्यते । तेन इह न भवति, 'अग्नीदग्नीन् वि हर बर्हिः[9]स्तृणाहि' (तै. ६.३.१.२) इति । तदर्थं केचिद् वक्ष्यमाणं विभाषा इत्य[10]भिसम्बध्नन्ति, सा च व्यवस्थितविभाषा इति । अपर आह – 'सर्व एव प्लुतः साहसमनिच्छता विभाषा [11]विज्ञेयः' (म.भा. ३.४२०) इति । इह तु, उद्धर३ उद्धर, अभिहर३ अभिहर इति छान्दसः प्लुतव्यत्ययः[12] । [13]यज्ञकर्मणि इत्येव, ओ श्रावय[14] ॥

## विभाषा पृष्टप्रतिवचने हेः । (९३/३६१२)

पृष्टप्रतिवचने[15] विभाषा [16]हेः प्लुतो भवति । अकार्षीः कटं देवदत्त ? अकार्षं हि३, अकार्षं हि । अलावीः केदारं देवदत्त ? अलाविषं हि३, अलाविषं हि । पृष्टप्रतिवचने इति किम् ? कटं [17]करिष्यति हि । हेः इति किम् ? [18]करोमि ननु ॥

## निगृह्यानुयोगे च । (९४/३६१३)

स्वमतात् प्रच्यावनं निग्रहः । अनुयोगः तस्य मतस्य आविष्करणम् । तत्र निगृह्यानुयोगे यद् वाक्यं वर्तते

---

1. अग्नया३ ड. 2. इति इत्यधिकम् क. 3. जिह्वामग्ने ड. 4. हव्यवाहाम् मुद्रित पाठः 5. वाक्यसमुदायः ह. 6. सम्भवन्ति इत्यधिकम् ह. 7. इत्येतेषां प्लुतो भवति य. 8. तस्मादेवादिप्लुतान् इ, तस्म.देव आदेः क. 9. तृणीहि मुद्रितः पाठः 10. सम्बन्धयन्ति ब. 11. विज्ञायते ब. 12. द्रष्टव्यः इत्यधिकम् इ. क. ह. 13. वाक्यमिदं नास्ति इ.क.ब. 14. आ श्रावय इत्यधिकम् ह. 15. अर्थे इत्यधिकम् क. इ. 16. हि इत्येतस्य क.इ.ह. 17. करिष्यसि ब. 18. कटं करोमि ह.

तस्य टेः प्लुतो भवति विभाषा[1]। अनित्यः शब्दः इति केनचित् प्रतिज्ञातम्, तम् [2]उपालिप्सुः उपपत्तिर्भिनिगूह्य साभ्यसूयमनुयुङ्क्ते, अनित्यः शब्द इत्यात्थ३, अनित्यः शब्द इत्यात्थ। अद्य श्राद्धमित्यात्थ३, अद्य श्राद्धमित्यात्थ। अद्यामावास्येत्यात्थ३, अद्यामावास्येत्यात्थ। अद्य अमावास्या इत्येवं [3]वादी युक्त्या प्रच्याव्य स्वमतादेवम[4]नुयुज्यते ॥

## आम्रेडितं भर्त्सने। (९५/३६१४)

[5]वाक्यादेः आमन्त्रितस्य (८.१.८/२१४३) इति भर्त्सने द्विर्वचनमुक्तम्, तस्य आम्रेडितं प्लवते। चौर चौर३, वृषल वृषल३, दस्यो दस्यो३, [6]घातयिष्यामि त्वा, बन्धयिष्यामि त्वा।

[९३०] भर्त्सने पर्यायेणेति वक्तव्यम्।

चौर३ चौर, चौर चौर३। तदर्थमाम्रेडितग्रहणं द्विरुक्तोपलक्षणार्थं वर्णयन्ति ॥

## अङ्गयुक्तं तिङाकाङ्क्षम्। (९६/३६१५)

अङ्ग [7]इत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने[8] प्लवते[9]। अङ्ग कूज३, अङ्ग व्याहर३, इदानीं ज्ञास्यसि जाल्म। तिङ इति किम्? अङ्ग देवदत्त, मिथ्या वदसि। आकाङ्क्षम् इति किम्? अङ्ग पच। नैतदपरमाकाङ्क्षति। भर्त्सने इत्येव, अङ्गाधीष्व, ओदनं ते दास्यामि ॥

## विचार्यमाणानाम्। (९७/३६१६)

[10]प्रमाणेन वस्तुपरीक्षणं विचारः, तस्य विषये विचार्यमाणानां वाक्यानां टेः प्लुतो भवति। 'होतव्यं दीक्षितस्य गृहा३इ। (तै. ६.१.४.५)। होतव्यं न होतव्यम् इति विचार्यते। तिष्ठेद्यूपा३इ। अनुप्रहरेद्यूपा३इ। यूपे तिष्ठेत्, यूपे अनुप्रहरेत् इति विचार्यते ॥

## पूर्वं तु भाषायाम्। (९८/३६१७)

भाषायां विषये विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु३ रज्जुर्नु। लोष्ठो नु३ कपोतो नु[11]। प्रयोगापेक्षं पूर्वत्वम्। [12]इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते ॥

## प्रतिश्रवणे च। (९९/३६१८)

प्रतिश्रवणम् अभ्युपगमः, प्रतिज्ञानम्। श्रवणाभिमुख्यं [13]च [14]तत्राविशेषात् सर्वस्य [15]ग्रहणम्। प्रतिश्रवणे यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति। गां मे देहि भोः, अहं ते ददामि३। नित्यः शब्दो भवितुमर्हति३। देवदत्त भोः, किमात्थ३ ॥

---

1. चकारोऽत्र विभाषानुकर्षणार्थः इत्यधिकम् ह. 2. उपालिप्सुः नास्ति ह. 3. वादी नास्ति इ, वादिनम् ड. 4. अनुमण्डचते ड. 5. आम्रेडितसञ्ज्ञकं भर्त्सने प्लवते इ, भर्त्सनेऽर्थे आम्रेडितं प्लवते ब. 6. मारयिष्यामि त्वां बाधयिष्यामि इ.ह.ड. 7. इत्येतेन क. 8. प्लुतं भवति क. 9. आकाङ्क्षति इति आकाङ्क्षम्, यद् वक्ष्यमाणं किञ्चित् अपरम् आकाङ्क्षति इत्यधिकम् ब.ह. 10. प्रमाणैः ड. 11. स्थाणुर्नु पुरुषो नु इत्यधिकम् इ. क. ड. 12. वाक्यमिदं नास्ति इ. 13. वा ह. 14. तत्र विशेषाभावात् इ. 15. प्रतिश्रवणस्य इत्यधिकम् इ.

## अनुदात्तं प्रश्नान्ताभिपूजितयोः। (१००/३६१९)

अनुदात्तः प्लुतो भवति प्रश्नान्ते, अभिपूजिते च[1]। अगम३ः पूर्वा३न् ग्रामा३न्[2] अग्निभूता३इ, पटा३उ? अग्निभूते, पटो इत्येतयोः प्रश्नान्ते वर्तमानयोः अनुदात्तः प्लुतो भवति। अगमः इत्येवमादीनां तु 'अनन्त्यस्यापि प्रश्नाख्यानयोः' (८.२.१०५/३६२४) इति स्वरितः प्लुतो भवति। अभिभूजिते – शोभनः खल्वसि माणवक३॥

## चिदिति चोपमार्थे प्रयुज्यमाने। (१०१/३६२०)

[2]अनुदात्तम् इति वर्तते। चित् इत्येतस्मिन् निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेः अनुदात्तः प्लुतो भवति। [3]प्लुतोऽप्यत्र विधीयते, न गुणमात्रम्। अग्निचिद् [4]भाया३त्। राजचिद् [5]भाया३त्। [6]अग्निरिव भायात्, राजेव भायात् इत्यर्थः। उपमार्थे इति किम्? कथञ्चिद् आहुः। प्रयुज्यमाने इति किम्? अग्निर्माणवको भायात्॥

## उपरिस्विदासीदिति च। (१०२/३६२१)

अनुदात्तम् इति वर्तते। उपरिस्विदासीत् इत्येतस्य टेः अनुदात्तः प्लुतो भवति। 'अधः स्विदासी३त् उपरि स्विदासी३त्' (तै. ब्रा. २.८.९५)। अधः स्विदासीद् इत्यत्र 'विचार्यमाणानाम्' (८.२.९७/३६१६) इति उदात्तः प्लुतः, उपरि स्विदासीत् इत्यत्र तु अनेनानुदात्तः[7]॥

## स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु। (१०३/३६२२)

स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायाम्, सम्मतौ, कोपे, कुत्सने च गम्यमाने। [8]'वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु' (८.१.८/२१४३) इति द्विर्वचनमुक्तम्, तत्रायं प्लुतविधिः। [9]असूयायां [10]तावत् – 'माणवक३ माणवक, अभिरूपक३ अभिरूपक, रिक्तं त आभिरूप्यम्। [11]सम्मतौ – माणवक३ माणवक, अभिरूपक३ अभिरूपक, शोभनः खल्वसि। कोपे – माणवक३ माणवक, अविनीतक३ अविनीतक, इदानीं ज्ञास्यसि जाल्म। कुत्सने – शाक्तीक३ शाक्तीक, याष्टीक३ याष्टीक, रिक्ता ते शक्तिः॥

[९३१] असूयादिषु वावचनं कर्तव्यम्। (म. भा. ३.४२०)

माणवक माणवक इत्येवमाद्यपि यथा स्यात्॥

---

1. नानेन प्लुतो विधीयते किन्तु दूराद्धूतादिषु विहितस्यानन्त्यस्यापि प्रश्नाख्यानयोः स्वरितप्लुतस्य अनुदात्तत्वं गुणमात्रं विधीयते इत्यधिकम् ड. ब. ह. 2. अनुदात्तः क. 3. वाक्यमिदं नास्ति क. 4–5. भवान् क. 6. अग्निरिव राजेव भवान् भूयात् इत्यर्थः क. 7. प्लुतः इत्यधिकम् ब. ह. 8. वाक्यमिदं नास्ति इ. 9. असूयायांतावत् नास्ति ब. 10. तावत् नास्ति इ. 11. सम्मतौ नास्ति इ.

## क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् । (१०४/३६२३)

[1]स्वरितः इति वर्तते । क्षिया आचारभेदः, आशीः प्रार्थनाविशेषः, शब्देन व्यापारणं प्रैषः, एतेषु गम्यमानेषु तिङन्तमाकाङ्क्षं यत् तस्य [2]स्वरितः प्लुतो भवति । आकाङ्क्षति इति आकाङ्क्षम्, तिङन्तमुत्तरपदमाकाङ्क्षति इत्यर्थः । क्षियायां तावत् – स्वयं[3] रथेन याति३, उपाध्यायं पदातिं गमयति इति । स्वयम् ओदनं ह भुङ्क्ते३, उपाध्यायं सक्तून् पाययति । पूर्वमत्र तिङन्तमुत्तरपदम् आकाङ्क्षति इति साकाङ्क्षं भवति । आशिषि – [4]सुतांश्च लप्सीष्ट३ धनं च तात । छन्दोऽध्येषीष्ट३ व्याकरणं च भद्र । प्रैषे – कटं कुरु३ ग्रामं च गच्छ । यवान् लुनीहि३ सक्तूंश्च पिब । आकाङ्क्षम् इति किम् ? दीर्घं ते आयुरस्तु । अग्नीन् विहर ॥

## अनन्त्यस्यापि प्रश्नाख्यानयोः । (१०५/३६२४)

पदस्य इति वर्तते, स्वरितम् इति च । अनन्त्यस्यापि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने आख्याने च । अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ, पटा३उ । सर्वेषामेव पदानामेष स्वरितः प्लुतः । अन्त्यस्य 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (८.२.१००/३६१९) इति अनुदात्तोऽपि पक्षे भवति । आख्याने – अगम३ः पूर्वा३न् ग्रामा३न् भो३ः ॥

## प्लुतावैच इदुतौ । (१०६/३६२५)

[5]दूराद्धूतादिषु प्लुतो विहितः । [6]तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूतौ इदुतौ [7]प्लुतौ । ऐ३तिकायन । औ३पमन्यव । अत्र यदेवर्णोवर्णयोः अवर्णस्य च [8]समविभागः, तदा इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते । प्लुतौ इति [9]हि क्रियानिमित्तोऽयं व्यपदेशः । इदुतौ प्लवेते [10]वृद्धिं गच्छतः इत्यर्थः । तावती च सा प्लुतिर्भवति यया तावैचौ त्रिमात्रौ सम्पद्येते । यदा तु अर्धमात्रा अवर्णस्य अध्यर्धमात्रा इवर्णोवर्णयोः, तदा तौ अर्धतृतीयमात्रौ क्रियेते इति । [11]भाष्ये तु उक्तम्, 'इष्यते एव चतुर्मात्रः प्लुतः' (म.भा. ३.४२१) इति । तत् कथम् ? [12]समप्रविभागपक्षे इदुतोरनेन त्रिमात्रः प्लुतो [13]विधीयते[14] ॥

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ । (१०७/३६२६)

एचोऽप्रगृह्यस्य [15]अदूराद्धूते [16]प्लुतविषयस्य अर्धस्या[17]कारः आदेशो भवति, स च प्लुतः,[18] उत्तरस्ये[19]–कारोकारावादेशौ भवतः । विषयपरिगणनं कर्तव्यम् —

[९३२] प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् । (म.भा. ३.४२१)

---

1. वाक्यमिदं नास्ति इ. 2. टेः इत्यधिकम् क. 3. ह इत्यधिकम् क. 4. पुत्रांश्च क.ड. 5. वाक्यमिदं नास्ति इ.ह. 6. तत्रैव एचः प्लुतः प्रसङ्गे क.इ, एचः प्लुतिः प्रसङ्गे ह. 7. प्लवते क.ड.ह.ब. 8. समप्रविभागः क.इ.ह.ब. 9. हि नास्ति क. 10. वर्धेते ह. 11. भाष्योक्तमिष्यते क. 12. समप्रविभागे पक्षे क.इ.ब. 13. भवति क. 14. इति इत्यधिकम् इ. 15. दूराद्धूतादिवर्जिते इ. ह. ड. 16. प्लुतविषये क. इ. ह. 17. अकारमात्रस्य क. 18. भवति इत्यधिकम् क.इ.ब. 19. तु अर्धस्य इत्यधिकम् क.इ.ह.ब.

प्रश्नान्ते – अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूता३इ, [1]पटा३उ । [2]अभिपूजिते – भद्रं करोषि माणवक३ अग्निभूता३ इ, पटा३उ । विचार्यमाणे – 'होतव्यं दीक्षितस्य गृहा३ इ (तै. ६.१.४.५) प्रत्यभिवादे – आयुष्मान् एधि अग्निभूता३इ, पटा३उ । याज्यान्ते – 'उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नया३इ (ऋ. ८.४३.११) ।

सोऽयमाकारः प्लुतो यथाविषयमुदात्तोऽनुदात्तः स्वरितो [3]वेदितव्यः । इदुतौ पुनरुदात्तावेव भवतः । परिगणनं किम् ? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा[4] । आगच्छ भो माणवक विष्णुभूते । परिगणने च सति अदूराद्धूते इति [5]न वक्तव्यम् । पदान्तग्रहणं [6]तु कर्तव्यम् । इह मा भूत्, भद्रं करोषि [7]गौः इति । अप्रगृह्यस्य इति किम् ? शोभने खलु स्तः खट्वे३ ।

[९३३] आमन्त्रिते छन्दसि प्लुतविकरोऽयं वक्तव्यः । (म.भा. ३.४२२)

'अग्ना३इ पत्नी वा३ः' (वा. सं. ८.१०) ॥

## तयोर्य्वावचि संहितायाम् । (१०८/३६२७)

तयोः इदुतोः यकारवकारादेशौ भवतोऽचि [8]संहितायां विषये । संहितायाम् इत्येतच्चाधिकृतम्[9] । इत उतरम्[10] आध्यायपरिसमाप्तेः यद् वक्ष्यामः संहितायाम् इत्येवं तद् वेदितव्यम् । अग्ना३याशा । पटा३वाशा । अग्ना३यिन्द्रम् । पटा३वुदकम् । अचि इति किम् ? अग्ना३इ । पटा३उ । संहितायाम् इति किम् ? अग्ना३इ [11]इन्द्रम् । पटा३उ उदकम् । इदुतोरसिद्धत्वात् 'इको यणचि' (६.१.७७/४७) इति[12] न प्राप्नोति इत्ययमारम्भः । अथापि कथञ्चित् तयोः सिद्धत्वं स्यात्, एवमपि सवर्णदीर्घत्वनिवृत्त्यर्थं (६ १. १०१/८५) शाकलनिवृत्त्यर्थं (६.१.१२७/९१) च वक्तव्यमेतत् । अथापि तन्निवृत्त्यर्थं यत्नान्तरमस्ति, तथापि यण्स्वरनिवृत्त्यर्थमिद[13]मारभ्यते । यणादेशस्य असिद्धत्वात् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८. २. ४/३६५७) इत्येष स्वरो[14] न भवति ॥

किं नु [15]यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ।
तौ च [16]मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी[17] तु निवर्त्यौ ॥

इक् तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव [18]तु हेतुः ॥ (म.भा. ३.४२३)

इति [19]श्रीवामनविरचितायां काशिकायां वृत्तौ
अष्टमाध्यायस्य द्वितीयः पादः ।

---

1. नास्ति इ. 2. अभिपूजिते – प्रत्यभिवादे नास्ति इ. 3. वा इत्यधिकम् ड.ब. 4. बन्धयिष्यामि त्वा इत्यधिकम् इ. 5. च इत्यधिकम् क. 6. च इ. 7. भोः इ. 8. परतः इत्यधिकम् क. इ. ह. ड. 9. वेदितव्यम् इत्यधिकम् ह. 10. आ नास्ति क.ड. 11. इदम् क, पश्य ब.ड. 12. यणादेशः इत्यधिकम् क. 13. उच्यते क.इ. 14. मा भूत् इ.ह.ड.ब. 15. यणादेः क.इ. 16. समस्वर ब. 17. विधौ क. 18. तु नास्ति क. 19. वामनविरचितायां नास्ति क.ह.

## अष्टमाध्यायस्य

## तृतीयः पादः

### मतुवसो रु सम्बुद्धौ छन्दसि। (१/३६२८)

[1]संहितायाम् इति वर्तते। मत्वन्तस्य वस्वन्तस्य च पदस्य रुः इत्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये। मत्वन्तस्य तावत् – 'इन्द्र मरुत्व इह पाहि सोमम्' (तै. १. ४. १८. १)। 'हरिवो मेदिनं त्वा' (तै. ४. ७. १४. ४)। [2]मरुतोऽस्य सन्ति, हरयोऽस्य सन्ति इति मतुप्। [3]सुप्तकारयोः हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् (६. १. ६८/२५२) संयोगान्तस्य लोपे (८. २. २३/५४) च कृते नकारस्य रुः भवति। वस्वन्तस्य खल्वपि – 'मीढ्वस्तोकाय तनयाय मृळ' (ऋ. २. ३३. १४)। इन्द्र साह्वः। क्वसोर्निपातनम् दाश्वान्साह्वान्मीढ्वांश्च (६. १. १२/३६२९) इति। मतुवसोः इति किम्? ब्रह्मन् [4]स्तोष्यामः। सम्बुद्धौ इति किम्? 'य एवं [5]विद्वानग्निमुपतिष्ठते' (मै. १. ५. ७)। छन्दसि इति किम्? हे गोमन्। हे पपिवन्।

[९३४] वन उपसङ्ख्यानं कर्तव्यम्। (म. भा. ३. ४२४)

'यस्त्वायन्तं वसुना प्रातरित्वः' (ऋ. १. ११५. २)। इणः प्रातःपूर्वस्य छन्दसि क्वनिप्।

[९३५] विभाषा भवद्भगवदघवतामोच्चावस्य। (म. भा. ३. ४२४)

छन्दसि भाषायां च भवत् भगवत् अघवत् इत्येतेषां विभाषा रुः वक्तव्यः, अवशब्दस्य च ओकारादेशः। सामान्येन छन्दसि भाषायां चेदं वचनम्। भवत् – हे भोः, हे भवन्। भगवत् – हे भगोः, हे भगवन्। अघवत् – हे अघोः, हे अघवन्। [6]निपातनविज्ञानाद् वा सिद्धम्। अथ वा [7]भो इत्येवमादयो निपाता द्रष्टव्याः। असम्बुद्धौ [8]अपि द्विवचनबहुवचनयोरपि दृश्यन्ते। भो देवदत्तयज्ञदत्तौ। भो देवदत्तयज्ञदत्तविष्णुमित्राः। तथा स्त्रियामपि च दृश्यन्ते, भो ब्राह्मणि इत्यादि। संहिताधिकार उत्तरत्र उपयुज्यते, [9]यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ 'नश्छव्यप्रशान्' (८. ३. ७/१४०) इति॥

---

1. पदस्य इति वर्तते क. इ. ब. ड. ह. 2. मरुतः – मतुप् नास्ति ड. 3. मतुपि कृते हल्ङ्यादिलोपे क, मतुपि नुमि कृते इ. 4. स्तोष्यामि ड. 5. विद्वान् सो क. 6. निपातविज्ञानात् ड. 7. भो भगो अघो क. ड. 8. इति क. 9. तत्र क.

## अत्रानुनासिकः पूर्वस्य तु वा। (२/१३६)

अधिकारोऽयम्। इत उत्तरं यस्य स्थाने रुः विधीयते ततः पूर्वस्य [1]तु वर्णस्य वा [2]अनुनासिको भवति इत्येतदधिकृतं वेदितव्यम्, यद् इत ऊर्ध्वम् अनुक्रमिष्यामस्तत्र। वक्ष्यति – 'समः सुटि' (८.३.५/१३५)। सँस्कर्ता। सँस्कर्तुम्। सँस्कर्तव्यम्[3]। अत्र[4]ग्रहणं रुणा सह संनियोगप्रतिपत्त्यर्थम्। अधिकारपरिमाणा[5]परिग्रहे हि सति 'ढो ढे लोप' (८.३.१३/२३३५) [6]इत्यत्रापि पूर्वस्य अनुनासिकः [7]आशङ्क्येत॥

## आतोऽटि नित्यम्। (३/३६३२)

अटि परतो रोः पूर्वस्य [8]आकारस्य स्थाने नित्यमनुनासिकादेशो भवति। 'दीर्घादटि [9]समानपादे' (८.३.९/३६३१) इति त्वं वक्ष्यति, ततः पूर्वस्य [10]आतो[11]ऽनुनासिकविकल्पे प्राप्ते नित्यार्थं वचनम्। '[12]महाँ असि' (ऋ. ३.४६.२)। 'महाँ इन्द्रो य ओजसा' (ऋ. ८.६.१)। 'देवाँ [13]अच्छा दीद्यत्' (ऋ. ३.१.१)। केचिद-नुस्वारमधीयते, स च्छान्दसो व्यत्ययो द्रष्टव्यः। आतः इति किम्? 'ये वा[14] वनस्पतींरनु' (वा. सं. १३.७)। अटि इति किम्? भवांश्चरति। भवांश्लाघयति। नित्यग्रहणं विस्पष्टार्थम्॥

## अनुनासिकात् परोऽनुस्वारः। (४/१३७)

अन्यशब्दोऽत्राध्याहर्तव्यः। तदपेक्षया चेयमनुनासिकात् इति पञ्चमी। अनुनासिकादन्यो यो वर्णः रोः [15]पूर्वः, यस्य अनुनासिकः न [16]कृतः, ततः परोऽनुस्वार आगमः भवति। वक्ष्यति – 'समः सुटि' (८.३.५/१३५)। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। 'पुमः खय्यम्परे' (८.३.६/१३९)। [17]पुंस्कामा। [18]'नश्छव्यप्रशान्' (८.३.७/१४०)। भवांश्चरति। केचित् तु परशब्दमेवा[19]न्यार्थं वर्णयन्ति। अनुनासिकात् परः अनुनासिकात् अन्यः अनुस्वारो भवति। यस्मिन् पक्षेऽनुनासिको [20]नास्ति तत्र अनुस्वारागमो भवति[21]। स तु कस्यागमो भवति? रोः पूर्वस्यै[22]वेति वर्तते, व्याख्यानादादेशो न [23]भवति॥

## समः सुटि। (५/१३५)

रुः[24] वर्तते। [25]समः इत्येतस्य रुः भवति सुटि परतः संहितायां विषये। सँस्कर्ता। सँस्कर्तुम्। सँस्कर्तव्यम्। संस्स्कर्ता। संस्स्कर्तुम्। संस्स्कर्तव्यम्। अत्र रोर्विसर्जनीये कृते 'वा शरि' (८.३.६६/१५१) इति पक्षे विसर्जनीय [26]एव प्राप्नोति। [27]व्यवस्थितविभाषा [28]द्रष्टव्या। तेन [29]अत्र नित्यं सकार एव [30]भवति।

---

1. तु नास्ति ब. इ. ड. 2. अनुकासिकादेशः ब. इ. 3. पुमः खय्यम्परे – पुंस्कामा इत्यधिकम् इ. 4. इति इत्यधिकम् इ. 5. परिज्ञाने ब. क. इ. 6. इत्येवमादावपि ब. क. 7. आशङ्क्यते ड. 8. आतः इ. 9. समानपदे इ. 10. आतः नास्ति ब. 11. अनुनासिको भवति क. 12. भव इत्यधिकम् क. 13. अच्छा दीव्यत् इति मुद्रितः पाठः 14. वाचस्पतींरनु इ. 15. पूर्वस्य यस्य क. 16. विहितः ह. 17. पुंस्कोकिलः ब. क, पुंस्त्वम् ड. 18. वाक्यमिदं नास्ति ड. 19. अन्यार्थे इ. 20. न भवति इ. 21. इत्यर्थः इत्यधिकम् ब. क. इ. ह. 22. एव नास्ति इ. 23. भविष्यति ब. ड. ह. 24. इति इत्यधिकम् क. 25. सम् इ. 26. एव नास्ति इ. 27. सा च इत्यधिकम् ब. क. इ. ह. 28. विज्ञायते ह. 29. एतस्मिन्नेव क. इ. 30. भविष्यति ह.

अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते, 'समः सुटि' इति द्विसकारको[1] निर्देशः। समः इति किम्? उपस्कर्ता। सुटि इति किम्? [2]संकृतिः[3]। कश्चिदाह –

[९३६] संपुंकानां [4]सो वक्तव्यः। (म. भा. ३.४२४)

[5]रुविधौ ह्यनिष्टप्रसङ्गः, संस्स्कर्ता, पुंस्स्कामा[6], कांस्स्कान्[7] इति॥

## पुमः खय्यम्परे। (६/१३९)

पुम् इत्येतस्य रुः भवति अम्परे खयि परतः। पुँस्कामा, पुंस्कामा। पुँस्पुत्रः, पुंस्पुत्रः। [8]पुँस्फलम्, पुंस्फलम्। पुँश्चली, पुंश्चली। [9]पुंस्कामा इत्यत्र विसर्जनीयस्य 'कुप्वोः ≍क ≍पौ च' (८.३.३७/१४२) इति प्राप्नोति। तस्मादत्र सकार एवादेशो वक्तव्यः। द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्रात् सः इत्यनुवर्तते। रुत्वम् तु अनुवर्तमानमपि [10]नात्राभिसम्बध्यते, सम्बन्धानुवृत्तिस्तस्य इति। खयि इति किम्? पुंदासः। पुंगवः[11]। अम्परे इति किम्? [12]पुंक्षीरम्। पुंक्षुरम्। परग्रहणं किम्? [13]पुमाख्यः। पुमाचारः॥

## नश्छव्यप्रशान्। (७/१४०)

[14]अम्परे इति वर्तते। [15]नकारान्तस्य पदस्य [16]प्रशान्वर्जितस्य रुः भवति अम्परे छवि परतः। भवाँश्छादयति, भवांश्छादयति। भवाँश्चिनोति, भवांश्चिनोति। भवाँष्टीकते, भवांष्टीकते। भवाँस्तरति, भवांस्तरति। छवि इति किम्? भवान् करोति। अप्रशान् इति किम्? प्रशान् छादयति। प्रशान् चिनोति। अम्परे इत्येव, भवान्त्सरुकः[17]॥

## उभयथर्क्षु। (८/३६३०)

पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते। नकारान्तस्य पदस्य छवि परतः अम्परे उभयथा [18]ऋक्षु भवति, रुर्वा नकारो वा। तस्मिंस्त्वा दधाति, तस्मिन् त्वा दधाति। ऋक्षु इति किम्? '[19]ताँस्त्वं खाद सुखादितान्' (वा. सं. ११.७८)॥

## दीर्घादटि समानपादे। (९/३६३१)

नः इत्यनुवर्तते। दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुः भवति अटि परतः, [20]तौ चेन् निमित्तनिमित्तिनौ [21]समानपादे भवतः। ऋक्षु इति [22]प्रकृतत्वाद् ऋक्पादः इह गृह्यते। 'परिधींरति' (ऋ. ९.१०७.१९)। '[23]देवाँ अच्छा दीद्यत्' (ऋ. ३.१.१) 'महाँ इन्द्रो य ओजसा' (ऋ. ८.६.१)।[24] दीर्घात् इति किम्? 'अहन्नहिम्' (ऋ. १.३२.१)। अटि इति किम्? इभ्यान् क्षत्रियान्। समानपादे इति किम्? [25]यातुधानानु[26]पस्पृशः। उभयथा इत्येव, आदित्यान् (ऋ. ८.६७.१.) हवामहे॥

---

1. अयं इत्यधिकम् ब. क. 2. संहरति क. 3. संप्लुतिः संभवति इत्यधिकम् ब. 4. रुवचनं ब. 5. विसर्जनीयस्य प्रसङ्गे इति क. 6–7. आमन्त्रयते इत्यधिकम् क. 8. पुंस्कम्बलः पुँस्कम्बलः ड. 9. पुंस्कामा – खयि नास्ति क. 10. नाभिसम्बध्यते ह. 11. पुम्भावः इत्यधिकम् क. 12. पुंक्षारः क, पुंक्षुरः ह. 13 पुमाख्युः ब. 14. वाक्यमिदं नास्ति ब. 15. नकारस्य ब. 16. प्रशान्शब्दवर्जितस्य ड. 17. पदस्य इति किम्? हन्ति इत्यधिकम् क. 18. ऋग्विषये इ, ऋग्विषये प्रयोगे ब. क. 19. तान् इत्यधिकम् क. 20. स चेत् रुः नकारश्च इ. 21. समानपादस्थौ ब. ड. 22. अधिकारात् इ. 23. भवाँ अच्छा दीद्यत् इ. ह. 24. महाँ असि इत्यधिकम् ब. क, महाँ हि सः इत्यधिकम् ड. ह. 25. अर्चिषा इत्यधिकम् इ. 26. उपस्पृशत् ड.

## नॄन् पे। (१०/१४१)

नॄन् इत्येतस्य नकारस्य रुर्भवति [1]पशब्दे परतः। अकारः उच्चारणार्थः। [2]नॄँः पाहि, नॄंः पाहि। नॄँः प्रीणीहि, नॄंः प्रीणीहि। पे इति किम्? [3]नॄन् भोजयति। उभयथा [4]इत्यपि केचिदनुवर्तयन्ति, नॄन् पाहि इत्यपि यथा स्यात्॥

## स्वतवान् पायौ। (११/३६३३)

स्वतवान् इत्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः। '[5]स्वतवाँः पायुरग्ने' (ऋ. ४. २. ६)॥

## कानाम्रेडिते। (१२/१४३)

कान् इत्येतस्य नकारस्य रुः भवति आम्रेडिते परतः। कांस्कान[6]मन्त्रयते। [7]कांस्कान् भोजयति। अस्य कस्कादिषु पाठो द्रष्टव्यः। तेन 'कुप्वोः ≍क ≍पौ च' (८. ३. ३७/१४२) इति[8] न भवति। 'समः सुटि' (८. ३. ५/१३५) इत्यतो वा सकारोऽनुवर्तते, स एवात्र विधीयते। पूर्वेषु[9] योगेषु [10]सम्बन्धावृत्त्या गतस्य रोः अत्र अनभिसम्बन्धः। आम्रेडिते इति किम्? [11]कान् कान् पश्यति। [12]एकोऽत्र कुत्सायाम्॥

## ढो ढे लोपः। (१३/२३३८)

ढकारस्य ढकारे[13] लोपो भवति। [14]सत्यपि पदाधिकारे तस्यासम्भवाद् अपदान्तस्य ढकारस्यायं लोपो विज्ञायते। लीढम्। [15]उपगूढम्। [16]ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम्। [17]श्वलिड् ढौकते इत्यत्र [18]तु जश्त्वे कृते [19]कार्यं नास्ति [20]इति लोपाभावः। [21]न च ढलोपो [22]जश्त्वापवादो विज्ञातुं [23]शक्यते, तस्य हि लीढादिः विषयः सम्भवति। [24]तत्र हि श्रुतिकृतमानन्तर्यमस्ति। शास्त्रकृतं तु यदा नानन्तर्यं ष्टुत्वस्यासिद्धत्वेन प्राप्तम्, तत् तु सूत्रकरणसामर्थ्याद् बाध्यते। श्वलिड् ढौकते इत्यत्र तु न श्रुतिकृतमानन्तर्यम्, [25]न शास्त्रकृतमिति अविषयोऽयं ढलोपस्य॥

## रो रि। (१४/१७३)

रेफस्य रेफे परतो लोपो भवति। नीरक्तम्। दूरक्तम्। अग्नी रथः। इन्दू रथः[26]। पुना रक्तं वासः। प्राता राजक्रयः। पदस्य इत्यत्र [27]विशेषणे षष्ठी[28], तेन अपदान्तस्यापि रेफस्य लोपो भवति, जर्गृधेः अजर्घाः, पास्पर्धेः अपास्पाः इति॥

---

1. पकारे क, पे परतः इ. 2. नॄन् पाहि इ, नॄन् पाति ह. 3. नॄन् वक्ति क. इ. 4. इत्येव ड. 5. स्वतवान् क, भुवस्तस्य इत्यधिकम् ह. 6. आनयति ह. 7. कँास्कान् इ. 8. एतत् इत्यधिकम् ड. इ. ह. 9. तु इत्यधिकम् क. 10. अनुवृत्तेरस्य नाभिसम्बन्धः ब. इ. 11. कान् नास्ति ड. 12. एको नास्ति ड. ह. 13. परतः इत्यधिकम् ब. क. 14. यद्यपि ब. 15. मूढम् अवगूढम् क. 16. ष्टुत्वासिद्धत्वमाश्रयात् सिद्धम् क. 17. स्वलिड् ड 18. तु नास्ति ब. 19. कार्यी ब. क. 20. अतः ब. 21. वाक्यमिदं नास्ति ड. 22. जश्त्वं बाधते ब. 23. शक्यः क. 24. अत्र इ. 25. वापि क. 26. वायू रथः इत्यधिकम् क, पटू रथः इत्यधिकम् ब. ड. 27. विशेषणषष्ठी क. 28. न स्थानषष्ठी इत्यधिकम् ब. क. ड. इ.

## खरवसानयोर्विसर्जनीयः। (१५/७६)

[1]रः इति वर्तते। रेफान्तस्य पदस्य खरि परतोऽवसाने च[2] विसर्जनीयादेशो भवति। वृक्षश्छादयति। प्लक्षश्छादयति। [3]वृक्षस्तरति। प्लक्षस्तरति। अवसाने – वृक्षः। प्लक्षः। खरवसानयोः इति किम्? अग्निर्नयति। वायुर्नयति। इह [4]नृकुटचां भवः नार्कुटः, नृपतेरपत्यं नार्पत्यः इति[5] वृद्धेर्बहिरङ्गलक्षणत्वात् तदाश्रयस्य रेफस्य [6]असिद्धं बहिरङ्गम् (व्या.प.४२) [7]इति असिद्धत्वाद् विसर्जनीयो न भवति॥

## रोः सुपि। (१६/३३९)

रु इत्यस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति। पयःसु[8]। सर्पिःषु[9]। यशःसु। सुपि इति सप्तमीबहुवचनं गृह्यते[10]। 'सिद्धे सत्यारम्भो नियमार्थः' (कात. प. ६२), रोरेव सुपि [11]विसर्जनीयादेशः, नान्यस्य। गीर्षु। धूर्षु[12]॥

## भोभगोअघोअपूर्वस्य योऽशि। (१७/१६७)

भोर् भगोर् अघोर् इत्येवंपूर्वस्य अवर्णपूर्वस्य च रोः रेफस्य [13]यकारादेशो भवति अशि परतः। [14]भो अत्र। भगो अत्र। अघो अत्र। [15]भो ददाति। भगो ददाति। अघो ददाति। [16]अपूर्वस्य – क आस्ते, कयास्ते[17]। ब्राह्मणा ददति। पुरुषा ददति। भोभगोअघोअपूर्वस्य इति किम्? अग्निरत्र। वायुरत्र। [18]अश्ग्रहणं किम्? वृक्षः। प्लक्षः। [19]नैतदस्ति, संहितायाम् (८.२.१०८/३६२७) इत्यनुवर्तते। [20]तर्हि अश्ग्रहणमुत्तरार्थम्। 'हलि सर्वेषाम्' (८.३.२२/१७१) इत्ययं लोपः अशि हलि यथा स्यात्, इह मा भूत्, वृक्षं वृश्चति इति वृक्षवृट्, तमाचष्टे [21]यः स वृक्षवयति, वृक्षवयतेरप्रत्ययः [22]वृक्षव् करोति। अथ तत्रैव अश्ग्रहणं कस्मान् न कृतम्? उत्तरार्थम्, 'मोऽनुस्वारः' (८. ३. २३/१२२) इति हल्मात्रे यथा स्यात्। 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' (८.३.१८/१६८), 'लोपः शाकल्यस्य' (८.३.१९/६७) इत्येतच्च वृक्षव् करोति इत्यत्र मा भूत् इत्यश्[23]ग्रहणम्। रोः इत्येव, प्रातरत्र। पुनरत्र॥

## व्योर्लघुप्रयत्नतरः शाकटायनस्य। (१८/१६८)

वकारयकारयोः भोभगोअघोअवर्णपूर्वयोः पदान्तयो लघुप्रयत्नतर[24] आदेशो भवति अशि परतः शाकटायनस्य आचार्यस्य मतेन। भोयत्र, भो अत्र। भगोयत्र, भगो अत्र। अघोयत्र, अघो अत्र। कयास्ते, क आस्ते। अस्मायुद्धर, अस्मा उद्धर। असावादित्यः, असा आदित्यः। द्वावत्र, द्वा अत्र। द्वावानय, द्वा आनय। लघुप्रयत्नतरत्वमुच्चारणे स्थानकरणशैथिल्यम्। स्थानं ताल्वादि। करणं जिह्वामूलादि। तयोरुच्चारणे शैथिल्यं मन्दप्रयत्नता[25]॥

---

1. वाक्यमिदं नास्ति ब.ड.इ.ह. 2. विषये इत्यधिकम् इ.ह. 3. वृक्षष्टकारः प्लक्षष्टकारः वृक्षश्चिनोति प्लक्षश्चिनोति वृक्षष्टीकते प्लक्षष्टीकते इत्यधिकम् ब. क. ड. इ. ह. 4. तु इत्यधिकम् ड. 5. अत्र इत्यधिकम् इ. 6. बहिरङ्गत्वेन इत्यधिकम् क. बहिरङ्गत्वं तेन ब. 7. अन्तरङ्गे इत्यधिकम् क. 8. वचःसु इत्यधिकम् ड. 9. हविःषु इत्यधिकम् ड. 10. न प्रत्याहारः इत्यधिकम् ब. ड. 11. विसर्जनीयो भवति क. 12. चतुर्षु इत्यधिकम् ब.क.इ.ह. 13. यकारः आदेशः क. 14. भोः अत्र क. 15. उदाहरणमिदं नास्ति ड. 16. अवर्णपूर्वस्य इ, अपूर्वकस्य ब. 17. काक आस्ते काकयास्ते इत्यधिकम् ड. इ. 18. अशिग्रहणं क, अशि इति ह. 19. संहिताधिकारादेवात्र भवितव्यम्, किम् अश्ग्रहणेन क.ह. 20. तर्हि नास्ति ब. 21. इति णिन् इत्यधिकम् ब.ड.इ. 22. वृक्षं करोति इति क. 23. ग्रहणं कृतम् क. 24. आन्तरतमः इत्यधिकम् क. 25. शाकटायनग्रहणं विभाषार्थम्। तेन यदापि लघुप्रयत्नतरो न भवत्यादेशस्तदापि तयोः पक्षे श्रवणं भवति इत्यधिकम् ड.

## लोपः शाकल्यस्य । (१९/१६७)

[1]वकारयकारयोः पदान्तयोः अवर्णपूर्वयोः लोपो भवति शाकल्यस्य आचार्यस्य मतेन अशि परतः । क आस्ते, कयास्ते । काक आस्ते, काकयास्ते । अस्मा उद्धर, अस्मायुद्धर । द्वा अत्र, द्वावत्र[2] । असा आदित्यः, असावादित्यः । [3]शाकल्यग्रहणं विभाषार्थम् । तेन यदाऽपि लघुप्रयत्नतरो न भवति आदेशः, तदापि व्योः[4] पक्षे श्रवणं [5]भवति ।।

## ओतो गार्ग्यस्य । (२०/१६९)

ओकारादुत्तरस्य[6] यकारस्य लोपो भवति गार्ग्यस्याचार्यस्य मतेन अशि परतः । भो अत्र । भगो अत्र । भो इदम् । [7]भगो इदम् । [8]नित्यार्थोऽयमारम्भः । गार्ग्यग्रहणं पूजार्थम् । योऽयम्[9]लघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते । लघुप्रयत्नतरः तु भवत्येव यकारः । भो अत्र, भोयत्र । भगो अत्र, भगोयत्र । अघो अत्र, अघोयत्र । केचित्तु सर्वमेव यकारमत्र नेच्छन्ति ।।

## उञि च पदे । (२१/१७०)

अवर्णपूर्वयोः व्योः पदान्तयोर्लोपो भवति उञि च पदे परतः । 'स उ [10]एकविंशवर्तनिः' (मै.२.७.२०) । स उ [11]एकाग्निः । पदे इति किम् ? तन्त्र उतम्, तन्त्रयुतम्[12] । वेञः सम्प्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुम् इति । अथ [13]उञ् इत्येवंरूपो निपातः प्रतिपदोक्तोऽस्ति ? तदा लाक्षणिकत्वाद् वेञादेशस्य ग्रहणमिह नास्ति, उत्तरार्थं पदग्रहणं क्रियते ।।

## हलि सर्वेषाम् । (२२/१७१)

हलि परतः भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषामाचार्याणां मतेन । भो हसति । भगो हसति । अघो हसति । भो याति । भगो याति । अघो याति । [14]वृक्षा हसन्ति[15] । सर्वेषांग्रहणं शाकटायनस्यापि [16]लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूत् इति ।।

## मोऽनुस्वारः । (२३/१७२)

मकारस्य पदान्तस्य [17]अनुस्वारः आदेशो भवति हलि परतः । कुण्डं हसति । [18]वनं हसति । कुण्डं याति । [19]वनं याति । हलि इत्येव, [20]त्वमत्र । किमत्र । पदान्तस्य इत्येव, गम्यते । [21]रम्यते ।।

---

1. व्योः पदान्तयोः क. इ, व्योः इत्येव इत्यधिकम् ह. 2. द्वा आनय द्वावानय इत्यधिकम् क. 3. अत्र इत्यधिकम् क. 4. लोपो भवति इत्यधिकम् क. 5. भवत्येव ड. इ. ह. 6. पदान्तस्य इत्यधिकम् इ. 7. अघो अत्र इत्यधिकम् ड. इ. 8. अघो इदम् इत्यधिकम् इ. 9. लघुप्रयत्नतरो यकारः यश्च तस्य लोपविकल्पः सोऽनेन ब. इ. ह. 10. एकविंशतिः मुद्रितः पाठः 11. स उ एकाग्निलावुत्तिष्ठतः ह, स उ गृकाग्निः ब. 12. द्वा उतम् इत्यधिकम् क. इ. 13. उ इ. 14. अवर्णपूर्वस्य इत्यधिकम् इ, वृक्षो हसति ह. 15. वृक्षा यान्ति इइत्यधिकम् ब. क. इ. 16. आचार्यस्य मते इत्यधिकम् ड. 17. अनुस्वारादेशः क. इ. 18–19. धनं ब. ड. 20. कुण्डमत्र ब. क. ड. 21. यम्यते इत्यधिकम् ह. रम्यते नास्ति क. इ.

## नश्चापदान्तस्य झलि। (२४/१२३)

नकारस्य मकारस्य च अपदान्तस्य अनुस्वारादेशो भवति झलि परतः। पयांसि। यशांसि। सर्पींषि[1]। मकारस्य – आक्रंस्यते। [2]आचिक्रंस्यते। अधिजिगांसते। अपदान्तस्य इति किम्? राजन् भुङ्क्ष्व। झलि इति किम्? [3]रम्यते। [4]गम्यते॥

## मो राजि समः क्वौ। (२५/१२६)

समो मकारस्य मकारः आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः। सम्राट्। [5]साम्राज्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। राजि इति किम्? संयत्। समः इति किम्? [6]किंराट्। क्वौ इति किम्? संराजिता। [7]संराजितुम्। संराजितव्यम्॥

## हे मपरे वा। (२६/१२७)

हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति। किं ह्मलयति, किम् ह्मलयति। कथं ह्मलयति, कथम् ह्मलयति।

[९३७] यवलपरे [8]यवला वा। (म.भा. ३. ४२८)

यवलपरे हकारे मकारस्य यवला [9]यथासङ्ख्यं वा भवन्ति इति वक्तव्यम्। कियँ ह्यः, किं ह्यः। किवँ ह्वलयति, किं ह्वलयति। किलँ ह्लादयति, किं ह्लादयति॥

## नपरे नः। (२७/१२९)

नकारपरे [10]हे परतः मकारस्य वा नकारादेशः भवति। किन् ह्नुते, किं ह्नुते। कथन् ह्नुते, कथं ह्नुते॥

## ङ्णोः कुक्टुक् शरि। (२८/१३०)

ङकारणकारयोः पदान्तयोः [11]कुक् टुक् इत्येतावागमौ वा भवतः शरि परतः। प्राङ्क् शेते, प्राङ [12]शेते। प्राङ्क् षष्ठः, प्राङ षष्ठः। प्राङ्क् साये, प्राङ साये। णकारस्य – वण्ट् शेते, वण् शेते[13]। पूर्वान्तकरणं प्राङ्क् छेते इत्यत्र छत्वार्थम्। 'शश्छोऽटि' (८.४.६३/१२०) इति हि पदान्ताज् झयः इति तद् विज्ञायते। इह मा भूत्, 'पुरा क्रूरस्य विसृपो विरप्शिन्' (वा.सं. १.२८)। प्राङ्क् सायः इत्यत्रापि 'सात् पदाद्योः' (८.३.१११/२१२३) इति षत्वप्रतिषेधार्थं च। वण्ट् सायः इत्यत्र च 'न पदान्ताट्टोरनाम्' (८.४.४२/११४) इति ष्टुत्वप्रतिषेधार्थम्॥

---

1. धनूंषि इत्यधिकम् इ, यजूंषि इत्यधिकम ह, हवींषि इत्यधिकम् ब. 2. विक्रंस्यते ब. इ. 3. नम्यते इ. 4. मन्यते तन्यते क. 5. सम्राड्भ्याम् क. 6. राट् क. ह, विराट् ब. 7. सराजितुम् नास्ति इ. 8. ह्रे यवला वा मकारस्य इति वक्तव्यम् ब. क. ह. 9. यथासङ्ख्येन क. 10. हकारे इ. 11. यथासङ्ख्येम् इत्यधिकम् ब. क. इ. 12. शेरते ह. 13. वण्ट् षण्डे वण् षण्डे वण्ट् साये वण् साये इत्यधिकम् क. ड.

## ङः सि धुट् । (२९/१३१)

ङकारान्तात् पदात् उत्तरस्य [1]सकारादेः पदस्य वा धुडागमो भवति । [2]श्वलिट्त्साये, [3]श्वलिट् साये । मधुलिट्त्साये, मधुलिट् साये । परादिकरणं 'न पदान्ताट् टोरनाम्' (८.४.४२/११४) इति ष्टुत्वप्रतिषेधार्थम् ॥

## नश्च । (३०/१३२)

नकारान्तात् पदात् उत्तरस्य सकारस्य वा धुडागमो भवति । भवान्त्साये, भवान् साये । महान्त्साये, महान् साये । धुटः [4]चर्त्वस्य च असिद्धत्वात् 'नश्छव्यप्रशान्' (८. ३. ७/१४०) इति रुत्वं न भवति[5] ॥

## शि तुक् । (३१/१३३)

[6]नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति । भवाञ्च्छेते । पूर्वान्तकरणं छत्वार्थम् । यद्येवं कुर्वञ्च्छेते इत्यत्र नकारस्य [7]अपदान्तत्वात् णत्वं प्राप्नोति ? तत्र समाधिमाहुः, 'स्तोः श्चुना श्चुः' (८. ४. ४०/१११) इत्यत्र योगविभागः क्रियते, णत्वप्रतिषेधार्थं स्तोः श्चुना [8]णकारो न भवति इति, ततः श्चुः इति ॥

## ङमो ह्रस्वादचि ङमुण् नित्यम् । (३२/१३४)

ह्रस्वात् परः यो ङम्[9] तदन्तात् पदात् उत्तरस्य अचः ङमुडागमो भवति नित्यम् । [10]ङणनेभ्यो यथासङ्ख्यं ङणना भवन्ति । ङकारान्तात् ङुट् – प्रत्यङ्ङास्ते[11] । णकारान्तात् णुट् – वण्णास्ते । वण्णवोचत् । नकारान्तात् नुट्–कुर्वन्नास्ते[12] । कुर्वन्नवोचत् । [13]कृषन्नास्ते । कृषन्नवोचत् । ङमः इति किम्? त्वमास्से । ह्रस्वात् इति किम् ? प्राङास्ते । [14]भवानास्ते । अचि इति किम् ? [15]प्रत्यङ करोति । इह [16]परमदण्डिनौ, परमदण्डिना इति 'उत्तरपदत्वे चापदादिविधौ (भो. सू. ४४) इति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं नास्ति इति ङमुट् न भवति । अथ वा, 'उञि च पदे' (८.३.२१/१७०) इत्यतः सप्तम्यन्तं पदे इत्यनुवर्तते । तेन अजादौ पदे[17]ङमुट् भवति ॥

## मय उञो वो वा । (३३/१०८)

मय उत्तरस्य उञो वा [18]वकारादेशो भवति अचि परतः । शम्वस्तु (वा. सं. २३.४४) वेदिः, शमु अस्तु वेदिः । [19]तद्वस्य परेतः , तदु अस्य परेतः । [20]किम्वावपनम्, किमु आवपनम् । प्रगृह्यत्वात् उञः प्रकृतिभावे प्राप्ते वकारो विधीयते । तस्य असिद्धत्वाद् हलि इति 'मोऽनुस्वारः' (८.३.२३/१२२) न भवति ॥

---

1. सकारादेः नास्ति इ, सकारस्य क. 2–3. स्वलिट् ड. 4. चुत्वस्य ब. ह. 5. किं पुनरुभयोरसिद्धत्वे सति इत्यधिकम् ह. 6. नकारान्तस्य पदस्य इ. 7. पदान्तत्वात् 8. संनिपाते इत्यधिकम् ब. 9. पदान्तः तस्मादुत्तरस्य क. 10. ङणनेभ्यो नास्ति क. 11. उदङ्ङास्ते इत्यधिकम् ड. 12. विशन्नास्ते इत्यधिकम् ड. 13. उदाहरणमिदं नास्ति ड. 14. उदाहरणमिदं नास्ति क. 15. पचन् करोति ब. ड. इ. फ, उदङ् करोति इत्यधिकम् ड. 16. परमदण्डिनौ नास्ति क. ब. इ, उत्तरदण्डिना ह 17. ङमुडागमो क. इ. 18. वकार आदेशः क. 19. तदु अस्यारतः तद्वस्यारतः इ, तद्वस्य रेतः तदु अस्य रेतः ह. 20. उदाहरणमिदं नास्ति क.

## विसर्जनीयस्य सः। (३४/१३८)

खरि इत्यनुवर्तते। विसर्जनीयस्य सकारः आदेशः भवति खरि परतः। वृक्षश्छादयति। प्लक्षश्छादयति। [1]वृक्षष्ठकारः। प्लक्षष्ठकारः। वृक्षस्थकारः। प्लक्षस्थकारः। वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षस्तरति। प्लक्षस्तरति॥

## शर्परे विसर्जनीयः। (३५/१५०)

शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति। [2]शशः क्षुरम्। पुरुषः क्षुरम्। अद्भिः प्सातम्। वासः क्षौमम्। [3]पुरुषः [4]त्सरुः। 'घनाघनः क्षोभणश्चर्षणीनाम्' (ऋ. १०.१०३.१)। न इति वक्तव्ये विसर्जनीयस्य [5]विसर्जनीयादेशविधानं [6]विकार[7]निवृत्त्यर्थम्, तेन जिह्वामूलीयोपध्मानीयौ[8] न भवतः॥

## वा शरि। (३६/१५१)

विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि [9]परे। वृक्षः शेते, वृक्षश्शेते। प्लक्षः शेते, प्लक्षश्शेते। वृक्षः षण्डे, वृक्षष्षण्डे। वृक्षः साये, वृक्षस्साये।

[९३८] खर्परे शरि [10]वा लोपो वक्तव्यः। (म. भा. ३.४३१)

वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः॥

## कुप्वोः ᳵक ᳶपौ च। (३७/१४२)

कवर्गपवर्गयोः [11]परतो विसर्जनीयस्य यथासङ्ख्यम् ᳵक ᳶप इत्येतावादेशौ भवतः, चकाराद् विसर्जनीयश्च। वृक्ष ᳵकरोति, वृक्षः करोति। वृक्ष ᳵखनति, वृक्षः खनति। वृक्ष ᳶपचति, वृक्षः पचति। वृक्ष ᳶफलति, वृक्षः फलति। कपौ उच्चारणार्थौ। [12]जिह्वामूलीयोपध्मानीयौ [13]एतावादेशौ। 'विसर्जनीयस्य सः' (८.३.३४/१३८) इत्येतस्मिन्नप्राप्ते[14] इदमारभ्यते इति [15]एतस्य बाधकम्, 'शर्परे विसर्जनीयः' (८.३.३५/१५०) इत्येतत् तु न बाध्यते, वासः क्षौमम्, अद्भिः प्सातम्। 'पूर्वत्रासिद्धे [16]नास्ति विप्रतिषेधोऽभावादुत्तरस्य' (जै. प. ६७) इति 'शर्परे विसर्जनीयः' (८.३.३५/१५०) इत्येतदेव भवति। केचित्तु एतदर्थं योगविभागं कुर्वन्ति। [17]कुप्वोः शर्परयोः विसर्जनीयस्य विसर्जनीयः आदेशो भवति, किमर्थमिदम्, ᳵक ᳶपौ च इति [18]वक्ष्यति, तद्बाधनार्थमिति॥

---

1. वृक्षष्टकारेण प्लक्षष्टकारेण क. 2. यशः इ. 3. उदाहरणमिदं नास्ति इ. 4. त्सरुकः क. 5. विसर्जनीयादेशः इ, विसर्जनीयवचनं ब. क. 6. तद् इत्यधिकम् ड. 7. निवृत्त्यर्थं इ. 8. अपि इत्यधिकम् क. इ. ह. 9. परतः क. 10. सलोपः क. 11. खरि इत्यधिकम् इ. ड. ह. 12. ककारपकारयोः इत्यधिकम् इ. 13. एतौ नास्ति इ, ककारखकारौ ड. ह. 14. वचनम् इत्यधिकम् ब. क. ड. 15. तस्यैवायं बाधकः इ. 16. नास्ति–उत्तरस्य नास्ति इ. 17. वाक्यमिदं नास्ति ड. 18. वक्ष्यति नास्ति क.

## सोऽपदादौ । (३८/१९२)

सकार आदेशः भवति विसर्जनीयस्य कुप्वोः अपदाद्योः परतः पाशकल्पककाम्येषु । 'याप्ये पाशप्' (५.३.४७/१९९३) – पयस्पाशम् । ईषदसमाप्तौ कल्पप् (५.३.६७/२०२२) – पयस्कल्पम् । यशस्कल्पम्[1] । 'प्रागिवात् कः' (५.३.७०/२०२५) – [2]पयस्कम् । यशस्कम् । काम्यच् (३.१.९/२६६३) – पयस्काम्यति । यशस्काम्यति । अपदादौ इति किम् ? पय ≍ कामयते । पय ≍ [3]पिबति ।

[९३९] सोऽपदादावित्यनव्ययस्येति वक्तव्यम् । (म. भा. ३. ४३२)

[4]इह मा भूत्, प्रातः कल्पम्, पुनः कल्पम् इति ।

[९४०] रोः काम्ये नियमार्थम् । (म. भा. ३. ४३२)

रोरेव काम्ये नान्यस्य इति नियमार्थं वक्तव्यम् । पयस्काम्यति । [5]यशस्काम्यति । इह मा भूत्, [6]गीः काम्यति । धूः काम्यति ।

[९४१] उपध्मानीयस्य[7] कवर्गे परतः सकारादेशो भवतीति वक्तव्यम् । (म. भा. ३. ४३२)

किं प्रयोजनम् ? उब्जिरुपध्मानीयोपधः पठ्यते इति[8] दर्शने अभ्युद्गः, समुद्गः इति यथा स्यात् ॥

## इणः षः । (३९/१९३)

[9]अपदादौ इति वर्तते । इणः उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः पाशकल्पककाम्येषु । पाश – सर्पिष्पाशम् । यजुष्पाशम् । कल्प – सर्पिष्कल्पम् । यजुष्कल्पम् । क – सर्पिष्कम् । यजुष्कम् । काम्य – सर्पिष्काम्यति । यजुष्काम्यति । अपदादौ इत्येव, अग्निः करोति । वायुः [10]करोति । अग्निः पचति । वायुः पचति । कुप्वोः इत्येव, [11]सर्पिस्ते । यजुस्ते । इत [12]उत्तरं सः इति, इणः षः इति च वर्तते । तत्र इणः परो यो विसर्जनीयः तस्य षकारो भवति, अन्यस्य सकारो भवति ॥

## नमस्पुरसोर्गत्योः । (४०/१९४)

नमस् पुरस् इत्येतयोः [13]गतिसञ्ज्ञकयोः विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः । नमस्कर्ता । नमस्कर्तुम् । नमस्कर्तव्यम्[14] । गत्योः इति किम् ? पूः, पुरौ, पुरः[15] करोति[16] ॥

---

1. पयस्वलम् यशस्वलम् इत्यधिकम् क. 2. पयस्कः यशस्कः ड. 3. पचति ड. 4. इह नास्ति क.ड. 5. यशः काम्यति ड. 6. गीष्काम्यति धूष्काम्यति ड. 7. च इत्यधिकम् इ. 8. अत्र इत्यधिकम् क, अस्मिन् इत्यधिकम् ह. 9. वाक्यमिदं नास्ति इ. ड. 10. पिबति 3. 11. सर्पिष्टः यजुष्टः क, सर्पिस्तत्र यजुस्तत्र ब. ड. 12. उत्तरत्र इ. 13. गतिसञ्ज्ञयोः ह 14. पुरस्कर्ता पुरस्कर्तुम् पुरस्कर्तव्यम् त्यधिकम् ब. क, ड. ह. 15. पश्य ब. प. मं. 16. पुरः पवति इत्यधिकम् ह.

## इदुदुपधस्य चाप्रत्ययस्य। (४१/१५५)

[1]इकारोपधस्य उकारोपधस्य च अप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः। निर्दुर्बहिराविश्चतुर्प्रादुस्। [2]निस् – निष्कृतम्। निष्पीतम्। दुस् – दुष्कृतम्। दुष्पीतम्। बहिस् – बहिष्कृतम्। बहिष्पीतम्। आविस् – आविष्कृतम्। आविष्पीतम्। चतुर् – चतुष्कृतम्। चतुष्कपालम्। चतुष्कलम्। [3]चतुष्कण्टकम्[4]। प्रादुस् – प्रादुष्कृतम्। प्रादुष्पीतम्। अप्रत्ययस्य इति किम्? अग्निः करोति। वायुः[5] करोति। मातुः करोति, पितुः करोति, अत्र 'रात् सस्य' (८.२.२४/२८०) इति सकारलोपे कृते रेफस्य यो विसर्जनीयः, तस्य[6] अप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति? कस्कादिषु (८,३.४८/१४४) तु भ्रातुष्पुत्रग्रहणं ज्ञापकमे[7]कादेशनिमित्तत्वात् षत्वप्रतिषेधस्य।

[९४२] पुम्मुहुसोः प्रतिषेधो वक्तव्यः। (म.भा.३.४३४)

पुंस्कामा। मुहु≍कामा। [8]नैष्कुल्यम्। दौष्कुल्यम्। दौष्पुरुष्यम्। नि३ष्कुलम्। [9]दु३ष्कुलम्। दु३ष्पुरुषः[10]। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं [11]प्रवर्तते॥

## तिरसोऽन्यतरस्याम्। (४२/१५६)

तिरसः विसर्जनीयस्य अन्यतरस्यां सकारादेशो भवति कुप्वोः परतः। तिरस्कर्ता। तिरस्कर्तुम्। तिरस्कर्तव्यम्। तिरःकर्ता। तिरः कर्तुम्। तिरः कर्तव्यम्। [12]गतेरित्येव, [13]तिरः कृत्वा काण्डं गतः॥

## द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। (४३/१५७)

[14]षः इति सम्बध्यते। द्विस् त्रिस् चतुर् इत्येतेषां कृत्वोऽर्थे वर्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वोः परतः। द्विष्करोति, द्विः करोति। त्रिष्करोति, त्रिः करोति। चतुष्करोति, चतुः करोति। द्विष्पचति, द्विः पचति। त्रिष्पचति, त्रिः पचति। चतुष्पचति, चतुः पचति। कृत्वोऽर्थे इति किम्? चतुष्कपालम्। [15]चतुष्कण्टकम्। पूर्वेण नित्यं षत्वं भवति। इदुदुपधस्य (८.३.४१/१५५) इत्येतस्य अनुवृत्तौ सत्यां कृत्वोऽर्थविषयेण[16] च पदेन विसर्जनीये विशेष्यमाणे द्विस्त्रिश्चतुरिति शक्यमकर्तुम्।

कृत्वसुजर्थे षत्वं ब्रवीति[17] कस्माच्चतुष्कपाले [18]मा।
षत्वं विभाषया [19]भून्ननु सिद्धं तत्र पूर्वेण॥

सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि॥

---

1. इकारोकारोपधस्य अप्रत्ययादिविसर्जनीयस्य इ. 2. निर् इ. 3. चतुष्कन्दलम् इ. 4. चतुष्पीतम् इत्यधिकम् ड. 5. पिबति इ. ह. 6. विसर्जनीयस्य इत्यधिकम् ह. 7. एकदेश° इ. 8. वृद्धिभूतानां षत्वम् इत्यधिकम् इ. 9. दु३ष्कुरु इ. 10. इत्यत्र इत्यधिकम् ब. क. इ. ड. 11. प्रवृत्तम् क. 12. गत्योरित्येव ह, गतिरित्येव इ. 13. तिरस्कृत्वा इ. 14. वाक्यमिदं नास्ति इ. ड. 15. चतुष्कण्टकः इ. 16 चतुःपदेन क. 17. इति इत्यधिकम् इ. 18. न क. 19. भूते क.

एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति ।।

अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ।।

तस्मिंस्तु क्रियमाणे युक्तं चतुरो विशेषणं [1]भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ।। (म. भा. ३. ४३५)

एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुःशब्दस्य कृत्वोऽर्थेऽपि वर्तमानस्य पूर्वेणैव[2] नित्यं षत्वं स्यात् । 'पूर्वत्रासिद्धे नास्ति [3]विप्रतिषेधोऽभावादुत्तरस्य[4]' (जै. प. ६७) ।।

## इसुसोः सामर्थ्ये । (४४/१५८)

[5]षः इति सम्बध्यते । इस् उस् इत्येतयोः विसर्जनीयस्य अन्यतरस्यां षकारादेशो भवति सामर्थ्ये[6] कुप्वोः परतः । सर्पिष्करोति, सर्पिः करोति । यजुष्करोति, यजुः करोति[7] । सामर्थ्ये इति किम् ? तिष्ठतु सर्पिः, पिब त्वमुदकम् । सामर्थ्यम् इह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं [8]वा ।।

## नित्यं समासेऽनुत्तरपदस्थस्य । (४५/१५९)

[9]इसुसोः इति वर्तते । [10]समासविषये इसुसोः विसर्जनीयस्य अनुत्तरपदस्थस्य नित्यं [11]षत्वं भवति कुप्वोः परतः । सर्पिष्कुण्डिका । [12]धनुष्कपालम् । [13]सर्पिष्पानम् । धनुष्फलम् । अनुत्तरपदस्थस्य इति किम् ? परमसर्पिःकुण्डिका (म.भा. ३. ४३५) । [14]परमधनुःकपालम् । [15]पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति । एतदेव अनुत्तरपदस्थस्य इति वचनं[16] ज्ञापकम् इसुसोः 'प्रत्ययग्रहणे यस्मात् स विहितः [17]तदादेः' (पु. प. २४) इत्ययं नियमो [18]न भवति । तेन वाक्ये[19]ऽपि परमसर्पिष्करोति, परमसर्पिः करोति, '[20]इसुसोः सामर्थ्ये' (८. ३. ४४/१५८) इत्येतद् भवति । व्यपेक्षा [21] च तत्र सामर्थ्यमाश्रितम् इति [22]समासे न भवति ।।

---

1. भवितुम् क. 2. एव नास्ति ब. क. 3. प्रतिषेधः ड. 4. इति इत्यधिकम् ब. 5. वाक्यमिदं नास्ति ह. ब. 6. सति इत्यधिकम् क. इ. 7. सर्पिष्पिबति सर्पिः पिबति इत्यधिकन् ब. 8. वा नास्ति इ. 9. वाक्यमिदं नास्ति इ. ड. ह. 10. समासे इ. ह. 11. षकारादेशः क. इ. ड. 12. चतुष्कपालम् इ, यजुष्कपालम् बहिष्कुलम् ह. 13. सर्पिष्फलम् ड. 14. परमधनुःकपालम् नास्ति क. ड. ह. 15. पूर्वसूत्रविकल्पः क, वाक्यमिदं नास्ति इ. ह. 16. एव इत्यधिकम् ब. 17. तदन्तस्य ग्रहणं क. ब, तदादिः इ. 18. न नास्ति ब. क. 19. अपि नास्ति इ. 20. इति इत्यधिकम् इ. 21. यत्तत्र इ. 22. समासो इ.

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य । (४६/१६०)

[1]अकारादुत्तरस्य अनव्ययविसर्जनीयस्य [2]समासे अनुत्तरपदस्थस्य [3]नित्यं सकारादेशो भवति कृ कमि कंस कुम्भ पात्र कुशा कर्णी इत्येतेषु परतः । कृ – अयस्कारः । पयस्कारः । कमि – अयस्कामः । पयस्कामः । कंस – अयस्कंसः । [4]पयस्कंसः । कुम्भ – अयस्कुम्भः । [5]पयस्कुम्भः । अयस्कुम्भी, [6]पयस्कुम्भी इत्यत्रापि[7] भवति, 'प्रातिपदिकग्रहणे [8]लिङ्गविशिष्टस्यापि ग्रहणं भवति' (व्या. प. २९) इति । पात्र – अयस्पात्रम् । [9]पयस्पात्रम् । अयस्पात्री । [10]पयस्पात्री । कुशा – अयस्कुशा । [11]पयस्कुशा । कर्णी – अयस्कर्णी । [12]पयस्कर्णी । शुनस्कर्णः इत्ययं तु कस्कादिषु द्रष्टव्यः । अतः इति किम् ? गीःकारः । [13]धूःकारः । तपरकरणं किम् ? भाःकरणम् । भास्करः इत्ययं तु कस्कादिषु द्रष्टव्यः । अनव्ययस्य इति किम् ? [14]श्वःकारः । पुनःकारः । समासे इत्येव, [15]यशः करोति । [16]पयः करोति । [17]यशः कामयते । अनुत्तरपदस्थस्य इत्येव, [18]परमपयःकारः । परमपयःकामः ॥

## अधःशिरसी पदे । (४७/१६१)

अधस् शिरस् इत्येतयोः विसर्जनीयस्य समासे [19]अनुत्तरपदस्थस्य सकारः आदेशो भवति पदशब्दे परतः । अधस्पदम् । शिरस्पदम् । [20]अधस्पदी । शिरस्पदी । समासे इत्येव, अधः पदम् । अनुत्तरपदस्थस्य इत्येव, परमशिरःपदम् । अधस्पदम् इति मयूरव्यंसकादित्वात् समासः ॥

## कस्कादिषु च । (४८/१४४)

कस्क इत्येवमादिषु च विसर्जनीयस्य सकारः षकारो वा यथायोगमादेशो भवति कुप्वोः परतः । कस्कः । कौतस्कुतः । [21]कुत आगतः इत्यण् । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । क्रीणातेरयं सम्पदादित्वात् क्विप्[22] प्रत्ययः, तत्र भवः [23]क्रतुः साद्यस्क्रः । कांस्कान्, 'कानाम्रेडिते' (८.३.१२/१४३) इति रुत्वमत्र । सर्पिष्कुण्डिका, [24]धनुष्कपालम्, [25]बर्हिष्पूलम्, यजुष्पात्रम् इत्येषां पाठः उत्तरपदस्थस्यापि षत्वं यथा स्याद् इति । परमसर्पिःफलम् इत्येवमादि[26]प्रत्युदाहरणात् इति पारायणिका आहुः । भाष्ये वृत्तौ च 'नित्यं समासेऽनुत्तरपदस्थस्य' (८.३.४५/१५९) इत्यत्र परमसर्पिःकुण्डिका इत्येतदेव [27]प्रत्युदाहरणम् । अयस्काण्डः । मेदस्पिण्डः । अभिहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः ॥

---

1. अकारान्तादुत्तरस्य इ. 2. समासोत्तरपदस्थस्य क. इ. 3. नित्यं नास्ति क. 4. यशस्कंसः इ. 5. पयस्कुम्भः नास्ति इ. 6. पयस्कुम्भी नास्ति इ. 7. भवति नास्ति क. 8. लिङ्गविशिष्टमपि क. 9. पयस्पात्रम् नास्ति इ. 10. पयस्पात्री नास्ति इ. 11. यशस्कुशा इ. 12. पयस्कर्णी नास्ति इ. 13. पूःकामः ह, नास्ति ब. क. 14. स्वःकारः क. इ. 15. यशस्करोति पयस्करोति यशस्कामयते इ. 16. पयः करोति नास्ति क. 17. वयः कामयते ह. 18. परमयशःकारः परमयशःकामः क. 19. अनुत्तरपदस्य क. 20. अधस्पदी नास्ति ह. 21. ततः ब. ड. ह. 22. प्रत्ययः नास्ति इ. 23. क्रतुः नास्ति क. इ. 24. चतुष्कपालम् . 25. बर्हिष्पूलम् नास्ति ब. क. 26. प्रत्युदाहरणं षत्वं यथा स्यात् इति इ. 27. प्रत्युदाहृतम् इ.

## छन्दसि वाऽप्राम्रेडितयोः । (४९/३६३४)

छन्दसि विषये विसर्जनीयस्य वा सकारादेशः भवति कुप्वोः परतः, प्रशब्दम् आम्रेडितं च वर्जयित्वा । अयः-पात्रम्, अयस्पात्रम् । विश्वतःपात्रम्, विश्वतस्पात्रम् । उरुणःकारः, उरुणस्कारः । अप्राम्रेडितयोः इति किम् ? 'अग्निः प्रविद्वान्' (अ. वे. ५.२६.१) । 'परुषः परुषस्परि' (मै. २.७.१५.२१४) । '[1]सूर्यरश्मिर्हरिकेशः पुरस्तात्' (ऋ. १०.१३९.१), 'स नः पावक' (ऋ. १.१२.१०) इत्येवमादिषु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पु. प. ३५) इति सत्वं न भवति ॥

## कःकरत्करतिकृधिकृतेष्वनदितेः । (५०/३६३५)

कः करत् करति कृधि कृत इत्येतेषु परतः अनदितेः विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये । कः– विश्वतस्कः । करत् – विश्वतस्करत् । [3]करति–[4]पयस्करति । कृधि–'उरु णस्कृधि' (ऋ. ८.७५.११) कृत–[5]सदस्कृतम् । अनदितेः इति किम् ? '[6]यथा नो अदितिः करत्' (ऋ. १.४३.२) ॥

## पञ्चम्याः परावध्यर्थे । (५१/३६३६)

छन्दसि इत्येव । पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतः [7]अध्यर्थे । '[8]दिवस्परि प्रथमं [9]जज्ञे' (ऋ. १०.४५.१) । 'अग्निर्हिमवतस्परि' (अ. वे. ४.९.९) । 'दिवस्परि' (ऋ. १. १२१. १०) । महस्परि । पञ्चम्याः इति किम् ? 'अहिरिव भोगैः पर्येति बाहुम्' (ऋ. ६.७५.१४) । परौ इति किम् ? एभ्यो वा एतल्लोकेभ्यः प्रजापतिः [10]समैरयत् । अध्यर्थे इति किम् ? 'दिव[11]स्पृथिव्याः पर्योज उद्भृतम्' (ऋ. ६.४७.२७) । [12]अत्र परिः सर्वतोभावे, अध्यर्थः [13]उपरिभावः ॥

## पातौ च बहुलम् । (५२/३६३७)

पातौ च धातौ परतः [14]पञ्चमीविसर्जनीयस्य बहुलं सकारादेशः भवति छन्दसि विषये[15] । 'दिवस्पातु' (ऋ. १०.१५८.१) । [16]राज्ञस्पातु । न च भवति । परिषदः पातु ॥

## षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । (५३/३६३८)

षष्ठीविसर्जनीयस्य सकारादेशो भवति पति पुत्र पृष्ठ पार पद पयस् पोष इत्येतेषु परतः छन्दसि विषये । 'वाचस्पतिं विश्वकर्माणमूतये' (ऋ. १०.८१.७) । पुत्र – 'दिवस्पुत्राय सूर्याय'[17] (ऋ. १०.३७.१) । पृष्ठ– '[18]दिवस्पृष्ठे धावमानं [19]सुपर्णम्' (अ. १३.२.३७) । पार–'[20]अगन्म तमसस्पारम्' (वा. सं. १२.७३) । पद – '[21]इळस्पदे समिध्यसे' (ऋ. १०.१९१.१) । पयस् – [22]सूर्यं चक्षुर्दिवस्पयः । पोष – [23]'रायस्पोषं यजमानेषु धारय' (ऋ. १०.१२२.८) । षष्ठ्याः इति किम् ? [24]मनुः पुत्रेभ्यो दायं व्यभजत् ॥

---

1. सूर्यरश्मिः नास्ति ब. क. ड. ह. 2. ततः पावकः इ. ह. 3. अयस्करत् इत्यधिकम् क. 4. अयस्करति क. 5. सदस्कृतः क. 6. यथा नो नास्ति क. 7. छन्दसि विषये इत्यधिकम् इ. 8. प्रथमयज्ञे अग्निर्हि भवस्परि इत्यधिकम् ब. 9. जज्ञे नास्ति इ. 10. प्रत्यूषे इत्यधिकम् इ. 11. पृथिव्योः इ. 12. अत्र परिः सर्वतोभावे नास्ति ब. इ. 13. उपरितोभावः ह. 14. पञ्चम्याः क. इ. 15. पातु इति धातुनिर्देशः । पातौ धातुपरतः इत्यर्थः इत्यधिकम् इ. 16. रजसस्पातु क, नास्ति ब. ड. 17. शंसता इत्यधिकम् क, शंसतम् इत्यधिकम् ब. 18. दिवस्पृष्ठं वन्दमानः इ, दिवस्पृष्ठं धावमानः सुपर्णः ह. 19. सुवर्णम् क. 20. आगन्म इ 21. इडायास्पदे क. 22. पूर्वं चक्षुः ह, दिवस्पयः ऋ. 10.114.1 23. रायस्पोषाय बृहते हवामहे (वा. सं. 11.76) इ, रायस्पोषं औनभियं ह. 24. मातुः क.

## इडाया वा । (५४/३६३९)

[1]इडायाः षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतः छन्दसि विषये । इडायास्पतिः, इडायाः पतिः । 'इडायास्पुत्रः' (ऋ. ३.२९.३), इडायाः पुत्रः । इडायास्पृष्ठम्, इडायाः पृष्ठम् । इडायास्पारम्, इडायाः पारम् । 'इडायास्पदम्' (वा.सं. ४.२२), 'इडायाः पदम्' (तै. १.२.५.१) । इडायास्पयः, इडायाः पयः । [2]इडायास्पोषम्, इडायाः पोषम् ॥

## अपदान्तस्य मूर्धन्यः । (५५/२१०)

पदाधिकारो निवृत्तः । अपदान्तस्य इति,[3] मूर्धन्यः इति चैतद् अधिकृतं वेदितव्यम् आपादपरिसमाप्तेः[4] । वक्ष्यति – 'आदेशप्रत्यययोः' (८.३.५९/२१२) । [5]सिषेव । सुष्वाप । अग्निषु । वायुषु । अपदान्तस्य इति किम् ? अग्निस्तत्र । वायुस्तत्र । षः इत्येवं सिद्धे मूर्धन्यग्रहणं [6]ढकारार्थम् । अकृढ्वम् । चकृढ्वे ॥

## सहेः साडः सः । (५६/३३५)

सहेर्धातोः [7]साड्रूपस्य यः सकारः तस्य मूर्धन्यः आदेशो भवति । जलाषाट् । तुराषाट् । पृतनाषाट् । सहेः इति किम् ? सह डेन वर्तते सडः, तस्य अपत्यं साडिः । साड्ग्रहणं किम् ? यत्रास्य एतद्रूपं तत्र यथा स्यात्, इह मा भूत् [8]जलासाहम् । तुरासाहम् । सः इति किम् ? आकारस्य मा भूत् ॥

## इण्कोः । (५७/२११)

इण्कोः इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद् वक्ष्यामः, इणः कवर्गाच्च इत्येवं तद् वेदितव्यम् । वक्ष्यति – 'आदेशप्रत्यययोः' (८.३.५९/२१२) । [9]सिषेव । सुष्वाप । अग्निषु । वायुषु । कर्तृषु । [10]हर्तृषु । गीर्षु । धूर्षु । वाक्षु । त्वक्षु । इण्कोः इति किम् ? दास्यति । असौ ॥

## नुम्विसर्जनीयशर्व्यवायेऽपि । (५८/४३४)

नुम्व्यवायेऽपि विसर्जनीयव्यवायेऽपि शर्व्यवायेऽपि इण्कोः उत्तरस्य सकारस्य मूर्धन्यादेशो भवति । व्यवायशब्दः प्रत्येकमभिसम्बध्यते । नुम्व्यवाये तावत् – सर्पींषि । यजूंषि । [11]हवींषि । विसर्जनीयव्यवाये – सर्पिःषु । [12]यजुःषु । हविःषु । शर्व्यवाये – सर्पिष्षु । यजुष्षु । हविष्षु[13] । नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, न समस्तैः । तेन इह न भवति, निंस्से, निंस्स्वः इति । 'णिसि चुम्बने' (धा.पा. १०२६) इत्येतस्य एतद् रूपम् । अत्र हि नुमा, सकारेण, [14]शरा च व्यवधानम् ॥

---

1. इडाशब्दसम्बन्धिनः क.ड.इ. 2. इडायास्पोषः इडायाः पोषः ब.क.ड. 3. च इत्यधिकम् क. 4. यदित ऊर्ध्वमनुक्रमिष्यामः अपदान्तस्य मूर्धन्यो भवति इत्येतत् वेदितव्यम् इत्यधिकम् ब.क.ड.इ.ह. 5. सुषुवे क.ड, सिषेच ह. 6. ढत्वार्थम् क.इ.ड. 7. साड्भूतस्य क.ड. 8. जलासाहम् नास्ति ब. 9. सिषेच ह. 10. भर्तृषु गोषु ब, नौषु क.ड.इ. 11. धनूंषि क, नास्ति ब. 12. यजुःषु धानम् क. 13. बर्हिष्षु इत्यधिकम् इ.ड. 14. शरा नास्ति क.इ.ह.

## आदेशप्रत्यययोः। (५९/२१२)

मूर्धन्यः इति वर्तते, स इति च। आदेशप्रत्यययोः इति षष्ठी भेदेन सम्बध्यते। आदेशो यः सकारः, प्रत्ययस्य च यः सकारः इण्कोरुत्तरः तस्य मूर्धन्यो भवति आदेशः। आदेशस्य तावत् – सिषेव। सुष्वाप। प्रत्ययस्य – अग्निषु। वायुषु। कर्तृषु। हर्तृषु। इन्द्रो मा वक्षत्, 'स देवान् यक्षत्' (अ. वे ३.४.६) इति व्यपदेशिवद्भावात् प्रत्ययस्य इति षत्वं भवति। [1]यजतेर्वहतेश्च [2]पञ्चमलकारे परस्मैपदप्रथमैकवचने इकारलोपः, 'लेटोऽडाटौ' (३.४.९४/३४२७) इति अट्, 'सिब्बहुलं लेटि' (३.१.३४/३४२५) इति सिप्, ततः सिद्धं यक्षत्, वक्षत् इति॥

## शासिवसिघसीनां च। (६०/२४१०)

शासि वसि घसि इत्येतेषां[3] च इण्कोः उत्तरस्य सकारस्य [4]मूर्धन्यो भवति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। शिष्टः। शिष्टवान्। वसि – उषितः। उषितवान्। उषित्वा। घसि – जक्षतुः। जक्षुः। 'घसिभसोर्हलि च' (६.४.१००/३५५०) इति उपधालोपः। 'अक्षन् पितरोऽमीमदन्त पितरः' (वा. सं. १९.३६)। अनादेशार्थं वचनम्। घसिर्यद्यप्यादेशः, सकारस्त्वादेशो न भवति। इण्कोः इत्येव, शास्ति। वसति। जघास॥

## स्तौतिण्योरेव षण्यभ्यासात्। (६१/२६२७)

स्तौतेः ण्यन्तानां च षभूते सनि परतः अभ्यासात् इणः उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति। तुष्टूषति। ण्यन्तानाम् – सिषेवयिषति। सिषञ्जयिषति। [5]सुष्वापयिषति। 'सिद्धे सत्यारम्भो नियमार्थः' (का. प. ६२), स्तौतिण्योः एव षणि [6]अभ्यासाद् यथा स्यात्, अन्यस्य मा भूत्। सिसिक्षति। सुसूषति[7]। एवकारकरणमिष्टतोऽवधारणार्थम्। स्तौतिण्योः षणि एव इति हि विज्ञायमाने तुष्टाव इत्यत्र न स्यात्, इह च स्यादेव सिसिक्षति इति। षणि इति किम्? अन्यत्र नियमो मा भूत्, सिषेच। को विनतेऽनुरोधः? अविनते नियमो मा भूत्, सुषुप्सति। (म. भा. ३.४४१)। [8]तिष्ठासति। कः सानुबन्धेऽनुरोधः? षशब्दमात्रे नियमो मा भूत्, [9]सुषुपिष इन्द्रम्[10]। अभ्यासात् इति किम्? अभ्यासात् [11]या प्राप्तिः तस्या नियमो यथा स्यात्, धातोः या प्राप्तिस्तस्या नियमो मा भूत्, प्रतीषिषति। अधीषिषति॥

---

1. यजतेः – वक्षत् नास्ति ब. इ. 2. पञ्चमे लकारे क. 3. लेटि इत्यधिकम् क. 4. षकार आदेशो क. 5. सुष्वापयिषति नास्ति क. 6. अभ्यासस्य क. 7. स्तौतिण्योः इति किम्? सुसूक्षते इत्यधिकम् क. 8. तिष्ठासति नास्ति ह. 9. सुषुपित इन्द्र क. ह. 10. स्वपेः लिटि अभ्यासः थासः से इति रूपम् इत्यधिकम् ब. इ. 11. यत्र प्राप्तः तत्र एव क. इ.

### सः स्विदिस्वदिसहीनां च। (६२/२६२८)

स्विदि स्वदि सहि इत्येतेषां[1] ण्यन्तानां [2]सनि षभूते परतोऽभ्यासा[3]दुत्तरस्य सकारस्य सकारादेशो भवति। स्विदि – सिस्वेदयिषति। स्वदि – सिस्वादयिषति। सहि – सिसाहयिषति। सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम्॥

### प्राक् सितादड्व्यवायेऽपि। (६३/२२७६)

[4]सेवसित (८.३.७०/२२७५) इति वक्ष्यति। प्राक् सितसंशब्दनाद् [5]यान् इत ऊर्ध्वमनुक्रमिष्यामः तत्र अड्व्यवायेऽपि मूर्धन्यो[6] भवति इत्येवं तद् वेदितव्यम्, अपिशब्दादनड्व्यवायेऽपि। वक्ष्यति – उपसर्गात् सुनोति-सुवति (८.३.६५/२२७०) इति षत्वम्। अभिषुणोति। परिषुणोति। [7]विषुणोति। निषुणोति। अभ्यषुणोत्। [8]पर्यषुणोत्। [9]व्यषुणोत्। न्यषुणोत्॥

### स्थादिष्वभ्यासेन चाभ्यासस्य। (६४/२२७७)

प्राक् सितात् इति वर्तते। [10]उपसर्गात् सुनोति (८.३.६५/२२७०) इत्यत्र स्थासेनयसेध इति स्थादयः, तेषु स्थादिषु प्राक् सितसंशब्दनात्[11] अभ्यासेन व्यवाये[12] मूर्धन्यो[13] भवति, अभ्याससकारस्य च भवति इत्येवं वेदितव्यम्। [14]अभ्यासेन व्यवाये अषोपदेशार्थं च अभिषिषेणयिषति, परिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च अभितष्ठौ, परितष्ठौ। [15]षणि प्रतिषेधार्थं च अभिषिषिक्षति, परिषिषिक्षति। अभ्यासस्य इति वचनं नियमार्थम्, स्थादिषु एवाभ्याससकारस्य [16]मूर्धन्यो भवति, नान्यत्र। अभिसुसूषति। [17]अभिसिषासति॥

### उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। (६५/२२७०)

[18]मूर्धन्य इति वर्तते, सः इति च। उपसर्गस्थान् निमित्तात् [19]उत्तरस्य सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुनोति – अभिषुणोति। परिषुणोति। अभ्यषुणोत्। पर्यषुणोत्। सुवति – अभिषुवति। परिषुवति। अभ्यषुवत्। पर्यषुवत्। स्यति – अभिष्यति। परिष्यति। अभ्यष्यत्। पर्यष्यत्। स्तौति – अभिष्टौति। [20]परिष्टौति। अभ्यष्टौत्। [21]पर्यष्टौत्। स्तोभति – [22]अभिष्टोभते। परिष्टोभते। अभ्यष्टोभत। पर्यष्टोभत। स्था – अभिष्ठास्यति। परिष्ठास्यति। [23]अभ्यष्ठात्। पर्यष्ठात्। अभितष्ठौ। परितष्ठौ। सेनय – अभिषेणयति। परिषेणयति। अभ्यषेणयत्।

---

1. धातूनां इत्यधिकम् ब. क. 2. षत्वभूते सनि क. इ. 3. इण उत्तरस्य ब. इ. ह. 4. सिवसितेति वक्ष्यति नास्ति क, परिनिविभ्यः सेवसित इ. 5. यत् क. 6. आदेशः इत्यधिकम् क. इ. 7. विषुणोति निषुणोति नास्ति इ. 8. पर्यषुणोत् नास्ति इ. 9. व्यषुणोत् नास्ति क. 10. उपसर्गात् नास्ति ब. 11. यान् इत ऊर्ध्वम् अनुक्रमिष्यामः इत्यधिकम् ब. 12. धातुसकारस्य इत्यधिकम् इ. 13. मूर्धन्यादेशः स्यात् ब. क. ह. 14. स्थादिषु इत्यधिकम् फ. 15. षत्वप्रतिषेधार्थम् क. 16. मूर्धन्यादेशः ब. क. इ. ह. 17. परिसिषासति इ. 18. वाक्यमिदं नास्ति क. 19. उत्तरेषां सुनोत्यादीनाम् क. 20–21. नास्ति ङ. ह. 22. अभिष्टोभति परिष्टोभति इ. 23. अभ्यष्ठास्यत् पर्यष्ठास्यत् ङ. ह.

पर्यषेणयत् । अभिषिषेणयिषति । परिषिषेणयिषति । सेध – अभिषेधति । परिषेधति । अभ्यषेधत् । पर्यषेधत् । सिच – अभिषिञ्चति । परिषिञ्चति । अभ्यषिञ्चत् । पर्यषिञ्चत् । अभिषिषिक्षति । परिषिषिक्षति । सञ्ज – अभिषजति । परिषजति । अभ्यषजत् । पर्यषजत् । अभिषिषङ्क्षति । परिषिषङ्क्षति । स्वञ्ज – अभिष्वजते । परिष्वजते । अभ्यष्वजत । पर्यष्वजत । अभिषिष्वङ्क्षते । परिषिष्वङ्क्षते । सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः । उपसर्गात् इति किम् ? दधि सिञ्चति । मधु सिञ्चति । निर्गताः सेचका अस्माद् देशात् निःसेचको देशः इति नायं सिचेः उपसर्गः । [1]अभिसावकीयति इत्यत्रापि न सुनोतिं प्रति क्रियायोगः, किं तर्हि, सावकीयं प्रति । अभिषावयति इत्यत्र तु सुनोतिमेव प्रति क्रियायोगः, न सावयतिं प्रति इति षत्वं भवति ॥

## सदिरप्रतेः । (६६/२२७१)

सदेः सकारस्य उपसर्गस्थान् निमित्तात् [2]अप्रतेः उत्तरस्य मूर्धन्य आदेशो भवति । निषीदति । विषीदति । न्यषीदत् । व्यषीदत् । निषसाद । विषसाद । अप्रतेः इति किम् ? प्रतिसीदति ॥

## स्तन्भेः । (६७/२२७२)

उपसर्गात् इति वर्तते । स्तन्भेः सकारस्य उपसर्गस्थान् निमित्तात् [3]उत्तरस्य मूर्धन्य आदेशो भवति । अभिष्टभ्नाति । परिष्टभ्नाति । अभ्यष्टभ्नात् । पर्यष्टभ्नात् । अभितष्टम्भ । परितष्टम्भ । अप्रतेः इत्येतदिह नानुवर्तते, तेन [4]एतदपि[5] भवति, प्रतिष्टभ्नाति, [6]प्रत्यष्टभ्नात्, [7]प्रतितष्टम्भ ॥

## अवाच्चालम्बनाविदूर्ययोः । (६८/२२७३)

[8]अवशब्दात् उपसर्गात् उत्तरस्य स्तन्भेः सकारस्य मूर्धन्यः आदेशो भवति, आलम्बनेऽर्थे आविदूर्ये च । आलम्बनम् [9]आश्रयणम् । अविदूरस्य भावः आविदूर्यम् । आलम्बने तावत् -- अवष्टभ्यास्ते । अवष्टभ्य तिष्ठति । आविदूर्ये – [10]अवष्टब्धा सेना । [11]अवष्टब्धा शरत् । आलम्बनाविदूर्ययोः इति किम् ? अवस्तब्धो वृषलः शीतेन । अनिगर्थः आरम्भः ॥

---

1. वाक्यमिदं नास्ति क. 2. परस्य इत्यधिकम् इ. 3. परस्य इ. 4. इहापि इ, 5. सिद्धं इत्यधिकम् ड. ब. ह. 6. प्रतिष्टम्भः क. ड. ह, अभिष्टम्भः इत्यधिकम् ह. 7. नास्ति ड. 8. स्तन्भेः इति वर्तते इत्यधिकम् क. इ, अवात् उपसर्गात् इ. 9. समाश्रयः क, आश्रयः इ. ड. 10-11. अवष्टभ्या इ.

## वेश्च स्वनो भोजने। (६९/२२७४)

वेः उपसर्गात् अवात् चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति। विष्वणति। व्यष्वणत्। विषष्वाण। अवष्वणति। [1]अवाष्वणत्। अवषष्वाण। [2]अभ्यवहारक्रियाविशेषो[3]ऽभिधीयते, यत्र स्वननमस्ति[4]। भोजने इति किम्। विस्वनति मृदङ्गः। अवस्वनति मृदङ्गः[5]॥

## परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। (७०/२२७५)

परि नि वि इत्येतेभ्यः उपसर्गेभ्यः उत्तरेषां सेव सित सय सिवु सह सुट् स्तु स्वञ्ज इत्येतेषां[6] सकारस्य मूर्धन्य आदेशः भवति। परिषेवते। निषेवते। विषेवते। पर्यषेवत। न्यषेवत। व्यषेवत। परिषिषेविषते। निषिषेविषते। विषिषेविषते। [7]सित – परिषितः। निषितः। विषितः। सय – परिषयः। निषयः। विषयः। [8]सिव् – परिषीव्यति। निषीव्यति। विषीव्यति। [9]पर्यषीव्यत्। न्यषीव्यत्। व्यषीव्यत्। पर्यसीव्यत्। न्यसीव्यत्। व्यसीव्यत्। सह – परिषहते। निषहते। विषहते। [10]पर्यषहत। न्यषहत। व्यषहत। [11]पर्यसहत। न्यसहत। व्यसहत। सुट् – परिष्करोति। [12]पर्यष्करोत्। पर्यस्करोत्। स्तु – परिष्टौति। निष्टौति। विष्टौति। पर्यष्टौत्। न्यष्टौत्। व्यष्टौत्। पर्यस्तौत्। न्यस्तौत्। व्यस्तौत्। स्वञ्ज – दंशसञ्जस्वञ्जाम् (६.४.२५/२३९६) इति नलोपः। परिष्वजते। निष्वजते। विष्वजते। पर्यष्वजत, पर्यस्वजत। पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात्॥

## सिवादीनां वाड्व्यवायेऽपि। (७१/२३६९)

[13]अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जाम् (८.३.७०/२२७५) इति सिवादयः। सिवादीनाम् अड्व्यवायेऽपि परिनिविभ्यः उत्तरस्य सकारस्य वा मूर्धन्यो भवति। [14]तथा चैवोदाहृतम्॥

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। (७२/२३४९)

अनु वि परि अभि नि इत्येतेभ्यः उत्तरस्य स्यन्दतेः [15]अप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते [16]तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिस्यन्दते। अभिस्यन्दते। निस्यन्दते। अप्राणिषु इति किम्? [17]अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणिविषयस्यापि स्यन्दतेः अयं विकल्पो भवति, अनुष्यन्देते मत्स्योदके, अनुस्यन्देते। अप्राणिषु इति पर्युदासोऽयम्, न [18]प्रसज्यप्रतिषेधः[19]॥

---

1. अवाष्वणत् नास्ति इ. 2. अभ्यवहारविशेषो क. 3. उच्यते इ. ह, विधीयते क. 4. सशब्दं भुङ्क्ते इत्यर्थः इत्यधिकम् इ.ह. 5. व्यवाभ्याम् किम्? निस्वनति इत्यधिकम् ड. 6. सम्बन्धिनः इत्यधिकम् क. 7. प्राक् सितादित्यस्य पूर्णोऽवधिः इ.ड.ह. 8. सिवु क.इ.ड. 9. पर्यषीव्यत् नास्ति ब.क.ड.इ. 10. पर्यषहत नास्ति ब.ड. 11. पर्यसहत नास्ति इ. 12. पर्यष्करोत् नास्ति इ. 13. अनन्तरसूत्रे नास्ति ह. 14. तथा नास्ति ब, पर्यषीव्यत्, पर्यसीव्यत्। न्यषीव्यत्, व्यषीव्यत्। पर्यषहत, पर्यसहत। न्यषहत, न्यसहत। व्यषहत, व्यसहत। पर्यष्करोत्, पर्यस्करोत्। पर्यष्टौत्, पर्यस्तौत्। न्यष्टौत्, न्यस्तौत्। व्यष्टौत्, व्यस्तौत्। पर्यष्वजत, पर्यस्वजत। न्यष्वजत, न्यस्वजत। व्यष्वजत, व्यस्वजत इति इत्यधिकम् क.ड.इ.ह. 15. अप्राणिकर्तृकस्य ब. 16. तैलम् नास्ति ब. 17. अनुष्यन्दते इ. 18. तु इत्यधिकम् ब.क. 19. भवति इत्यधिकम् ब.क.

## वेः स्कन्देरनिष्ठायाम्। (७३/२३०८)

वेः उपसर्गादुत्तरस्य [1]स्कन्देः सकारस्य [2]मूर्धन्यो [3]वा भवति अनिष्ठायाम्। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्। अनिष्ठायाम् इति किम्? विस्कन्नः[4] ॥

## परेश्च। (७४/२३०९)

[5]परिशब्दादुत्तरस्य [6]स्कन्देः सकारस्य वा [7]मूर्धन्यो भवति। परिष्कन्ता। परिष्कन्तुम्। परिष्कन्तव्यम्। परिस्कन्ता। परिस्कन्तुम्। परिस्कन्तव्यम्। पृथग्योगकरणसामर्थ्यात् अनिष्ठायाम् इत्येतन्नानुवर्तते। परिष्कण्णः, परिस्कन्नः ॥

## परिस्कन्दः प्राच्यभरतेषु। (७५/३०२६)

परिस्कन्दः इति [8]मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। [9]अन्यत्र परिष्कन्दः। अचि निपातनम्। अथ वा निष्ठातकारस्य लोपः। भरतग्रहणं प्राच्यविशेषणम् ॥

## स्फुरतिस्फुलत्योर्निर्निविभ्यः। (७६/२५३७)

[10]स्फुरतिस्फुलत्योः सकारस्य निस् नि वि इत्येतेभ्यः [11]उत्तरस्य वा मूर्धन्यादेशो भवति। स्फुरति – निष्ष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुरति, विस्फुरति। स्फुलति – निष्ष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति ॥

## वेः स्कभ्नातेर्नित्यम्। (७७/२५५६)

वेः उत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति। [12]विष्कभ्नाति। विष्कम्भिता। विष्कम्भितुम्। विष्कम्भितव्यम् ॥

## इणः षीध्वंलुङ्लिटां धोऽङ्गात्। (७८/२२४७)

मूर्धन्यः इति वर्तते। इणन्तादङ्गात् [13]उत्तरेषां षीध्वंलुङ्लिटां [14]यो धकारः तस्य मूर्धन्यादेशो भवति। [15]च्योषीढ्वम्, प्लोषीढ्वम्। लुङ – अच्योढ्वम्। अप्लोढ्वम्। लिट् – चकृढ्वे[16]। ववृढ्वे। इण्कोः (८.३.५७/२११) इति वर्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम्। पक्षीध्वम्। यक्षीध्वम्। षीध्वंलुङ्लिटाम् इति किम्? स्तुध्वे। अस्तुध्वम्। अङ्गात् इति किम्? परिवेविषीध्वम्। अर्थवद्ग्रहणादपि सिद्धम्? [17]तत्तु नाश्रितम्[18] ॥

---

1. स्कन्दतेः इ. 2. मूर्धन्यादेशः ब. क. इ. ह. 3. वा नास्ति क. 4. विष्कन्नवान् इत्यधिकम् ड. 5. वाग्रहणम् अनुवर्तते इत्यधिकम् क.इ.ह, परेः उत्तरस्य ब. 6. स्कन्दतेः इ. 7. मूर्धन्यादेशः ब.क.इ.ह. 8. मूर्धन्याभावः नास्ति ब.ड. 9. प्राच्यभरतेषु इति किम्? पूर्वेणात्र विकल्पः, परिष्कन्दः, परिस्कन्दः इत्यधिकम् ब.क.ड. इ. ह. 10. स्फुरति स्फुलति इत्येतयोः इ. 11. परस्य ब. क. 12. विष्कभ्नाति नास्ति ब. ड. इ. ह. 13. परेषां क. ड. 14. धकारस्य ब. 15. स्तोषीढ्वम् ड. 16. ववृढवे नास्ति ब. इ. 17. एतत्तु ब. 18. अङ्गग्रहणं विस्पष्टार्थम् इत्यधिकम् ड.

## विभाषेटः । (७९/२३२८)

[1]इणः परस्मात् इट उत्तरेषां षीध्वंलुङ्लिटां यो धकारः तस्य मूर्धन्यादेशो भवति विभाषा । लविषीढ्वम्, लविषीध्वम् । पविषीढ्वम्, पविषीध्वम् । लुङ् – अलविढ्वम्, अलविध्वम् । लिट् – लुलुविढ्वे, लुलुविध्वे । इणः इत्येव, आसिषीध्वम् । अथ इह कथं भवितव्यम्, उपदिदीयिध्वे ? केचिदाहुः, इणन्तादङ्गादुत्तरस्य इट आनन्तर्यं युटा [2]व्यवहितमिति न भवितव्यं ढत्वेन इति । अपरेषां दर्शनम्, अङ्गात् इति निवृत्तम्, इणः इत्यनुवर्तते, ततश्च [3]यकारादेव इणः परोऽनन्तरः इट् इति पक्षे भवितव्यं मूर्धन्येन इति ॥

## समासेऽङ्गुलेः सङ्गः । (८०/१०१९)

[4]सङ्गसकारस्य अङ्गुलेः उत्तरस्य मूर्धन्य आदेशो भवति [5]समासे । अङ्गुलेः सङ्गः अङ्गुलिषङ्गः । अङ्गुलिषङ्गा यवागूः । [6]अङ्गुलिषङ्गो गाः [7]सादयति । समासे इति किम् ? [8]अङ्गुलेः सङ्गं पश्य ॥

## भीरोः स्थानम् । (८१/१०२०)

स्थानसकारस्य [9]भीरोः उत्तरस्य मूर्धन्यादेशो भवति[10] । [11]भीरुष्ठानम् । समासे [12]इत्येव, भीरोः स्थानं [13]पश्य ॥

## अग्नेः स्तुत्स्तोमसोमाः । (८२/९२४)

अग्नेः उत्तरस्य स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे । अग्निष्टुत् । अग्निष्टोमः । [14]अग्नीषोमः । अग्नेर्दीर्घात् सोमस्य इष्यते (म. भा. ३.४४५) । तेन इह न भवति, अग्निसोमौ माणवकौ । [15]तथा च ज्योतिरग्निः, सोमः लताविशेषः, अग्निसोमौ तिष्ठतः । समासे इत्येव, अग्नेः [16]स्तोमः ॥

## ज्योतिरायुषः स्तोमः । (८३/१०२१)

ज्योतिस् आयुस् इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे इत्येव, ज्योतिः स्तोमं [17]दर्शयति ॥

## मातृपितृभ्यां स्वसा । (८४/९८४)

मातृ पितृ इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति । मातृष्वसा । पितृष्वसा ॥

---

1. इणः षीध्वंलुङ्लिटाम् इति वर्तते, अङ्गग्रहणं तु न स्वर्यते इत्यधिकम् क. ड. ह. 2. विहतमपि क, विहितमपि ह. 3. यकारादौ इ. 4. मूर्धन्य इति वर्तते इत्यधिकम् क. इ. ह. 5. समासविषये प्रयोगे क. इ. ड, समासविषये योगे ह. 6. अङ्गुलिषङ्गा क. 7. पालयति क. ब. 8. अङ्गुलेः सङ्गः ब. ड, अङ्गुलेः सङ्गं पश्यति क. इ. 9. भीरुशब्दात् ब. क. ह. 10. समासे इत्यधिकम् ब. इ. ह, समास विषये प्रयोगे इत्यधिकम् क. ड. 11. भीरूणां स्थानम् इत्यधिकम् क. ड. इ. 12. इति किम् ? क. 13. पश्य नास्ति ब. क. ड. इ. ह. 14. अग्नीषोमौ ब. क. ड. इ, अग्नीषोमौ देवता ह. 15. तद्यथा इ. ह. 16 सोमः क. ब. ड. 17. दहति ब, हरति क.

## मातुःपितुर्भ्यामन्यतरस्याम् । (८५/९८३)

मातुर् पितुर् इत्येताभ्याम् उत्तरस्य स्वसृशब्दस्य अन्यतरस्यां मूर्धन्यादेशो भवति समासे । मातुःष्वसा, मातुःस्वसा । पितुःष्वसा, पितुःस्वसा । मातुः पितुः इति रेफान्तयोरे[1]तद्ग्रहणम् । एकदेशविकृतस्य [2]अनन्यत्वाद् विसर्जनीयान्तात् सकारान्तात् च षत्वं भवति । समासे इत्येव, वाक्ये मा भूत् । मातुः स्वसा [3]इत्येव नित्यं भवति ॥

## अभिनिसः स्तनः शब्दसञ्ज्ञायाम् । (८६/३१९३)

अभिनिस् इत्ये[4]तस्मात् उत्तरस्य [5]स्तनतिसकारस्य मूर्धन्यादेशो भवति [6]अन्यतरस्यां शब्दसञ्ज्ञायां गम्यमानायाम् । अभिनिष्टानो वर्णः, अभिनिस्तानो वर्णः । अभिनिष्टानो विसर्जनीयः, अभिनिस्तानो विसर्जनीयः । [7]शब्दसञ्ज्ञायाम् इति किम् ? अभिनिस्तनति मृदङ्गः[8] । [9]समासे इति अतःप्रभृति निवृत्तम् ॥

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । (८७/२४७२)

उपसर्गस्थान् निमित्तात् प्रादुस्शब्दाच् चोत्तरस्य यकारपरस्य अच्परस्य च अस्तिसकारस्य मूर्धन्यो भवति । [10]अभिषन्ति । निषन्ति । विषन्ति । प्रादुःषन्ति । अभिष्यात् । निष्यात् । विष्यात् । प्रादुःष्यात् । [11]उपसर्गात् इति किम् ? दधि स्यात् । मधु स्यात् । अस्ति इति किम् ? [12]अनुसृतम् । विसृतम् । अथ [13]असत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्ग आश्रीयते, प्रादुःशब्दस्य च कृभ्वस्तिष्वेव प्रयोगः [14]इति अन्यत्राप्रसङ्गः ? तथापि एतत् प्रत्युदाहर्तव्यम्, अनुसूते अनुसूः, [15]अनुस्वोऽपत्यं आनुसेयः । शुभ्रादित्वाड् ढक् (४.१.१२३/११२६), 'ढे लोपोऽकद्र्वाः' (६.४.१४७/११४२) इति उवर्णलोपः । यच्परः इति किम् ? [16]निस्तः । विस्तः । प्रादुस्तः ॥

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः । (८८/२४७७)

सु वि निर् दुर् इत्येतेभ्यः [17]उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति । सुपि इति स्वपिः कृतसम्प्रसारणो गृह्यते । सुषुप्तः । विषुप्तः । निःषुप्तः । दुःषुप्तः । सूति इति स्वरूपग्रहणम् । सुषूतिः । विषूतिः । निःषूतिः । दुःषूतिः । सम -- सुषमम् । विषमम् । निःषमम् । दुःषमम् ।

सुपेः षत्वं स्वपेर्मा भूद् विसुष्वापेति [18]केन न ।
हलादिशेषान्न [19]सुपिरिष्टं पूर्वं [20]प्रसारणम् ॥

[21]स्थादीनां नियमो नात्र प्राक् सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥ (म. भा. ३.४४७)

'पूर्वत्रासिद्धीयमद्विर्वचने' (पृ. प. ९२) इति कृते षत्वे ततो द्विर्वचनम् ॥

---

1. इदं ह. 2. अन्यतरत्वात् क. 3. पितुः स्वसा इत्यधिकम् इ. ह. 4. एताभ्याम् क. 5. स्तनतेः ब. क इ. 6. अन्यतरस्यां नास्ति ब. क. इ. 7. शब्द नास्ति इ. 8. शब्दं करोति इत्यर्थः इत्यधिकम् ह. 9. वाक्यमिदं नास्ति ब. क. ड. 10. उपसर्गात् तावत् इत्यधिकम् क ड. ह. 11. उपसर्गप्रादुर्भ्याम् ब. ड. ई. 12. अनुसूतम् विसूतम् ह, परिसृतम् ड. 13. असति नास्ति इ. 14. ईत्यत्र क, इति तत्र इ. 15. अनुस्बाः क. 16. अभिस्तः ब. ड. 17. उत्तरेषां सकारस्य ब. 18. केचन क. 19. सुपेः ब. 20. सम्प्रसारणम् क. ई. 21. स्वादीनां ह.

## निनदीभ्यां स्नातेः कौशले। (८९/३०८२)

नि नदी इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशो भवति कौशले गम्यमाने। निष्णातः कटकरणे[1]। निष्णातो [2]रज्जुवर्तने। नद्यां स्नाति इति नदीष्णः[3]। 'सुपि स्थः' (३.२.४/२९१६) [4]इत्यत्र सुपि इति योगविभागात् कप्रत्ययः। कौशले इति किम्? निस्नातः। नद्यां स्नातः नदीस्नातः इति॥

## सूत्रं प्रतिष्णातम्। (९०/३०८३)

प्रतिष्णातम् इति निपात्यते सूत्रं चेद्[5] भवति। प्रतिष्णातम्[6] सूत्रम्। शुद्धमित्यर्थः। प्रतिस्नातम् इत्येवान्यत्र॥

## कपिष्ठलो गोत्रे। (९१/३०८४)

कपिष्ठलः इति निपात्यते गोत्रविषये। कपिष्ठलः नाम यस्य सः कापिष्ठलिः पुत्रः। गोत्रे इति किम्? [7]कपेः स्थलम् कपिस्थलम्॥

## प्रष्ठोऽग्रगामिनि। (९२/२९१७)

प्रष्ठः इति निपात्यते अग्रगामिनि [8]अभिधेये। [9]प्रतिष्ठते इति प्रष्ठः [10]अश्वः। अग्रतो गच्छति इत्यर्थः। अग्रगामिनि इति किम्? प्रस्थे हिमवतः [11]पुण्ये। प्रस्थो [12]व्रीहीणाम्॥

## वृक्षासनयोर्विष्टरः। (९३/३२३३)

विष्टरः इति निपात्यते वृक्षे [13]आसने च [14]वाच्ये। विपूर्वस्य स्तृणातेः षत्वं निपात्यते। विष्टरो वृक्षः। विष्टरमासनम्[15]। वृक्षासनयोः इति किम्? औलपिवाक्यस्य विस्तरः[16]॥

## छन्दोनाम्नि च। (९४/३२०६)

विष्टारः इति निपात्यते[17]। विपूर्वात् स्तृ इत्येतस्माद् धातोः 'छन्दोनाम्नि च' (३.३.३४/३२०५) इत्येवं विहितो घञ् इति विष्टरः इत्यपि प्रकृते विष्टारः इति विज्ञायते। विष्टारपङ्क्तिः छन्दः। विष्टारो बृहतीछन्दः। छन्दोनाम्नि इति किम्? पटस्य विस्तारः[18]॥

---

1. कुशलः कटकरणे इत्यर्थः इत्यधिकम् क.ड. 2. रज्जुसर्जने ब.ड. 3. नदीतरणे कुशलः इत्यधिकम् क. 4. इति योगविभागात् ब. 5. तद् इत्यधिकम् ब.क.ह. 6. इदं इत्यधिकम् इ. 7. कपीनां क. ड. इ. ह. 8. अर्थे ब. 9. प्रतिष्ठितः इति इ. 10. प्रष्ठो गौः ब.क.ड.इ. 11. शृङ्गे ड. 12. व्रीहिः ब. 13. च इत्यधिकम् क. 14. गम्यमाने क. ड. 15. वृक्षासनवाची विष्टरशब्दः इत्यधिकम् क.इ.ह. 16. सविस्तरं वा वाक्यमाह इत्यधिकम् ब, सविस्तरं वाक्यमाह इत्यधिकम् क. ड. इ. ह. 17. एकदेशविकृतस्य अनन्यत्वात विष्टारशब्दार्थमेतत् निपातनम् इत्यधिकम् क. 18. कम्बलस्य विस्तारः इत्यधिकम् इ.

## गवियुधिभ्यां स्थिरः। (९५/९६७)

[1]गवियुधिभ्याम् उत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो भवति। [2]गविष्ठिरः। युधिष्ठिरः। गोशब्दाव-हलन्तादपि एतस्मादेव [3]निपातनात् सप्तम्या अलुग् [4]भवति॥

## विकुशमिपरिभ्यः स्थलम्। (९६/३०८५)

वि कु शमि परि इत्येतेभ्यः [5]उत्तरस्य स्थलसकारस्य मूर्धन्यादेशो भवति। विष्ठलम्। [6]कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्॥

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः। (९७/२९१८)

अम्ब आम्ब गो भूमि सव्य अप द्वि त्रि कु शेकु शङ्कु अङ्गु मञ्जि पुञ्जि परमे बर्हिस् दिवि अग्नि इत्येतेभ्यः उत्तरस्य स्थशब्दसकारस्य मूर्धन्यादेशो भवति। अम्बष्ठः। आम्बष्ठः। [7]गोष्ठः। भूमिष्ठः। [8]सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः।

[९४३] स्थास्थिन्स्थॄणामिति वक्तव्यम्। (म. भा. ३.४४८)

[9]सव्येष्ठाः। परमेष्ठी। [10]सव्येष्ठृसारथिः॥

## सुषामादिषु च। (९८/१०२२)

सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवति। शोभनं साम यस्यासौ सुषामा [11]ब्राह्मणः। दुष्षामा। निष्षामा। निष्षेधः। दुष्षेधः। सुशब्दस्य कर्मप्रवचनीयसञ्ज्ञकत्वान् निर्दुर्शब्दयोश्च क्रियान्तरविषयत्वाद-नुपसर्गत्वे सति पाठोऽयम्। 'सेधतेर्गतौ' (८.३.११३/२२७८) इति वा प्रतिषेध[12]बाधनार्थः। सुषन्धिः। दुष्षन्धिः। निष्षन्धिः। सुष्ठु। दुष्ठु। तिष्ठतेरुणादिष्वेतौ [13]व्युत्पाद्येते। 'गौरिषक्थः सञ्ज्ञायाम्' (ग.सू. १७९)। 'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्' (६.३.६३/१००१) इति पूर्वपदस्य ह्रस्वत्वम्। प्रतिष्णिका। प्रतिष्णाशब्दादयं कन् प्रत्ययः। जलाषाहम्। [14]नौषेचनम्। दुन्दुभिषेवणम्। 'एति सञ्ज्ञायामगात्' (ग. सू. १८०)। एकार-परस्य सकारस्य मूर्धन्यादेशः भवति इण्को[15]रुत्तरस्य अगकारात् परस्य सञ्ज्ञायां [16]विषये। हरिषेणः। [17]वारिषेणः। जानुषेणी। एति इति किम्? [18]हरिसक्थम्। सञ्ज्ञायाम् इति किम्? पृथ्वी सेना [19]यस्य स पृथुसेनो [20]राजा। अगात् इति [21]किम्? विष्वक्सेनः। इण्कोः इत्येव, सर्वसेनः। 'नक्षत्राद्वा' (ग. सू. १८१)।

---

1. गवि युधि इत्येताभ्याम् ब. क. इ. 2. स्थिर इति अजिरशिशिरस्फिरस्थविरखदिर इति किरच् प्रत्ययः इत्यधिकम् क. 3. वचनात् क. 4. भवति नास्ति ब. क. ह. 5. उत्तरस्य नास्ति इ. 6. कुष्ठलम् क, कुष्ठलम् शमिष्ठलम् नास्ति इ. 7. गोष्ठम् ड. 8. सव्यष्ठः ह. 9. सव्येष्ठः इ. 10. सव्येष्टृ इ. 11. ब्राह्मणः नास्ति ब. इ. 12. बाधनार्थम् ब. 13. व्युत्पादितौ ब. 14. नौषेवणम् ब. इ. 15. उत्तरस्य नास्ति ब. क. 16. विषये नास्ति ब. इ. 17. परिषेणः जानुषेणः ब. ड. 18. हरिसिंहः ब. क, हरिसन्धिः इ. ह, हलिसक्थम् ड. 19. अस्य ब. क. 20. राजा नास्ति ब. इ. ह. 21. किम् नास्ति ब.

नक्षत्रवाचिनः [1]शब्दादुत्तरस्य सकारस्य वा एति सञ्ज्ञायामग[2]कारात् [3]मूर्धन्यो भवति । रोहिणीषेणः, रोहिणीसेनः । [4]भरणीषेणः, भरणीसेनः । अगकारात् इत्येव, शतभिषक्सेनः । अविहितलक्षणो मूर्धन्यः सुषामादिषु [5]द्रष्टव्यः ॥

## ह्रस्वात्तादौ तद्धिते । (९९/१३२८)

[6]ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेशो भवति [7]तादौ तद्धिते परतः । तरप् तमप् तय त्व तल् त्यप्, एतानि प्रयोजयन्ति । तरप् – सर्पिष्टरम् । यजुष्टरम् । तमप् – सर्पिष्टमम् । यजुष्टमम् । तय – [8]चतुष्टये ब्राह्मणानां निकेताः । त्व – सर्पिष्ट्वम् । यजुष्ट्वम् । तल् – सर्पिष्टा । यजुष्टा । तस् – सर्पिष्टः । यजुष्टः । त्यप् – 'आविष्ट्यो वर्धते' (ऋ. १.९५.५) । ह्रस्वात् इति किम् ? गीस्तरा । धूस्तरा । तादौ इति किम् ? सर्पिस्साद् भवति । प्रत्ययसकारस्य 'सात् पदाद्योः' (८.३.१११/२१२३) इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात् । तद्धिते इति किम् ? सर्पिस्तरति ।

[९४४] तिङन्तस्य प्रतिषेधो वक्तव्यः । (म. भा. ३.४४८)

भिन्द्युस्तराम् । [9]छिन्द्युस्तराम् ॥

## निसस्तपतावनासेवने । (१००/२४०३)

निसः सकारस्य मूर्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थे । आसेवनं पुनः पुनः करणम् । निष्टपति [10]सुवर्णम् । सकृदग्निं [11]स्पर्शयति इत्यर्थः । अनासेवने इति किम् ? निस्तपति सुवर्णं सुवर्णकारः । पुनः पुनरग्निं [12]स्पर्शयति इत्यर्थः । '[13]निष्टप्तं रक्षो निष्टप्ता अरातयः' (वा. सं. १. ७.) इत्यत्र सदप्यासेवनं न विवक्ष्यते । छान्दसो वा वर्णविकारः ॥

## युष्मत्तत्ततक्षुःष्वन्तःपादम् । (१०१/३६४०)

युष्मत् तत् ततक्षुस् इत्येतेषु तकारादिषु परतः सकारस्य मूर्धन्यादेशो भवति, स चेत् सकारोऽन्तःपादं भवति[14] । युष्मदादेशाः त्वम्, त्वाम्, ते, तव । अग्निष्ट्वं नामासीत्[15] । त्वा – अग्निष्ट्वा वर्धयामसि । ते – अग्निष्टे (आप. गृ. ४. १०. १७) विश्वमानय । तव – 'अप्स्वग्ने सधिष्टव' (ऋ. ८. ४३. ९) । तत् – 'अग्निष्टद् [16]विश्वमापृणाति' (ऋ. १०. २. ४) । ततक्षुस् – 'द्यावापृथिवी निष्टतक्षुः' (ऋ. १०. ३१. ७) । अन्तःपादम् इति किम् ? 'यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विच  :' (तै. ३. २. ५. ४) ॥

## यजुष्येकेषाम् । (१०२/३६४१)

यजुषि विषये युष्मत्तत्ततक्षुःषु परत एकेषामाचार्याणां मतेन सकारस्य मूर्धन्यादेशो भवति । अर्चिभिष्ट्वम्, अर्चिभिस्त्वम् । अग्निष्टेऽग्रम्, 'अग्निस्तेऽग्रम्' (तै ३.५.६.२) । 'अग्निष्टत्' (तै.१.१.१४.५), 'अग्निस्तत्' (तै. ३.२.५.४) । अर्चिभिष्टतक्षुः, अर्चिभिस्ततक्षुः ॥

---

1. शब्दादुत्तरस्य नास्ति ब. 2. अगात् ब. 3. मूर्धन्यादेशः ब. इ. 4. हरिणीसेनः हरिणीषेनः ह. 5. ज्ञेयः इ. 6. ह्रस्वाद् वर्णात् ब. क. इ. 7. तकारादौ क.इ. 8. चतुष्टयं ब्राह्मणानां निकेतम् ड. 9. छिन्द्युस्तराम् नास्ति इ. 10. सुवर्णम् नास्ति ब. इ. 11–12. स्पृशति ब. इ. ह. 13. निस्तप्तम्, निस्तप्ता इत्यधिकम् ड. 14. पादमध्ये चेद् भवति इत्यर्थः इत्यधिकम् क. 15. आसीः ब.ड. 16. विश्वमावृणोति क. ड.

## स्तुतस्तोमयोश्छन्दसि । (१०३/३६४२)

एकेषाम् इति वर्तते । स्तुत स्तोम इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवति एकेषामाचार्याणां [1]मतेन । [2]त्रिभिष्टुतस्य, [3]त्रिभिस्तुतस्य । गोष्टोमं (तै. सं. ७.४.११.१) षोडशिनम्, गोस्तोमं [4]षोडशिनम् (आप. श्रौ. २३.१२.१८) । पूर्वपदात् इत्येव सिद्धे[5] प्रपञ्चार्थम् इदम् ॥

## पूर्वपदात् । (१०४/३६४३)

[6]छन्दसि इति वर्तते, एकेषाम् इति च । पूर्वपदस्थान्निमित्तात् [7]परस्य सकारस्य मूर्धन्यादेशो भवति छन्दसि विषये एकेषामा[8]चार्याणां मतेन । 'द्विषन्धिः' । (मै. ३.८.२), द्विसन्धिः । 'त्रिषन्धिः' (मै.३.८.२), त्रिसन्धिः । [9]मधुष्ठानम्, मधुस्थानम् । 'द्विषाहस्रं चिन्वीत' (तै. ५.६.८.२), द्विसाहस्रं चिन्वीत । असमासेऽपि यत् पूर्वपदं तदपि इह गृह्यते । [10]'त्रिः षमृद्धत्वाय' (ऐ. ब्रा.२.१६), त्रिः समृद्धत्वाय ॥

## सुञः । (१०५/३६४४)

सुञ् इति निपात [11]इह गृह्यते, तस्य पूर्वपदस्थान्निमित्तात् उत्तरस्य मूर्धन्यादेशो भवति छन्दसि विषये । 'अभी षु णः [12]सखीनाम्' (ऋ. ४.३१.३) । 'ऊर्ध्व ऊ षु ण ऊतये' (ऋ. १.३६.१३)[13] ॥

## सनोतेरनः । (१०६/३६७८)

सनोतेः[14] अनकारान्तस्य सकारस्य मूर्धन्यादेशो भवति । 'गोषाः' (ऋ. ९.२.१०) । 'नृषाः' (ऋ. ९.२.१०)[15] । अनः इति किम् ? 'गोसनिं [16]वाचमुदेयम्' (अ. वे. ३.२०.१०) पूर्वपदात् इत्येव सिद्धे नियमार्थमिदम्[17] । अत्र केचित् सवनादिपाठाद् गोसनिर्नियमस्य फलं न भवति इति सिसानयिषति इति प्रत्युदाहरन्ति । सिसनिषतेः [18]अप्रत्ययः । सिसनीः इत्यपरे ॥

## सहेः पृतनर्ताभ्यां च । (१०७/३६४६)

पृतना [19]ऋत इत्येताभ्यामुत्तरस्य [20]सहिसकारस्य मूर्धन्यादेशो भवति । 'पृतनाषाहम्' (ऋ. ६.७२.५) । ऋताषाहम् । केचित् सहेः इति योगविभागं कुर्वन्ति[21] । 'ऋतीषहम्' (ऋ. ६.१४.४) इत्यत्रापि यथा स्यात् । [22]ऋतिशब्दस्य पूर्वपदस्य संहितायाम् [23]एतद् दीर्घत्वम् । अवग्रहे तु ऋतिसहम् इत्येव भवति । [24]चकारोऽनुक्तसमुच्चयार्थः, तेन '[25]ऋतीषहम्' (ऋ ६.१४.४) इति सिद्धम् ॥

---

1. मतेन नास्ति ह. 2. नृभिष्टुतस्य ब. इ. ड. ह. 3. नृभिः स्तुतस्य ब. इ. ड. ह. 4. षोडशिनम् नास्ति क. 5. तस्यैव इत्यधिकम् ड. 6. वाक्यमिदं नास्ति 7. उत्तरस्य ब. क. 8. आचार्याणां नास्ति ब.क. ई. 9. मधुष्ठलम् मधुस्थलम् ह, मधुष्ठालम् (मै. 1.11.7) ड. 10. पूर्वपदात् इति तेनेहापि भवति त्रिषसं दत्वा यः इत्यधिकम् क, तेन वाक्येऽपि भवति इत्यधिकम् ड. 11. इह नास्ति इ. 12. सवीमाम् ब. 13. इकः सुञि इति दीर्घः । नश्चधातुस्थोरुषुभ्य इति णत्वम् इत्यधिकम् ब. क. ड. इ. ह. 14. धातोः इत्यधिकम् ब. 15. जनसनखनक्रमगमो विट् । विड्वनोरनुनासिकस्यात् इत्यधिकम् ब.इ. 16. वाचमुदीरयन् इति मुद्रितः पाठः 17. वचनम् इत्यधिकम् इ. 18. क्विप्रत्ययः ब. 19. ऋती क. 20. सहेः सकारस्य ब. 21. इति इत्यधिकम् ब. 22. ऋत इ. 23. एव क. इ. 24. वाक्यमिदं नास्ति ह, चकारात् ऋतिषाहम् इ. 25. ऋतषहम् ब.

## न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्। (१०८/३१६८)

[1]रेफपरस्य सकारस्य सृपि सृजि स्पृशि स्पृहि[2] सवनादीनां च [3]मूर्धन्यो न भवति। [4]रपर – 'विस्रंसिकायाः [5]काण्डाभ्यां जुहोति' (मै. २.६.१)। [6]विस्रब्धः कथयति। सृपि – 'पुरा क्रूरस्य विसृपः' (वा. सं. १. २८) सृजि – [7]वाचो विसर्जनात्। स्पृशि – 'दिविस्पृशम्' (ऋ. १. १४२. ८)। स्पृहि – निस्पृहं कथयति। सवनादीनाम् – सवने सवने। सूते सूते। [8]सामे सामे। सवनमुखे सवनमुखे। किं स्यति[9] किंसंकिंसम्। अनुसवनमनुसवनम्। गोसनिं (अ.वे. ३. २०. १०) गोसनिम्। अश्वसनिमश्वसनिम्। [10]पूर्वपदात् इति प्राप्ते प्रतिषेधः। अश्वसनिग्रहणम् अनिणोऽपि षत्वमस्ति इति ज्ञापनार्थम्। तेन[11] जलाषाहम्, अश्वषाहम् इत्येतत् सिद्धं भवति। क्वचिदेवं गणपाठः –

सवने सवने। [12]अनुसवनेऽनुसवने। सञ्ज्ञायां [13]बृहस्पतिसवः। शकुनिसवनम्। सोमे सोमे। सूते सूते। संवत्सरे संवत्सरे। किंसंकिंसम्। बिसंबिसम्। मुसलंमुसलम्। गोसनिमश्वसनिम्। सवनादिः॥

## सात् पदाद्योः। (१०९/२१२३)

सात् इत्येतस्य, पदादेश्च[14] मूर्धन्यादेशो न भवति। 'विभाषा साति कार्त्स्न्ये' (५. ४. ५२/२१२२)। [15]प्रत्ययसकारत्वात् प्राप्तिः, पदादेश्च आदेशसकारत्वात्। सात् – अग्निसात्[16]। दधिसात्। [17]मधुसात्। पदादेः – दधि सिञ्चति। मधु सिञ्चति॥

## सिचो यङि। (११०/२६४०)

सिचः सकारस्य यङि परतो मूर्धन्यादेशो न भवति। [18]सेसिच्यते। अभिसेसिच्यते। उपसर्गात् (८.३. ६५/२२७०) [19]इति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेधं बाधते, न सिचो यङि इति। तस्मादयं प्रतिषेधः सर्वत्र[20] भवति। यङि इति किम्? अभिषिषिक्षति॥

## सेधतेर्गतौ। (१११/२२७८)

गतौ[21] वर्तमानस्य सेधतेः सकारस्य मूर्धन्यादेशो न भवति। अभिसेधयति गाः। परिसेधयति गाः[22]। गतौ इति किम्? शिष्यमकार्यात् [23]प्रतिषेधयति॥

---

1. पूर्वपदात् प्राप्त इति प्रतिषिध्यते इत्यधिकम् ब.क. 2. इत्येतेषाम् इत्यधिकम् क.ड.इ. 3. मूर्धन्यादेशः क. 4. रपरस्य क. 5. काण्डं मुद्रितः पाठः 6. विश्रब्धं ब.क.ड. 7. वाचा विसर्जनम् क. ड. इ, वाचो विसर्जनम् ह. 8. सोमे सोमे ब.क.ड.ह. 9. किंसे किंसं इ, किंस्यति इति किंसः ड. 10. पूर्वपदात् इति नास्ति ब.ड. 11. एतत् तुराषाहम् इत्यत्रापि भवति ब. 12. अनुसवनमनुसवनम् ड. 13. बृहस्पतिसवनम् क. 14. सकारस्य इत्यधिकम् ब.क.ड.इ.ह. 15. सातिप्रत्ययः इत्यधिकम् क. 16. वायुसात् इत्यधिकम् ब. क. ड. 17. मधुसात् नास्ति क.इ. 18. परिसेसिच्यते ड. 19. इति नास्ति ब. 20. न इत्यधिकम् क. 21. अर्थे इत्यधिकम् ब.क. 22. कालयति इत्यर्थः इत्यधिकम् ब.ह, चालयति इत्यर्थः इत्यधिकम् ड. 23. प्रतिषेधति ब.ड.

## प्रतिस्तब्धनिस्तब्धौ च । (११२/३०२७)

प्रतिस्तब्ध निस्तब्ध [1]इत्येतौ [2]मूर्धन्यप्रतिषेधाय निपात्येते । 'स्तम्भेः' (८.३.६७/२२७२) इति [3]प्राप्तं षत्वं प्रतिषिध्यते । प्रतिस्तब्धः । निस्तब्धः ॥

## सोढः । (११३/२३५८)

सहिरयं[4] सोढभूतो गृह्यते[5] । तस्य [6]सकारस्य मूर्धन्यादेशो न भवति । [7]परिसोढः । परिसोढुम् । परिसोढव्यम्[8] । [9]सोढभूतग्रहणं किम् ? परिषहते[10] ॥

## स्तम्भुसिवुसहां चङि । (११४/२५८०)

स्तम्भु सिवु सह इत्येतेषां चङि परतः सकारस्य मूर्धन्यादेशो न भवति । [11]'स्तम्भेः' (८.३.७७/२२७२) इति, परिनिविभ्यः (८.३.७०/२२७५) इति च प्राप्तः मूर्धन्यः प्रतिषिध्यते । स्तम्भु – पर्यतस्तम्भत् । [12]अभ्यतस्तम्भत् । सिवु – पर्यसीषिवत् । न्यसीषिवत्[13] । सह – पर्यसीषहत् । व्यसीषहत्[14] ।

[९४५] स्तम्भुसिवुसहां [15]चङ्युपसर्गादिति वक्तव्यम् । (म. भा. ३.४५०)

उपसर्गाद्या प्राप्तिः तस्याः एव प्रतिषेधो यथा स्यात्, अभ्यासाद्या प्राप्तिः तस्या मा भूत् इति (म. भा. ३.४५०) । तथा चैवोदाहृतम् ॥

## सुनोतेः स्यसनोः । (११५/२५२४)

सुनोतेः सकारस्य मूर्धन्यादेशो न भवति [16]स्ये सनि च परतः । अभिसोष्यति । परिसोष्यति । अभ्यसोष्यत् । पर्यसोष्यत् । [17]सनि किमुदाहरणम् ? [18]अभिसुसूषति । नैतदस्ति प्रयोजनम्, तत्र 'स्तौतिण्योरेव षण्यभ्यासात्' (८.३.७१/२६२७) इति नियमात् न भविष्यति । इदं तर्हि, [19]अभिसुसूषते ? एतदपि नास्ति, 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८.३.६४/२२७७) इति नियमात्[20] । इदं तर्हि, [21]अभिसुसूषतेः अप्रत्ययः अभिसुसूः [22]इत्युदाहरणम् इति ? अत्र हि सन्[23]षभूतो न भवति इत्यभ्यासात् प्राप्तिरस्ति । स्यसनोः इति किम् ? सुषाव ॥

## सदिष्वञ्जोः परस्य लिटि । (११६/२३६१)

सदि [24]ष्वञ्ज इत्येतयोः धात्वोः लिटि परतः सकारस्य परस्य मूर्धन्यः न भवति । अभिषसाद । परिषसाद । [25]निषसाद । विषसाद । [26]परिषस्वजे, [27]परिषस्वजाते, [28]परिषस्वजिरे । अभिषस्वजे । स्वञ्जेः संयोगान्तादपि [29]विभाषा लिटः [30]कित्त्वमिच्छन्ति इति पक्षेऽनुषङ्गलोपः ॥

---

1. इत्येतयोः मूर्धन्याभावो निपात्यते ब. ड. 2. मूर्धन्यप्रतिषेधार्थं इ. 3. प्राप्तः प्रतिषिध्यते इ. ह. 4. अयं नास्ति ब. 5. षष्ठी निर्देशश्चायम् इत्यधिकम् इ. ह. 6. सोढसकारस्य इ. ह. 7. परिनिविभ्यः प्राप्तः प्रतिषिध्यते इत्यधिकम् इ. 8. निसोढा निसोढुम् निसोढव्यम् । विसोढा विसोढुम् विसोढव्यम् इत्यधिकम् ब.क, विसोढा विसोढुम् विसोढव्यम् इत्यधिकम् ड. इ. 9. सोढग्रहणं ब. 10. विषहते इत्यधिकम् ब. ह. 11. वाक्यमिदं नास्ति ब. ड. 12. न्यतस्तम्भत् व्यतस्तम्भत् ब. क. 13. व्यसीषिवत् इत्यधिकम् ब. क. 14. न्यसीषहत् इत्यधिकम् ब. क. 15. चङः क. 16. स्यसनोः परतः ब. 17. सनि किमुदाहरणम् नास्ति इ. ह. 18. परिसुसूषति इ. ह. 19. अभिसुसूषति ब. ड. क. इ, परिसुसूषति इ. 20. उपसर्गात् प्राप्तिरेव इत्यधिकम् ब.क.ड.इ. 21. सुसूषतेः क्विप् प्रत्ययः ब. 22. इति नास्ति क. 23. षत्वभूतः ब. क. इ. ह. 24. स्वञ्जि ड. 25. निषसाद नास्ति ब. 26. परिषस्वञ्जे ब, स्वञ्जेः संयोगादेः– परिषस्वञ्जे अभिषस्वञ्जे ड. 27–28. नास्ति क. 29. विकल्पेन ह. 30. तेन ह, कित्त्वपक्षे इ.

## निव्यभिभ्योऽड्व्यवाये वा छन्दसि। (११७/३६४७)

नि वि अभि इत्येतेभ्यः उपसर्गेभ्यः उत्तरस्य सकारस्य अड्व्यवाये[1] छन्दसि विषये मूर्धन्यादेशो न भवति वा। न्यषीदत् पिता नः, [2]न्यसीदत्। व्यषीदत् पिता नः, [3]व्यसीदत्। अभ्यषीदत्, अभ्यसीदत्। सदिष्वञ्जोरिति [4]तदिह नानुवर्तते। सामान्येनैव [5]तद्वचनम्[6]। व्यष्टौत्, व्यस्तौत्,[6] अभ्यष्टौत्, अभ्यस्तौत् इत्येतदपि सिद्धं भवति॥

इति [8]वामनकाशिकायां वृत्तौ
अष्टमाध्यायस्य तृतीयः पादः।

———o———

1. सति इत्यधिकम् क. 2–3. पिता नः इत्यधिकम् ब. क. 4. एतदिह क. 5. विधानम् ब. क. 6. तेन अन्यदपि भवति इत्यधिकम् ब. क. 7. न्यष्टौत् न्यस्तौत् इत्यधिकम् ब. 8. वामन नास्ति क.

## अष्टमाध्यायस्य

## चतुर्थः पादः

### रषाभ्यां नो णः समानपदे । (१/२३७)

रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेन् निमित्तनिमित्तिनौ भवतः । आस्तीर्णम् । [1]विशीर्णम् । अवगूर्णम् । षकारात् – कुष्णाति । [2]पुष्णाति । [3]मुष्णाति । षग्रहणमुत्तरार्थम्, ष्टुत्वेनैव [4]हि सिद्धमेतत् । समानपदे इति किम् ? अग्निर्नयति । वायुर्नयति ।

[९४६] ऋवर्णाच्चेति वक्तव्यम् । (म.भा. ३.४५२)

तिसृणाम् । चतसृणाम् । मातृणाम् । पितृणाम् । रश्रुतिसामान्यनिर्देशात् वा सिद्धम् । [5]अवर्णभक्त्या च व्यवधानेऽपि [6]णत्वं भवति इति क्षुभ्नादिषु (८.४.३९/७९२) नृनमनतृप्नोतिग्रहणं ज्ञापकम् । अथवा ऋवर्णादपि णत्वं भवति इति [7]एतदेवानेन ज्ञाप्यते ॥

### अट्कुप्वाङ्नुम्व्यवायेऽपि । (२/१९७)

अट् कु पु आङ नुम् इत्येतैर्व्यवाये[8]ऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य [9]णकार आदेशो भवति । अड्व्यवाये तावत् – करणम् । हरणम् । किरिणा । गिरिणा । कुरुणा । गुरुणा । कवर्गव्यवाये – अर्केण । मूर्खेण । [10]गर्गेण । अर्घेण । पवर्गव्यवाये – दर्पेण । रेफेण । [11]गर्भेण । [12]चर्मणा । वर्मणा । आङव्यवाये – पर्याणद्धम् । [13]निराणद्धम् । अड्व्यवाये इति सिद्धे आङग्रहणं पदव्यवाये (८.४.३८/१०५७) इत्यस्य प्रतिषेधस्य बाधनार्थम् । नुम्व्यवाये – बृंहणम् । बृंहणीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम् । तेन तृंहणम्, तृंहणीयम् [14]इत्यत्र अनुस्वारव्यवाये [15]नुमभावेऽपि णत्वं भवति । [16]सत्यपि च नुमि यत्रानुस्वारो न श्रूयते तत्र न भवति, प्रेन्वनम्, प्रेन्वनीयम् इति । [17]व्यवायोपलक्षणार्थत्वादडादीनामिह [18]व्यस्तैः समस्तैर्व्यवायेऽपि णत्वं भवति ॥

### पूर्वपदात् सञ्ज्ञायामगः । (३/८८७)

पूर्वपदस्थान् निमित्तादुत्तरस्य [19]गकारवर्जिताद् नकारस्य णकार आदेशो भवति सञ्ज्ञायां विषये । द्रुणसः । [20]वार्ध्रीणसः । [21]खरणसः । शूर्पणखा । सञ्ज्ञायाम् इति किम् ? चर्मनासिकः । अगः इति किम् ?

---

1. विकीर्णम् इत्यधिकम् क.इ. 2. पुष्णाति नास्ति ब. 3. मुष्णाति नास्ति इ.ह. 4. हि नास्ति इ. 5. वर्णभक्त्या क, ऋवर्णभक्त्या इ. 6. णत्वं नास्ति क. 7. एतदेव तेन ब, एतदेव ज्ञाप्यते क, एतदेव ज्ञापकम् ह. 8. अव्यवाये इत्यधिकम् क. 9. णकारादेशः ब.इ. 10. सर्गेण इ, वर्गेण ह. 11. दर्भेण ब.इ. 12. कर्मणा इ. 13. निराणद्धम् नास्ति क. 14. अत्र नास्ति क. 15. नुमभावे नास्ति इ. 16. अनुस्वाराभावे तु सत्यपि च नुमि न भवति ब.क.इ. 17. अम् इत्यधिकम् क. 18. व्यस्तैः नास्ति ब, व्यस्तानां समस्तानां च ग्रहणम् क, तैः व्यस्तैः इ. ह. 19. अगारकारादुत्तरस्य ब. इ. ह. 20. वाध्रीणसः ब. क, नास्ति इ. ह. 21. खरणसः नास्ति ब.

ऋगयनम् । केचिदेतन्नियमार्थं वर्णयन्ति, पूर्वपदात् सञ्ज्ञायामेव णत्वं नान्यत्र इति । [1]समासेऽपि हि समानपदे निमित्तनिमित्तिनो[2]र्भावादस्ति पूर्वेण प्राप्तिः इति स च नियमः [3]पूर्वपदसम्बधादुत्तरपदस्थस्यैव णत्वं निवर्तयति, चर्मनासिकः इति, न [4]तद्धितपूर्वपदस्थस्य, [5]खारपायणः, मातृभोगीणः, [6]करणप्रियः इति । अगः इति योगविभागेन णत्वप्रतिषेधः,[7] न नियमप्रतिषेधः इति । अपरे तु पूर्वसूत्रे समानमेव यन् [8]नित्यं पदं तत् समानपदम् इत्याश्रयन्ति, समानग्रहणात् । तेषामप्राप्तमेव णत्वमनेन विधीयते । समासे हि पूर्वपदोत्तरविभागादसमान[9]पदत्वमप्यस्ति इति[10] ॥

## वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः । (४/१०३०)

पूर्वपदात् सञ्ज्ञायाम् इति वर्तते । पुरगा मिश्रका सिध्रका [11]शारिका कोटरा अग्रे इत्येतेभ्यः पूर्वपदेभ्यः उत्तरस्य [12]वननकारस्य णकारादेशो भवति सञ्ज्ञायां विषये । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । 'सिद्धे सत्यारम्भो नियमार्थः' (का. प. ६२), एतेभ्य एव [13]परस्य वननकारस्य [14]णकारादेशो भवति, नान्येभ्यः इति । [15]कुबेरवनम् । [16]शतधारवनम् । असिपत्रवनम् ॥

## प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि । (५/१०५०)

[17]प्र निर् अन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्यः उत्तरस्य वननकारस्य [18]सञ्ज्ञायाम् असञ्ज्ञायामपि णकारादेशो भवति । प्र – [19]प्रवणे यष्टव्यम् । निर् – [20]निर्वणे प्रतिधीयते । अन्तर् – [21]अन्तर्वणे । शर – शरवणम् । इक्षु – इक्षुवणम् । प्लक्ष – प्लक्षवणम् । आम्र – आम्रवणम् । कार्ष्य – कार्ष्यवणम् । खदिर – खदिरवणम् । पीयूक्षा – पीयूक्षावणम् ॥

## विभाषौषधिवनस्पतिभ्यः । (६/१०५१)

[22]वनम् इत्येव । ओषधिवाचि यत् पूर्वपदं वनस्पतिवाचि [23]च तत्स्थान् निमित्ताद् उत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा । ओषधिवाचिभ्यस्तावत् – दूर्वावणम्, दूर्वावनम् । मूर्वावणम्, मूर्वावनम्[24] । वनस्पतिभ्यः – शिरीषवणम्, शिरीषवनम् । बदरीवणम्, बदरीवनम् ।

[९४७] द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । (म.भा. ३.४५५)

इह मा भूत्, देवदारुवनम् । भद्रदारुवनम् ।

[९४८] इरिकादिभ्यः प्रतिषेधो वक्तव्यः । (म.भा. ३.४५५)

इरिकावनम्[25] । [26]मिरिकावनम् ।

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्ता लतागुल्माश्च वीरुधः[27] ॥

सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम् ॥

---

1. समासपदेऽपि इ. 2. भेदात् ब. 3. पूर्वपदाभिसम्बन्धात् क. 4. तु इत्यधिकम् ब. 5. खारपावणः इ. 6. पितृभोगीणः इत्यधिकम् इ.ह. 7. अयं इत्यधिकम् क. 8. नित्यं नास्ति ब. 9. पदवत्त्वम् क. 10. तन् न गृह्यते इत्यधिकम् क. 11. सारिका इ. 12. वन नास्ति क. 13. उत्तरस्य ब.क.इ.ह. 14. णकारो क. 15. तेन इत्यधिकम् इ.ह. 16. शरध्मवनम् इ, कर्णिकारवनम् ड. 17. वनमिति वर्तते इत्यधिकम् क.इ.ह. 18. सञ्ज्ञायाम् नास्ति इ. 19. प्रवणम् ब.ड. 20. निर्वणम् ड, निर्वणः क. 21. अन्तर्वणम् ड. 22. वनमिति वर्तते क. 23. च नास्ति ब. 24. महारावणम् महारावनम् इत्यधिकम् इ. 25. इषिकावनम् इत्यधिकम् इ. 26. तिमिरकावनम् ब, तिमिरवनम् क.ह.ड. 27. इति इत्यधिकम् इ.ह.

## अह्नोऽदन्तात् । (७/७९१)

अदन्तं यत् पूर्वपदं तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति । पूर्वाह्णः । अपराह्णः । अदन्तात् इति किम् ? [1]निरह्नः । दुरह्नः । [2]'अह्नोऽह्न एतेभ्यः' (५. ४. ८८/७९०) इत्यह्नादेशः । अह्नः इत्यकारान्तग्रहणाद् दीर्घाह्नी शरद् (म. भा. ३. ४५५) इत्यत्र न भवति ॥

## वाहनमाहितात् । (८/१०५२)

आहितवाचि यत् पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य [3]णकार आदेशो भवति । इक्षुवाहणम् । शरवाहणम् (म. भा. ३. ४५५) । दर्भवाहणम् । वाहने यद् आरोपितमुह्यते तद् आहितमुच्यते । आहितात् इति किम् ? दाक्षिवाहनम्[4] । दाक्षिस्वामिकं वाहनम् इत्यर्थः ॥

## पानं देशे । (९/१०५३)

पाननकारस्य पूर्वपदस्थान् निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति । पीयते इति पानम् । 'कृत्यल्युटो बहुलम्' (३. ३. ११३/२८४१) इति कर्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । मनुष्याभिधानेऽपि[5] देशाभिधानं गम्यते । सुरापाणाः प्राच्याः । सौवीरपाणा बाह्लीकाः । कषायपाणाः गान्धाराः । देशे इति किम् ? दाक्षीणां पानम् दाक्षिपानम् ॥

## वा भावकरणयोः । (१०/१०५४)

[6]भावे करणे च यः पानशब्दः तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थान्निमित्तादुत्तरस्य । क्षीरपाणं वर्तते, क्षीरपानम्[7] । [8]कषायपाणम्, कषायपानम् । सुरापाणम्, सुरापानम् । करणे – क्षीरपाणः कंसः, क्षीरपानः[9] ।

[९४९] वाप्रकरणे गिरिनद्यादीनामुपसङ्ख्यानम् । (म. भा. ३. ४५६)

गिरिणदी, गिरिनदी । चक्रणदी, चक्रनदी । चक्रणितम्बा, चक्रनितम्बा ॥

## प्रातिपदिकान्तनुम्विभक्तिषु च । (११/१०५५)

[10]वा इति वर्तते । प्रातिपदिकान्ते [11]नुमि विभक्तौ च यो नकारः तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति । प्रातिपदिकान्ते [12]तावत्–[13]माषवापिणौ, माषवापिनौ । नुमि[14]–माषवापाणि, माषवापानि । व्रीहिवापाणि, व्रीहिवापानि । विभक्तौ – माषवापेण, माषवापेन । व्रीहिवापेण, व्रीहिवापेन । पूर्वपदाधिकारादुत्तरपदस्य [15]प्रातिपदिकस्थो यो[16]ऽन्त्यो नकारः तस्येदं णत्वमिष्यते । इह [17]हि न भवति, गर्गाणां भगिनी गर्गभगिनी[18] ।

1. निरह्नम् दुरह्नम् इ. 2. वाक्यमिदं नास्ति ब. ड. 3. णकारादेश ब. क. 4. प्लाक्षिवाहनम् इत्यधिकम् इ. ह. 5. गम्यमाने इत्यधिकम्, देशाभिधानं नास्ति ब. 6. पानम् इति वर्तते इत्यधिकम् क. इ. 7. वर्तते इत्यधिकम् क. 8. कषायपाणः कषायपानः कंसः ब. क. 9. नीरपाणम् नीरपानम् इत्यधिकम् इ. 10. वाक्यमिदं नास्ति ब. 11. नुम्विभक्तौ क. इ. 12. तावत् नास्ति ब. 13. माषवाहिणौ माषवाहिनौ क. ह. 14. खल्वपि इत्यधिकम् इ. 15. प्रातिपदिकस्य ब. क. ह. 16. अन्तः ह, योऽन्यो क. 17. हि नास्ति ब. 18. इति इत्यधिकम् ब. क. ह.

यदा त्वेवं भवति, गर्गाणां भगो गर्गभगः, [1]गर्गभगोऽस्या अस्ति इति गर्गभगिणी इति, तदा मातृभोगीणवन्नित्यमेव णत्वेन भवितव्यम् । माषवापिणी, माषवापिनी इत्यत्र तु 'गतिकारकोपपदानां कृद्भिः [2]सह समासवचनं प्राक्सुबुत्पत्तेः' (पु. प. ६२) इति कृदन्तेनैव समासे सति प्रातिपदिकस्य उत्तरपदस्यैव [3]सतो नकारो भवति । तथा चात्र नुम्ग्रहणं [4]कृतम् । स हि [5]समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति[6] ।

[९५०] युवादीनां प्रतिषेधो वक्तव्यः । (म. भा. ३. ४५६)

आर्ययूना । क्षत्रिययूना । [7]प्रपक्वानि । दीर्घाह्नी शरद् ॥

## एकाजुत्तरपदे णः । (१२/३०७)

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन्नेकाजुत्तर[8]पदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य [9]नकारस्य णकारः आदेशो भवति । [10]वृत्रहणौ । वृत्रहणः । नुमि – क्षीरपाणि । सुरापाणि । विभक्तौ – क्षीरपेण । सुरापेण । णः इति वर्तमाने पुनर्णग्रहणं [11]विकल्पाधिकारनिवृत्तेः विस्पष्टीकरणार्थम् ॥

## कुमति च । (१३/१०५६)

कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु [12]पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । वस्त्रयुगिणौ । वस्त्रयुगिणः[13] । स्वर्गकामिणौ । वृषगामिणौ । नुमि – वस्त्रयुगाणि । खरयुगाणि । विभक्तौ – वस्त्रयुगेण । [14]खरयुगेण ॥

## उपसर्गादसमासेऽपि णोपदेशस्य । (१४/२२८४)

[15]णः उपदेशे यस्यासौ णोपदेशः । णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति असमासेऽपि समासेऽपि । प्रणमति । परिणमति । [16]प्रणायकः । परिणायकः । उपसर्गात् इति किम् ? प्रगता नायकाः अस्माद् देशात् प्रनायको देशः । असमासेऽपि किम् ? पूर्वपदाधिकारात् समास एव स्यात् इति तदधिकारनिवृत्तिद्योतनार्थम् । णोपदेशस्य इति किम् ? प्रनर्दति । [17]प्रनर्दकः ॥

## हिनुमीना । (१५/२५३०)

[18]हिनु मीना इत्येतयोः उपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः । [19]हिनुमीनाग्रहणे विकृतस्यापि भवति[20] (म.भा.३.४५८), अजादेशस्य स्थानिवत्त्वात्[21] ॥

---

1. स इत्यधिकम् ब. 2. सह नास्ति ब. 3. अन्तः क. इ. ह. 4. कृतम् नास्ति ब. 5. अङ्ग इत्यधिकम् क. 6. नकारः इत्यधिकम् ह. 7. परिपक्वानि ब. क. ड. ह. 8. पदे क. इ. 9. नकारस्य नास्ति क. 10. प्रातिपदिकान्ते इत्यधिकम् ड. इ. ह. 11. विकल्पनिवृत्त्यर्थम् क.इ.ह. 12. यो नकारः तस्य इत्यधिकम् क.इ. 13. स्वरयुगिणौ स्वरयुगिणः इत्यधिकम् क. 14. वरयुगेण ह. 15. वाक्यमिदं नास्ति ब. 16. समासे इत्यधिकम् ह, प्रगतो नायकः प्रणायकः ड, प्रणामकः परिणामकः ब. 17. प्रनर्दकः नास्ति इ. 18. उपसर्गात् इति वर्तते इत्यधिकम् ब. क. ड. इ. 19. हिनुमीना-स्थानिवत्त्वात् नास्ति ब. 20. इति इत्यधिकम् क. 21. एकादेशविकृतानन्यत्वात् वा इत्यधिकम् क.

## आनि लोट्। (१६/२२३१)

[1]आनि इत्येतस्य लोडादेशस्य उपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रवपाणि। परिवपाणि। [2]प्रयाणि। परियाणि। लोट् इति किम्? प्रवपानि मांसानि॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। (१७/२२८७)

[3]नि इत्येतस्य उपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः। गद – प्रणिगदति। परिणिगदति। नद – प्रणिनदति। परिणिनदति। पत – प्रणिपतति। परिणिपतति। पद – प्रणिपद्यते। परिणिपद्यते। घु – प्रणिददाति। परिणिददाति। प्रणिदधाति। परिणिदधाति। माङ – प्रणिमिमीते। परिणिमिमीते। मेङ् – प्रणिमयते। परिणिमयते। मा इति माङ्मेङोर्ग्रहणमिष्यते। स्यति – प्रणिष्यति। परिणिष्यति। हन्ति – प्रणिहन्ति। परिणिहन्ति। याति – प्रणियाति। परिणियाति। वाति – प्रणिवाति। परिणिवाति। द्राति – प्रणिद्राति। परिणिद्राति। प्साति – प्रणिप्साति। परिणिप्साति। वपति – प्रणिवपति। परिणिवपति। वहति – प्रणिवहति। परिणिवहति। शाम्यति – प्रणिशाम्यति। परिणिशाम्यति। चिनोति – प्रणिचिनोति। परिणिचिनोति। देग्धि – प्रणिदेग्धि। परिणिदेग्धि। अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते। प्रण्यगदत्। परिण्यगदत्॥

## शेषे विभाषाऽकखादावषान्त उपदेशे। (१८/२२३२)

[4]नेः इति वर्तते, उपसर्गात् इति च। अककारादिरखकारादिरषकारान्तः च उपदेशे यो धातुः स शेषः, तस्मिन् परतः उपसर्गस्थान्निमित्तात् उत्तरस्य नेः नकारस्य विभाषा णकार आदेशो भवति। प्रणिपचति, प्रनिपचति[5]। प्रणिभिनत्ति, प्रनिभिनत्ति। अकखादौ इति किम्? प्रनिकरोति। प्रनिखादति[6]। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात्, प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यति इति। इह च मा भूत्, [7]प्रणिवेष्टा। प्रणिवेक्ष्यति॥

## अनितेः। (१९/२४७८)

[8]अनितेः [9]नकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। प्राणिति। पराणिति॥

---

1. उपसर्गात् इति वर्तते इत्यधिकम् क, उपसर्गस्थादित्येव इत्यधिकम् इ. 2. प्रयाणि नास्ति क. 3. उपसर्गात् इति वर्तते इत्यधिकम् ब, निउपसर्गस्थात् उत्तरस्य क. ड. 4. वाक्यमिदं नास्ति ब, उपसर्गात् इति वर्तते क. 5. परिणिपचति परिनिपचति इत्यधिकम् इ. 6. प्रतिखनति इत्यधिकम् इ. 7. विशेः – इत्यधिकम् ब, प्रनिवेष्टा परिनिवेष्टा प्रणिवेष्टा परिणिवेष्टा परिणिवेष्टति प्रणिवेक्ष्यति क. 8. उपसर्गात् इति वर्तते इत्यधिकम् क. 9. इत्येतस्य इत्यधिकम् इ.

## अन्तः । (२०/२९८४)

अनितेः इति वर्तते । उपसर्गस्थान्निमित्तात् उत्तरस्य अनितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । पदान्तस्य इति प्रतिषेधस्य अपवादोऽयम् । अन्तश्च [1]पदापेक्षो गृह्यते । केचित्तु पूर्वसूत्रे एव एतदन्तग्रहणं सामीप्यार्थम[2]भिसम्बध्नन्ति । निमित्त[3]समीपस्थैकवर्णव्यवहितस्य अनितिनकारस्य [4]पदान्ते वर्तमानस्य णकारादेशो यथा स्यात् । इह मा भूत्, पर्यनिति इति । तद्वितीयमपि [5]पदान्तस्य णत्वार्थमन्तग्रहणमा-[6]श्रयितव्यमेव । येषां तु पर्यणिति [7]इति भवितव्यम् इति दर्शनम्, तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणेन ॥

## उभौ साभ्यासस्य । (२१/२६०६)

[8]साभ्यासस्य अनितेः उपसर्गस्थान् निमित्तादु[9]त्तरस्य उभयोः नकारयोः णकार आदेशो भवति । प्राणिणिषति । प्राणिणत् । पराणिणिषति । पराणिणत् । '[10]पूर्वत्रासिद्धीयमद्विर्वचने' (पु.प. ९२) इत्येतस्मिन् सति पूर्वेणैव [11]कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि [12]वचनम् ? एतत् तु नाश्रयितव्यम् इति सूत्रमिदमारभ्यते । [13]तेन जौजढत् इति सिद्धं भवति ॥

## हन्तेरत्पूर्वस्य । (२२/३६०)

अकारपूर्वस्य [14]हन्तिनकारस्य उपसर्गस्थात् निमित्तादुत्तरस्य णकार आदेशो भवति । प्रहण्यते । परिहण्यते । प्रहणनम् । परिहणनम् । अत्पूर्वस्य इति किम् ? प्रघ्नन्ति । परिघ्नति । तपरकरणं किम् ? [15]चिणि – प्राघानि । पर्यघानि ॥

## वमोर्वा । (२३/२४२०)

[16]हन्तेः इति वर्तते[17] । वकारमकारयोः परतः हन्तिनकारस्य उपसर्गस्थान् निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रहण्वः, प्रहन्वः । परिहण्वः, परिहन्वः । प्रहण्मः, प्रहन्मः । परिहण्मः, परिहन्मः[18] ॥

## अन्तरदेशे । (२४/३२९४)

[19]अन्तःशब्दादुत्तरस्य [20]हन्तिनकारस्य अत्पूर्वस्य णकारादेशो भवति अदेशाभिधाने । अन्तर्हण्यते । अन्तर्हणनं वर्तते । अदेशे इति किम् ? अन्तर्हननो देशः । अत्पूर्वस्य [21]इत्येव, अन्तर्घ्नन्ति । तपरकरणं [22]किम् ? अन्तरघानि ॥

---

1. पादापेक्षो क, पदापेक्षया इ. ह. 2. उपबध्नन्ति इ. 3. समीपस्यैव एकवर्णव्यवहितस्य क. इ. 4. पदान्ते वर्तमानस्य नास्ति ब. 5. अन्तग्रहणं क. ड. इ. 6. आश्रयितव्यम् नास्ति ड. 7. इत्येवम् ड. ह. 8. अनितेः इति वर्तते उपसर्गात् इति च इत्यधिकम् क.इ.ह. 9. उत्तरयोः नकारयोः क.ड. 10. पूर्वत्रासिद्धमपि वर्तते इत्येतस्मिन् सति इ. 11. कृते क. 12. णत्ववचनं क. 13. तेन नास्ति ब.क.ड. 14. हन्तेः क.इ.ह. 15. चिणि नास्ति ब. 16. वाक्यमिदं नास्ति ब. 17. उपसर्गात् इति च इत्यधिकम् क.इ.ह. 18. पूर्वेण नित्ये प्राप्ते विकल्पः इत्यधिकम् ब, पूर्वेण नित्ये प्राप्ते विकल्पार्थमारभ्यते इत्यधिकम् क.इ. 19. हन्तेरत्पूर्वस्य इति वर्तते इत्यधिकम् क. 20. हन्तेः क. 21. इति किम् क. 22. इत्येव क, तपर इत्येव इ.

## अयनं च । (२५/३२९५)

अन्तरदेशे इति वर्तते । अयननकारस्य चान्तःशब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । [1]अन्तरयणं वर्तते । अन्तरयणं शोभनम् । अदेशे इत्येव, अन्तरयनो देशः ॥

## छन्दस्यृदवग्रहात् । (२६/३६४८)

पूर्वपदात् इति वर्तते । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । 'नृमणाः' (ऋ. १. १६७. ५) । 'पितृयाणम्' (ऋ. १०. २. ७) । अत्र हि [2]नृमणाः, पितृयाणम इति ऋकारोऽवगृह्यते ।

[3]अवग्रहग्रहणं किमर्थमुच्यते, यावता संहिताधिकार आ अध्यायपरिसमाप्तेः (८.२.१०८/३६२७) इत्युक्तम्? विषयोपलक्षणार्थमवग्रहग्रहणम् । अवगृह्यमाणाद् यथा स्यात्, अनवगृह्यमाणात् मा भूत्[4] । अपदान्ते चावग्रहो नास्ति ॥

## नश्च धातुस्थोरुषुभ्यः । (२७/३६४९)

नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान् निमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच्च छन्दसि विषये। धातुस्थात् [5]तावत् – 'अग्ने रक्षा णः' (ऋ. ७. १५. १३) । 'शिक्षा णो [6]अस्मिन्' (ऋ. ७. ३२. २६) । उरुशब्दात् – 'उरु णस्कृधि' (ऋ. ८.७५.११) । षुशब्दात् – 'अभी षु णः सखीनाम्' (ऋ. ४. ३१. ३) । 'ऊर्ध्व ऊ षु ण ऊतये' (ऋ. १. ३६. १३) । अस्मदादेशोऽयं नस्शब्दः 'बहुवचनस्य वस्नसौ' (८. १. २१/४०५) इति ॥

## उपसर्गाद्बहुलम् । (२८/८५९)

[7]उपसर्गस्थान् निमित्तात् उत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्रणः [8]शूद्रः । प्रणसः । [9]प्रणो राजा । न च भवति । '[10]प्र नो मुञ्चतम्' (ऋ. ६. ७४. ४) । [11]बहुलग्रहणाद् भाषायामपि भवति, प्रणसं मुखम् । [12]'उपसर्गाच्च' (५. ४. ११९/८५८) इति नासिकाया नसादेशः ॥

## कृत्यचः । (२९/२८३५)

[13]कृत्स्थः यो नकारः अचः उत्तरः तस्य उपसर्गस्थान् निमित्तादुत्तरस्य णकारादेशो भवति । अन, मान, अनीय, अनि, निष्ठादेश एते णत्वं प्रयोजयन्ति । अन -- प्रयाणम् । परियाणम् । प्रमाणम् । परिमाणम् । मान – प्रयायमाणम् । परियायमाणम् । [14]अनीय -- प्रयाणीयम् । परियाणीयम् । अनि -- अप्रयाणिः । अपरियाणिः । इनि -- प्रयायिणौ । परियायिणौ । निष्ठादेश -- प्रहीणः । परिहीणः । प्रहीणवान् । [15]परिहीणवान् । अचः इति किम् ? प्रमग्नः । परिभुग्नः । [16]भुजो कौटिल्ये (धा. पा. १४१८), अस्य निष्ठाप्रत्ययः, 'ओदितश्च' (८. २. ४५/३०१९) इति निष्ठानत्वम्, 'चोः कुः' (८. २. ३०/३७८) इति कुत्वे सिद्धं परिभुग्नः इति ।

[९५१] कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम् । (म. भा. ३. ४६०)

निर्विण्णोऽस्मि खलसङ्गेन । निर्विण्णोऽहमत्र वासेन ॥

---

1. अन्तरयणमन्तरायः इ. 2. नृ अमनाः, पितृ अयानम् इति ड. 3. अवग्रहग्रहणं–विषयोपलक्षणार्थम् नास्ति इ. 4. इति इत्यधिकम् क. 5. तावत् नास्ति ब. 6. अस्मान् ह. 7. नसि इति वर्तते इत्यधिकम् क. इ. 8. रुद्रः ह. 9. प्रनो राया परीणसा (ऋ. 5. 10. 1). 10. प्रनो बन्धुः इ. ह. 11. छन्दसि इति निवृत्तम् इत्यधिकम् क. ह, छन्दसि इत्यत्र निवर्तते इत्यधिकम् इ. 12 उपसर्गाच्च नास्ति ब. ड. 13. उपसर्गात् इति वर्तते इत्यधिकम् क. इ, 14. अनीयर् क. 15. परिहीणवान् नास्ति इ. 16. भुजो–परिभुग्नः इति नास्ति इ.

## णेर्विभाषा । (३०/२८३६)

ण्यन्ताद् यो विहितः [1]कृत्प्रत्ययः तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तात् उत्तरस्य विभाषा णकारादेशो भवति । प्रयापणम्, प्रयापनम् । परियापणम्, परियापनम् । प्रयाप्यमाणम्, प्रयाप्यमानम्[2] । प्रयापणीयम्, प्रयापनीयम् । अप्रयापणिः, अप्रयापनिः । प्रयापिणौ, प्रयापिनौ, विहितविशेषणं किम् ? प्रयाप्यमाणम् [3]इत्यत्र यका व्यवधानेऽपि यथा स्यात् इति ॥

## हलश्चेजुपधात् । (३१/२८३७)

[4]कृत्यचः इति वर्तते । हलादिः यो धातुरिजुपधः तस्मात् परो यः [5]कृत्प्रत्ययः तत्स्थस्य नकारस्य अच उत्तरस्य उपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम्, प्रकोपनम् । परिकोपणम्, परिकोपनम् । हलः इति किम् ? [6]प्रेहणम् । प्रोहणम् । इजुपधात् इति किम् ? [7]प्रवपणम् । परिवपणम् । कृत्यचः इति नित्ये प्राप्ते विकल्पः । अचः इत्येव, परिभुग्नः । इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ॥

## इजादेः सनुमः । (३२/२८३८)

हलः इति वर्तते, तेन इह सामर्थ्यात् तदन्तविधिः । इजादेः सनुमः हलन्ताद्[8] धातोः विहितो यः [9]कृत्, तत्स्थस्य नकारस्य उपसर्गस्थान् निमित्तात् उत्तरस्य [10]णकारो भवति । प्रेङ्खणम् । [11]परेङ्खणम् । प्रेङ्गणम् । [12]परेङ्गणम् । [13]प्रोम्भणम् । परोम्भणम् । 'सिद्धे सत्यारम्भो नियमार्थः' (का. प. ६२), इजादेरेव सनुमः, नान्यस्मात् इति[14] । [15]प्रमङ्गनम् । परिमङ्गनम् । हलः इत्यधिकाराद् ण्यन्ते नित्यं विध्यर्थमेतन्न भवति ॥

## वा निंसनिक्षनिन्दाम् । (३३/२८३९)

[16]उपसर्गात् इति वर्तते । निंस निक्ष निन्द इत्येतेषां नकारस्य उपसर्गस्थान्निमित्तात् उत्तरस्य वा णकारादेशो भवति । प्रणिंसनम्, प्रनिंसनम् । प्रणिक्षणम्, प्रनिक्षणम् । प्रणिन्दनम्, प्रनिन्दनम्[17] । [18]णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः[19] ॥

## न भाभूपूकमिगमिप्यायीवेपाम् । (३४/२८४०)

भा भू पू कमि गमि प्यायी वेप इत्येतेषाम् उपसर्गस्थात् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति[20] । भा – प्रभानम् । परिभानम् । भू – प्रभवनम् । परिभवनम् । पू – प्रपवनम् । परिपवनम् । [21]पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव णत्वम्, प्रपवणं सोमस्य इति । कमि – प्रकमनम् । परिकमनम् । गमि – प्रगमनम् । परिगमनम् । प्यायी – प्रप्यायनम् । परिप्यायनम् । वेप – प्रवेपनम् । परिवेपनम् ।

[९५२] [22]ण्यन्तानां भादीनामुपसङ्ख्यानं कर्तव्यम् । (म. भा. ३.४६२)
प्रभापनम् । परिभापनम्[23] ॥

---

1. प्रत्ययः नास्ति इ. 2. परियाप्यमाणम् परियाप्यमानम् इत्यधिकम् ब. 3. परियाप्यमाणम् इत्यधिकम् क. ह. 4. वाक्यमिदं नास्ति ब. 5. प्रत्ययः नास्ति इ. 6. प्रयाहणम् ब. 7. प्रवाहणम् परिवाहणम् ह. 8. वा इत्यधिकम् क. 9. कृत्प्रत्ययः क. इ. 10. णत्वं क. 11. परीङ्खणम् ड. 12. परीङ्गणम् ड. 13. प्रोंहणम् परोंहणम् क. 14. तेन इह न भवति इत्यधिकम् क. इ. 15. प्रसङ्गनम् ब. 16. वाक्यमिदं नास्ति ब. 17. परिणिन्दनम् परिनिन्दनम् इत्यधिकम् इ. 18. वाक्यमिदं नास्ति ब. ड. 19. उच्यते इत्यधिकम् क. 20. कृत्येन इति प्राप्तः प्रतिषिध्यते इत्यधिकम् क. इ. 21. पूग्रहणे ब, भादिषु पूग्रहणे क. इ. 22. ण्यन्तादीनां च क. 23. प्रभावनम् परिभावनम् इत्यधिकम् इ.

## षात् पदान्तात् । (३५/३३१०)

[1]षकारात् पदान्तादुत्तरस्य नकारस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । यजुष्पानम् । षात् इति किम् ? निर्णयः[2] । पदान्तात् इति किम् ? [3]कुष्णाति । पुष्णाति । पदे अन्तः पदान्तः इति सप्तमी[4]समासोऽयम्,[5] तेन इह न भवति, सुसर्पिष्केण । सुयजुष्केण । 'शेषाद् विभाषा' (५.४.१५४/८९१) इति कप् ॥

## नशेः षान्तस्य । (३६/२५१८)

न इति वर्तते । [6]नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । परिनष्टः । षान्तस्य इति किम् ? प्रणश्यति । परिणश्यति । अन्तग्रहणं षान्तभूत[7]पूर्वमात्रस्यापि यथा स्यात्, प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

## पदान्तस्य । (३७/१९८)

[8]पदान्तस्य नकारस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । [9]अरीन् । गिरीन् ॥

## पदव्यवायेऽपि । (३८/१०५७)

पदेन व्यवायः पदव्यवायः पदव्यवधानम् । [10]पदेन व्यवायेऽपि सति निमित्तनिमित्तिनोः नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । [11]प्र गां नयामः । [12]परि गां नयामः ।

[९५३] पदव्यवायेऽतद्धित इति वक्तव्यम् । (म.भा. ३.४६३)

इह मा भूत्, आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीषे (४.३.१४५/१५२५) इति मयट् । स्वादौ पूर्वं पदम् इति गोशब्दः पूर्वपदम्, तेन व्यवायः ॥

## क्षुभ्नादिषु च । (३९/७९२)

न इति वर्तते । क्षुभ्ना इत्येवमादिषु[13] शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावाद् इहापि [14]प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमनः – पूर्वपदात सञ्ज्ञायाम् (८.४.३/८५७) इति प्राप्तिः । 'छन्दस्यृदवग्रहात्' (८.४.२६/३६४८) इति [15]च प्राप्नोति । नन्दिन्, नन्दन, नगर,

---

1. न इति वर्तते इत्यधिकम् ब. इ. ड. ह. 2. दुर्णयः इत्यधिकम् क. ड. इ. 3. कुष्णाति नास्ति इ. 4. सप्तमी इति योगविभागात् समासः इ. 5. न षष्ठीसमासः इत्यधिकम् क. ड. 6. तेन इत्यधिकम् क. 7. पूर्वस्य ब. 8. पदान्तो यो नकारः तस्य ब.क.इ, न इति वर्तते इत्यधिकम् क. 9. अरीन् नास्ति क, हरीन् इ, राजन् ह. 10. पदेन नास्ति ब.ड. 11. प्रान्नयावः । प्रसंगा नयामः । परि सं गा नयामः इ. 12. उदाहरणमिदं नास्ति ह, परि गां नयध्वम् (ऋ. 10.165.5) । 13. च इत्यधिकम् इ. 14. पूर्वं इत्यधिकम् क. 15. वा ब.क.

एतान्युत्तरपदानि सञ्ज्ञायां प्रयोजयन्ति–हरिनन्दी। हरिनन्दनः। गिरिनगरम्। [1]नृति यङि प्रयोजयन्ति – नरीनृत्यते[2]। [3]तृप्नु – तृप्नोति। नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप, एतानि उत्तरपदानि प्रयोजयन्ति। परिनर्तनम्, परिगहनम् इति सञ्ज्ञायाम् पूर्वपदात् सञ्ज्ञायाम् (८.४.३/८५७) इति [4]प्राप्नोति। परिनन्दनम् इत्यत्र उपसर्गादसमासेऽपि (८.४.२४/२२८७) इति [5]प्राप्नोति। शरनिवेशः, शरनिवासः, [6]शराग्निः, दर्भानूपः इत्येताः [7]सञ्ज्ञाः। 'आचार्यादणत्वं च' (ग. सू. १८२)। आचार्यभोगीनः। आचार्यानी। 'इरिकादिभ्यो वनोत्तरपदेभ्यः सञ्ज्ञायाम्' (ग. सू. १८३)। इरिका, तिमिर, समीर, कुबेर, हरि, कर्मार इत्युत्तरपदवनशब्दस्थस्य सञ्ज्ञायाम्। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः॥

## स्तोः श्चुना श्चुः। (४०/१११)

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः। स्तोः श्चुना इति यथासङ्ख्यमत्र नेष्यते। सकारस्य शकारेण, चवर्गेण[8], द्वाभ्यामपि सन्निपाते शकारो भवति। [9]तवर्गस्यापि च शकारेण, चवर्गेण च सन्निपाते चवर्गो भवति। [10]आदेशे तु यथासङ्ख्यम् इष्यते, सकारस्य शकारः, तवर्गस्य च चवर्गः इति। सकारस्य शकारेण सन्निपाते – वृक्षश्शेते। प्लक्षश्शेते। [11]तस्यैव चवर्गेण – वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षश्छादयति। प्लक्षश्छादयति। तवर्गस्य शकारेण – अग्निचिच्छेते। सोमसुच्छेते। [12]तस्यैव चवर्गेण – अग्निचिच्चिनोति। सोमसुच्चिनोति। अग्निचिच्छादयति। सोमसुच्छादयति। अग्निचिज्जयति। सोमसुज्जयति। अग्निचिज्झकारः। सोमसुज्झकारः। अग्निचिञ्ञकारः। सोमसुञ्ञकारः। मस्जेः – मज्जति। भ्रस्जेः – भृज्जति। व्रश्चेः – वृश्चति। यजेः – यज्ञः। याचेः – याच्ञा। 'शात्' (८.४.४४/११२) इति प्रतिषेधो ज्ञापकः सङ्ख्यातानुदेशाभावस्य। स्तोः श्चौ इति सप्तमीनिर्देशो न कृतः, पूर्वेण परेण च श्चुना सन्निपाते श्चुत्वं यथा स्यात् इति॥

## ष्टुना ष्टुः। (४१/११३)

स्तोः इति वर्तते। सकारतवर्गयोः षकारटवर्गाभ्यां [13]सन्निपाते षकारटवर्गावादेशौ भवतः। [14]तत्रापि तथैव [15]सङ्ख्यातानुदेशाभावः। षकारेण सकारस्य – वृक्षष्षण्डे। प्लक्षष्षण्डे। तस्यैव[16] टवर्गेण – वृक्षष्टीकते। [17]प्लक्षष्टीकते। वृक्षष्ठकारः। प्लक्षष्ठकारः। तवर्गस्य षकारेण – [18]पेष्टा। पेष्टुम्। पेष्टव्यम्। [19]कृषीष्ट। कृषीष्ठाः। [20]तस्यैव टवर्गेण–अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिट्ठकारः। सोमसुट्ठकारः। अग्निचिड्डीनः। सोमसुड्डीनः। अग्निचिड्ढौकते। सोमसुड्ढौकते। अग्निचिण्णकारः। सोमसुण्णकारः। अतट – अट्टति। अदड – अड्डति॥

---

1. नृतिः ब. ह. 2. नरीनर्ति इत्यधिकम् ब. क. 3. तृपु ड. 4–5. प्राप्तिः क. 6. खराग्नि क. 7. सञ्ज्ञा समुदायाः ड. 8. च इत्यधिकम् ब. ड. 9. तवर्गस्यापि – चवर्ग इति नास्ति क. 10. आदेशस्य स्थानिना ह. 11. सकारस्य क. ह. 12 तवर्गस्य क. 13. योगे क. 14. वाक्यमिदं नास्ति ब, अत्रापि इ. 15. सङ्ख्यातानुदेशाभावस्य 'तोः षि' इति ज्ञापकम् इ. 16. सकारस्य इत्यधिकम् ब. क.- 17. प्लक्षष्टकारेण क. 18. प्रष्टा, प्रष्टुम्, प्रष्टव्यम् ब. एष्टा, एष्टव्यम् ड. 19. कृषीष्ट नास्ति ब. 20. तवर्गस्य ब. क.

## न पदान्ताट्टोरनाम् । (४२/११४)

पदान्तात् टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति [1]नाम् इत्येतद् वर्जयित्वा । श्वलिट् साये । मधुलिट् तरति । पदान्तात् इति किम् ? 'ईड स्तुतौ' (धा. पा. १०२०)–ईट्टे । टोः इति किम् ? सर्पिष्टमम् । अनाम् इति किम् ? षण्णाम् । अत्यल्पमिदमुच्यते ।

[९५४] अनाम्नवतिनगरीणामिति वक्तव्यम् । (म. भा. ३. ४६३)

षण्णाम् । षण्णवतिः । षण्णनरी ॥

## तोः षि । (४३/११७)

न इति वर्तते । तवर्गस्य षकारे[2] यदुक्तं तन्न भवति । [3]अग्निचित्षण्डे[4] । [5]भवान्षण्डे । महान्षण्डे[6] ॥

## शात् । (४४/११२)

तोः इति वर्तते[7] । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ॥

## यरोऽनुनासिकेऽनुनासिको वा । (४५/११६)

[8]पदान्तग्रहण[9]मनुवर्तते । यरः पदान्तस्य अनुनासिके परतः वा अनुनासिकः आदेशो भवति । [10]वाङ्नयति, वाग्नयति । श्वलिण्नयति, श्वलिड्नयति । अग्निचिन्नयति, अग्निचिद् नयति । त्रिष्टुम्नयति, त्रिष्टुब् नयति । पदान्तस्य इत्येव, वेद्मि । [11]क्षुभ्नाति ।

[९५५] यरो[12]ऽनुनासिके प्रत्यये भाषायां नित्यवचनं [13]कर्तव्यम् । (म. भा. ३. ४६४)

[14]वाङ्मयम् । [15]त्वङ्मयम् । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ॥

## अचो रहाभ्याम् द्वे । (४६/७९)

यरः इति [16]वर्तते । अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा । अपह्नुते । अचः इति किम् ? किन् ह्नुते । किम् ह्मलयति ॥

---

1. नाम्वर्जितस्य क. 2. परतः इत्यधिकम् क. 3. पदान्ते इत्यधिकम् इ. 4. सोमसुत्षण्डे इत्यधिकम् क. इ. ह. 5. उदाहरणमिदं नास्ति क. 6. सन्षण्ढः इत्यधिकम् इ. 7. नेति च इत्यधिकम् क. ह. 8. वाक्यमिदं नास्ति ब. 9. इह इत्यधिकम् ह. 10. वाङ्नयनम् वाग्नयनम् ब. ड. 11. स्तभ्नाति इ. ह. 12. अनुनासिकत्वे मयट्प्रत्यये क, अनुनासिकत्वे तद्धितप्रत्यये इ.ह. 13. च इत्यधिकम् क. 14. वाङ्मात्रम् ब, अम्मयं इत्यधिकम् ब, चिन्मयम् क. इ. ह. 15. कियन्मात्रम् ड. 16. अनवर्तते क.

## अनचि च। (४७/४८)

अचः इति [1]वर्तते, यरः इति च। [2]अनच्परस्य अच उत्तरस्य यरो द्वे वा भवतः[3]। दद्ध्यत्र। मद्ध्वत्र। अचः इत्येव, स्मितम्। [4]ध्मातम्।

[९५६] यणो मयो द्वे[5] भवत इति वक्तव्यम्। (म.भा. ३.४६४)

केचिदत्र यणः इति पञ्चमी, मयः इति षष्ठी इति व्याचक्षते। तेषाम् उल्क्का, वल्म्मीकः इत्युदाहरणम्। अपरे तु मयः इति पञ्चमी, यणः इति षष्ठी इति। तेषाम् दध्य्यत्र, मध्व्वत्र इत्युदाहरणम्।

[९५७] शरः खयो द्वे भवत इति वक्तव्यम्। (म.भा. ३.४६४)

अत्रापि यदि शरः इति पञ्चमी, खयः इति षष्ठी, तदा स्त्थाली, स्त्थाता इति उदाहरणम्। अथवा [6]खय उत्तरस्य शरो द्वे भवतः। वत्स्सः। इक्ष्षुः। क्ष्षीरम्। अप्स्सराः[7]।

[९५८] अवसाने [8]च यरो द्वे भवत इति वक्तव्यम्। (म.भा. ३.४६४)

वाक्क्, वाक्। त्वक्क्, त्वक्। [9]षट्ट्, षट्। तत्त्, तत्॥

## नादिन्याक्रोशे पुत्रस्य। (४८/७७)

आदिनि परतः आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः। '[10]अनचि च' (८.४.४७/४८) इति [11]प्राप्तिः प्रतिषिध्यते। पुत्रादिनी[12]त्वमसि पापे। [13]आक्रोशे इति किम्? तत्त्वकथने [14]द्विर्वचनं भवत्येव, पुत्रानत्ति इति पुत्त्रादिनी। शिशुमारी [15]व्याघ्री।

[९५९] तत्परे चेति वक्तव्यम्। (म.भा. ३.४६४)

पुत्रपुत्रादिनी त्वमसि पापे।

[९६०] वा हतजग्धपर इति वक्तव्यम्। (म.भा. ३.४६४)

पुत्त्रहती, पुत्रहती। पुत्त्रजग्धी, पुत्रजग्धी।

[९६१] चयो द्वितीयाः शरि पौष्करसादेः। (म.भा. ३.४६५)

चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन। तकारस्य थकारः – वथ्सः। ककारस्य खकारः – ख्षीरम्। पकारस्य फकारः – अफ्सराः॥

---

1. अनुवर्तते क. 2. अनच्परस्य नास्ति क.ह.ड. 3. अनचि परतः इत्यधिकम् क.ह.ड. 4. स्नातम् ब. 5. वाच्ये इ.ड. 6. शर इति षष्ठी खय इति पञ्चमी ब.ड.ह. 7. इत्युदारणम् इत्यधिकम् ब.क. 8. वा इ.ड. 9. षट्ट् नास्ति क.ड. 10. वाक्यमिदं नास्ति ब. 11. प्राप्तः इ.ह. 12. त्वम् नास्ति इ. 13. पुत्रादिन्याः इत्यधिकम् क. 14. मा भूत् इत्यधिकम् इ.ह. 15. व्याघ्री नास्ति ड.इ.

## शरोऽचि । (४९/३४०)

[1]न इति वर्त्तते । शरोऽचि परतः न द्वे भवतः । '[2]अचो रहाभ्यां द्वे' (८. ४. ४६/५९) इति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । [3]आकर्षः । [4]अक्षदर्शः । अचि इति किम् ? दश्श्यते ॥

## त्रिप्रभृतिषु शाकटायनस्य । (५०/५६)

[5]त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्य मतेन [6]द्वित्वं न भवति । [7]इन्द्रः । चन्द्रः । [8]उष्ट्रः । [9]राष्ट्रम् । भ्राष्ट्रम् ॥

## सर्वत्र शाकल्यस्य । (५१/५७)

शाकल्यस्य आचार्यस्य मतेन सर्वत्र [10]द्विर्वचनं न भवति । अर्कः । मर्कः । [11]ब्रह्मा । अपह्नुते ॥

## दीर्घादाचार्याणाम् । (५२/५८)

[12]दीर्घादुत्तरस्य आचार्याणां मतेन न [13]द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम्[14] ॥

## झलां जश् झशि । (५३/५२)

झलां स्थाने [15]जशादेशो भवति झशि परतः । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् । झशि इति किम् ? [16]दत्तः । [17]दत्थः । [18]दध्मः ॥

## अभ्यासे चर्च । (५४/२१८२)

अभ्यासे वर्तमानानां झलां [19]चरादेशो भवति, चकाराज् जश् च । चिखनिषति । चिच्छित्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । ढुढौकिषते । प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति[20] । टिटीकिषते । तितनिषति । प्रकृतिजशां प्रकृतिजशो भवन्ति । जिजनिषते । बुबुधे । ददौ । डिड्ये ॥

---

1. वाक्यमिदं नास्ति ब. 2. अचः नास्ति ब. ह. 3. आदर्शः, दर्शः ब. क, आदर्शः सुदर्शः इ. 4. अघदर्शः ड. 5. न इति वर्त्तते इत्यधिकम् क. 6. द्विर्वचनम् इ. 7. मन्द्रः क. 8. उष्ट्रः नास्ति ड. 9. राष्ट्रः भ्राष्ट्रः इ. 10. द्वे न भवतः क. ह. 11. ब्रह्म ड. 12. न इति वर्त्तते इत्यधिकम् क. ड. 13. द्वे भवतः ब, द्विर्वचनं इ. ह. 14. गात्रम् गोत्रम् इत्यधिकम् क, गोत्रम् इत्यधिकम् ड. . 15. जशः भवन्ति ब. ड. इ. ह. 16. धत्तः ड, अत्तः इ. 17. धत्तः ड. 18. दध्मः नास्ति ब. ह. 19. चरः भवन्ति क. 20. चिचीर्षति तितीर्षति पिपासति इत्यधिकम् क.

## खरि च। (५५/१२१)

खरि च परतो झलां [1]चरादेशो भवति। [2]जश्ग्रहणं नानुवर्तते, पूर्वसूत्रे चानुकृष्टत्वात्। भेत्ता। भेत्तुम्। भेत्तव्यम्। [3]युयुत्सते। आरिप्सते। आलिप्सते॥

## वाऽवसाने। (५६/२०६)

[4]झलां [5]चर् इति वर्तते। अवसाने [6]वर्तमानानां झलां [7]वा चरादेशो भवति। वाक्, वाग्। त्वक्, त्वग्। श्वलिट्, श्वलिड्। त्रिष्टुप्, त्रिष्टुब्॥

## अणोऽप्रगृह्यस्यानुनासिकः। (५७/११०)

[8]अणः अप्रगृह्यसञ्ज्ञस्य अवसाने [9]वर्तमानस्य वा अनुनासिकादेशो भवति। दधिँ, दधि। मधुँ, मधु। कुमारीँ, कुमारी। अणः इति किम्? कर्तृ। हर्तृ। अप्रगृह्यस्य इति किम्? अग्नी। वायू॥

## अनुस्वारस्य ययि परसवर्णः। (५८/१२४)

अनुस्वारस्य ययि परतः परसवर्णः आदेशो भवति। शङ्किता। शङ्कितुम्। शङ्कितव्यम्। उञ्छिता। उञ्छितुम्। उञ्छितव्यम्। कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। नन्दिता। नन्दितुम्। नन्दितव्यम्। कम्पिता। कम्पितुम्। कम्पितव्यम्। इह कुर्वन्ति, [10]वृषन्ति [11]इत्यत्र णत्वस्य असिद्धत्वात् पूर्वं नकारस्य अनुस्वारः क्रियते। तस्यापि परसवर्णेन पुनर्नकार एव भवति। तस्यापि असिद्धत्वात् पुनर्णत्वं न भवति। एवमनुस्वारीभूतो णत्वमतिक्रामति [12]इति। ययि इति किम्? आक्रंस्यते। आचिक्रंस्यते॥

## वा पदान्तस्य। (५९/१२५)

[13]पदान्तस्य अनुस्वारस्य ययि परतः वा [14]परसवर्णादेशो भवति। तङ्कथञ्चित्रपक्षण्डयमानन्नभःस्थम्पुरुषोऽवधीत्, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत्॥

## तोर्लि। (६०/११७)

[15]तवर्गस्य लकारे परतः परसवर्णादेशो भवति। अग्निचिल्लुनाति। सोमसुल्लुनाति। [16]भवाँल्लुनाति। [17]महाँल्लुनाति॥

---

1. चरः भवन्ति ब. 2. झल्ग्रहणं ह. मुद्रितः पाठः. 3. युयुत्सते नास्ति क. 4. वाक्यमिदं नास्ति ब. 5. चरः भवन्ति क, चरादेशाः भवन्ति इ. 6. वर्तमानानां नास्ति ब. 7. स्थाने इत्यधिकम् क. 8. वाऽवसाने इति वर्तते इत्यधिकम् इ, वाऽवसाने इत्येव इत्यधिकम् ह, अणन्तस्य क. 9. वर्तमानस्य नास्ति क. 10. कृषन्ति ब. क, नास्ति इ. 11. अत्र नास्ति क. 12. इति नास्ति क. 13. अनुस्वारस्य ययि परसवर्णः इत्येव इत्यधिकम् ह. 14. परसवर्णो क. इ. 15. परसवर्णः इति वर्तते इत्यधिकम् क. इ, परसवर्णः इत्येव इत्यधिकम् ह. 16. उदाहरणमिदं नास्ति क. इ. 17. उदाहरणमिदं नास्ति ह.

## उदः स्थास्तम्भोः पूर्वस्य । (६१/११८)

[1]सवर्णः इति वर्तते । उदः उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थाता । उत्थातुम् । उत्थातव्यम् । स्तम्भेः खल्वपि – उत्तम्भिता । उत्तम्भितुम् । उत्तम्भितव्यम् । स्थास्तम्भोः इति किम् ? [2]उत्स्नाता ।

[९६२] उदः पूर्वसवर्णत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम्[3] । (म.भा.३. ४६५)

[4]अग्ने दूरमुत्कन्दः ॥

[९६३] रोगे चेति वक्तव्यम् । (म.भा.३. ४६५)

उत्कन्दको नाम रोगः । कन्दतेर्वा धात्वन्तरस्यैतद्रूपम् ॥

## झयो होऽन्यतरस्याम् । (६२/११९)

[5]झयः [6]उत्तरस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्घसति, वाग्हसति । स्वलिड् ढसति, श्वलिड् हसति । अग्निचिद् धसति । अग्निचिद् हसति । सोमसुद् धसति, सोमसुद् हसति । त्रिष्टुब् भसति, त्रिष्टुब् हसति[7] । झयः इति किम् ? प्राङ् हसति । भवान् हसति ॥

## शश्छोऽटि । (६३/१२०)

झयः इति वर्तते, अन्यतरस्याम् इति च । झय [8]उत्तरस्य शकारस्य अटि परतः छकारादेशो भवति अन्यतरस्याम् । वाक् छेते, वाक् शेते । अग्निचिच् छेते, अग्निचित् शेते । सोमसुच् छेते, सोमसुत् शेते । श्वलिट् छेते, श्वलिट् शेते[9] । त्रिष्टुप् छेते, त्रिष्टुप् शेते ।

[९६४] छत्वममीति वक्तव्यम् । (म. भा. ३. ४६५)

किं प्रयोजनम् ? तच्छ्लोकेन, तच्छ्मश्रुणा [10]इत्येवमर्थम् ॥

## हलो यमां यमि लोपः । (६४/६०)

[11]अन्यतरस्याम् इति वर्तते । हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम् । शय्य्या इत्यत्र द्वौ यकारौ, क्रमजस्तृतीयः, तत्र मध्यमस्य वा लोपो भवति । शय्या, शय्य्या । अदितेरपत्यमादित्य्यः

---

1. वाक्यमिदं नास्ति ब. 2. उत्खनिः क. ड. 3. कर्तव्यम् इत्यधिकम् ब. 4. अघ्न्ये दूरमुत्कन्दः क, अग्नेरुच्यमुत्कन्दः इ, अग्नेस्त्वमुत्कन्दः ड. 5. पूर्वसवर्ण इति वर्तते इत्यधिकम् क. इ. 6. पदान्तात् इत्यधिकम् क. 7. अज्झलाम् अज्हलाम् इत्यधिकम् इ, षड्ढलानि षड्हलानि इत्यधिकम् इ. ह. 8. पदान्तात् इत्यधिकम् क. 9. षट्छोभनः षट्शोभनः इत्यधिकम् इ. 10. इत्येवमाद्यर्थम् क. 11. वाक्यमिदं नास्ति ब.

इत्यत्र तकारात् परः एकः यकारः, यणो मयः (वा. ९५६) इति क्रमजो द्वितीयः, तत्र मध्यमस्य वा लोपो भवति। आदित्यः, आदित्य्यः। आदित्यो देवता अस्य स्थालीपाकस्य इति आदित्य्यः इत्यत्रापि द्वौ यकारौ क्रमजस्तृतीयः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। हलः इति किम्? आम्रम्। यमाम् इति किम्? अग्निः। अर्घ्यम्। यमि इति किम्? शार्ङ्गम्॥

## झरो झरि सवर्णे। (६५/७१)

[1]हलः इति वर्तते, अन्यतरस्याम् इति [2]च। हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम्। प्रत्तम्, अवत्तम् इत्यत्र त्रयस्तकाराः, क्रमजश्चतुर्थः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। मरुत्त्तः इत्यत्र चत्वारस्तकाराः, क्रमजः पञ्चमः। तत्र मध्यमस्य मध्यमयोः मध्यमानां वा लोपो भवति। मरुच्छब्दस्य हि उपसङ्ख्यानसामर्थ्यात् (वा. ६७) 'अच उपसर्गात्तः' (७. ४. ४७/३०७८) इति तत्वं भवति। झरः इति किम्? शार्ङ्गम्। झरि इति किम्? प्रियपञ्च्ञा। अल्लोपस्य च 'पूर्वत्रासिद्धे न [3]स्थानिवत्' (पु. वृ. ११२) इति स्थानिवद्भाव[4]प्रतिषेधात् चकारस्य ञकारे लोपः स्यात्। सवर्णे इति किम्? तर्प्ता। तर्प्तुम्। तर्प्तव्यम्। सवर्णग्रहणसामर्थ्यात् इह सङ्ख्यातानुदेशो न भवति, [5]सवर्णमात्रे लोपो विज्ञायते। तेन शिण्ढि, पिण्ढि इति ढकारे[6] डकारस्य लोपो भवति॥

## उदात्तादनुदात्तस्य स्वरितः। (६६/३६६०)

उदात्तात् [7]उत्तरस्य अनुदात्तस्य स्वरितादेशो भवति। गार्ग्यः। वात्स्यः। पचति। पठति। अस्य स्वरितस्य असिद्धत्वात् 'अनुदात्तं पदमेकवर्जम्' (६. १. १५८/३६५०) इत्येतन्न प्रवर्तते। तेन [8]उदात्तस्वरितौ उभावपि श्रूयेते॥

## नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। (६७/३६६१)

उदात्तोदयस्य स्वरितोदयस्य च अनुदात्तस्य स्वरितो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्यकाश्यपगालवानां [9]मतेन। उदात्त उदयो यस्मात् स उदात्तोदयः। उदात्तपरः इत्यर्थः। एवं स्वरितोदयः[10]। उदात्तोदयस्तावत् — गार्ग्यस्तत्र। वात्स्यस्तत्र। तत्रशब्द आद्युदात्तः। तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति। स्वरितोदयः— गार्ग्यः क्व। वात्स्यः क्व। क्वशब्दः स्वरितः, तस्मिन् परतः [11]अनुदात्तः स्वरितो न भवति। अगार्ग्यकाश्यपगालवानाम् इति किम्? [12]गार्ग्यस्तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। उदात्तस्वरितपरस्य इति [13]वक्तव्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसङ्कीर्तनं पूजार्थम्॥

---

1. वाक्यमिदं नास्ति ब. 2. वा. 3. स्थानिवद्भावः क. 4. प्रतिषेधत्वात् क 5. तेन इत्यधिकम् क. 6. परतः इत्यधिकम् क. 7. परस्य इ. 8. उदात्तश्च भवति स्वरितश्च श्रूयते ब, उदात्तः च स्वरितः च इ. 9. आचार्याणाम् इत्यधिकम् ब. क. इ. ह. 10. स्वरितपरः इत्यर्थः इत्यधिकम् क. 11. अनुदात्तस्य ब, पूर्वस्य स्वरितो न भवति क. 12. गार्ग्यसूतः वात्स्यसूतः ह. 13. एवं इत्यधिकम् क.

अ अ इति। (६८/११)

एकोऽत्र विवृतः, [1]अपरः संवृतः[2]। तत्र विवृतस्य [3]संवृतः क्रियते। अकारो विवृतः संवृतो भवति। वृक्षः। प्लक्षः। इह शास्त्रे कार्यार्थमकारो विवृतः [4]प्रतिज्ञातः, तस्य [5]तथाभूतस्य एव प्रयोगो मा भूत् इति संवृतप्रत्यापत्तिरियं क्रियते। दीर्घप्लुतयोश्चानेन विवृतेन अकारेण ग्रहणं नेष्यते। तेन तयोः संवृतो न भवति। संवुतेन [6]च सर्वगुणस्य मात्रिकस्य ग्रहणम् इष्यते। तेन सर्वगुणः प्रत्यापद्यते।

इष्टयुपसङ्ख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम॥

इति श्री [8]वामनकाशिकायां वृत्तौ अष्टमाध्यायस्य
तुरीयः पादः
समाप्तश्चायमध्यायो ग्रन्थश्च॥

———o———

1. अन्यः ड. ह. 2. भवति इत्यधिकम् क. 3. संवृतत्वम् क. 4. प्रतिज्ञायते क. इ. 5. च तथा ववृतस्य इ. 6. तु सर्वगुणवाचिकस्य क. 7. वामनकाशिकायां वृत्तौ इ. 8. अष्टमस्य अध्यायस्य इ.

525+19

# संस्कृतपरिषद्ग्रन्थावली

## A. General series

| | | |
|---|---|---|
| १.१ | ज्ञानचतुर्विशी .. .. | १.५० |
| २.२ | पण्डितराजकाव्यसंग्रहः .. .. | १०.०० |
| ४.३ | ऋगर्थसारः .. .. | ३.०० |
| ६.४ | संस्कृतकविजीवितम् .: .. | ४.५० |
| ७.५ | क्षेमेन्द्रलघुकाव्यसंग्रहः .. .. | १६.०० |
| ८.६ | नरकासुरविजयव्यायोगः .. .. | ३.०० |
| ९.७ | सीतारामविहारकाव्यम् .. .. | ६.०० |
| १०.८ | दानोद्द्योतः प्रथमो भागः .. .. | ६.०० |
| ११.९ | Descriptive Catalogue of sk mss. .. | ३०.०० |
| १३.१० | आर्यासप्तशती स्वोपज्ञटीकायुता .. .. | ८.०० |
| १४.११ | विक्रमोर्वशीयम् – टीकात्रयोपेत्तम् .. | ८.०० |
| १५.१२ | दानोद्द्योतः द्वितीयो भागः .. .. | ८.०० |
| १६.१३ | दानोद्द्योतः तृतीयो भागः .. .. | १२.५० |
| १७.१४ | काशिका प्रथमो भागः .. .. | २५.०० |
| १८.१५ | वृत्तरत्नाकरः टीकाचतुष्टयोपेतः .. | १२.०० |
| १९.१६ | गीतगोविन्दम् – टीकात्रयोपेतम् .. | १४.०० |
| २०.१७ | काशिका द्वितीयो भागः .. .. | ३०.०० |

## B. Popular series

| | | |
|---|---|---|
| ३.१ | Stories from Kathāsaritsāgara Part I .. | २.०० |
| ५.२ | Gems from Sk. Literature .. | १.५० |
| १२.३ | Stories from Kathāsaritsāgara Part II .. | ५.०० |

----(०)----